## २०२९. आप्रपदं प्राप्नोति ॥ ८ ॥ ( १८०९ )

'प्रपदम्' इति पादस्याग्रमुच्यते, आङ् मर्यादायाम्, तयोरव्ययीभावः। आप्रपदशब्दात्तदिति द्वितीयासमर्थात् 'प्राप्नोति' इत्यस्मिन्नर्थे खः प्रत्ययो भवति। आप्रपदं प्राप्नोति—आप्रपदीनः पटः। शरीरेणासम्बद्धस्यापि पटस्य प्रमाणमाख्यायते ॥

## २०३०. अनुपदसर्वान्नायानयं बद्धाभक्षयतिनेयेषु ॥ ९ ॥ ( १८१० )

अनुपदादिभ्यः शब्देभ्यस्तदिति द्वितीयासमर्थेभ्यो यथासंख्यम् 'बद्धा', 'भक्षयति', 'नेय'—इत्येतेष्वर्थेषु खः प्रत्ययो भवति। अनुरायामे, सादृश्ये वा। अनुपदं बद्धा उपानत्—अनुपदीना। पद-

### न्यासः

यदत्र पथ्यन्तं तदाश्रयो विधिर्भवतीत्यदोषः। ननु च व्यवधानान्न प्राप्नोति ? अन्तग्रहणात् समासान्ताः समासग्रहणेन गृह्यन्त इति नास्ति व्यवधानम् ॥ ७ ॥

**आप्रपदं प्राप्नोति** ॥ **तयोरव्ययीभाव** इति। 'आङ् मर्यादाभिविध्योः' इत्यनेन। **शरीरेणासम्बद्धस्यापि पटस्य प्रमाणमाख्यातमि**ति। प्राप्तियोग्यतामुपादाय हि योग्योऽसावाप्रपदाच्छरीरं प्राप्तुम्। अथ व्याप्तिप्राप्त्योः को विशेषः, येन व्याप्नोतीति [प्र]कृते प्राप्नोतीत्युक्तम् ? सम्बन्धमात्रम्=प्राप्तिः, सम्बन्ध एव साकल्येन=व्याप्तिरित्येव विशेषः ॥ ८ ॥

**अनुपदसर्वान्नायानयं बद्धाभक्षयतिनेयेषु** ॥ **अनुरायाम** इत्यादि। यदायामे तदा 'यस्य चायामः'

### पदमञ्जरी

समासान्तः, तस्य पथ्यन्तसमासग्रहणेन ग्रहणात्पथ्यन्तमेव प्रातिपदिकमिति खप्रत्ययः ॥ ७ ॥

**आप्रपदं प्राप्नोति** ॥ **प्रपदमिति पादस्याग्रमुच्यत** इति। प्रारम्भः पदस्येति कृत्वा। **तयोरव्ययीभाव** इति। 'आङ् मर्यादाभिविध्योः' इत्यनेन। **द्वितीयासमर्थादि**ति। क्रियाविशेषणे 'कर्मणि द्वितीया'। आप्रपदं यथा तथा सर्वशरीरं प्राप्नोतीत्यर्थः। **शरीरेणासम्बद्धस्यापि पटस्य प्रमाणमाख्यायत** इति। योग्यत्वात्, योग्यो ह्यसावाप्रपदं शरीरं प्राप्तुम्। व्याप्नोतीति प्रकृते प्राप्नोतीति वचनमर्थभेदात्—सम्बन्धमात्रम्=प्राप्तिः, सम्बन्धः साकल्योपाधिकः=व्याप्तिः। 'आप्रपदम्' इत्यत्र त्वभिविधौ व्याप्तिर्गम्यते, न मर्यादायाम् ॥ ८ ॥

**अनुपदसर्वान्नायानयं बद्धाभक्षयतिनेयेषु** ॥ **अनुरायाम** इति। 'यस्य चायामः' इति वा, यथार्थे

### भावबोधिनी

पैर के अग्रभाग को 'प्रपद' कहा जाता है। 'आङ्' शब्द मर्यादा अर्थ में है, आङ् और प्रपद का अव्ययीभाव समास होता है। आप्रपद जो द्वितीयासमर्थ है, उससे 'प्राप्नोति' ( प्राप्त करता है ) इस अर्थ में 'ख' प्रत्यय होता है। उदा० आप्रपदं प्राप्नोति—इस अर्थ में—आप्रदीनः पटः। [ पैर के अग्रभाग तक को प्राप्त कर लेने वाला वस्त्र। ] शरीर से असम्बद्ध भी पट का प्रमाण [ माप ] कहा जा रहा है।

**विमर्श**—पूर्ववर्ती सूत्र में 'व्याप्नोति'=व्याप्त करता है—इस अर्थ में 'ख' प्रत्यय है और प्रस्तुत सूत्र 'प्राप्नोति'=प्राप्त करता है—इस अर्थ में प्रत्यय करता है। सामान्यरूप से आशय एक ही प्रतीत होता है परन्तु दोनों में कुछ भेद है—केवल सम्बन्ध हो जाना 'प्राप्ति' है और जब यही सम्बन्ध पूर्णरूप से प्रतीत होता है तब 'व्याप्ति' कही जाती है। अतः पूर्वसूत्र के उदाहरणों में पूरी तरह व्याप्त करना प्रतीत होता है। किन्तु प्रस्तुत सूत्र के उदाहरण में केवल सम्बन्ध होना प्रतीत होता है। आप्रपदीनः पटः—वह वस्त्र जो पैर के अग्रभाग तक लटकता है। "पादाग्रं प्रपदम्......"। अमर० २।६।७१ के अनुसार पैर का चौवा=टखना प्रपद है। ] ॥ ८ ॥

**प्रमाणेत्यर्थः**। **सर्वान्नानि भक्षयति—सर्वान्नीनो भिक्षुः**। **अयः=प्रदक्षिणम्**। **अनयः=प्रसव्यम्**। **प्रदक्षिणप्रसव्यगामिनां शाराणां यस्मिन्परशारैः पदानामसमावेशः सोऽयानयः**। **अयानयं नेयः अयान-**

**न्यासः**

इति समासः। यदा सादृश्ये तदा 'यथार्थे यदव्ययम्', तेन 'अव्ययं विभक्ति' इत्यादिना। यथा पदमायतं तथा च **बद्धोपानदनुपदीना**। सादृश्ये यथानुपदं तथा बद्धाऽनुपदीना। **पदप्रमाणेत्यर्थ** इति। यदाप्यनु सादृश्ये, तदाप्ययमर्थो वेदितव्यः, तुल्यप्रमाणतयैव सादृश्यम्। **अयः प्रदक्षिणमिति**। अयनमयः, गमनमित्यर्थः। प्रदक्षिणं गमनमय इत्युच्यते। **अनयः प्रसव्यमिति**। अयविपरीतं प्रसव्यमनय इत्युच्यते। एवमवयवार्थं दर्शयित्वा समुदायार्थं दर्शयितुमाह—**प्रदक्षिणप्रसव्यगामिनामित्यादि**। बहुवचनमयानयनिमित्तप्रदर्शनार्थम्। यदि शाराः प्रदक्षिणं प्रसव्यं च गच्छन्त्येवमयानयौ भवतः, नान्यथा। तत्रात्मीयाः शाराः प्रदक्षिणं गच्छन्ति, परकीयाः प्रसव्यम्। तेषामेवङ्गामिनां यानि स्थानानि तेषां यस्मिन् प्रदक्षिणप्रसव्यगमनात्मके गतिविशेषे सति **परैर्विपक्षभूतैः** शारैरसमावेशः=अनध्यासनमनाक्रमणं सोऽयानय इत्युच्यते, न तु प्रदक्षिणप्रसव्यगमनमात्रे स एवायम्। एवंरूपोऽयानयो यदा ससहायैः शारैः पदान्यधिष्ठीयन्ते तदा वेदितव्यः। ससहायानां-

**पदमञ्जरी**

यदव्ययम्' इति वाऽव्ययीभाव इत्यर्थः। **पदप्रमाणेत्यर्थ** इति। आयामे तावदयमेवार्थः, सादृश्येऽपि तुल्यपरिमाणतया सादृश्यमित्ययमेवार्थो भवति। **सर्वान्नीनो भिक्षुरिति**। प्रकारकार्त्स्न्ये सर्वशब्दः, यान्यन्नानि लभ्यन्ते उष्णानि शीतानि सरसानि विरसानि तानि सर्वाणि भक्षयतीत्यर्थः। अयनमय इति गमनमात्रमयशब्देनोच्यते, तत्प्रतिषेधस्त्वनयशब्देनेत्याशङ्कामपनयति—**अयः प्रदक्षिणमिति**। प्रदक्षिणं गमनमित्यर्थः। एवम् **अनयः=प्रसव्यम्**। वामपर्यायगमनम्। एतच्च रूढिवशाल्लभ्यते। रूढो ह्ययमयानयशब्दः शाराणां प्रदक्षिणप्रसव्यगमने–शृण्वन्त्येभिर्द्यूतकाराः परस्परमिति शाराः, द्यूतसाधनविशेषाः, श्वान इति येषां प्रसिद्धिः, 'कृत्यल्युटो बहुलम्' इति करणे घञ्। तत्राभिमुखयोः क्रीडतोः कितवयोर्यवैकं प्रति प्रदक्षिणं गमनं तदेवेतरं प्रति प्रसव्यमित्ययश्चासावनयश्च अयानय इति कर्मधारयः।

अथ वा—एकमेव प्रत्ययानयत्वम्, कथम्? वीथीभेदेन। चतस्रो वीथयः, तत्रात्मीयाः शाराः परपार्श्वे स्थिताः प्रथमायां वीथ्यामात्मानः प्रदक्षिणं गच्छन्ति, द्वितीयस्यां प्रसव्यम्, एवमुत्तरयोः; तत्र समाहारद्वन्द्वे लोकाश्रयत्वेन पुंल्लिङ्गता।

अपर आह–एकदेशद्वारेण गमनसमुदायस्यायानयव्यपदेशः, कृताकृतादिवत्समानाधिकरणसमास एवायमिति। प्रदक्षिणप्रसव्यगमनमात्रेऽपि नेष्यते, किन्तु विशेष इत्याह—**प्रदक्षिणप्रसव्यगामिनामित्यादि**।

**भावबोधिनी**

'तत्' इससे बोध्य द्वितीयासमर्थ 'अनुपद, सर्वान्न और अयानय'—इन शब्दों से क्रमशः (१) बद्धा, (२) भक्षयति और (३) नेय (=बँधी हुई, खाता है और ले जाने योग्य)—इन अर्थों में 'ख' प्रत्यय होता है। [अनुपद में] अनु आयाम (लम्बाई-चौड़ाई) अर्थ में अथवा सादृश्य अर्थ में है। [अतः 'अनुपद' का अर्थ है पैर की लम्बाई चौड़ाई के बराबर अथवा पैर के समान।] उदा० (१) अनुपदं बद्धा उपानत्—इस अर्थ में—अनुपदीना उपानत्। [अनुपद+ख=ईन, उपानत् का विशेषण होने से स्त्रीलिंग है अतः टाप् होता है।] पद के प्रमाण के समान प्रमाण वाला जूता—यह अर्थ है। (२) सर्वान्नं भक्षयति—इस अर्थ में—सर्वान्नीनः भिक्षुः। [सभी प्रकार के अन्न को खाने वाला भिक्षुक। सर्वान्न+ख=ईन, भसंज्ञा, अलोप] अय=दाहिनी ओर जाना, अनय=बायीं ओर जाना। दायीं और बायीं ओर जाने वाले शारों (पांशों) का जिस स्थान पर दूसरे जुआरी के पांशों द्वारा पद (=स्थानविशेष) का समावेश नहीं होता है उस स्थान को 'अयानय' कहते हैं। (३)

**योनः शारः ( म० भा० )। फलकशिरसि स्थित इत्यर्थः ॥**

**न्यासः**

मेव हि शाराणां पदानि परैर्न शक्यन्तेऽध्यासितुम् । असहायानां तु शक्यत एव । **फलकशिरसि स्थित** इति । यत्र फलकेऽङ्के ऽक्षैर्दीव्यन्ति तस्य शिरोभूतं यत्र स्थानं कितवानां प्रसिद्धं तत्र स्थितः शारः 'अयानयीनः' इत्युच्यते; तत्रैवायानयीनशब्दस्य रूढत्वात् ।

अपरे तु—नेयो=नेतव्यः, न नीतस्ततः। तत्र 'शिरसि स्थितः' इत्यर्थानुपपत्तेः फलकशिरसि स्थाप्यते' इत्यर्थं इति ग्रन्थेन भवितव्यमित्याहुः। नीतो वा नेयः; तदुपलक्षणत्वात्, भाविन्यावस्थयोक्तः। अयानयसम्बद्धित्वेऽपि सर्वेषां विशेष्यादेव प्रत्ययोत्पत्तिरुक्तैव। सत्यपि द्वितीयाधिकारे पुनर्द्वितीयोच्चारणं दृष्टाद् द्वितीयान्ताद् यथा स्यादित्येवमर्थम्। तेन विशिष्टार्थनेयवचनादयानयशब्दाद् द्वितीयान्ताद् प्रत्ययो भवति, न नेयवचनमात्रात्। स एव विशिष्टो यो नयः प्रदक्षिणप्रसव्यगामीत्यादिना ग्रन्थेन दर्शितः।

अथायानय इति कोऽयं शब्दः, यदि ह्ययं समाहरे द्वन्द्वः, तस्य नपुंसकत्वादयानयमिति भवितव्यम्? अथेतरेतरयोगे, द्व्यर्थत्वादयानयाविति भवितव्यम्? नायं द्वन्द्वः, किं तर्हि? मयूरव्यंसकादित्वात् तत्पुरुष —अयसहितोऽनयोऽयानय इति। अथ बद्धाभक्षयतिनेयेष्विति कथं तिङन्तस्य द्वन्द्वः? कः पुनराहायं द्वन्द्व इति? यदि न द्वन्द्वः, कथं नेयेष्विति बहुवचनम्? सौत्रत्वान्निर्देशस्य। सुब्व्यत्ययेन वा च्छन्दस्येकवचनस्य स्थाने बहुवचनमुपपन्नम्। ननु च्छन्दसि सुब्व्यत्यय उक्तः, नेदं छन्दः? 'छन्दोवत्सूत्राणि भवन्ति' इत्यदोषः। अथवा-द्वन्द्व एवायम्, न तु तिङन्तस्य। न हि भक्षयतिशब्दोऽयं

**पदमञ्जरी**

यस्मिन् गतिविशेषे सति परैर्द्यूतकारसम्बन्धिभिः पादानां स्थानापरपर्यायाणामसमावेशः—अनाक्रमणम्, अनध्यासनम्। एतदुक्तं भवति—प्रदक्षिणाप्रत्ययगामिनामात्मीयानां शाराणां सम्बन्धीनि यानि पदानि तानि परकीयैः शारैर्नाक्रम्यन्ते, यस्मिन् गतिविशेषे सोऽयानय इति।

ससहायस्य शारस्य परैर्नाक्रम्यते पदम्।
असहायस्तु शारेण परकीयेण बाध्यते ॥

**अयानयं नेय** इति। नयतेर्द्विकर्मकत्वादप्रधाने कर्मणि द्वितीया, प्रधाने कृत्यप्रत्ययः। **फलकशिरसि स्थित इत्यर्थ** इति। आरम्भकाले यत्र स्थाने शाराः स्थाप्यन्ते तच्छिरः, तत्र स्थितः शारः परपार्श्वादात्मपार्श्वं नेतव्यः, तत्रायश्चानयश्च भवनि, तेनासावयानयं नेयः। 'बद्धाभक्षयतिनेयेषु' इति निपात-

**भावबोधिनी**

**अयानयं नेयः शारः**—इस अर्थ में—**अयानयीनः शारः**। फलक के शिर=अग्रभाग में स्थित शार को अयानयीन कहा जाता है—यह अर्थ है।

**विमर्श**—प्रस्तुत सूत्र में—'बद्धाभक्षयतिनेयेषु' इस पद की व्युत्पत्ति विचारणीय है। यदि द्वन्द्व समास मानते हैं तो 'भक्षयति' इस तिङन्त का समावेश कैसे होगा? यदि द्वन्द्व नहीं मानते हैं तो 'बद्धा भक्षयतिनेयेषु' यहाँ बहुवचन कैसे हुआ है? उत्तर यह है कि 'बद्धा' और 'भक्षयति' ये स्वतन्त्र पद हैं और सुप् के व्यत्यय से एकवचन के स्थान पर 'नेयेषु' यहाँ बहुवचन है। चूँकि सूत्र भी वेदतुल्य हैं अतः व्यत्यय सम्भव है।

दूसरा समाधान यह है कि यहाँ समाहार-द्वन्द्व ही है तथा 'भक्षयति' यह तिङन्त प्रतिरूपक अव्यय ( प्रातिपदिक ) है अतः जैसे 'अस्तिक्षीरा' आदि में समास होता है उसी प्रकार यहाँ भी होता है।

पाशों के खेल में दो जुआरी खेलते हैं। उनमें जब एक चाल चलता है तो उसकी दाहिनी चाल होती है वही दूसरे के लिए बायीं होती है। जब अपने पांशे ऐसे स्थान पर पहुँच जाते हैं जहाँ प्रतिपक्षी के नहीं पहुंचते

## २०३१. परोवरपरम्परपुत्रपौत्रमनुभवति ॥ १० ॥ ( १८११ )

परोवर, परम्पर, पुत्रपौत्र—इत्येतेभ्यस्तदिति द्वितीयासमर्थेभ्यः 'अनुभवति' इत्येतस्मिन्नर्थे खः प्रत्ययो भवति। परोवरेति परस्योत्वं प्रत्ययसन्नियोगेन निपात्यते। परांश्चावरांश्चानुभवति परोवरीणः ( म०भा० )।

परपरतराणां च परम्परभावो निपात्यते। परांश्च परतरांश्चानुभवति परम्परीणः। पुत्रपौत्राननुभवति पुत्रपौत्रीणः।

परम्परशब्दो विनापि प्रत्ययेन दृश्यते—'मन्त्रिपरम्परा मन्त्रं भिनत्ती'ति। तच्छब्दान्तरमेव द्रष्टव्यम् ॥

### न्यासः

तिङन्तः। किं तर्हि? तिङन्तप्रतिरूपको निपातस्तिङन्तेन समानार्थः, यथा—अस्तिक्षीरा ब्राह्मणीत्यत्रास्तिशब्दः ॥ ९ ॥

परोवरपरम्परपुत्रपौत्रमनुभवति ॥ कथं पुनरप्रत्ययसन्नियोगेन निपातनस्य विना प्रत्ययेन दर्शनमुपपद्यते? इत्याह—तच्छब्दान्तरमेव द्रष्टव्यमिति ॥ १० ॥

### पदमञ्जरी

नात्तिङन्तस्य द्वन्द्वः। असमासपक्षे तु बद्धेत्यत्र प्रथमैकवचनम्, नेयेष्विति सप्तमीबहुवचनमित्यसमञ्जसमापद्येत ॥ ९ ॥

परोवरपरम्परपुत्रपौत्रमनुभवति ॥ परस्योत्ववचनमिति। परस्य शब्दरूपस्यादेरुत्वं निपात्यत इत्यर्थः, तत्र 'आद्गुणः'। अथ वा—परशब्दस्य ओत्वं निपात्यतेऽन्त्यस्यालः, ततः 'एङः पदान्तादति' इति पूर्वरूपैकादेशः, परस्यौत्वमिति प्राप्नोति, 'शकन्ध्वादिषु पररूपं वक्तव्यम्' इति पररूपेण निर्देशः। परपरतराणां चेति। चकारः पूर्वनिपातनापेक्षया समुच्चयार्थः। अर्थगतस्य बहुत्वस्य शब्दे समारोपाद् बहुवचनम्। तच्छब्दान्तरमेव द्रष्टव्यमिति। अव्युत्पन्नमेव प्रबन्धस्य वाचकम्। अत एव स्त्रीलिङ्गमेकवचनं च।

### भावबोधिनी

हैं उस फलक के अग्रभाग को 'अयानय' कहा जाता है वहाँ जो शार=पांशा रहता है वह 'अयानयीन' कहा जाता है। वहाँ एक पांशा पहले रहता है और अपना ही दूसरा पहुँच जाता है तब प्रतिपक्षी के पांशे का आक्रमण=समावेश संभव नहीं माना जाता है, यह जुआरियों का नियम है ॥ ९ ॥

'तत्' इससे बोध्य द्वितीयासमर्थ 'परोवर, परम्पर और पुत्रपौत्र—' शब्दों से 'अनुभवति' ( अनुभव करता है )—इस अर्थ में 'ख' प्रत्यय होता है। परोवर' इस शब्द में 'पर' का उत्व' [ या ओत्व ] यह आदेश प्रत्ययसन्नियोग से निपातित होता है। [ पर+अवर यहाँ यदि 'उत्व' होता है तब पर+उवर में गुण होता है। यदि 'ओत्व' आदेश है—पर ओवर, तब पररूप करके 'ओ' ही रहता है, वृद्धि नहीं होती है। यदि 'पर' का ओत्व करें तब 'परो अवर' में 'एङः पदान्ताति' से पूर्वरूप हो जाता है। ] उदा० ( १ ) परान् च अवरान् च अनुभवति—इस अर्थ में—परोवरीणः। [ समास के बाद जब प्रत्यय होता है तब पूर्वोक्त उत्वादेश होकर परोवर+ख=ईन, णत्व। पर और अवर का अनुभव करने वाला। ] पर-परतर का 'परम्पर' यह रूप निपातन से होता है। (२) परान् च परतरान् च अनुभवति—इस अर्थ में—परम्परीणः। [पर और परतर का अनुभव करने वाला। पर-परतर+ख=ईन, परम्पर आदेश, भसंज्ञा, अलोप, णत्व। ] (३) पुत्रपौत्रान् अनुभवति—इस अर्थ में पुत्रपौत्रीणः। [ पुत्र और पौत्र का अनुभव करने वाला। पुत्रपौत्र+ख=ईन। ]

'परम्पर' शब्द प्रत्यय के बिना भी देखा जाता हैं—'मन्त्रिपरम्परा मन्त्रं भिनत्ति।' यह 'परम्परा' एक

## २०३२. अवारपारात्यन्तानुकामं गामी ॥ ११ ॥ (१८१२)

अवारपार, अत्यन्त, अनुकाम—इत्येतेभ्यो द्वितीयासमर्थेभ्यः 'गामी' इत्येतस्मिन्नर्थे खः प्रत्ययो भवति। गमिष्यतीति गामी। 'भविष्यति गम्यादयः' (३.३.०३) इति। 'अकेनोर्भविष्यदाधमर्ण्ययोः' (३.२.७०) इति षष्ठीप्रतिषेधः। अवारपारं गामी अवारपारीणः।

* विगृहीतादपीष्यते * (म०भा०वा० १)। * विपरीताच्च * (म०भा०वा० २)। अवारीणः। पारावारीणः।

**न्यासः**

**अवारपारात्यन्तानुकामं गामी ॥ गामीति।** 'आवश्यकाधमर्ण्ययोर्णिनिः' इत्यावश्यकार्थे णिनिः। भविष्यति चायं काले गामिशब्दो वर्त्तते, यदाह—**गमिष्यतीति गामी।** सा च भविष्यति वृत्तिः 'भविष्यति गम्यादय;' इति वचनाल्लभ्यते, इत्याह—**भविष्यतीत्यादि। अकेनोर्भविष्यदाधमर्ण्ययोरिति षष्ठीप्रतिषेध इति।** तेन द्वितीयासमर्थतोपपद्यत इत्यभिप्रायः। कृद्योगा हि षष्ठी द्वितीयाया अपवादः, तेन षष्ठीप्रतिषेधे हि सति द्वितीययैव भवितव्यम्। **अवारपारमिति।** अवारस्य पारमिति षष्ठीसमासोऽयम्। वा च षष्ठ्याः पूर्वनिपातो वक्तव्यः। तेन पक्षे पारावारमित्यपि भवति।

**विगृहीतादपि भवति**[1]**। विपरीताच्चेति।** कथं पुनरधिकारादेव द्वितीयासमर्थविभक्तौ लब्धाया-

**पदमञ्जरी**

पारम्पर्यमित्यपि तस्मादेव स्वार्थे ष्यञ् भवति। कथं परोवर्यंवदिति ? असाधुरेवायम्; खप्रत्ययसन्नियोगेन परोवरेति निपातनात् ॥ १० ॥

**अवारपारात्यन्तानुकामं गामी ॥ गामीति।** 'गमेरिनिः' (द० उ० ६.५७), 'आङि णिच्च' (द० उ०६.५८) इति बहुलवचनात्केवलादपि णिनिर्भविष्यति। **गम्यादय इति।** यद्यप्याङ्पूर्वो गमि गम्यादिषु पठ्यते, तथापि बहुलवचनादेव णिनिरिव भविष्यत्कालत्वमपि भविष्यतीति भाव.। **अकेनोर्भविष्यदाधमर्ण्ययोरिति षष्ठीप्रतिषेध इति।** 'गत्यर्थकर्मणि' इत्यत्र यदुक्तम्—'द्वितीयाग्रहणमपवादविषये विधानार्थं तेन कृत्प्रत्ययप्रयोगे षष्ठी न भवति—'ग्रामं गन्ता' इति, तन्नाश्रितम्; प्रतिषेधे षष्ठीप्रसङ्गस्यैवाभावात्। **अवारपारीण इति।** द्वन्द्वात्प्रत्ययः। अवारपारे तीरे आहिताग्न्यादिषु प्रक्षेपादुभयं भवति—

**भावबोधिनी**

दूसरा ही शब्द समझना चाहिए। [ प्रस्तुत सूत्र का 'परम्पर' यह शब्द नहीं, है इसी लिए 'परम्परा' शब्द स्त्रीलिङ्ग और एकवचन में प्रयुक्त होता है। ] ॥ १० ॥

अवारपार, अत्यन्त और अनुकाम—इन द्वितीयासमर्थ प्रातिपदिकों से गामी (भविष्यत्काल में जाने वाला) इस अर्थ में 'ख' प्रत्यय होता है। गमिष्यति–(जायगा)—इन अर्थ में 'गामी' बनता है। "भविष्यत्काल अर्थ में 'गामी' आदि होते हैं। [ "गमेरिनिः" "आङि णिच्च" (उणादि-४४९-५०) से आङ्पूर्वक से ही णित् माना गया है किन्तु "उणादयो बहुलम्" इस सूत्र में बहुल के अनुसार आङ्रहित अकेले से भी णिद्वत् होता है, अतः उपधावृद्धि हो जाती है। ] "अक और इन भविष्यत् और आधमर्ण्य अर्थ में हों तो कर्म में षष्ठी नहीं होती है" इत्यर्थक 'अकेनोर्भविष्यदाधमर्ण्ययोः" इस सूत्र से षष्ठी का निषेध होता है। [ अतः कर्म मे द्वितीया ही होती है। ] उदा० अवारपारं गामी—इस अर्थ में—अवारपारीणः। [ अवारपार + ख = ईन, भसंज्ञा, अलोप, णत्व। नदी के उस तट पर जाने वाला। ]

* अलग अलग दोनों से भी 'ख' इष्ट है। * * और विपरीत अर्थात् 'पारावार' शब्द से भी 'ख' इष्ट है। * अतः—अवारीणः, पारावारीणः, [ अर्थ पूर्वोक्त ही है। ]

---

१. "राष्ट्रावारपाराद्घखौ" (म० भा० ४।२।९३) इतिसूत्रभाष्ये पठितं वार्त्तिकद्वयमिहाप्युपन्यस्तमिति बोध्यम्।
२. 'विगृहीतादपीष्यते' इति काशिका मूलपाठः।

अत्यन्तं गामी अत्यन्तीनः। भृशं गन्तेत्यर्थः। अनुकामं गामी अनुकामीनः। यथेष्टं गन्तेत्यर्थः ॥

## २०३३. समांसमां विजायते ॥१२॥ (१८१३)

**'समांसमाम्'** इति वीप्सा, सुबन्तसमुदायः प्रकृतिः, **विजायते=गर्भं धारयतीति प्रत्ययार्थः।** गर्भधारणेन सकलापि समा व्याप्यत इति अत्यन्तसंयोगे द्वितीया ( २.३५. )। **समांसमां विजायते समांसमीना गौः। समांसमीना वडवा।**

*** पूर्वपदे सुपोऽलुग्वक्तव्यः * (म० भा० वा० १)।**

### न्यासः

मिहाधिकं द्वितीयोपादानं कृतम् ? एतेन तदधिकस्य विधिर्भवतीति सूचितम्। तेन विगृहीताद् विपरीताच्च प्रत्यय उपपद्यते। **अत्यन्तमिति**। अन्तस्याभावोऽत्ययो वेति। 'अव्ययं विभक्ति' इत्यादिनाऽव्ययीभावः। अथवा—अन्तमतिक्रान्तमिति 'कुगति' इत्यादिना तत्पुरुषः। क्रियाविशेषणञ्चैतत्। **भृशं गन्तेत्यर्थ इति**। भृशार्थत्वेन लोकेऽत्यन्तशब्दस्य प्रसिद्धत्वात्। **अनुकाममिति**। कामसदृशमनुकामम्, कामानुरूपमित्यर्थः। यथार्थेऽव्ययीभावः। इदमपि क्रियाविशेषणमेव ॥ ११ ॥

**समांसमां विजायते** ॥ समां समामिति 'नित्यवीप्सयोः' इति वीप्सायां द्विर्वचनम्। अत आह—**समांसमामिति वीप्सेति**। **सुबन्तसमुदायः प्रकृतिरिति**। प्रातिपदिकाधिकारे वचनसामर्थ्यात्। **गर्भं धारयतीत्यर्थ इति**। अनेकार्थत्वाद्धातूनाम्।

**पूर्वपदे सुपोऽलुग्वक्तव्य इति**। तद्धित उत्पन्ने 'कृत्तद्धितसमासाश्च' इति प्रातिपदिकसंज्ञायां सत्याम्

### पदमञ्जरी

अवारपारे, पारावारे इति। **अत्यन्तमिति**। क्रियाविशेषणम्। एवम् **अनुकाममिति**। कामः=इच्छा, तस्य सदृशमनुकामम्=कामानुरूपम्, 'यथार्थे यदव्ययम्' इति समासः ॥ ११ ॥

**समांसमां विजायते** ॥ **समांसमामिति वीप्सेति**। द्रष्टव्येति शेषः। अत्र निर्देशे वीप्सा द्रष्टव्या, तेन द्विवचनमित्यर्थः। अथ वा—वीप्सावाची समुदायो वीप्सा वीप्सावाचीत्यर्थः। **सुबन्तसमुदायः प्रकृतिरिति**। प्रातिपदिकाधिकारेऽपि वचनसामर्थ्यात्। **गर्भं धारयतीत्यर्थ इति**। दृश्यते च विजनिर्गर्भधारणे, 'स विजायमानो गर्भेणाताम्यत्' इति।

**पूर्वपदे सुपोऽलुग्वक्तव्य इति**। अन्यथा तद्धिते उत्पन्ने यथोत्तरपदे लुग्भवति 'सुपो धातुप्राति-

### भावबोधिनी

अत्यन्तं गामी—इस अर्थ में अत्यन्तीनः। बहुत अधिक जाने वाला—यह अर्थ है। अनुकामं गामी—इस अर्थ में –अनुकामीनः। अपनी इच्छानुसार भविष्य में जाने वाला। [अत्यन्तं तथा अनुकामं—ये दोनो क्रियाविशेषण रूप में प्रयुक्त हैं ] ॥ ११ ॥

'समां समाम्' यह वीप्सा है, सुबन्तसमुदाय प्रकृति है, विजायते=गर्भ धारण करती है—यह प्रत्ययार्थ है। जो गर्भधारण द्वारा सम्पूर्ण वर्ष ( समा ) अर्थात् प्रत्येक वर्ष को व्याप्त करती है, यहाँ अत्यन्तसंयोग में [ "कालाध्वनोरत्यन्तसंयोगे" पा. सू. २।३।५ ] द्वितीया विभक्ति होती है। उदा० समां समां विजायते—इस अर्थ में—'समांसमीना गौः' यह होता है। [ प्रत्येक वर्ष गर्भवाली=बच्चा देने वाली गाय। ] समांसमीना वडवा। [ समां समां विजायते—इस अर्थ में पूर्ववत् प्रत्यय होता। हर वर्ष ब्याने वाली घोड़ी। ]

[ समां समां विजायते-इस अर्थ में जब तद्धित प्रत्यय हो जाता है तब "कृत्तद्धितसमासाश्च" सूत्र से उस समुदाय की प्रातिपदिकसंज्ञा होने से "सुपो धातुप्रातिपदिकयोः" सूत्र से 'सुप् प्रत्यय का लोप प्राप्त होता है। इसका वारण करने के लिए यह वचन है—) * पूर्ववर्ती पद के सुप् का अलुक् कहना चाहिए। * [ इसीलिये समां

केचित्तु 'समायां समायां विजायते' इति विगृह्णन्ति, गर्भमोचने विजनिर्वर्त्तते'—इत्याहुः, तेषां पूर्वपदे यलोपमात्र निपात्यते, परिशिष्टस्यालुग्वक्तव्यः ।

* अनुत्पत्तावुत्तरपदस्य च वा यलोपो वक्तव्यः * ( म० भा० ५.२.१२ वा० ४ ) । समां समां विजायते । समायां समायां विजायत इति वा ॥

## २०३४. अद्यश्वीनावष्टब्धे ॥ १३ ॥ (१८१४)

### न्यासः

'सुपो धातुप्रातिपदिकयोः' इति सुब्लुक् प्राप्नोति, तस्य प्रतिषेधो वक्तव्यः ।

**गर्भविमोचनेऽपि विजनिर्वर्त्तत इत्याहुरिति** । तदेवं मन्यते—यदा गर्भधारणे वर्त्तते तदात्यन्तसंयोगे द्वितीयैवात्र न सप्तमी । गर्भविमोचने विजनावुपपद्यते सप्तमी । **यलोपमात्रमिति** । न हि गर्भविमोचनेन सकला समा व्याप्यत इति मात्रशब्देन सर्वस्या विभक्तेर्लोपो न भवतीति दर्शयति । **परिशिष्टस्येति** । आम्शब्दस्य ।

**अनुत्पत्ताविति** । तद्धितस्य । **उत्तरपदस्य चेति** । चकारात् पूर्वपदस्य लोपो वक्तव्य इति यकारस्य प्रत्ययसन्नियोगेन विधीयमानो लोपस्तदभावे न प्राप्नोतीति पक्ष उपसंख्यायते ॥ १२ ॥

### पदमञ्जरी

पदिकयोः' इति, तथा पूर्वपदेऽपि स्यात् ।

**केचित्त्वित्यादि** । नन्वत्यन्तसंयोगे द्वितीयया भवितव्यम् ? तत्राह—**गर्भविमोचने त्विति** । तत्र विमोचनेन कृत्स्नायाः समाया व्याप्त्यभावाद् द्वितीयाभाव इति भावः । **यलोपमात्रमिति** । यकारमात्रलोपो न सर्वस्या विभक्तेरिति मात्रशब्दस्यार्थः । **परिशिष्टस्येति** । आम्शब्दस्यालुग्वक्तव्यः । ननु याटः सुब्भक्तत्वात्सुब्लुकैव लोपः सिद्धः तत्र यलोपवचनं नियमार्थं भविष्यति—यकारस्यैव लोपो न तु सर्वस्य प्रत्ययस्येति, तत्किमुच्यते 'अलुग्वक्तव्यः' इति ? एवं मन्यते—यथैव निपातनात्पूर्वपदपरिशिष्टस्य लोपो न भवति एवमुत्तरपदेऽपि न स्यादिति ।

**अनुत्पत्ताविति** । वाक्ये पूर्वोत्तरपदयोरपि पक्षे यलोपो वक्तव्यः, तेन द्वैरूप्यं सिद्धं भवति ॥ १२ ॥

**अद्यश्वीनावष्टब्धे** ॥ अवष्टब्ध, विजन—इत्येतयोर्यथाक्रमं विवरणम्—आसन्ने प्रसव इति । कथं

### भावबोधिनी

समा+ख=ईन, टाप् होने से पूर्वपद में द्वितीया सुनाई देती है । ]

कुछ लोग—'समायां समायां विजायते' यह विग्रह करते हैं, 'गर्भमोचन=बच्चे को जन्म देना' अर्थ में 'विजन्' धातु ( विजायते ) का प्रयोग है—ऐसा कहते हैं । इनके अनुसार पूर्वपद (समायाम्) का केवल 'या'—लोप निपातित करना चाहिए, शेष 'आम्' का अलुक् कहना चाहिए । [ इस प्रकार पूर्वपद 'समायाम्' का 'य्' लुप्त होता है और 'आम्' शेष बचता है—समा+आम्=समाम् । किन्तु उत्तरपद 'समायाम्' का याट्-सहित सप्तमी एकवचन का लुक् हो जाता है । अतः समांसमा+ख=ईन, टाप् । ]

* यदि ख प्रत्यय नहीं होता है तो उत्तर पद का और पूर्वपद का अर्थात् दोनों का 'य' विकल्प से लुप्त करना चाहिए । * उदा० समां समां विजायते और समायां समायां विजायते—ये दोनों प्रयोग होते हैं । [ अतः ख प्रत्यय करने पर एक ही रूप होता है । ख प्रत्यय न करने पर दो रूप होते हैं । ] ॥ १२ ॥

'विजायते' इसकी अनुवृत्ति होती है । अवष्टब्ध=आसन्न, विजन प्रसव अर्थ में 'अद्यश्वीन' यह निपातित किया जाता है । आविदूर्य=सामीप्य अर्थ में मूर्धन्य (षत्व) का विधान किया गया है—"आलम्बन और आविदूर्य अर्थ

'विजायते' इति वर्त्तते। 'अद्यश्वीनः' इति निपात्यते अवष्टब्धे विजने=आसन्ने प्रसवे। आविदूर्ये हि मूर्धन्यो विधीयते—'अवाच्चालम्बनाविदूर्ययोः' (८.३.६८) इति। अद्य वा श्वो वा विजायते अद्यश्वीना गौः। अद्यश्वीना वडवा।

केचित्तु—'विजायते इति नानुवर्त्तते, अवष्टब्धमात्रे निपातनम्'—इत्याहुः। अद्यश्वीनं मरणम्। अद्यश्वीनो वियोग इति॥

## २०३५. आगवीनः॥ १४॥ (१८१५)

'आगवीनः' इति निपात्यते। गोराङ्पूर्वाद्, आ तस्य गोः प्रतिदानात्[1] कारिणि खः प्रत्ययो निपात्यते (म० भा०)। आगवीनः कर्मकरः॥ यो गवा भृतः कर्म करोति आ तस्य गोः प्रत्यर्पणात्॥

### न्यासः

अद्यश्वीनावष्टब्धे॥ अवष्टब्धे विजन आसन्ने प्रसव इति। अत्र पूर्वयोः पदयोरुत्तराभ्यां यथाक्रममर्थाख्यानम्॥ १३॥

### पदमञ्जरी

पुनरवष्टब्धशब्दस्यासन्नमर्थः? आविदूर्ये हीति। यद्यप्यालम्बनेऽपि षत्वं विधीयते; तथापि विजनस्यालम्बनत्वासम्भवादाविदूर्यमेवार्थः। किं पुनरत्र निपात्यते? अद्य वा श्वो वेति वार्थे समासः खप्रत्ययः, टिलोपस्त्वव्ययत्वादेव सिद्धः। अद्यश्वीना वडवेति। विजायत इत्यस्यानुकूलतया स्त्रीलिङ्गमुदाहृतम्, न पुनः सूत्रे स्त्रीलिङ्गनिर्देशः, अद्यश्वीनो गोसमूहः, अद्यश्वीनं गोमण्डलमित्यत्रापीष्टत्वात्। तस्मात्सूत्रे ह्रस्वान्तस्याविभक्तिको निर्देशः।

केचित्त्विति। तेषां यथाभिधानं क्रियाध्याहारः। अवष्टब्धमात्रे इति। भवत्याद्यर्थेऽपीत्यर्थः। अद्यश्वीनं मरणमिति। अद्य वा श्वो वा भविष्यतीत्यत्रार्थे प्रत्ययः॥ १३॥

आगवीनः॥ गोराङ्पूर्वादिति। गोशब्दान्तादाङ्पूर्वात्प्रातिपदिकादित्यर्थः। आ तस्य गोः प्रतिदानादिति। प्रतिदानम्=प्रत्यर्पणम्। एतेन वृत्तिविषये गोशब्दो गोप्रतिदाने वर्त्तत इति दर्शयति। कारिणीति। कृञ आवश्यके णिनिः। आगवीन इति। 'आङ् मर्यादाभिविध्योः' इत्यव्ययीभावे उपसर्जनह्रस्वत्वे च कृते खप्रत्ययः, 'ओर्गुणः'॥ १४॥

### भावबोधिनी

'अव' से परे 'स्तम्भ' के सकार का मूर्धन्य (षत्व) होता है।" (पा. सू. ८।३।६८) [इस प्रकार अव+स्तम्भ्+क्त से 'अवष्टब्ध' बना है इसी लिये इसका अर्थ=आसन्न है।] उदा० अद्य श्वो वा विजायते-इस अर्थ में—'अद्यश्वीना गौः' (आज या कल बच्चा देने वाली गाय।) अद्यश्वीना वडवा। (आज या कल में बच्चा देने वाली घोड़ी।)

कुछ लोग यह कहते हैं—'पूर्व सूत्र से 'विजायते' (=गर्भ धारण करना, बच्चा पैदा करना) इसकी अनुवृत्ति नहीं होती है, अतः अवष्टब्धमात्र (सामीप्यमात्र) अर्थ में यह निपातन होता है। अद्यश्वीनं मरणम्। अद्यश्वीनः वियोगः। (आज या कल में अर्थात् शीघ्र ही होने वाली मृत्यु। शीघ्र होने वाला वियोग।) [अद्य श्वस्+ख=ईन, टि=अस् का लोप—अद्यश्वीनः बनता है।]॥ १३॥

'आगवीन' यह निपात से सिद्ध होता है। आङ्पूर्वक 'गो' शब्द से ख प्रत्यय 'कार्य करने वाले' के अर्थ में होता है जब वह कार्य तब तक करना पड़ता है जब तक कि गाय वापस नहीं दे दी जाती है। उदा० आगवीनः कर्मकरः। [आङ् गो का अव्ययीभाव समास मर्यादा अर्थ में करने पर उपसर्जन का ह्रस्व हो जाने पर—'आगु'

---

१ 'प्रतिपादनाद्' इति प्रकाशितः पाठोऽशुद्धः, अर्थासङ्गतेः।

२०३६. अनुग्वलङ्गामी ॥ १५ ॥ (१८१६)

गोः पश्चाद् 'अनुगु'। अनुगुशब्दाद् 'अलङ्गामी' इत्यस्मिन्नर्थे खः प्रत्ययो भवति। अनुगु पर्याप्तं गच्छति अनुगवीनो गोपालकः ॥

२०३७. अध्वनो यत्खौ ॥ १६ ॥ (१८१७)

तदिति द्वितीया समर्थविभक्तिरनुवर्तते, अलङ्गामीति च प्रत्ययार्थः। अध्वन्शब्दाद् द्वितीयासमर्थाद् 'अलङ्गामी' इत्येतस्मिन्नर्थे यत्खौ प्रत्ययौ भवतः। अध्वानमलङ्गामी अध्वनीनः, अध्वन्यः। 'ये चाभावकर्मणोः' (६. ४. १६८), 'आत्माध्वानौ खे' ( ६. ४. १६९ ) इति प्रकृतिभावः ॥

न्यासः

आगवीनः ॥ १४ ॥ अनुग्वलङ्गामी ॥ १५ ॥ अध्वनो यत्खौ ॥ १६ ॥

पदमञ्जरी

अनुग्वलङ्गामी ॥ अलङ्गगामीति। 'सुप्यजातौ' इतिः णिनिः। गोः पश्चादनुग्विति। पश्चादर्थेऽव्ययीभावः, उपसर्जनह्रस्वः। पर्याप्तमिति। क्रियाविशेषणमेव। अनुग्विति। ततश्च द्वितीयान्तात्प्रत्ययः। कृद्योगलक्षणा तु षष्ठी क्रियाविशेषणान्न भवति, तद्यथा शोभनं पाचक इति ॥ १५ ॥

अध्वनो यत्खौ। द्वितीयासमर्थादिति। यदा तिङन्तेन विग्रहः—अध्वानं गच्छतीति, तदा

भावबोधिनी

बना कर 'ख' प्रत्यय होता है—आगु+ख=ईन, 'उ' का गुण, अव् आदेश। ] जो व्यक्ति गाय के कारण नौकर बनाया हुआ तब तक काम (नौकरी) करता रहता है जब तक कि गाय वापस नहीं दे देता। ऐसा नौकर 'आगवीनः' कहा जाता है।

विमर्श—गो शब्द 'गोप्रत्यर्पण' अर्थ में हैं। आङ् मर्यादा अर्थ में—गोप्रत्यर्पण=गाय लौटाने तक। 'ख' प्रत्यय 'कारी'=करने वाला=नौकर अर्थ में है। इस प्रकार यह अर्थ होता है कि कोई व्यक्ति गाय लेने के कारण देने वाले महाजन के यहाँ काम करने लगता है। वह जब तक गाय को वापस नहीं लौटा पाता तब तक उसका काम करता रहता है। ऐसा व्यक्ति 'आगवीन' कहा जाता है। देहात में आज भी इस प्रकार के नौकर देखे जाते हैं। धनी लोग गाय दे देते हैं। मजदूर के घर वाले उसका दूध बेचकर परिवार का खर्चा चलाते हैं। मुखिया या उसका लड़का गाय देने वाले की सेवा करता रहता है। जब तक गाय वापस नहीं दी जाती तब तक सेवा करना आवश्यक होता है।

यहाँ काशिका का प्रकाशित पाठ "आ तस्य गोः प्रतिपादनात्............।" अशुद्ध है। भाष्य तथा प्रदीपोद्द्योत और पदमंजरी आदि के अनुसार "आ तस्य गोः प्रतिदानात्........"। यही पाठ होना चाहिए ॥ १४ ॥

गोः पश्चात्—(गाय के पीछे ) इस अर्थ में 'अनुगु' यह है। 'अलङ्गामी' ( पर्याप्त रूप से जाने वाला ) इस अर्थ में 'अनुगु' शब्द से 'ख' प्रत्यय होता है। उदा० अनुगु पर्याप्त गच्छति—इस अर्थ में अनुगवीनः गोपालकः। [ गोः पश्चात्—इस अर्थ में अव्ययीभाव समास, उपसर्जन का ह्रस्व करने पर—अनुगु+ख=ईन, उ का गुण' अव् आदेश—अनुगवीनः। वह गोपालक जो गाय के पीछे पीछे खूब चलता रहता है, उसे कभी अकेली नहीं छोड़ता। ] ॥ १५ ॥

'तत्' इस द्वितीयासमर्थ विभक्ति की अनुवृत्ति यहाँ होती है और 'अलङ्गामी' (=पर्याप्त जाने वाला ) यह प्रत्यय का अर्थ है। द्वितीयासमर्थ अध्वन् शब्द से 'अलङ्गामी' इस अर्थ में 'यत्' और 'ख' ये दो प्रत्यय होते हैं।

## २०३८. अभ्यमित्राच्छ च ॥ १७ ॥ ( १८१८ )

**अभ्यमित्रशब्दाद् द्वितीयासमर्थाद् 'अलङ्गामी' इत्येतस्मिन्नर्थे छः प्रत्ययो भवति। चकाराद्यत्खौ च। अभ्यमित्रमलङ्गामी अभ्यमित्रीयः, अभ्यमित्र्यः, अभ्यमित्रीणः। अमित्राभिमुखं सुष्ठु गच्छतीत्यर्थः ॥**

## २०३९. गोष्ठात्खञ् भूतपूर्वे ॥ १८ ॥ (१८१९)

**गावस्तिष्ठन्त्यस्मिन्निति गोष्ठम्। गोष्ठशब्देन सन्निहितगोसमूहो देश उच्यते। भूतपूर्वग्रहणं तस्यैव विशेषणम्। गोष्ठशब्दाद् भूतपूर्वोपाधिकात्स्वार्थे खञ् प्रत्ययो भवति। गौष्ठीनो देशः।**

### न्यासः

**अभ्यमित्राच्छ च ॥ अभ्यमित्रादिति।** अमित्रस्याभिमुखमभ्यमित्रम्। 'लक्षणेनाभिप्रती आभिमुख्ये' इत्यव्ययीभावः, क्रियाविशेषणञ्चैतत्, तेन द्वितीयैव समर्थविभक्तिर्भवति ॥ १७ ॥

**गोष्ठात् खञ् भूतपूर्वे ॥** 'भूतपूर्वे चरट्' इति प्राप्ते खञ् विधीयते। **गावस्तिष्ठन्त्यस्मिन्निति गोष्ठमिति।** 'सुपि स्थः' इति कः, अम्बाम्बगोभूमि' इत्यादिना मूर्धन्यः।

**भूतपूर्व इति।** पूर्वं भूत इति भूतपूर्वः। 'सुप्सुपा' इति समासः। **भूतपूर्वग्रहणं तस्यैव विशेषण-**

### पदमञ्जरी

द्वितीयासमर्थत्वम्। यदापि सूत्रोपात्तेन गामीत्यनेन विग्रहः, तदापि द्वितीयैव। कृद्योगलक्षणा षष्ठी न भवति; 'अकेनोः' इति प्रतिषेधात्। इह 'अध्वनो यच्च' इति सिद्धम्, चकारात्खश्च ? एवमुच्यमाने उत्तरसूत्रे चकारेणानन्तरो यदेवानुकृष्यते, न चानुकृष्टः खः। अतो यत्खयोर्द्वयोरप्यनुवृत्त्यर्थं यत्खावित्युक्तम् ॥ १६ ॥

**अभ्यमित्राच्छ च ॥ अभ्यमित्रमिति।** 'लक्षणेनाभिप्रती आभिमुख्ये' इत्यव्ययीभावः, क्रियाविशेषणत्वात्कर्मणि द्वितीया ॥ १७ ॥

**गोष्ठात्खञ् भूतपूर्वे ॥ गावस्तिष्ठन्त्यस्मिन्निति गोष्ठ इति।** घञर्थे कविधानम्, 'स्थास्नापाव्यधिहनियुध्यर्थम्' इत्यधिकरणे कः, 'अम्बाम्बगोभूमि' इति षत्वम्। पूर्वं भूतो भूतपूर्वः, 'सुप्सुपा' इति

### भावबोधिनी

उदा० अध्वानम् अलङ्गामी—इस अर्थ में— अध्वनीनः, अध्वन्यः। [ अध्वन् + ख = ईन, अध्वन् + यत् = य; यहाँ ] "ये चाभावकर्मणोः" ( पा. सू. ६।४।१६८ ) और "आत्माध्वानौ खे" ( पा. सू. ६।४।१६९ ) से [ क्रमशः— अध्वन्यः और अध्वनीनः' में ] प्रकृतिभाव हो जाता है। [ अतः टि = अन् का लोप नहीं होता है। ] ॥ १६ ॥

द्वितीयासमर्थं 'अभ्यमित्र' शब्द से 'अलङ्गामी' ( पर्याप्त जाने वाला ) इस अर्थ में 'छ' प्रत्यय होता है। 'च' के बल से 'यत्' और 'ख' ये प्रत्यय भी होते हैं। उदा० अभ्यमित्रम् अलङ्गामी-इस अर्थ में—(१)अभ्यमित्रीयः; (२) अभ्यमित्र्यः, (३) अभ्यमित्रीणः ये रूप होते हैं। अमित्र अर्थात् शत्रु के सामने अच्छी तरह समर्थ होकर जाता है, यह अर्थ है। [ अमित्रस्य अभिमुखम्—इस अर्थ में "लक्षणेनाभिप्रती आभिमुख्ये" ( पा. सू. २।१।१४) से अव्ययीभाव समास है और "अभ्यमित्रम्" यह क्रियाविशेषण होने से द्वितीयान्त है। ] ॥ १७ ॥

गायें बैठती हैं जिस स्थान पर वह 'गोष्ठ' है। गोष्ठ शब्द द्वारा वह देश=स्थान कहा जाता है जहाँ गायों का समूह पास में हैं। भूतपूर्व का ग्रहण उसी ( देश ) का विशेषण है। भूतपूर्व इस उपाधिवाले अर्थात् 'भूतपूर्व' अर्थ में वर्तमान 'गोष्ठ' शब्द से स्वार्थ में 'खञ्' प्रत्यय होता है। उदा० गौष्ठीनः देशः। [ भूतपूर्वः गोष्ठः—इस विग्रह में—गोष्ठ + खञ् = ईन, भसंज्ञा, अलोप। जिस स्थान पर पहले गायें बैठती थीं वह स्थान 'गौष्ठीन' है। ]

भूतपूर्वग्रहणं किम् ? गोष्ठो वर्तते ॥

२०४०. अश्वस्यैकाहगमः ॥ १९ ॥ (१८२०)

निर्देशादेव समर्थविभक्तिः। अश्वशब्दात्षष्ठीसमर्थाद् 'एकाहगमः' इत्येतदर्थे खञ् प्रत्ययो भवति। एकाहेन गम्यत इत्येकाहगमः। अश्वस्यैकाहगमोऽध्वा आश्वीनः। 'आश्वीनानि शतं पतित्वा' (तां० ब्रा० २१.१.९) ॥

२०४१. शालीनकौपीने अधृष्टाकार्ययोः ॥ २० ॥ (१८२१)

शालीन-कौपीन-शब्दौ निपात्येते यथासंख्यमधृष्टे, अकार्ये चाभिधेये। अधृष्टः = अप्रगल्भः। अकार्यम् = अकरणार्हं, विरुद्धम्[1]। शालीनकौपीने अधृष्टाकार्ययोः पर्यायौ यथाकथञ्चिद् व्युत्पादयितव्यौ।

न्यासः

मिति। अर्थद्वारकं वेदितव्यम्, यथा—'धातोः कर्मणः समान०' इत्यादिसूत्रे कर्मत्वम्, समानकर्तृकत्वञ्च ॥ १८ ॥

अश्वस्यैकाहगमः ॥ एकाहेन गम्यत इति एकाहगम इति। 'अकर्तरि च' इत्यादिना घञ्, निपातनान्न वृद्धिः। 'कर्तृकरणे कृता बहुलम्' इति समासः। आश्वीनानि शतं पतित्वेति। एकाहेन यानि गम्यन्ते योजनानि तेषां शतं गत्वेत्यर्थः। शतं संख्येये वर्तमानं स्वसंख्योपादान एव स्वभावाद् वर्त्तते। तेनाश्वीनानि शतमित्याश्वीनशब्देन बह्वर्थप्रवृत्तिसामानाधिकरण्येऽप्येकवचनान्तमेव प्रयुज्यते ॥ १९ ॥

शालीनकौपीने अधृष्टाकार्ययोः ॥ यथाकथञ्चिदिति। येन केनचित् प्रकारेण। नावयवार्थे

पदमञ्जरी

समासः। तस्यैवेति। गोष्ठशब्दस्यार्थद्वारकं च विशेषणत्वम्, न स्वरूपेण, न हि भूतपूर्वाद् गोष्ठशब्दात्प्रत्ययो विधातुं शक्यते। गोष्ठो वर्त्तत इति। सम्प्रति गवामवस्थानं दर्शयति ॥ १८ ॥

अश्वस्यैकाहगमः ॥ एकाहेन गम्यत इत्येकाहगमः, 'ग्रहवृदृनिश्चिगमश्च' इत्यपं बाधित्वा 'परिमाणाख्यायां सर्वेभ्यः' इति घञ् प्राप्नोति। उक्तं हि 'घञनुक्रमणमजपोर्विषयः' (का० वा० ३.३ २०) इति, अस्ति चात्र परिमाणाख्या, एकाहेन गम्यत इति परिच्छेदावगमाद्, अस्मादेव निपातनादप् द्रष्टव्यः, 'कर्तृकरणे कृता बहुलम्' इति समासः। अश्वस्येति। कर्त्तरि षष्ठी। आश्वीनानि शतं पतित्वेति। यावन्ति योजनान्येकाहेनाश्वेन गम्यते, तावतां शतं गत्वेत्यर्थः ॥ १९ ॥

शालीनकौपीने अधृष्टाकार्ययोः ॥ यथाकथञ्चिदिति। नात्रावयवार्थेऽभिनिवेष्टव्यमित्यर्थः।

भावबोधिनी

भूतपूर्व—के ग्रहण का क्या प्रयोजन ? 'गोष्ठः वर्तते। [यहाँ वर्तमान काल का प्रयोग होने से भूतपूर्वत्व नहीं हो सकता। अतः 'ख' प्रत्यय नहीं होता। ] ॥ १८ ॥

[ अश्वस्य—इस ] निर्देश से ही [ षष्ठी ] समर्थविभक्ति ज्ञात हो जाती है। षष्ठीसमर्थ अश्व शब्द से 'एकाहगमः' इस अर्थ में 'खञ्' प्रत्यय होता है। एक दिन में जितना मार्ग जाया जाता है वह 'एकाहगम' है। उदा० अश्वस्य एकाहगमः—इस अर्थ में—आश्वीनः अध्वा। [ एकाहेन गम्यते—इस अर्थ में 'अप्' प्रत्यय अथवा घञ् करने पर वृद्धि का अभाव—गमः। "कर्तृकरणे कृता बहुलम्" ( पा. सू. २।१।३२ ) से समास होता है—एकाहगमः। अश्व + खञ् = ईन, आदिवृद्धि,—आश्वीनः। ] आश्वीनानि शतं पातित्वा। [ एक दिन में घोड़ा जितने योजन मार्ग पर चलता है उतने के सौगुने पर चलकर। ] ॥ १९ ॥

1. 'विरूपम्'—इति पाठा०।

शालाप्रवेशनमर्हति, कूपावतारमर्हति ( म० भा० )—इत्यर्थयोः खञ् प्रत्यय उत्तरपदलोपश्च निपात्यते। शालीनो जडः। कौपीनं पापम्॥

## २०४२. व्रातेन जीवति॥ २१॥ (१८२२)

निर्देशादेव तृतीया समर्थविभक्तिः। व्रातशब्दात्तृतीयासमर्थात् 'जीवति' इत्यस्मिन्नर्थे खञ् प्रत्ययो भवति। नानाजातीया अनियतवृत्तय उत्सेधजीविनः सङ्घाः=व्राताः ( म० भा० )। उत्सेधः=

### न्यासः

अर्थाभिनिवेशः कर्त्तव्य इति दर्शयति—**उत्तरपदलोपश्चेति**। उत्तरपदं=प्रवेशनशब्दोऽवतरणशब्दश्च, तस्य लोपः। **शालीनो जड** इति। स हि जाड्यात् प्रतिवचनमपि दातुं शक्तोऽप्यार्यैराद्रियमाणो न शक्नोति तत्र स्थातुम्—जनता पश्यतीति, अतः शालाप्रवेशनमर्हति। शालाशब्दोऽयमिह कुटीरवचनः। **कौपीनं पापमिति**। तद्धि लोके निन्द्यत्वादकार्य्यत्वाच्चाकार्य्यम्, तल्लोके कूपेऽवतरणं प्रवेशनमर्हतीत्युच्यते। तत्सामर्थ्याच्च शरीरावयवः कश्चित् कौपीनशब्देनोच्यते। यदपि तस्य शरीरावयवस्याच्छादनार्थं वासः, तदपि तत्सम्बन्धात् प्रव्रजितादीनां कौपीनमित्युच्यते॥ २०॥

**व्रातेन जीवति॥ नानाजातीय** इति। अनेकजातीयाः। **अनियतवृत्तय** इति। अनियतक्रियाः।

### पदमञ्जरी

अभिनिवेशे तु यः शालायामधृष्टो भार्याजितत्वादन्यत्र धृष्टः, यच्च कूपे अकार्यं मूत्रणादि, कथं तस्याभिधानं प्राप्नोति, कथं तर्हि विवक्षितार्थः? इत्याह—**शालाप्रवेशमर्हतीति**। अन्यत्राप्रागल्भ्यादासितुमशक्तः शालामेव प्रवेष्टुमर्हतीत्यर्थः। **कूपावतरणमिति**। यदकार्यं तत्प्रच्छादनीयत्वात्कूपावतरणमर्हतीत्यर्थः। **उत्तरपदलोपश्चेति**। वृत्तिविषये शालाकूपशब्दौ तत्कर्मिकायां क्रियायां वर्तेते इति गम्यमानत्वादप्रयोग एव लोपः। **कौपीनं पापमिति**। पापसाधनत्वात्तु पुरुषलिङ्गं कौपीनशब्दः, साधार्म्याद्वा; साधर्म्यं गोप्यत्वात्। तत्साहचर्याच्च तदाच्छादने वासःखण्डे। अपर आह—कार्यशब्दे करोतिः क्रियासामान्यवचनः, तेन लज्जाहेतुत्वेनाद्रष्टव्यत्वात्पुरुषलिङ्गं कौपीनम्, अस्पृश्यत्वाच्च तदाच्छादनमिति॥ २०॥

**व्रातेन जीवति**॥ व्रातशब्दो लोके सङ्घमात्रवचनः, इह तु न तथेति दर्शयितुं भाष्यग्रन्थं पठति।

### भावबोधिनी

शालीन और कौपीन शब्द—क्रमशः अधृष्ट और अकार्य अर्थ वाच्य रहने पर, निपातित होते हैं। अधृष्ट=अप्रगल्भ, अकार्य=न करने योग्य, विरुद्ध। शालीन तथा कौपीन जो अधृष्ट और अकार्य के पर्याय हैं, किसी प्रकार व्युत्पादित कर लेने चाहिए। उदा० शालाप्रवेशनम् अर्हति, कूपावतारम् अर्हति—[शाला में प्रवेश करने योग्य, कुआँ में उतरने योग्य ]—इन अर्थों में 'खञ्' प्रत्यय और उत्तर पद का लोप निपातित होता है। शालीनः जड़ः। कौपीनं पापम्। [ शालाप्रवेशन+खञ्=ख=ईन, प्रवेशन का लोप, शाला+ईन, भसंज्ञा आलोप—शालीनः। कूपावतार+खञ्=ख=ईन, अवतार का लोप, आदिवृद्धि, भसंज्ञा, अलोप–कौप् ईन। ]

**विमर्श**—जो व्यक्ति प्रगल्भ और चतुर नहीं है वह बाहर समाज में कहीं बैठ नहीं सकता क्योंकि उसमें बातचीत की सामर्थ्य नहीं है। अतः वह घर में घुसा रहता है। ऐसे व्यक्ति को 'शालीन=अधृष्ट' कहा जाता है। लोक में जो निन्दनीय है, करने योग्य नहीं है, उसे कुएँ में फेंक देना चाहिए। यह आशय—कूपावतारम् अर्हति—से व्यक्त है। 'कूप' शब्द नरकपर्याय है। फलतः 'कौपीन' का अर्थ पाप है, अकार्य है। पापसाधन होने से पुंलिङ्ग में भी 'कौपीनः' का प्रयोग होता है। उस पुरुष के साथ सम्बन्ध के कारण आच्छादन=वस्त्र को भी 'कौपीनम्' कहा जाता है॥ २०॥

[ सूत्रस्थ ] निर्देश से ही तृतीया समर्थ विभक्ति है। तृतीयासमर्थ 'व्रात' शब्द से 'जीवति' ( जीविका

शरीरम्, तदायास्य ये जीवन्ति ते उत्सेधजीविनः, तेषां कर्म—व्रातम्। तेन व्रातेन जीवति—व्रातीनः। तेषामेव व्रातानामन्यतम उच्यते। यस्त्वन्यस्तदीयेन [व्रातेन] जीवति तत्र नेष्यते ॥

२०४३. साप्तपदीनं सख्यम् ॥ २२ ॥ ( १८२३ )

'साप्तपदीनम्' इति निपात्यते सख्येऽभिधेये। सप्तभिः पदैरवाप्यते साप्तपदीनम्। 'सख्यं जनाः साप्तपदीनमाहुः'।

कथं साप्तपदीनः सखा, साप्तपदीनं मित्त्रमिति ? यदा गुणप्रधानः साप्तपदीनशब्दः सखिभावे

न्यासः

तेषां कर्म व्रातमिति। व्रातसाहचर्य्यात् तदपि व्रातमित्युच्यते अथवा—व्रातानामिदमित्यर्थविवक्षायां छे प्राप्ते, अस्मादेव निपातनादण् भवति। तत्पुनः कर्म भारवहनादि। तत्र नेष्यत इति। कथं पुनरिष्यमाणोऽपि न भवति ? प्रकृतायां महाविभाषायां व्यवस्थितविभाषात्वात् ॥ २१ ॥

साप्तपदीनं सख्यम् ॥ साप्तपदीनमिति निपात्यत इति। किं पुनरत्र निपात्यते ? प्रत्ययः प्रत्ययार्थश्च प्रकृतः। खञ्प्रत्ययार्थश्चावाप्तिः। सप्तभिः पदैरवाप्यत इति तद्धितार्थे समासः। ततः सप्तपदशब्दात् खञ्।

कथमित्यादि। सख्युर्भावः कर्म वा सख्यम्। तत्र यदि साप्तपदीनमिति निपात्यते, सखिशब्देन

पदमञ्जरी

नानाजातीया इति। अनेन चैकजातीयक्षत्त्रियादिसङ्घनिराकरणम्। अनियतवृत्तय इति। नियतवृत्त्यायुधजीविसङ्घनिषेधः उत्सेधजीविन इत्येतद्व्याचष्टे। उत्सेधः शरीरमिति। उच्छ्रायत्वात्। तदायास्येति। आयासेर्ण्यन्ताल्ल्यप्, तेन सकर्मकत्वम्। अण्यन्तपाठे त्वन्तर्भावितण्यर्थत्वात्सकर्मकत्वं द्रष्टव्यम्। शरीरायासेन भारवाहनादिना जीवन्ति, न तु बुद्धिभावेनेत्यर्थः। व्राता इति। सङ्घवचनोऽयमिह सङ्घिषु प्रयुक्तः। एवंभूतानां यः सङ्घस्तद्व्रातमित्यर्थः। एवमपि तथाभूतेन सङ्घेन ये जीवन्ति तत्र प्राप्नोति, न चेष्यते ? तत्राह—तेषां कर्म व्रातमिति। इदमर्थे छे प्राप्तेऽस्मादेव निपातनादण्। यस्त्वन्य इत्यादि। अनभिधानमत्र हेतुः ॥ २१ ॥

साप्तपदीनं सख्यम् ॥ साप्तपदीनमिति निपात्यत इति। किं पुनरत्र निपात्यते ? समर्थविभक्तिस्तृतीया। अवाप्यत इति प्रत्ययार्थः, सप्तभिः पदैरवाप्यत इति तद्धितार्थे द्विगुः समासः, सप्तपद-

भावबोधिनी

चलाता है )—इस अर्थ में 'खञ्' प्रत्यय होता है। नाना प्रकार की जातिवाले अनियत वृत्ति वाले उत्सेध से जीविका चलाने वाले समूह=व्रात हैं। उत्सेध=शरीर, उससे परिश्रम करके बोझ आदि ढोकर जो जीवननिर्वाह करते हैं वे उत्सेधजीवी हैं उनका कर्म=व्रात है। [ व्रात=समूह के साहचर्य के कारण उनके कर्म को भी 'व्रात' कहते हैं। ] उस व्रात से जो जीविका चलाता है—इस अर्थ में—व्रातीनः। [उन व्रात से जीविकानिर्वाह करने वालों में ही एक व्यक्ति 'व्रातीनः' है। जो कोई दूसरा उनके व्रात=कर्म से जीविका चलाता है उसके लिये यह प्रत्यय इष्ट नहीं है। [ काम दूसरा करे और उसके फल द्वारा जीविका किसी दूसरे की चले, ऐसे व्यक्ति को 'व्रातीन' नहीं कहा जाता, अनभिधान है। ] ॥ २१ ॥

सख्य=मित्रता अर्थ वाच्य रहने पर 'साप्तपदीन' यह निपातन से सिद्ध किया जाता है। सात पदों से [ सात पग साथ में चलने से ] प्राप्त होने वाला—'साप्तपदीन'। "विद्वान् लोग सख्य=मित्रता को साप्तपदीन (सात पैर साथ में चलने से प्राप्त होनेवाला) कहते हैं।" [सप्तपद+खञ्=ख=ईन, आदिवृद्धि, भसंज्ञा, अलोप।]

**तत्कर्मणि च वर्तते तदा सख्यशब्देन सामानाधिकरण्यं भवति, यदा तु लक्षणया वर्तते तदा पुरुषेण सामानाधिकरण्यं भवति ।।**

**२०४४. हैयङ्गवीनं संज्ञायाम् ।। २३ ।। ( १८२४ )**

**'हैयङ्गवीनम्' इति निपात्यते संज्ञायां विषये। ह्योगोदोहस्य हियङ्ग्वादेशः, तस्य विकारे**

**न्यासः**

सामानाधिकरण्यं न प्राप्नोति, न हि सख्यमेव सखा भवतीति प्रष्टुरभिप्रायः। **गुणप्रधान इत्यादि।** गुणो भावः कर्म वा प्रधानं यस्य स तथोक्तः। स यदा च गुणमात्रे मुख्यया वृत्त्या वर्त्तते तदा गुणप्रधानो वेदितव्यः। **तदा सख्यशब्देन सामानाधिकरण्यं भवतीति।** द्वयोरप्येकार्थवृत्तित्वात्। **यदा त्वित्यादि।** लक्षणा=उपचारः। धर्मधर्मिणोरभेदेनोपचारेण गौण्या वृत्त्या यदा तद्वति=सख्यवति पुरुषे वर्त्तते तदानेनैव समानाधिकरणो भवति। यथा यदा शुक्लशब्दो गुणमात्रे वर्त्तते तदा द्रव्यशब्देन समानाधिकरणे न भवति—पटस्य शुक्ल इति, यदा त्वसौ त्वमित्यभिसम्बन्धात् पटे वर्त्तते तदा सामानाधिकरण्यं भवति—शुक्लः पट इति; तथेहापि वेदितव्यम् ।। २२ ।।

**हैयङ्गवीनं संज्ञायाम् ।। ह्योगोदोहस्य हियङ्ग्वादेश इति।** हृचोगोदोहशब्दस्य हियङ्गुशब्द आदेश

**पदमञ्जरी**

शब्दात्खञ्। **कथमिति।** सख्युर्भावः कर्म वा सख्यम्, तत्र व्युत्पादितस्य च[1] सखिशब्देन प्रश्नः, उपचारेणेत्युक्तम्। **गुणप्रधान इति।** गुणो भावः कर्म च, भावः प्रवृत्तिनिमित्तत्वाद् गुणः। यस्य हि गुणस्य भावादिति कर्मापि हि सख्यशब्दवाच्यत्वाद् गुण इत्युक्तम् ।। २२ ।।

**भावबोधिनी**

'साप्तपदीन सखा' और 'साप्तपदीन मित्र' ये प्रयोग कैसे होगें [ क्योंकि यहाँ तो सख्य=मित्रता अर्थ में 'साप्तपदीन' यह कहा गया है ] ? जब गुणप्रधान 'साप्तपदीन' शब्द सखिभाव (=सख्य) और सखिकर्म (=सख्य) अर्थ में प्रयुक्त होता है तब सख्य शब्द के साथ सामानाधिकरण्य होता है- किन्तु जब लक्षणा से प्रयोग होता है तब पुरुष के साथ [ साप्तपदीन का ] सामानाधिकरण्य होता है।

**विमर्श**—सूत्र के अनुसार सात पैरों (=पैर साथ चलने) से प्राप्त होने वाले सख्य=मित्रता को साप्तपदीन कहा गया है। ऐसी स्थिति में 'साप्तपदीन सखा' और 'साप्तपदीनमित्र' इन धर्मी अर्थों में प्रयोग नहीं हो सकता ? इस शंका का समाधान यह है कि जिस प्रकार शुक्ल, कृष्ण आदि शब्द गुण और गुणी ( द्रव्य ) दोनों के बोधक होते हैं वही स्थिति यहाँ भी है। गुण का अर्थ भाव और कर्म है। साप्तपदीन शब्द को गुणप्रधान मान लिया जाय तब यह और 'सख्य' दोनों समानाधिकरण=समानार्थवाचक हो जाते हैं। किन्तु जब धर्म और धर्मी ( गुण और गुणी ) में अभेद का उपचार करके लक्षणावृत्ति द्वारा सख्यविशिष्ट पुरुष अर्थ में प्रयोग होता है तब उसके साथ भी सामानाधिकरण्य हो जाने से पूर्वोक्त प्रयोग भी होते हैं। जैसा कि—'शुक्लः पटः' और 'पटस्य शुक्लत्वम्' आदि में देखा जाता है। अतः गुणवाचक रहने पर द्रव्य का सामानाधिकरण्य नहीं होता है ।। २२ ।।

संज्ञाविषय में 'हैयङ्गवीन' यह निपातित होता है। 'ह्योगोदोह' का 'हियङ्गु' आदेश होता है, उसके विकार अर्थ में 'खञ्' प्रत्यय होता है, यदि संज्ञा अर्थ हो तो। उदा० ह्योगोदोहस्य विकारः—इस अर्थ में 'हैयङ्गवीनम्' यह होता है, यह 'घी' (=मक्खन, नवनीत) की संज्ञा है। अतः यहाँ नहीं होता है—हृचोगोदोहस्य विकारः उदश्वित्। [ कल के गाय के दुग्ध का विकार मट्ठा। ] [ 'दुहचते' इस अर्थ में 'दोह=दूध,' गोः दोहः=गोदोहः—गाय का दूध, इसके साथ 'हृच.' शब्द का समास होता है—हृचोगोदोह (=बीते हुए कल का

१. अत्र 'न' इत्यपपाठः।

(म० भा०) खञ् प्रत्ययो भवति संज्ञायाम् । ह्योगोदोहस्य विकारः—हैयङ्गवीनम्, घृतस्य संज्ञा । तेनेह न भवति—ह्योगोदोहस्य विकार उदश्वित् (म० भा०) ॥

२०४५. तस्य पाकमूले पील्वादिकर्णादिभ्यः कुणब्जाहचौ ॥ २४ ॥ ( १८२५ )

'तस्य' इति षष्ठीसमर्थेभ्यः पील्वादिभ्यः कर्णादिभ्यश्च यथासंख्यं पाकमूलयोरर्थयोः कुणब्, जाहच्—इत्येतौ प्रत्ययौ भवतः । पीलूनां पाकः पीलुकुणः । कर्कन्धुकुणः । कर्णादिभ्यः—कर्णस्य मूलं कर्णजाहम् ।

पीलु । कर्कन्धु । शमी । करीर । कुवल । बदर । अश्वत्थ । खदिर । पील्वादिः ।

कर्ण । अक्षि । नख । मुख । केश । पाद । गुल्फ । भ्रू । श्रृङ्ग । दन्त । ओष्ठ । पृष्ठ । अङ्गुष्ठ । कर्णादिः ॥

न्यासः

इत्यर्थः । ह्यो गोदोहनं ह्योगोदोहः, 'सुप्सुपा' इति समासः । विकारे खञ्प्रत्यय इति । 'तस्य विकारः' इति प्राप्तस्याणोऽपवाद इति ॥ २३ ॥

तस्य पाकमूले पील्वादिकर्णादिभ्यः कुणब्जाहचौ ॥ अणोऽपवादौ । 'तस्येदम्' इत्यणि प्राप्ते

पदमञ्जरी

हैयङ्गवीनं सञ्ज्ञायाम् ॥ ह्योगोदाहस्य विकार इति । दुह्यत इति दोहः=क्षीरम्, गोर्दोहो गोदोह इति षष्ठीसमासः, ह्यःशब्दस्य तेन 'सुप्सुपा' इति समासः, ततो विकारेऽनुदात्तलक्षणस्याञोऽपवादः खञ् । घृतस्यैषा संज्ञेति । घृतस्यापि न सर्वस्य, किं तर्हि ? तस्यैवाविकृतगन्धरूपस्य । ह्यःशब्देन कालप्रत्यासत्तिप्रतिपादनाद् नवनीतं हैयङ्गवीनमुच्यते, घृतशब्दोऽपि तत्रैव प्रयुक्तः ॥ २३ ॥

तस्य पाकमूले पील्वादिकर्णादिभ्यः कुणब्जाहचौ ॥ पाकः=परिणामः, मूलः=उपक्रमः ।

भावबोधिनी

दूध )—'उसका विकार'—इस अर्थ में अणादि प्राप्त हैं उनका अपवाद यह खञ् प्रत्यय और 'हियङ्गु' आदेश है—हियङ्गु+खञ्=ख=ईन, आदिवृद्धि, 'उ' का गुण, अवादेश—हैयङ्गवीन'='नवनीत' को कहा जाता है क्योंकि यह पहले दिन के दूध से बनाया जाता है । यदि उसी दिन के दूध से बनाया जाय तो इसका प्रयोग चिन्तनीय होगा । ] ॥ २३ ॥

'तस्य' इस षष्ठीसमर्थ पीलु आदि से और कर्ण आदि से क्रमशः 'पाक' (परिणाम) और 'मूल' (उपक्रम) अर्थों में क्रमशः 'कुणप्' और 'जाहच्'—ये प्रत्यय होते हैं । उदा० (१) पीलूनां पाकः—इस अर्थ में 'पीलुकुणः' ( पीलुवृक्ष के फलों का पकना ), कर्कन्धूनां पाकः—इस अर्थ में 'कर्कन्धुकुणः' ( बदरीफल=बेरों का पकना ) । (२) कर्णादि से प्रत्यय के उदा० कर्णस्य मूलम्—इस अर्थ में 'कर्णजाहम्' (कान का मल=नीचे जोड़ वाला हिस्सा) ।

[ पीलु आदि— ] पीलु । कर्कन्धु । शमी । करीर । कुवल । बदर । अश्वत्थ । खदिर । ये पीलु आदि हैं ।

[ कर्ण आदि—] कर्ण । अक्षि । नख । मुख । केश । पाद । गुल्फ । भ्रू । श्रृङ्ग । दन्त । ओष्ठ । पृष्ठ । अङ्गुष्ठ । ये कर्णादि हैं ।

**विमर्श**—प्रस्तुत गण के प्रकाशित पाठ में कुछ अप्रामाणिक और अशुद्ध शब्दों का भी पाठ है । कर्णादिगण में 'नख' का पाठ नहीं होना चाहिये । 'कवल' के स्थान पर 'कुवल' होगा—"कोलं कुविलफेनिले । सौवीरं बदरं घोण्टा... ।

## २०४६. पक्षात्तिः ॥ २५ ॥ ( १८२६ )

'तस्य' इत्येव । तस्येति षष्ठीसमर्थात्पक्षशब्दात् मूलेऽभिधेये तिः प्रत्ययो भवति । मूलग्रहणमनुवर्त्तते, न पाकग्रहणम्; (न्य० भा०) 'एकयोगनिर्दिष्टानामप्येकदेशोऽनुवर्तते' (व्या० परि० २३) इति । पक्षस्य मूलं पक्षतिः=प्रतिपत् ॥

## २०४७. तेन वित्तश्चुञ्चुप्चणपौ ॥ २६ ॥ ( १८२७ )

'तेन' इति तृतीयासमर्थाद् 'वित्त' इत्येतस्मिन्नर्थे चुञ्चुप्, चणप्—इत्येतौ प्रत्ययौ भवतः । वित्तः—प्रतीतः, ज्ञात इत्यर्थः । विद्यया वित्तः, विद्याचुञ्चुः— विद्याचणः ॥

### न्यासः

कुणबादयो विधीयन्ते । जकारस्य प्रयोजनाभावात् 'चुटू' इतीत्संज्ञा न भवति[1] ॥ २४ ॥

**पक्षात् तिः ॥** एकयोगनिर्दिष्टानामिति । स्वरितत्वेनादिशब्दानामनुवृत्तिर्भवति । स्वरितत्वप्रतिज्ञाप्रतिबद्धत्वात् । एकयोगनिर्दिष्टानामपि यत्र प्रतिज्ञायते स्वरितत्वम्, तत्रैव भवति, नान्यत्र । तेनैकयोगनिर्दिष्टानामप्येकदेशस्यानुवृत्तिरुपपद्यते ॥ २५ ॥

**तेन वित्तश्चुञ्चुप्चणपौ ।** विद्याचुञ्चुः, विद्याचण इति । अथ 'चुटू' इति चकारस्येत्संज्ञा

### पदमञ्जरी

'तस्येदम्' इत्यणादिषु प्राप्तेष्वयमारम्भः, जकारस्य प्रयोजनाभावादित्संज्ञाभावः[1] ॥ २४ ॥

**पक्षात्तिः ॥** एकयोगशिष्टानामपि शब्दानां शब्दाधिकारपक्षे यस्यैव शब्दस्य स्वरितत्वं प्रतिज्ञायते, तस्यैवानुवृत्तिर्भवति । तथा च 'दामहायनान्ताच्च' इत्यत्र सङ्ख्याग्रहणमनुवर्त्तते, नाव्ययग्रहणम् । अर्थाधिकारपक्षे तु युगपदन्योऽन्यार्थाभिधायिनां द्वन्द्वविधानाद् द्वन्द्वार्थविच्छेदान्न स्यादेकदेशानुवृत्तिः । पक्षस्य मूलं पक्षतिः=प्रतिपदि, पक्षिणश्च पक्षमूले प्रयुज्यते ॥ २५ ॥

**तेन वित्तश्चुञ्चुप्चणपौ ॥ वित्तः प्रतीत** इति । 'वित्तो भोगप्रत्यययोः' इति निपातनात्, चुञ्चुप्च-

### भावबोधिनी

अमरकोश २।४।३६ के अनुसार जंगली बेर को कुवल कहते हैं । 'भ्रूभङ्ग' इसके स्थान पर दो शब्द हैं—भ्रू । शृङ्ग । ये दोनों कर्णादि के समान शरीरावयव हैं । अतः मूल अर्थ में प्रत्ययविधान ठीक है । प्रस्तुत सूत्र पर तत्त्वबोधिनीकार का गणपाठ शुद्ध है । ] ॥ २४ ॥

'तस्य' इसकी अनुवृत्ति होती है । 'मूल' अर्थ वाच्य रहने पर 'तस्य' इस षष्ठीसमर्थ 'पक्ष' शब्द से 'ति' प्रत्यय होता है । पूर्वसूत्र से केवल 'मूल' की अनुवृत्ति होती है, 'पाक' की नहीं, क्योंकि "एकयोग में निर्दिष्टों के एकदेश=एक शब्द की भी अनुवृत्ति होती है"—यह परिभाषा है । उदा० पक्षस्य मूलम्—इस अर्थ में—"पक्षतिः' यह होता है, [ कृष्ण या शुक्ल पक्ष का मूल प्रथम तिथि—] 'प्रतिपत्' अर्थ है । [ पक्षियों के पंख के मूल के लिए भी 'पक्षति' शब्द का प्रयोग होता है । ] ॥ २५ ॥

'तेन' इस तृतीयासमर्थ से 'वित्त' इस अर्थ में 'चुञ्चुप् और 'चणप्' ये प्रत्यय होते हैं । वित्त=प्रतीत, ज्ञात—ये अर्थ हैं । उदा० विद्यया वित्तः—इस अर्थ में—विद्याचुञ्चुः, विद्याचणः । [ विद्या के कारण प्रसिद्ध । ]

**विमर्श**—"वित्तो भोगप्रत्यययोः" (पा० सू० ८।२।५८) सूत्र में 'वित्त' शब्द निपातित होता है । अतः

---

१. प्रयोजनाभावान्नेत्संज्ञेति व्यवस्था । न हि प्रयोजनाभावे कस्यापीत्संज्ञा भवति, 'इदर्थाभावात् सिद्धम्' इति वार्तिककारवचनात् ।

२०४८. विनञ्भ्यां नानाञौ नसह ॥ २७ ॥ ( १८२८ )

वि, नञ्—इत्येताभ्यां यथासंख्यं ना, नाञ्—इत्येतौ प्रत्ययौ भवतः। 'नसह' इति प्रकृतिविशेषणम् (म० भा०)। असहार्थे पृथग्भावे वर्त्तमानाभ्यां विनञ्भ्यां स्वार्थे नानाञौ प्रत्ययौ भवतः। विना। नाना ॥

२०४९. वेः शालच्छङ्कटचौ ॥ २८ ॥ ( १८२९ )

विशब्दात् शालच्, शङ्कटच्—इत्येतौ प्रत्ययौ भवतः। ससाधनक्रियावचनादुपसर्गात्स्वार्थे

न्यासः

कस्मान्न भवति ? उक्तोऽस्य हेतुस्तत्रैव—पृथग्योगकरणमस्य विधेरनित्यत्वज्ञापनार्थमिति ॥ २६ ॥

विनञ्भ्यां नानाञौ नसह ॥ स्वार्थे नानाञौ प्रत्ययौ भवत इति। 'अनिर्दिष्टार्थाः प्रत्ययाः स्वार्थे भवति' इति कृत्वा। अकारस्त्वाद्युदात्तार्थः ॥ २७ ॥

वेः शालच्छङ्कटचौ ॥ ससाधनक्रियावचनादित्यादि। उक्तमेतत्—उपसर्गा ह्येवमात्मका भवन्ति

पदमञ्जरी

णपोश्चकारस्य यथेत्संज्ञा न भवति, यथा 'चुटू' इत्यत्रैव वृत्तिकारेणोक्तम् ॥ २६ ॥

विनञ्भ्यां नानाञौ नसह ॥ नसहेति प्रकृत्यर्थविशेषणमिति। यदि प्रत्ययार्थः स्यात्ततो 'द्वौ प्रतिषेधौ प्रकृतमेवार्थं गमयत' (हे०परि० ११७) इति सहार्थ एव गम्येत, न नसह अपि तु सहैवेति। तस्मात्प्रकृत्यर्थ एव भवति। एतच्च व्याख्यानाल्लभ्यते। यद्येवम्, सहेत्येव प्रत्ययार्थोऽस्तु, विनञोः प्रतिषेधार्थत्वात्, विगर्दभरथक इत्यादौ विशब्दस्यापि प्रतिषेधे वृत्तिदृष्टैव ? सत्यम्; क्रियावाचिनो विशब्दात्सहार्थे प्रत्ययो विज्ञायेत—विगतौ सह विकृतौ सहेति, नाञो ङकारो वृद्धचर्थः, स्वरार्थश्च ॥ २७ ॥

वेः शालच्छङ्कटचौ ॥ क्व पुनरेते शालजादयो भवन्ति ? इत्याह—ससाधनक्रियावचनादिति।

भावबोधिनी

योग = धनादि और प्रत्यय = प्रतीत = ज्ञात = प्रसिद्ध अर्थ हैं। इनमें निष्ठानत्व नहीं होता है।

चुञ्चुप् और चणप्—इन प्रत्ययों के आदि चकार की इत्संज्ञा "चुटू" ( पा० सू० १।३।७ ) से क्यों नहीं होती है ? इसका समाधान "चुटू" सूत्र पर भी काशिकाकार ने किया है—"पृथग्योगकरणमस्य विधेरनित्यत्वज्ञापनार्थम्। "तेन वित्तश्चुञ्चुपचणपौ" केशचुञ्चुः, केशचणः। "अवात् कुटारच्च" ( पा० सू० ५।२।३२ ) "नतेः नासिकायाः संज्ञायां टीटञ्नाटच्भ्रटजः" ( पा० सू० ५।२।३१ ) अवटीटः। आदिरित्येव, "कर्मणि घटोऽठच्" ( पा० सू० ५।२।३५ ) कर्मठः।" इसकी विशेष व्याख्या 'चुटू' सूत्र की भावबोधिनी (काशिका प्रथमभाग) में देखें। काशिका में 'अवात्कुटारच्च यह 'अव' शब्द की अग्रिम सूत्र में अनुवृत्ति के लिए हैं, 'कुटारच्' में चवर्ग-टवर्ग न होने से 'चुटू' का विषय नहीं है ॥ २६ ॥

'वि' और 'नञ्' इन शब्दों से क्रमशः—'ना' और 'नाञ्' ये प्रत्यय होते हैं। 'नसह' यह प्रकृति का विशेषण है। असह=साथ में न होना=पृथक् होना—इस अर्थ में वर्तमान 'वि' और 'नञ्' से 'ना' और 'नाञ्' प्रत्यय स्वार्थ में होते हैं। उदा०—विना। नाना। [ वि +ना। नञ्=न+नाञ्=ना, ञित् होने से आदिवृद्धि—नाना। दोनों का अर्थ है—साथ में न होना। इसका प्रयोग—"पृथग्विना-नानाभिस्तृतीयाऽन्यतरस्याम्" ( पा० सू० २।३।३२ ) के लक्ष्यों में है। वहीं काशिका में देखें। ] ॥ २७ ॥

'वि' शब्द से शालच् और शङ्कटच् ये प्रत्यय होते हैं। साधन (=कारक)—विशिष्ट क्रियावाची उपसर्ग से स्वार्थ में ये प्रत्यय होते हैं। [ पदमञ्जरीकार—क्रियाविशिष्टसाधनवचनात्' ऐसा अर्थ करते हैं।

प्रत्ययौ भवतः। विगते शृङ्गे विशाले। विशङ्कटे। तद्योगाद् गौरपि विशालः, विशङ्कट इत्युच्यते। परमार्थतस्तु गुणशब्दा एते यथाकथञ्चिद्व्युत्पाद्यन्ते। नात्र प्रकृतिप्रत्ययार्थयोरभिनिवेशः॥

## २०५०. संप्रोदश्च कटच्॥ २९॥ (१८३०)

### न्यासः

यत्र कश्चित् क्रियावाची शब्दः प्रयुज्यते तत्र क्रियाविशेषणमाहुः। यत्र न प्रयुज्यते तत्र ससाधनक्रियामिति। इह न कश्चित् क्रियावाची शब्दः प्रयुज्यते, तस्मात् ससाधनक्रियावाचिन उपसर्गात् प्रत्ययो भवति। स च भवन् 'अनिर्दिष्टार्थाः प्रत्ययाः स्वार्थे भवन्ति' इत्यनिर्दिष्टार्थत्वात् स्वार्थे भवति। **विगते शृङ्ग इति**। एतेन विगमनक्रियायां शृङ्गसाधनायां विशब्दो वर्त्तत इति दर्शयति।

यदि ससाधनायां क्रियायां प्रत्ययः, विशालो गौर्विशङ्कटो गौरिति न सिध्यति, न हि गौरिह विगमनस्य साधनम्, किं तर्हि? शृङ्गे? इत्यत आह—**तद्योगादित्यादि**। यथा सास्नाद्यवयवयोगादवयवधर्मेण गौः सास्नेत्युच्यते, तथा विशालविशङ्कटशृङ्गयोगाद् गौस्तथेत्युच्यते। **परमार्थतस्त्वित्यादि**। समुदायो व्युत्पत्त्यर्थः। अतोऽत्र न केवलं ससाधनक्रिया नास्ति, अपि च साधनमपि नास्ति। तस्माद् गुणशब्दा विशालादयः परमार्थतो लोके प्रसिद्धाः, यथा—शुक्लादयः शब्दाः। तेन नात्र विशालादिषु प्रकृतिप्रत्ययार्थयोरभिनिवेशः कर्त्तव्यः। तदेवं परमार्थतोऽनर्थकाः। वेः शालच्छङ्कटचावप्यनर्थकावेव विधीयते इत्युक्तं भवति। **एत इति**। व्युत्पादयिष्यमाणान् संकटादीन् बुद्धौ कृत्वा बहुवचनं कृतम्, तेऽपि हि गुणशब्दा एव॥ २८॥

**संप्रोदश्च कटच्**॥ ससाधनक्रियावचनादुपसर्गात् वार्थे प्रत्यय इति सर्वं पूर्ववदेव वेदितव्यम्।

### पदमञ्जरी

क्रियाविशिष्टसाधनवचनादित्यर्थः। एतच्च 'उपसर्गाच्छन्दसि धात्वर्थे' इत्यत्र प्रत्यपादि। **उपसर्गादिति**। अन्यत्रोपसर्गसंज्ञादर्शनाद्विषयान्तरेऽपि प्रादीनामभिधानम्। **स्वार्थ इति**। अनिर्दिदष्टार्थत्वात्। **विगते इति**। विगमनक्रियाकर्त्तरि वेर्वृत्तिं दर्शयति। **तद्योगादिति**। विशालावयवयोगात्, व्युत्पत्तिपक्षे नान्या गतिरिति भावः।

वस्तुगतिमाह—**परमार्थतस्त्विति**। विशालत्वम्=विस्तीर्णत्वं नाम गुणः, तस्माद्गुणवचना एते। वक्ष्यमाणप्रत्ययापेक्षया बहुवचनम्; ततश्च यद्गुणयोगाच्छृङ्गे वृत्तिस्तद्गुणयोगादेव गव्यपि वृत्तिः सिद्धेति भावः। तथा च—विशालो देश इत्यपि दृश्यते॥ २८॥

### भावबोधिनी

सिद्धान्तकौमुदी आदि में भी ऐसा ही है। अतः 'वि' आदि उपसर्ग अकेले रहने पर भी क्रियाविशिष्ट साधन अर्थ के प्रत्यायक होते हैं। ] उदा० विगते शृङ्गे=विशाले शृङ्गे, विशङ्कटे शृङ्गे। (दो बड़े=निकले हुए सींग, यही दोनों का अर्थ है।) उस (विशाल अवयव शृङ्ग) के योग से गाय भी 'विशाल' 'विशङ्कट' कही जाती है। [ जब व्युत्पत्तिपक्ष मानते हैं तब इसी प्रकार अर्थ की युक्तता सिद्ध करनी होगी। ]

वास्तव में तो ये गुण शब्द जिस किसी तरह व्युत्पादित करने चाहिए। इनमें प्रकृत्यर्थ और प्रत्ययार्थ में अभिनिवेश (आग्रह) नहीं करना चाहिए। [ अतः विशाल=विशालत्व गुणवाची है। अतः इस गुण से युक्त जैसे शृङ्ग होते हैं वैसे ही गाय आदि भी। अतः 'गोः विशालः' आदि प्रयोग उचित ही हैं। काशिका में 'एते' यह बहुवचन यहाँ के इस प्रकार के सभी शब्दों को लक्षित करके कहा गया है। ]॥ २८॥

सम्, प्र, उद्—इत्येतेभ्यः कटच् प्रत्ययो भवति। चकाराद्वेश्च। सङ्कटः। प्रकटः। उत्कटः। विकटः।

* कटच्प्रकरणेऽलाबूतिलोमाभङ्गाभ्यो रजस्युपसंख्यानम् * (म० भा० ५.२.२९. वा० १, २)। अलाबूनां रजः अलाबूकटम्। तिलकटम्। उमाकटम्। भङ्गाकटम्।

* गोष्ठादयः स्थानादिषु पशुनामादिभ्य उपसंख्यानम् * (वा० ३)। गवां स्थानं गोगोष्ठम्।

**न्यासः**

**अलाबूतिलोमेत्यादि।** अलाबूप्रभृतिभ्यो रजस्यभिधेये कटच्प्रत्ययस्योपसंख्यानं कर्त्तव्यम्। विकारप्रत्ययानामपवादः; अलाबूप्रभृतीनां यद्रजस्तस्य तद्विकारत्वात्।

**गोष्ठादय इत्यादि।** आदिशब्दः प्रकारे। पशुनामानि गोशब्दादीनि, तेभ्यः स्थानादिष्वभिधेयेषु

**पदमञ्जरी**

**संप्रोदश्च कटच्॥ कटच्प्रत्ययो भवतीति।** पूर्ववत्साधनक्रियावचनेभ्य स्वार्थे। **संकटः**=संहतः, संबाध इत्यर्थः। **प्रकटः**=प्रज्ञातः, प्रकाश इत्यर्थः। **उत्कटः**=उद्भूतः। **विकटः**=विकृतः।

**अलाबूतिलेत्यादि।** भङ्गाभ्य इति पाठः, भङ्गाशब्दष्टाबन्तः। अथालाबूप्रभृतिभ्यो रजस्यभिधेय कटच्प्रत्ययो भवति, रजसो विकारत्वाद्विकारप्रत्ययानामपवादः। तत्रालाबूशब्दादोरञः, 'मयड् वैतयो.' इति मयटश्चापवादः। तिलोमाशब्दाभ्यां घृतादित्वादन्तोदात्ताभ्याम्' 'अनुदात्तादेश्च' इत्यञो मयटश्च। 'उमोर्णयोर्वा' इति वुञ्श्च, 'असंज्ञायां तिलयवाभ्याम्' इति मयटश्च। भङ्गायाः 'तृणधान्यानां च द्व्यषाम्' (फि० सू० २७) इत्याद्युदात्तत्वादणो मयटश्च।

**गोष्ठादय इति।** प्रयोगसमवायिप्रत्ययरूपं निर्दिष्टम्। चकारस्तु स्वरार्थेऽनुबन्द्धव्यः। तथा हि—समासाश्रयेण भाष्ये एतत्प्रत्याख्यातम्, समासे चान्तोदात्तत्वं भवति। सर्वत्रादिशब्दः प्रकारे। **गवां स्थानमिति।** 'तस्येदम्' इत्यत्रार्थे 'सर्वत्र गोरजादिप्रत्ययप्रसङ्गे यत्' (वा० ३८३) इति यति

**भावबोधिनी**

सम्, प्र, उद्—इन [ क्रियाविशिष्टसाधनवाची ] शब्दों से [ स्वार्थ में ] 'कटच्' प्रत्यय होता है। 'च' के कारण 'वि' से भी कटच्' होता है। उदा० सङ्कटः (=संहत, संबाध, निबिडीकृत—ये अर्थ हैं); प्रकटः (=प्रज्ञात, प्रकाश ये अर्थ हैं)। उत्कटः (=उद्भूत, अधिक—ये अर्थ हैं)। विकटः (=विकृत—यह अर्थ है)। [ पूर्वोक्त सूत्र के समान ही यहाँ भी सम्, प्र, उद् और वि—ये उपसर्ग क्रियाविशिष्टसाधनवाची हैं। यह मान कर 'कटच्, प्रत्यय करना चाहिए। वास्तव में ये सभी रूढ हैं। ]

* कटच् प्रत्यय के प्रकरण में अलाबू, तिल, उमा और भङ्गा—इन शब्दों से 'रजः' (धूलि) अर्थ वाच्य रहने पर 'कटच् प्रत्यय का उपसंख्यान करना चाहिये। * उदा० अलाबूनां रजः—इस अर्थ में—अलाबूकटम्। ( लौकी की रज=धूल=चूरा ) तिलकटम्। ( तिलानां रजः—इस इस अर्थ में तिल+कटच्। तिल का चूरा ) उमाकटम्। ( उमानां रजः—यह अर्थ है। "अतसी स्यादुमा क्षुमा।" अमरकोश २.९.२०। तीसी, अलसी का चूरा ) भङ्गाकटम्। ( भङ्गानां रजः—इस अर्थ में भङ्गा+कटच्। भाँग का चूरा )।

**विमर्श**—"वार्तिककार ने "कटच्प्रकरणे अलाबूतिलोमाभ्यो रजस्युपसंख्यानम्" और "भङ्गायाश्च" ये दो अलग-अलग वार्तिक बनाये हैं। इसका कारण यह है कि 'अलाबू' शब्द से अवयव अर्थ में "ओरञ्" पा० सू० ४।३।१३९ से अञ् प्राप्त है और 'तिल, उमा' शब्दों से 'अनुदात्तादेश्च" पा० सू० ४।३।१४० से अञ् प्राप्त है अर्थात् इन तीनों से अञ् प्राप्त रहते यह 'कटच्' किया जा रहता है। परन्तु 'भङ्ग' शब्द से 'तृण धान्यानां द्व्यषाम्"

महिषीगोष्ठम् ।

* सङ्घाते कटच् वक्तव्यः * ( वा० ३ ) अवीनां सङ्घातः अविकटम् ।

* विस्तारे पटच् वक्तव्य. * ( वा० ३ ) । अविपटम् ।

* द्वित्वे गोयुगच् * ( वा० ३ ) । उष्ट्रगोयुगम् । अश्वगोयुगम् ।

**न्यासः**

गोष्ठजादयः प्रत्यया वक्तव्याः । 'तस्येदम्' इत्यर्थविवक्षायां स्थानादिषु गोष्ठजादयो विधीयन्ते । ननु 'तद्धिताः' इति बहुवचनेनैव संगृहीतं सङ्घाते कटजित्यादि सर्वम् ? सत्यम्; अनन्तरोक्तस्यैव वाक्यस्य प्रपञ्चोऽयम् । अविकट इति । अत्र 'तस्य समूहः' इति सामूहिके प्रत्यये प्राप्ते कटच् ।

अविपटमिति । प्रकीर्णानामवीनां विस्तार उच्यते ।

द्वावुष्ट्रौ उष्ट्रगोयुगम् । षड् हस्तिनो हस्तिषड्गवम् ।

**पदमञ्जरी**

प्राप्ते गोष्ठच्प्रत्ययः; अप्रसृतावयवः समूहः=सङ्घातः, प्रसृतावयवस्तु=विस्तारः, उभावपि सामूहिकानामपवादौ ।

द्वित्व इति । प्रकृत्यर्थस्य द्वित्वे द्योत्य इत्यर्थः । उष्ट्रगोयुगमिति । द्वयं युगमित्यादिवद् द्वयवयवसङ्घाभिधायित्वादेकवचनम् । एवं हस्तिषड्गवमित्यादावपि द्रष्टव्यम् ।

**भावबोधिनी**

( फि० सू० २७ )से अण् प्राप्त है । उसमें 'कटच्' किया जा रहा है । परन्तु काशिकाकार ने सभी चार शब्दों के लिये दोनों वार्तिक मिलाकर एक बना दिया । सम्भवतः उक्त सूक्ष्मता की उपेक्षा कर दी है ।

* स्थान आदि अर्थों में पशुनाम (पशुवाचक शब्द) से 'गोष्ठच्' आदि प्रत्यय कहने चाहिये । * उदा० गवां स्थानम्—इस अर्थ में 'गोगोष्ठम् । ( गायों का स्थान=रहने की जगह गो+गोष्ठच् । 'च्' अन्तोदात्त करने के लिये है । ) महिषीगोष्ठम् । ( महिषीणां स्थानम्—इस अर्थ में गोष्ठच् प्रत्यय होता है । भैंसिओं का स्थान ) ।

* संघात=समूह अर्थ में 'कटच्' प्रत्यय कहना चाहिये । * उदा० अवीनां संघातः—इस अर्थ में—अविकटः । ( अवि+कटच् ) ।

* विस्तार अर्थ में पटच कहना चाहिए । * उदा० अवीनां विस्तारः—इस अर्थ में—अविपटः ।

[ यहाँ दोनों प्रत्ययों से 'समूह' अर्थ की ही प्रतीति होती है । अन्तर इतना है कि जब अवयव प्रसृत=फैले न हों तब—समूह=संघात कहा जाता है । और जब अवयव फैले बिखरे हों, परस्पर मिले न हों किन्तु एक ही स्थान पर हों तो विस्तार' कहा जाता है । अतः ये दोनों प्रत्यय समूह अर्थ में प्राप्त प्रत्ययों के अपवाद हैं । "अवयः शैल-मेषार्काः" अमरकोश ३।३।२०७ के अनुसार पहाड़ों, भेड़ों का समूह यह अर्थ है । ]

**विमर्श**—यहाँ 'अविकटम्, अविपटम्' यह नपुंसक लिङ्ग पाठ भाष्य विरुद्ध है । न्यासकार ने एक को पुल्लिङ्ग और एक को नपुंसक लिङ्ग लिखा है । पदमजरी का पाठ खण्डित प्रतीत होता है क्योंकि विना प्रतीक के इस अंश की व्याख्या की गई है । सिद्धान्तकौमुदी में दोनों पुल्लिङ्ग पाठ है ।

* द्वित्व की प्रतीति में 'गोयुगच्' प्रत्यय कहना चाहिये । * उदा० उष्ट्रगोयुगम् । अश्वगोयुगम् । (उष्ट्राणां द्वित्वम्, अश्वानां द्वित्वम् । ( अथवा द्वौ उष्ट्रौ, द्वौ अश्वौ—इस विग्रह में उष्ट्र+गोयुगच्, अश्व+गोयुगच्, दो ऊँट, दो घोड़े । महाभाष्य में "गोयुगशब्दश्च प्रत्ययो वक्तव्यः" यह वार्तिक है । यहाँ अर्थ का निर्धारण नहीं है । अत

* प्रकृत्यर्थस्य षट्त्वे षड्गवच् * ( ? )। हस्तिषड्गवम्। अश्वषड्गवम्।

* विकारे स्नेहे[1] तैलच् * ( वा० ३ )। एरण्डतैलम्। इङ्गुदतैलम्। तिलतैलम्।

* भवने क्षेत्रे इक्ष्वादिभ्यः शाकटशाकिनौ * (वा० ३)। इक्षुशाकटम्। इक्षुशाकिनम्। मूलशाकटम्। मूलशाकिनम्॥

## न्यासः

इङ्गुदस्य स्नेह इङ्गुदतैलम्। तिलस्य रसस्तिलतैलम्।

भवने क्षेत्र इत्यादि। इक्षूणां भवनं क्षेत्रमिक्षूशाकटम्। इक्षुशाकिनम्। मूलस्य भवनं क्षेत्रं मूलशाकटम्। मूलशाकिनम्॥ २९॥

## पदमञ्जरी

स्नेह इति। सिनह्यन्त्यनेनेति स्नेहः=द्रवरूप इङ्गुदादीनां विकारः। तत्र इङ्गुदशब्दः 'लघावन्ते' (फि० सू० ४२) इत्याद्युदात्तः, ततः 'तस्य विकारः' इत्यण्प्रत्ययः प्राप्तः; तिलशब्दाद् 'अनुदात्तादेश्च' इत्यञ् प्राप्त, सोऽपि त्विष्यते-तिलानां विकारस्तैलमिति, तत्तर्हीदं बहु वक्तव्यम्? नेत्याह; उपमानात् सिद्धम्। कथम्? गावस्तिष्ठन्त्यस्मिन्निति गोष्ठम्, तत्साधर्म्यादुष्ट्रादिस्थानमपि गोष्ठमित्युच्यते। तत्र विशेषप्रतिपत्त्यर्थमुष्ट्रादिभिर्विशेष्यते—उष्ट्रगोष्ठम्, महिषगोष्ठम्; मुख्यार्थप्रतिपत्तये गोभिरपि गोगोष्ठमिति। यथा गोपतिशब्दे स्वामिमात्रपरतया प्रयुक्ते गोभिरपि विशेषणम्—'गवामसि गोपतिरेक इन्द्रः' (ऋ० ७.९८.८) 'विद्मा हि त्वा गोपतिं शूर गोनाम्' (ऋ० १०.४७.१) इति तथा नानाद्रव्याणां रज्जुवीरणादीनां सङ्घातः कटः, तत्साधर्म्यादन्योऽपि सङ्घातः कटशब्देनोच्यते, स चाविप्रभृतिभिर्विशेषयिष्यते, एवं पटवद्विस्तीर्णोऽविसङ्घोऽविपट इति। तथा युगशब्देन द्वयमुच्यते—गवोर्युगं गोयुगम्, द्वयात्मत्वसामान्यादन्यदपि युगलं गोयुगमित्युच्यते, तत उष्ट्रादिभिर्विशेष्यते, मुख्यगोयुगप्रतिपत्तये गवापि। तथा षड् गावः समाहृताः षड्गवम्, 'गोरतद्धितलुकि' इति टच्, पात्रादित्वान्नपुंसकत्वम्। तत्साधर्म्यादित्यादि पूर्ववत्। तथा तिलविकारो मुख्यं तैलं तत्सादृश्याद् द्रवरूपं विकारमात्रं तैलम्, तत इङ्गुदादिभिस्तिलैश्च विशेषणम्। एवं च कृत्वा तिलानां विकारस्तैलमित्यपि भवति, वाक्यप्रारम्भे तु तैलचा बाधितत्वादन स्यात्।

## भावबोधिनी

एव कैयट ने यह भी लिखा है "उष्ट्रस्य ग्रीवाबन्धने यानाङ्गे युगे प्रत्ययः।" अतः 'उष्ट्रगोयुगम्' के दोनों अर्थ सम्भव हैं।)

* प्रकृत्यर्थ का षट्त्व वाच्य रहने पर 'षड्गवच् प्रत्यय कहना चाहिये। * उदा० हस्तिषड्गवम्। ( षड् हस्तिनः—यह अर्थ है।) अश्वषड्गवम्। ( षट् अश्वाः–यह अर्थ है )।

[ प्रस्तुत सूत्र पर भाष्य में यह वार्तिक नहीं है। ]

विकार यदि 'स्नेह'=तेल हों तो तैलच् प्रत्यय कहना चाहिये। उदा० एरण्डतैलम्। [एरण्डानां विकारः स्नेहः—यह अर्थ है—एरण्ड+तैलच् ]। इङ्गुदतैलम् [ इङ्गुदादीनां विकारः स्नेहः—यह अर्थ है—इङ्गुद+तैलच्, इङ्गुदी का तेल ]। तिलतैलम्। [ तिलानां विकारः स्नेहः—इस अर्थ में-तिल+तैलच्। रेंड़ का तेल, तिल का तेल ]।

* भवन=उत्पत्तिस्थान यदि क्षेत्र हो तो 'इक्षु' आदि शब्दों से 'शाकट' और 'शाकिन' प्रत्यय कहने चाहिए। * उदा० इक्षूणां भवनं क्षेत्रम्—इस अर्थ में–इक्षुशाकटम्। ( इक्षु+शाकट।) इक्षुशाकिनम् ( इक्षु+

---

१. 'स्नेहेने'—इति पाठा०।

## २०५१. अवात् कुटारच्च ॥ ३० ॥ ( १८३१ )

अवशब्दात् कुटारच्प्रत्ययो भवति। चकारात् कटच्। अवकुटारम्। अवकटम् ॥

## २०५२. नते नासिकायाः संज्ञायां टीटञ्नाटज्भ्रटचः ॥ ३१ ॥ ( १८३२ )

'अवात्' इत्येव। नमनम् = नतम्। नासिकायाः सम्बन्धिनि नतेऽभिधेये टीटच्, नाटच्, भ्रटच्—प्रत्यया भवन्ति संज्ञायां विषये। नासिकाया नतम् अवटीटम्। अवनाटम्। अवभ्रटम्।

### न्यासः

अवात् कुटारच्च ॥ ३० ॥

नते नासिकायाः संज्ञायां टीटञ्नाटज्भ्रटचः ॥ नमनं नतमिति। भावे निष्ठां दर्शयति। नासिकायाः सम्बन्धिनीति। अनेनापि नासिकाया इत्यपि सम्बन्धलक्षणा षष्ठी। यदि नासिकायाः सम्बन्धिनि नते वाच्य एते प्रत्ययाः, कथं तदेतेन नासिका पुरुषश्चाभिधीयते? इत्याह—

### पदमञ्जरी

अपर आह—'यथा प्रकृष्टो वीणायां प्रवीण इति व्युत्पत्तिमात्रं क्रियते, कौशलमेव त्वस्य निमित्तम्, तथा च वीणायां प्रवीण इत्यपि भवति; तथा तिलानां विकारस्तैलमिति व्युत्पत्तिमात्रम्, द्रवरूपो विकारस्त्वस्यार्थः। तथा चेङ्गुदादिभिर्विशेषणसिद्धिः' इति; तत्तु न रोचयामहे; न हि तैलमित्युक्ते द्रवरूपं विकारमात्रं प्रतियन्ति। शाकटच्शाकिनौ तु वक्तव्यावेव ॥ २९ ॥

अवात् कुटारच्च ॥ अवकुटारम्, अवकटमिति। अवाचीनम्, अप्रसिद्धमित्यर्थः ॥ ३० ॥

नते नासिकायाः संज्ञायां टीटञ्नाटज्भ्रटचः ॥ नमनं नतमिति। 'नपुंसके भावे क्तः' नीचैस्त्वमित्यर्थः। नासिकायाः सम्बन्धिनीति। सम्बन्धश्च नमने कर्तृत्वेन, सूत्रे तु 'नपुंसके भाव उपसंख्यानाम्'

### भावबोधिनी

शाकिन ) मूलशाकटम्। मूलशाकिनम्। ( मूलानां भवनं क्षेत्रम्—यह अर्थ है )।

[ भाष्य में शाकटशब्दश्च प्रत्ययो वक्तव्यः। "शाकिन शब्दश्च प्रत्ययो वक्तव्यः।" ये दो वार्त्तिक पठित हैं। अतः काशिका में उद्धृत वार्त्तिक और उनके अर्थ का आधार अन्वेषणीय है। ॥ २९ ॥

'अव' शब्द से 'कुटारच्' प्रत्यय होता है। और 'च' के बल से 'कटच्' प्रत्यय होता है। उदा० अवकुटारम्। अवकटम्। [ अवाचीनम्—इस अर्थ में 'अव' से युक्त प्रत्यय होते हैं। 'अवाचीन' का अर्थ 'नीचा' होता है। पदमंजरीकार ने 'अप्रसिद्ध' अर्थ लिखा है। ] ॥ ३० ॥

'अवात्' ( 'अव' शब्द से, इसकी अनुवृत्ति होती है। नमन = नत ( = झुकना) नासिका सम्बन्धि नत = झुकाव अर्थ वाच्य रहने पर टीटच् नाटच् और भ्रटच्—ये तीन प्रत्यय होते हैं संज्ञा के विषय में, अर्थात् किसी का नाम अर्थ वाच्य रहने पर ये प्रत्यय होते हैं। उदा० नासिकायाः नतम्-इस अर्थ में—अवटीटम्। अवनाटम्। अवभ्रटम्। [ अव से तीनों प्रत्यय होते हैं। नाक का झुकना = नीची होना। ] इस के योग से नाक भी झुकी मानी जाती है। और उस प्रकार की नाकवाला पुरुष भी वैसा ( झुकी नाक वाला ) कहा जाता है—'अवटीटः, अवनाटः, अवभ्रटः। [ अव + टीटच् यहाँ प्रत्ययादि 'टकार' की इत्संज्ञा लोप नहीं होता है क्योंकि 'चुटू' यह सूत्र अलग बनाया जाना इसकी अनित्यता का ज्ञापक है। इस विषय की चर्चा "तेन वित्तश्चुञ्चुप्चणपौ" पा० सू०५।२।२६ की व्याख्या में देखें ]।

'नते नासिकायाः' ( नाक का झुकना ) और 'संज्ञायाम्' इनकी अनुवृत्ति होती है। नासिका का नत = झुकना वाच्य रहने पर 'बिडच्' और 'बिरीसच्' ये प्रत्यय होते हैं। उदा० निबिडम्। निबिरीसम्। [ नाक का

तद्योगान्नासिकापि । पुरुषोऽपि तथोच्यते-अवटीटः, अवनाटः, अवभ्रट इति ॥

२०५३. नेर्बिडज्बिरीसचौ ॥ ३२ ॥ ( १८३३ )

'नते नासिकायाः' इत्यनुवर्त्तते, 'संज्ञायाम्' इति च । निशब्दान्नासिकाया नतेऽभिधेये बिडच्, बिरीसच्-इत्येतौ प्रत्ययौ भवतः । निबिडम् । निबिरीसम् । तद्योगान्नासिकापि । पुरुषोऽपि—निबिडः, निबिरीसः ।

कथं निबिडाः केशाः, निबिडं वस्त्रम् ? उपमानाद्भविष्यति[1] ॥

२०५४. इनच्पिटच्चिक चि च ॥ ३३ ॥ ( १८३४ )

'नेः' इत्येव, 'नते नासिकायाः' इति च । निशब्दान्नासिकाया नतेऽभिधेये इनच्, पिटच्-इत्येतौ प्रत्ययौ भवतः, तत्संनियोगेन च निशब्दस्य यथासंख्यं चिक, चि-इत्येतावादेशौ भवतः । चिक्किनः । चिपिटः ।

न्यासः

तद्योगादिति ॥ ३१ ॥

नेर्बिडज्बिरीसचौ ॥ कथं निबिडा इति । तद्योगोऽत्र नास्ति । अतस्तद्योगाभावात् तथाभिधानं नोपपद्यत इत्यभिप्रायः । उपमानाद् भविष्यतीति । निबिडतया नासिकया तुल्याः केशा वस्त्राणि च निबिडतया । तेनोपमानात् तदुभयं निबिडशब्दवाच्यं भविष्यति ॥ ३२ ॥

पदमञ्जरी

( वा० १४५ ) इति कर्त्तरि षष्ठी । यद्वा—'शेषविज्ञानात् सिद्धम्' ( वा० १४६ ) इति शेषलक्षणैव । अवटीटादिषु नासिकासाधने नमने वर्त्तमानादुपसर्गात्स्वार्थे प्रत्ययः । कथं तर्हि नासिका पुरुषश्च तथोच्यते ? इत्याह—तद्योगादिति । टीटञष्टकारस्येत्संज्ञाभावः 'चुटू' इत्यत्रैव व्याख्यातः ॥ ३१॥३२ ॥

भावबोधिनी

झुकना ] इसके योग से नासिका भी तथा झुकी हुई ( निबिडा, निबिरीसा ) कही जाती है । ] और पुरुष भी उसी प्रकार का [ झुकी हुई नाक वाला ] कहा जाता है—निबिडः, निबिरीसः ।

'निबिडाः केशाः, निबिडं वस्त्रम्' ये प्रयोग किस प्रकार होते हैं ? उपमान से ये सिद्ध होते हैं ।

**विमर्श**—जिस प्रकार—गवां स्थानम्–इस अर्थ में 'गोष्ठम्' यह प्रयोग होता है उसी प्रकार उष्ट्राणां स्थानम्' इस अर्थ में भी 'गोष्ठम्' का प्रयोग होना चाहिये, अर्थात् किसी भी पशु के बैठने का स्थान 'गोष्ठ' होता है । इसमें विशेष प्रतिपत्ति के लिए—गोगोष्ठम्' जिस प्रकार होता है । उसी प्रकार 'उष्ट्रगोष्ठम्' भी होता है । यही स्थिति प्रकृत सूत्र में भी है । जिस प्रकार झुकी नासिका 'निबिडा' है उसी प्रकार 'केश' भी 'निबिड' कहे जा सकते हैं ।

वास्तव में 'नते नासिकाः' इसकी अनुवृत्ति नहीं माननी चाहिये । केवल संज्ञायाम्' का सम्बन्ध करना चाहिये । अतः 'केश' 'वस्त्र' सभी के लिए यह प्रत्यय होकर उक्त प्रयोग संभव हैं ॥ ३२ ॥

'नेः' ( 'नि' से ) इसकी अनुवृत्ति होती है 'नते नासिकायाः' ( नाक का झुकाव )—इसकी भी अनुवृत्ति होती है । नाक का नत = झुकाव वाच्य रहने पर 'इनच्' और 'पिटच्' प्रत्यय होते हैं और इन प्रत्ययों के संयोग से 'नि' शब्द का क्रमशः 'चिक' और 'च' ये आदेश होते हैं अर्थात् जब 'इनच्' होता है तब 'चिक' आदेश और

1. 'घनत्वसाधर्म्यात्'—इत्यधिकं कुत्रचित् ।

*** ककारः प्रत्ययो वक्तव्यश्चिक्च प्रकृत्याऽऽदेशः *** । चिक्कः । **तथा चोक्तम्**—'इनच्पिटच्का-श्चिकचिचिकादेशाश्च वक्तव्याः' ( म० भा० ५. २. ३३ वा० १ ) इति ॥

*** क्लिन्नस्य चिल् पिल्लश्चास्य चक्षुषी * ( वा० २ )** । क्लिन्नस्य चिल्, पिल्—इत्येतावादेशौ भवतो लश्च प्रत्ययः 'अस्य चक्षुषी' इत्येतस्मिन्नर्थे । क्लिन्ने अस्य चक्षुषी चिल्लः । पिल्लः ॥

*** चुल्लादेशो वक्तव्यः * ( वा० २ )** । चुल्लः ।

अस्येत्यनेन नार्थः । चक्षुषोरेवाभिधाने प्रत्यय इष्यते । क्लिन्ने चक्षुषी चिल्ले । पिल्ले । चुल्ले । तद्योगात्तु पुरुषस्तथोच्यते ॥

## न्यासः

**इनच्पिटच्चिक चि च** ॥ **ककारः प्रत्ययो वक्तव्य इत्यादि** । वक्तव्यो व्याख्येय इत्यर्थः । व्याख्यानं इत्यर्थः । व्याख्यानं तु चकारस्यानुक्तसमुच्चयार्थत्वमाश्रित्य कर्त्तव्यम् । **तथा चोक्तमिति** । वार्त्तिककारेण ।

**अस्येत्यनेन नार्थ** इति । वाक्यैकदेशं प्रत्याचष्टे । यदि चक्षुषोरेवाभिधाने प्रत्ययः पुरुषस्य तथा-भिधानं न प्राप्नोतीत्यत आह—**तद्योगादित्यादि** ॥ ३३ ॥

## पदमञ्जरी

**इनच्पिटच्चिक चि च** ॥ **ककारः प्रत्यय इति** । अकारो विवक्षितः; चकारः, एवकार इत्यादिवत् कारशब्दः, कप्रत्यय इत्यर्थः । **तथा चोक्तमिति** । सूत्रे निशब्दस्य द्वावादेशौ द्वौ च प्रत्ययौ विहितावित्यादेशप्रत्ययत्रयविधानार्थमेतद् वार्त्तिककारेणोक्तम् । **अस्य चक्षुषी इत्येतस्मिन्नर्थे** इति । यद्यपि चक्षुषी प्रकृत्यर्थविशेषणम्, अस्येति षष्ठ्यर्थे प्रत्ययः, तथापि क्लिन्नत्वस्य चक्षुर्गतत्वं प्रत्ययस्यैव द्योत्यमिति मत्वैवमुक्तम् ।

**अस्येत्यनेनेति** । वाक्यैकदेशं प्रत्याचष्टे, कस्मात् ? **नार्थः**, इत्याह । **चक्षुषोरेवाभिधान** इति । चक्षुषोर्वर्त्तमानात्क्लिन्नशब्दात्स्वार्थे प्रत्यय इत्यर्थः । कथं तर्हि पुरुषस्याभिधानम् ? इत्याह—**तद्योगा-दित्यादि** । अर्शआदिषु 'स्वाङ्गाद्धीनात्' ( ग० सू० १३४ ) इति पठ्यते, तेन मत्वर्थेकारः ॥ ३३ ॥

## भावबोधिनी

जब 'पिटच्' प्रत्यय होता है तब 'चि' आदेश होता है । उदा० चिकिनः । चिपिटः । [ नासिकायाः नतम्—इस अर्थ में नि+इनच् 'नि' का 'चिक' आदेश—चिक+इन, भसंज्ञा, अलोप—चिकिनः । नि+पिटच्, 'नि' का 'चिक' आदेश—चि+पिट=चिपिटः ।

[ हिन्दी में—'चिकना' और 'चपटा' शब्द इन्हीं के विकसित=अपभ्रंश रूप हैं और अर्थविस्तार के कारण पदार्थमात्र के लिये इनका प्रयोग होता है । ]

* 'क' प्रत्यय और प्रकृति का 'चिक्' आदेश कहना चाहिए । * उदा० चिक्कः । [ नासिकायाः नतम्—इस अर्थ में नि+क, प्रकृति का 'चिक्' आदेश—चिक्क । ] जैसा कि कहा है "इनच्, पिटच्, क—ये तीन प्रत्यय और क्रमशः 'चिक, चि, चिक्—ये तीन ( प्रकृति के ) आदेश कहने चाहिए । [ भाव यह है कि सूत्र में केवल दो प्रत्यय कहे गये हैं अतः प्रकृति के भी दो आदेश कहे गये हैं । वार्तिककार ने तीसरा 'क' प्रत्यय और 'चिक्' यह तीसरा आदेश किया है । अतः तीन रूप होते हैं । ]

* क्लिन्न इसके 'चिल्' और 'पिल्' ये आदेश होते हैं तथा 'ल' प्रत्यय होता है—इसकी आँखें क्लिन्न हैं—इस अर्थ में । * उदा० क्लिन्ने अस्य चक्षुषी—इस अर्थ में—चिल्लः, पिल्लः । [ क्लिन्न+ल, चिल् आदेश करने पर चिल्लः, पिल् आदेश करने पर पिल्लः ये रूप होते हैं । गीली आखें हैं जिसकी वह पुरुष—यह अर्थ है ।

२०५५. उपाधिभ्यां त्यकन्नासन्नारूढयोः ॥ ३४ ॥ (१८३५)

उप, अधि—इत्येताभ्यां यथासंख्यमासन्नारूढयोर्वर्त्तमानाभ्यां स्वार्थे त्यकन्प्रत्ययो भवति। संज्ञाधिकाराच्च नियतविषयमासन्नारूढं गम्यते। पर्वतस्यासन्नम्=उपत्यका। तस्यैवाऽऽरूढम्=अधित्यका। 'प्रत्ययस्थात्कात्पूर्वस्य' (७.३.४४) इतीत्वमत्र न भवति, संज्ञाधिकारादेव ॥[1]

२०५६. कर्मणि घटोऽठच् ॥ ३५ ॥ (१८३६)

निर्देशादेव समर्थविभक्तिः। कर्मशब्दात्सप्तमीसमर्थाद् 'घटः' इत्येतस्मिन्नर्थेऽठच् प्रत्ययो भवति। घटत इति घटः। कर्मणि घटते कर्मठः पुरुषः ॥

न्यासः

उपाधिभ्यां त्यकन्नासन्नारूढयोः ॥ संज्ञाधिकाराच्चेति। 'नते नासिकायाः' इत्यादिसूत्रात् संज्ञाधिकारानुवृत्तेः। नियतविषयमिति। पर्वतविषयमेवासन्नारूढं गृह्यते। तेन वृक्षस्यासन्नम्, प्लक्षस्यारूढमित्यत्र न भवतीति भावः। अथोपत्यका, अधित्यकेत्यत्र 'प्रत्ययस्थात् कात् पूर्वस्य' इत्यनेनेत्त्वं कस्मान्न भवति? इत्यत आह—प्रत्ययस्थात् कादिति। यद्यत्रेत्त्वं स्यात् संज्ञारूपं न सिध्येत्; नोपत्यिकाधित्यिकेत्येवंरूपा संज्ञा। तस्मात् संज्ञाधिकारादित्वं न भवति ॥ ३४ ॥

कर्मणि घटोऽठच् ॥ 'कर्मणि' इत्यनेन कर्मणीति स्वरूपग्रहणं दर्शयति। अथ पारिभाषिकस्य

पदमञ्जरी

उपाधिभ्यां त्यकन्नासन्नारूढयोः ॥ नियतविषयमिति। पर्वतविषयम्। आसन्नारूढमिति समाहारद्वन्द्वः, आसन्नम्=समीपम्। आरूढम्=उच्चस्थानम् संज्ञाधिकारादेवेति। तेन 'इत्त्वप्रतिषेधे त्यकन् उपसङ्ख्यानम्' (वा० ८४९) इति न वक्तव्यं भवति ॥ ३४ ॥

कर्मणि घटोऽठच् ॥ कर्मशब्दादिति। पारिभाषिकस्य कर्मणो ग्रहणं न भवति; घटतेरकर्मकत्वात्, मासं घटत इत्यादौ कालादिकर्मणां सम्भव एवेति चेद्? एवमपीह समर्थविभक्तेः सप्तम्या असम्भवः।

भावबोधिनी

* 'चुल् आदेश भी कहना चाहिए। * उदा० चुल्लः। [ क्लिन्न+ल, चुल् आदेश—चुल्लः। गीली आखों वाला पुरुष। ]

'अस्य' इसका प्रयोजन नहीं है। आखों के ही वाच्य रहने पर प्रत्यय करना इष्ट है। अतः क्लिन्न आखें='चिल्ल', पिल्ल, चुल्ल हैं। इनका योग होने से पुरुष भी वैसा [ चिल्ल, पिल्ल, चुल्ल कहा जाता है। ] ॥ ३३ ॥

'आसन्न' और 'आरूढ' अर्थों में क्रमशः वर्तमान 'उप' और 'अधि' इन शब्दों से 'त्यकन्' प्रत्यय स्वार्थ में होता है। और संज्ञा का अधिकार होने से नियतविषय वाला आसन्न और आरूढ अर्थ प्रतीत होता है अर्थात् पर्वत के ही आसन्न और आरूढ अर्थ प्रतीत होते हैं। उदा० पर्वतस्य आसन्नम्—इस अर्थ में—उपत्यका। [ उप+त्यकन्+टाप् ]। पर्वतस्य आरूढम्—इस अर्थ में—अधित्यका। [ अधि+त्यकन्+टाप्। इस प्रकार पर्वत का तराई क्षेत्र उपत्यका और पठारी क्षेत्र अधित्यका होता है। ] [ टाप् करने के बाद ] "प्रत्ययस्थात्कात् पूर्वस्य इदाप्यसुपः (पा० सू० ७।३।४४) से 'अ' का 'इ' नहीं होता है क्योंकि संज्ञा का अधिकार है ॥ ३४ ॥

[ सूत्रस्थ ] निर्देश से ही [ सप्तमी ] समर्थ विभक्ति है। सप्तमीसमर्थ कर्म शब्द से 'घट' [=चेष्टा=काम करने वाला ] इस अर्थ में 'अठच्' प्रत्यय होता है। घटते (=चेष्टा करता है)—इस अर्थ में 'घटः'

1. 'न हि कृते इत्वे संज्ञा प्रतीयते'—इत्यधिकं कुत्रचित्।

## २०५७. तदस्य सञ्जातं तारकादिभ्यः इतच् ॥ ३६ ॥ (१८३७)

तदिति प्रथमासमर्थेभ्यस्तारकादिभ्यः शब्देभ्यः 'अस्य' इति षष्ठ्यर्थे इतच् प्रत्ययो भवति। सञ्जातग्रहणं प्रकृतिविशेषणम्। तारकाः सञ्जाता अस्य नभसः तारकितं नभः। पुष्पितो वृक्षः।

तारका। पुष्प। मुकुल। कण्टक। पिपासा। सुख। दुःख। ऋजीष। कुड्मल। रोग। विचार। व्याधि। निष्क्रमण। मूत्र। पुरीष। किसलय। कुसुम। प्रचार। तन्द्रा।

### न्यासः

कर्मणो ग्रहणं कस्मान्न भवति? असम्भवात्। असम्भवस्तु घटतेरकर्मकत्वात्। अठच्प्रत्ययेऽकारोच्चारणं ठस्यैकादेशनिवृत्त्यर्थम् ॥ ३५ ॥

**तदस्य सञ्जातं तारकादिभ्य इतच्** ॥ तारकादिषु बुभुक्षा-पिपासाशब्दौ पठ्येते, तयोः किमर्थः पाठः, यावता सन्नन्ताभ्यां निष्ठायामिटि च कृते बुभुक्षितः, पिपासितो देवदत्त इति भवति? सत्यम्; भूते

### पदमञ्जरी

**घटत इति घट इति**। पचाद्यच्। **कर्मठ इति**। अकारोच्चारणाट्ठकारमात्रस्याप्रत्ययत्वादङ्गसंज्ञां प्रति निमित्तत्वाभावात् ठस्यैकादेशो न भवति ॥ ३५ ॥

**तदस्य सञ्जातं तारकादिभ्य इतच्** ॥ तारकादिषु बुभुक्षापिपासाशब्दयो; किमर्थः पाठः, यावता सन्नन्तावेतौ, तथा च निष्ठायामिटि च कृते सिद्धम्—बुभुक्षितः, पिपासित इति? सत्यं कर्मणि सिद्धम्—बुभुक्षित ओदनः, पिपासितमुदकमिति; कर्त्तरि तु न प्राप्नोति—बुभुक्षितो देवदत्तः, पिपासितो देवदत्त इति। अनेन तु यस्य बुभुक्षापिपासे सञ्जाते तत्र प्रत्यय उत्पद्यते।

**पुष्पादीनां तर्हि** किमर्थः पाठः, 'पुष्प विकसने,' (धा०पा० ११२२) 'मूत्र प्रस्रवणे,' (धा० पा० १९०९) 'द्रै स्वप्ने,' (धा. पा. ९०६) निपूर्वः, 'कठि शोके' (धा. पा. २६४) उत्पूर्वः, 'सुख दुःख तत्क्रियायाम्,' (धा. पा. १९२९-३०) 'व्रण गात्रविचूर्णने' (धा. पा. १९३७) एभ्योऽकर्मकत्वात्कर्तरि क्ते—पुष्पितः, मूत्रित इत्यादि सिद्धम्? सत्यम् भूते सिद्धम्; वर्त्तमाने तु न सिद्ध्यति, अतो वर्त्तमानार्थस्तेषां पाठः। कथं पुनरनेन वर्तमाने भवति, यावताऽत्रापि 'सञ्जात' इति भूते निष्ठा? एवं तर्हि गणे

### भावबोधिनी

यह रूप (अच्प्रत्ययान्त) है। उदा० कर्मणि घटते—इस अर्थ में 'कर्मठः पुरुषः' [कार्यविषयक चेष्टा करने वाला=काम करने वाला पुरुष। जो सदा कार्य में लगा रहता है उसे 'कर्मठ' कहा जाता है।] ॥ ३५ ॥

'तत्' इससे बोधित प्रथमासमर्थ 'तारका' आदि शब्दों से 'अस्य' इस षष्ठी के अर्थ मे 'इतच्' प्रत्यय होता है। 'सञ्जात' का ग्रहण प्रकृति का विशेषण है। [अर्थात् प्रकृत्यर्थ सञ्जात=उत्पन्न होने वाला—होने पर यह प्रत्यय किया जाता है।] उदा० तारकाः सञ्जाता अस्य—[तारे हो गये हैं जिसके अर्थात् तारों से युक्त]—इस अर्थ में-तारकितं नभः [तारका+इतच्, भसंज्ञा, आलोप] पुष्पितः वृक्षः। [पुष्पाणि संजातानि अस्य—इस अर्थ में—पुष्प+इतच्, भ संज्ञा, अलोप। फूल जिसके उत्पन्न हो चुके हैं अर्थात् फूलों से युक्त वृक्ष—यह प्रतीति होती है।]

[तारकादिगण में पठित शब्द—] तारका। पुष्प। मुकुल। कण्टक। पिपासा। सुख। दुःख। ऋजीष।

**वेग। बुभुक्षा। श्रद्धा। उत्कण्ठा। भर। द्रोह। * गर्भादप्राणिनि * ( ग० सू० १२० )। तारकादिराकृतिगणः॥**

**२०५८. प्रमाणे द्वयसज्दघ्नञ्मात्रचः॥ ३७॥ ( १८३८ )**

**'तदस्य' इत्यनुवर्त्तते। तदिति प्रथमासमर्थाद् 'अस्य' इति षष्ठ्यर्थे द्वयसच्, दघ्नच्, मात्रच्—इत्येते प्रत्यया भवन्ति यत्तत्प्रथमासमर्थं प्रमाणं चेत्तद्भवति। ऊरुः प्रमाणमस्य ऊरुद्वयसम्, ऊरुदघ्नम्, ऊरुमात्रम्। जानुद्वयसम्, जानुदघ्नम्, जानुमात्रम्॥**

**न्यासः**

विधानाद् वर्त्तमाने न सिध्यति। अनेन तु वर्त्तमानेऽपि सिध्यति। तस्माद् युक्तस्तयोः पाठः। **गर्भादप्राणिनीति**। गर्भशब्दादप्राणिन्यभिधेय इतच्प्रत्ययो भवति। गर्भिताः शालयः। अप्राणिनीति किम्? गर्भः सञ्जातोऽस्या गर्भिणी गौः॥ ३६॥

**प्रमाणे द्वयसच्दघ्नञ्मात्रचः॥** प्रमाणशब्दस्य सम्बन्धिशब्दत्वात्प्रत्ययार्थो विज्ञायते।

**पदमञ्जरी**

पुष्पादीनां पाठसामर्थ्यात्सञ्जातमित्यत्र भूतकालो न विवक्ष्यते। **गर्भादप्राणिनीति**। गर्भशब्दादप्राणिन्यभिधेये इतज्भवति—गर्भिताः शालयः, प्राणिनि तु गर्भिणी गौः॥ ३६॥

**प्रमाणे द्वयसज्दघ्नञ्मात्रचः॥ यत्तत्प्रथमासमर्थं प्रमाणं चेत्तद्भवतीति**। अनेन प्रकृत्यर्थविशेषणत्वं प्रमाणस्य दर्शयति। यदि तु प्रत्ययार्थविशेषणं स्यात्-यत्तदस्येति निर्दिष्टं प्रमाणं चेत्तद्भवतीति; तदा

**भावबोधिनी**

कुड्मल। रोग। विचार। व्याधि। निष्क्रमण। मूत्र। पुरीष। किसलय। कुसुम। प्रचार। तन्द्रा। वेग। श्रद्धा। बुभुक्षा। उत्कण्ठा। भर। द्रोह। * गर्भ शब्द से प्राणिभिन्न अर्थ में। * तारकादिगण आकृतिगण है।

**विमर्श**—तारकादिगण में उक्त शब्दों के अतिरिक्त अन्य शब्दों का पाठ भी प्राप्त होता है। उनमें से अधिकांश शब्द टिप्पणी में दिये गये हैं। न्यास और पदमञ्जरी के अनुसार 'बुभुक्षा' शब्द भी है। 'सूचक' और 'पुच्छा' इनका पाठ नहीं प्राप्त होता है।

कपिलदेवशास्त्री ने इन शब्दों का भी पाठ स्वीकार किया है—स्तबक, अङ्गार, वर्णक, बुभुक्षा, निद्रा, कर्णक, फल, उच्चार, पल्लव, अग्र, अङ्गारक, पुलक, कुवलय, शैवल, गर्व, तरङ्ग, कल्लोल, पण्डा, हस्तक, सीमन्त, कर्दम, कज्जल, कलङ्क, कुतूहल, कन्दल, अन्धकार, कारक, अङ्कुर, रोमाञ्च, हर्ष, उत्कर्ष, क्षुध, ज्वर, गर, दोह, शास्त्र, मुकुर, तिलक, चन्द्रक, मुद्रा, राग, मञ्जरी, शृङ्गार, तृष, वृण, गर्ध, गौरव, स्थपुट, कञ्चुक, वकुल, श्वभ्र, वर्म, अराल, मूर्धा, प्रतिबिम्ब, विघ्न, तन्त्र, प्रत्यय, दीक्षा, गर्ज। आकृतिगणोऽयम्।"

[ आकृतिगण मान लेने से कोई दोष नहीं है। ]॥ ३६॥

'तद् अस्य' ( इसका यह )—इसकी अनुवृत्ति होती है। 'तत्' इससे बोधित प्रथमासमर्थ से 'अस्य' (इसका) इस षष्ठी के अर्थ में द्वयसच्, दघ्नच् और मात्रच्—ये तीन प्रत्यय होते हैं यदि जो प्रथमासमर्थ है वह प्रमाण हो तो। उदा० ऊरुः प्रमाणम् अस्य—इस अर्थ में—ऊरुद्वयसम्, ऊरुदघ्नम्, ऊरुमात्रं जलम्—ये प्रयोग

---

1. फल, उच्चार, स्तबक, पल्लव, खण्ड, धेनुष्या, अभ्र, अङ्गारक, अङ्गार, वर्णक, पुलक, कुवलय, शैवल, गर्व, तरङ्ग, कल्लोल, पण्डा, चन्द्र, स्रवक, मुद्रा, राग, कण्टक, हस्त, कर, सीमन्त, कर्दम, कज्जल, कलङ्क, कुतूहल, कन्दल, आन्दोल, अन्धकार, कोरक, अङ्कुर, रोमाञ्च, हर्ष, उत्कर्ष, क्षुधा, ज्वर, गोर, दोह, शास्त्र, मुकुर, तिलक, बुभुक्षा, निद्रा—अत्रैते शब्दाः पुस्तकान्तरेऽधिकाः।

**प्रथमश्च द्वितीयश्च ऊर्ध्वमाने मतौ मम । ( म० भा० वा० )**

ऊरुद्वयसमुदकम् । ऊरुदध्नमुदकम् । **मात्रच्पुनरविशेषेण, प्रस्थमात्रमित्यपि भवति ।**

* **प्रमाणे लो वक्तव्यः** * (म०भा० ५.२.३७ वा०) **प्रमाणशब्दा इति ये प्रसिद्धास्तेभ्य उत्पन्नस्य प्रत्ययस्य लुग्भवति । शमः प्रमाणमस्य शमः । दिष्टिः । वितस्तिः ।**

**न्यासः**

**प्रथमश्च द्वितीयश्चेत्यादि ।** द्वयसज्दघ्नचौ ऊर्ध्वमान इष्येते । उपरि निक्षिप्य यत्र मीयते, न तिर्यक् समन्ततो वा, तदूर्ध्वमानम् । **अविशेषेणेति ।** प्रमाणे परिमाण उन्माने वाऽविशेषेण सर्वत्र मात्रज् भवतीति । **प्रस्थमात्रमित्यपि भवतीति ।** अपिशब्दाद् वितस्तिमात्रमित्यपि भवतीति ।

**प्रमाणे लोरिति ।** लुकश्चायं पूर्वाचार्यविहिता संज्ञा । अयं मात्रच उत्पन्नस्य लुगुच्यते, न द्वयसज्दघ्नयोः; तयोरूर्ध्वमाने विधानात् । अस्मिन्नर्थे उत्पत्तिरपि नास्ति ।

**पदमञ्जरी**

प्रमाणस्य प्रमेयापेक्षत्वात्प्रमेयं प्रकृत्यर्थः स्यात्, यथा प्रकृत्यर्थविशेषणत्वे प्रमेयं प्रत्ययार्थः, ततश्चेह प्राप्नोति–उदकं प्रमेयमस्योरोरिति, एतच्चायुक्तम्; अनियतप्रमेयविषयत्वात्प्रमाणानामेकेन विशेषणस्यान्याय्यत्वात्, प्रमेयस्य तु नियतप्रमाणत्वप्रतिपादनायोरुमात्रादयः शब्दाः प्रयुज्यन्ते ।

**प्रथमश्च द्वितीयश्चेति ।** ऊर्ध्वावस्थितेन येन मीयते तदूर्ध्वमानम्, ऊर्वादि । तत्र केचिदाहुः—'आयाममानमेव प्रमाणं सूत्रे गृह्यते, तिर्यङ्मानमेव चायाममानम्, ततश्चोर्ध्वमानेऽप्राप्तौ द्वयसज्दघ्नचौ प्रमाणादपकृष्येह विधीयेते' इति । अपर आह—'ऊर्ध्वावस्थितेनापि येनायामः परिच्छिद्यते तदप्यायाममानत्वात् प्रमाणमिति सूत्रे गृह्यते । वचनं तूर्ध्वमान एव यथा स्यातां तिर्यङ्माने मा भूतामिति नियमार्थम्' इति । अन्यस्त्वाह—'परिच्छेदकमात्रं प्रमाणमिह गृह्यते' इति; तत्रापि नियमार्थमेतत् । **मात्रच्पुनरविशेषेणेति ।** यद्यायाममानवाच्येवायंसूत्रे प्रमाणशब्दः, तदोन्मानपरिमाणयोरप्राप्तो मात्रज् विधीयते; अथ तु परिच्छेदकमात्रं प्रमाणम्, ततो न्यायप्राप्तानुवादोयऽम् । **प्रस्थमात्रमित्यपीति ।** अपि शब्दादूरुमात्रमित्यपि भवति ।

**प्रमाणे ल इति ।** लुक एषा पूर्वाचार्यसंज्ञा । **प्रमाणमिति ये प्रसिद्धा इति ।** 'प्रमाणशब्दा एते' इति ये प्रसिद्धाः—दिष्टिवितस्त्यादय इत्यर्थः । शमः, दिष्टिः, **वितस्तिरिति ।** अत्र मात्रचो लुग्; इतरयोरसम्भवात् । शमादीनामनूर्ध्वमानत्वाद् ।

**भावबोधिनी**

होते हैं । [ ऊरु=जांघ तक ऊपर=प्रमाण वाला पानी ] जानुः प्रमाणम् अस्य जलस्य—इस अर्थ में—जानुद्वयसम, जानुदध्नम, जानुमात्रम् ( घुटने तक ऊपर पानी ) ।

* "मेरे मत में प्रथम प्रत्यय=द्वयसच् और द्वितीय प्रत्यय=दध्नच् ये दोनों ऊर्ध्वमान ( ऊपर की ऊँचाई मापने ) में होते हैं । * उदा० ऊरुद्वयसम्, ऊरुदघ्नम् उदकम् ( जांघ तक ऊँचा पानी-यही अर्थ होता है । परन्तु मात्रच् यह तृतीय प्रत्यय सामान्य रूप से सभी प्रकार के मांप में होता है—प्रस्थमात्रम् (प्रस्थः प्रमाणमस्य—इस अर्थ में ) भी होता है । )

* प्रमाण=माप के रूप में जो शब्द प्रसिद्ध हैं उनसे विहित 'मात्रच' प्रत्यय का ल=लुक् ( लोप ) हो जाता है । * उदा० शमः प्रमाणम् अस्य—इस अर्थ मे 'शमः' । दिष्टिः प्रमाणम् अस्य—इस अर्थ में—'दिष्टिः ।' [ इन से सूत्र द्वारा मात्रच् प्रत्यय होता है किन्तु इस वार्तिक से उसका लोप हो जाता है । अतः केवल प्रकृति शेष रहती है । इन दोनों के अर्थ प्रसिद्ध नहीं हैं । समतल प्रमाण के वाचक हैं । ] वितस्तिः प्रमाणमस्य—इस अर्थ में—वितस्तिः । [ बालिस्त=आधा हाथ जिसका प्रमाण है । ]

* द्विगोर्नित्यम् * ( म० भा० ५. २. ३७ वा० )। द्वौ शमौ प्रमाणमस्य द्विशमः। त्रिशमः। द्विवितस्तिः। नित्यग्रहणं किम् ? संशये श्राविणं वक्ष्यति, तत्रापि द्विगोर्लुगेव यथा स्यात्। द्वे दिष्टी स्यातां वा न वा, द्विदिष्टिः।

* डट् स्तोमे वक्तव्य * (म० भा० ५. २. ३७ वा०)। पञ्चदशः स्तोमः। पञ्चदशी रात्रिः।

**न्यासः**

द्विगोर्नित्यमिति। द्विगोरप्रमाणत्वात्। सत्यपि च प्रामाणान्तत्वे तदन्तविधेरभावात्। पूर्वेण प्राप्त एव लुगुच्यते। नित्यग्रहणं किमिति। न हि विकल्पः प्रकृतो यन्निवृत्त्यर्थं नित्यग्रहणं क्रियते। न च पूर्वस्य विधेर्विकल्पेन प्रवृत्तिं ज्ञापयितुमिह नित्यग्रहणं कर्तुं युक्तम्। न ह्यसौ विभाषयेष्यत इत्यभिप्रायः। संशय इत्यादिना। नित्यग्रहणस्य प्रयोजनमाह। श्रवणं श्रावः, 'कृत्यल्युटो बहुलम्' इति भावे घञ्। श्रावोऽस्यास्तीति श्रावी, स पुनर्वक्ष्यमाणो मात्रच्प्रत्ययः प्रमाणसम्बन्धेनोच्यते।

स्तोमे डडित्यादि। पञ्चदशाहानि परिमाणमस्य यज्ञस्य पञ्चदशः। पञ्चदशीति।

**पदमञ्जरी**

द्विगोर्नित्यमिति। द्विगोरप्रमाणत्वात्तदन्तविध्यभावाच्च पूर्वेणाप्राप्तो लुग्विधीयते। नित्यग्रहणं किमिति। नात्र विकल्पः प्रकृत इति प्रश्नः। संशये श्राविणं वक्ष्यतीति। श्रवणं श्रावः,' कृत्यल्युटो बहुलम्', इति घञ्' सोऽस्यास्तीति श्रावी, 'प्रमाणपरिमाणाभ्यां सङ्ख्यायाश्चापि संशये' ( कात्या. वा. ३१३३ ) इति वक्ष्यमाणस्य मात्रचः 'प्रमाणे लः' इत्यनेन लुग्न भवति, परत्वाद्; अतोऽसौ श्रावी। अस्य द्विगावपि श्रवणे प्राप्ते लुग्विधीयत इत्यर्थः। द्वौ शमौ प्रमाणमस्य द्विशमः। कथं पुनरत्र संशये मात्रच उत्पत्तिः ? तदन्तविधिना। एतदेव लुग्वचनं ज्ञापकम्—अस्त्यत्र तदन्तविधिरिति। प्रकरणादिवशादस्य निश्चयसंशयविषयता प्रयोगस्यावसेया।

स्तोमे डड्वक्तव्य इति। अत्रायाममानस्यासम्भवात्परिच्छेदोपाधिकायाः सङ्ख्यायाः स्तोमेऽ

**भावबोधिनी**

* द्विगु से नित्य ( प्रत्ययलुक् ) होता है। * उदा० द्वौ शमौ प्रमाणमस्य—इस विग्रह में [ द्विगु समास के बाद मात्रच् प्रत्यय होता है, उसका नित्य लुक् कर देने पर ] द्विशमः। त्रिशमः। द्विवितस्तिः। [ द्विगु प्रमाण नहीं होता है। यदि प्रमाणान्त मानें तो भी संभव नहीं है क्योंकि तदन्तविधि नहीं होती है। ]

नित्यग्रहण का क्या प्रयोजन है ? आगे श्रावी (=सुनाई देने वाला अर्थात् मात्रच् प्रत्यय ) कहा जाएगा ( "प्रमाणपरिमाणाभ्यां संख्यायाश्चापि संशये मात्रच् वक्तव्यः" यह वचन मात्रच् का विधान करेगा ), वहाँ द्विगु से मात्रच् का लुक् ही हो, इसके लिए 'नित्य' का ग्रहण है—'द्वे दिष्टी स्यातां न वा—' ( दो दिष्टियाँ=प्रमाण-विशेष हों या न हों ) इस अर्थ में—द्विदिष्टिः।

विमर्श—भाव यह है कि 'द्विगु से मात्रच् का लुक्' इतना ही पर्याप्त था 'नित्यम्' की क्या आवश्यकता ? इस शंका का समाधान यह है कि इसी सूत्र पर काशिका में एक वार्त्तिक द्वारा संशय अर्थ में मात्रच् प्रत्यय कहा जायगा "प्रमाणपरिमाणाभ्यां संशये मात्रच् वक्तव्यः।" यह मात्रच् श्रावी ( श्रवणम्=श्रवः, श्रवः अस्ति अस्य—श्रावी, तं श्राविणम्=सुनाई देने वाला मात्रच् ) है। परवर्ती होने से यह लुक् का बाधक हो जाता। परन्तु 'नित्यम्' के ग्रहण से बाधक का भी बाध हो जाने से हर स्थिति में लुक् ही होता है। इसी के लिये 'नित्यम्' का ग्रहण है।

* स्तोम में डट् प्रत्यय कहना चाहिए।* उदा० पञ्चदशःस्तोमः। ( पञ्चदश मन्त्राः अहानि वा परिमाणमस्य—इस अर्थ में पञ्चदशन्+डट्=अ, डित् होने से टि=अन् का लोप—पञ्चदशः। पन्द्रह मन्त्रों या दिनों वाला

टित्वान् ङीप् ।

* शन्शतोर्डिनिर्वक्तव्यः * ( म० भा० ५. २. ३७ वा० ) । पञ्चदशिनोऽर्द्धमासाः, त्रिंशिनो मासाः ( तै० सं० ७ ५. २०. १ ) ।

* विंशतेश्चेति वक्तव्यम् * ( म० भा० ) । विंशिनोऽङ्गिरसः ( गो० ब्रा० १. १. ८. १ ) ।

* प्रमाणपरिमाणाभ्यां संख्यायाश्चापि संशये मात्रज्वक्तव्यः * ( म० भा० वा० ) । शममात्रम् । दिष्टिमात्रम् । प्रस्थमात्रम् । कुडवमात्रम् । पञ्चमात्रम् । दशमात्रा गावः ।

## न्यासः

टित्वान् ङीप् ।

शन्शतोर्डिनिरिति । स्तोमे चान्यत्राविशेषेणायं विधिः । विंशिन इति । डिनिः, 'ति विंशतेर्डिति' इति तिलोपः, यस्येतिलोपश्च । शममात्रं दिष्टिमात्रमिति । प्रमाणस्योदाहरणद्वयम्—प्रस्थमात्रं कुडव-

## पदमञ्जरी

भिधेये डट्प्रत्ययः । डित्करणमेकविंश इत्यत्र ति शब्दस्य लोपार्थम्, त्रयस्त्रिंशादौ टिलोपार्थं च । पञ्च-दशादौ 'नस्तद्धिते' इत्येव सिद्धम्—पञ्चदश मन्त्राः परिमाणमस्य पञ्चदशः स्तोमः, सप्तदशीरात्रिरिति ।[1] स्तोमसाहचर्याद्रात्र्यादौ स्त्रियां वृत्तिः, टित्वान्ङीप् 'तदस्य परिमाणम्' 'सङ्ख्यायाः संज्ञा' इत्यत्र तु स्तोमे डो विहितः, तत्र टाब् भवति यद्यस्ति प्रयोगः, अथ तु नास्ति ततोऽस्यैव स प्रपञ्चः ।

शन्शतोर्डिनिर्वक्तव्य इति । एवं च छन्दसि च भाषायां च डिनेर्विधानात् 'सङ्ख्यायाः संज्ञासङ्घ' इत्यत्र 'शन्शतोर्डिनिश्छन्दसि' ( वा. ५१७ ) इति वचनं प्रपञ्चार्थमेव ।

त्रिंशिनोऽङ्गिरस इति प्रवरभेदेन विंशतिर्भेदा उच्यन्ते, तत्र विंशतिशब्दात्सङ्ख्यानमात्रवाचिनः संख्येये प्रमेये डिनिः, 'ति विंशतेर्डिति' इति लोपः, यस्येतिलोपश्च ।

प्रमाणपरिमाणाभ्यामिति । रूढिशब्दावेतौ; भेदेनोपादानात् । शममात्रमिति । शमः प्रमाणमस्य

## भावबोधिनी

स्तोमयाग । ) पञ्चदशी रात्रिः । [ यहाँ भी पन्द्रह मन्त्र प्रमाण हैं जिसके ऐसा स्तोम । यहाँ स्तोम के साहचर्य से रात्रि अर्थ में यह प्रयोग है अतः ] टित् मान कर "टिड्ढाणञ्" ( पा. सू. ४।१।१५ ) से ङीप् होता है—पञ्चदशी । [ महाभाष्य में इस प्रकार का गौण उदाहरण नहीं है । ]

* शन् और शत् से डिनि प्रत्यय कहना चाहिए । * उदा० पञ्चदशिनः अर्धमासाः । [ पञ्चदश दिनानि परिमाणमेषां ते—इस अर्थ में—पञ्चदशन् + डिनि = इन्, टिलोप—पञ्चदशिन् । पन्द्रह दिनों वाले आधे महीने ] त्रिंशिनः मासाः । [ त्रिंशत् दिनानि परिमाणमेषां ते—इस अर्थ में—त्रिंशत् + डिनि = इन्, टिलोप = त्रिंशिन् । बहुवचन का रूप है । तीस दिनों वाले महीने । ]

* विंशति शब्द से भी डिनि कहना चाहिए । * उदा० विंशिनः अङ्गिरसः । [ विंशतिः परिमाणमेषां ते—इस अर्थ में—विंशति + डिनि = इन्, "ति विंशतेर्डिति" ( पा० सू० ६।४।१४२ ) से तिलोप, "यस्येति च" ( पा० सू० ६।४।१४८ ) से अलोप—विंश्–इन् । बहुवचन का रूप है । प्रवरों के भेद से अंगिरसों के भेद मान कर बीस संख्या परिमाण सिद्ध हो जाती है । यह वार्तिक नहीं अपितु भाष्यकार का वचन है । ]

* प्रमाण, परिमाण और संख्यावाचक से भी संशय अर्थ में मात्रच् प्रत्यय कहना चाहिए ।* [ प्रमाण और परिमाण को रूढ मानकर लिखा गया है । ] उदा० शममात्रम् । [ शमः प्रमाणमस्य स्याद् न वा ? ] दिष्टिमात्रम् ।

१. 'पञ्चदशी रात्रिः' इति काशिका ।

* वत्वन्तात्स्वार्थे द्वयसज्मात्रचौ बहुलम्[1] * ( म० भा० ५. २. ३७ वा० )। तावदेव तावद्द्वयसम्। तावन्मात्रम्। एतावद्द्वयसम्। एतावन्मात्रम्। यावद्द्वयसम्। यावन्मात्रम् ॥

**२०५९. पुरुषहस्तिभ्यामण्च ॥ ३८ ॥ ( १८३९ )**

'तदस्य' इत्येव, 'प्रमाणे' इति च। पुरुषहस्तिभ्यां प्रथमासमर्थाभ्यां प्रमाणोपाधिकाभ्यामस्येति षष्ठचर्थेऽण् प्रत्ययो भवति, चकाराद् द्वयसजादयश्च। पुरुषः प्रमाणमस्य पौरुषम्, पुरुषद्वयसम्, पुरुषदघ्नम्, पुरुषमात्रम्। हास्तिनम्, हस्तिद्वयसम्, हस्तिदघ्नम्, हस्तिमात्रम्।

**न्यासः**

**मात्रमिति**। परिमाणस्य—**पञ्चमात्रम्**। **दशमात्रा इति**—संख्यायाः। यत्रैतन्न निर्णीयते शमं स्याद्वा न वेति तत्र शममात्रमिति प्रयुज्यते। एवमन्यत्रापि यथायोगं वेदितव्यम् ॥ ३७ ॥

**पदमञ्जरी**

स्यान्न वेत्यत्रार्थे मात्रच्। **पञ्चमात्रा**[2] इति। पञ्च स्युर्न वेति संशय्यमानार्थवाचिनः स्वार्थे प्रत्ययः। यद्वा—वृत्तिविषये 'द्व्येकयोः' इत्यादिवत्सङ्ख्यानमात्रवाचिनः षष्ठचर्थे प्रत्ययः। पञ्चत्वसङ्ख्या प्रमाणमेषां स्याद्वा न वेति पञ्चमात्राः। **तावदेवेति**। तत्परिमाणमस्य धान्यादेस्तावत्, ततः स्वार्थे प्रत्ययः। उत्तरसूत्रे तु 'भावः सिद्धश्च डावतोः' ( कात्या. वा. ३१-३७ ) इत्यर्थान्तरे वक्ष्यते ॥ ३७ ॥

**पुरुषहस्तिभ्यामण् च ॥ हास्तिनमिति**। 'इनण्यनपत्ये' इति प्रकृतिभावः।

**भावबोधिनी**

[ दिष्टिः प्रमाणमस्य स्यात् न वा दिष्टिमात्रम्। ] प्रस्थमात्रम्। [ प्रस्थः परिमाणमस्य स्यात् न वा ? ] कुडवमात्रम्। [ कुडवः परिमाणमस्य स्यात् न वा ? ] पञ्चमात्रम्। [ पञ्च स्युर्न वा ? ] [ भाष्य में और पदमञ्जरी में—पञ्चमात्राः—यह उदाहरण है—पञ्चत्वसंख्या प्रमाणमेषां स्यात् न वा ? यह संशय है। ] दशमात्राः गावः। [ दशत्वसंख्या परिमाणमासां स्यात् न वा—यह संशय है। भाष्य में 'गावः' नहीं है। ]

* वतुप्प्रत्ययान्त से स्वार्थ में द्वयसच् और मात्रच् प्रत्यय बहुलरूप से कहने चाहिए। * उदा० (१) तावदेव— इस अर्थ में—तावद्द्वयसम्, तावन्मात्रम्। (२) एतावदेव—इस अर्थ में—एतावद्द्वयसम्, एतावन्मात्रम्। (३) यावदेव—इस अर्थ में—यावद्द्वयसम्, यावन्मात्रम्।

[ परिमाण अर्थ में वतुप् करने पर यावत्, तावत्, एतावत् आदि रूप होते हैं। प्रस्तुत प्रत्यय स्वार्थ में होते हैं। अतः क्रमशः अर्थ है—(१) उतना, (२) इतना (३) जितना। ] ॥ ३७ ॥

'तदस्य' ( यह उसका ) और 'प्रमाणे' ( प्रमाण अर्थ में ) इनकी अनुवृत्ति होती है। प्रथमासमर्थ, प्रमाणोपाधिक ( प्रमाण के समानाधिकरण अर्थात् प्रमाण अर्थवाची ) 'पुरुष' और 'हस्ती' शब्दों से 'अस्य' ( इसका ) इस षष्ठी के अर्थ में 'अण्' प्रत्यय होता है और 'च' के बल से द्वयसच्, दघ्नच्, मात्रच् ये तीनों प्रत्यय

---

१. महाभाष्ये श्लोकवार्तिकं त्वेवम्—

प्रमाणं प्रत्ययार्थो न तद्वत्यस्येति वर्तनात्।
प्रथमश्च द्वितीयश्च ऊर्ध्वमाने मतौ मम ॥ १ ॥
प्रमाणे लो द्विगोर्नित्यं डट्स्तोमे शच्शनोर्डिनिः।
प्रमाणपरिमाणाभ्यां संख्यायाश्चापि संशये ॥ २ ॥

२. 'दशमात्रा' इति काशिका।

**द्विगोर्नित्यं लुक्—द्विपुरुषमुदकम्, त्रिपुरुषमुदकम्। द्विहस्ति, त्रिहस्ति। द्विपुरुषी, त्रिपुरुषी। द्विहस्तिनी, त्रिहस्तिनी॥**

**२०६०. यत्तदेतेभ्यः परिमाणे वतुप्॥ ३९॥ (१८४०)**

**'तदस्य' इत्येव। यत्तदेतेभ्यः प्रथमासमर्थेभ्यः परिमाणोपाधिकेभ्यः 'अस्य' इति षष्ठ्यर्थे वतुप् प्रत्ययो भवति। यत्परिमाणमस्य यावान्। तावान्। एतावान्।**

**न्यासः**

**पुरुषहस्तिभ्यामण् च॥** हास्तिनमिति। 'इनण्यनपत्ये' इति प्रकृतिभावः। **द्विपुरुषीति।** 'पुरुषात् प्रमाणेऽन्यतरस्याम्' इति ङीप्। **द्विहस्तिनीति।** अत्र 'ऋन्नेभ्यो ङीप्' इति ङीप्॥ ३८॥

**यत्तदेतेभ्यः परिमाणे वतुप्॥ यावानिति।** 'आ सर्वनाम्नः' इत्याकारः। 'उगिदचाम्' इति नुम्, 'अत्वसन्तस्य चाधातोः' इति दीर्घः, हल्ङ्यादिसंयोगान्तलोपौ। प्रमाणपरिमाणशब्दौ पर्यायाविति मन्यमानो यश्चोदयेद् अथ कस्मात् परिमाणग्रहणं क्रियते, यावता प्रमाणग्रहणमनुवर्त्तत एवेति? तं

**पदमञ्जरी**

**द्विगोर्नित्यं लुगिति।** नायम् 'प्रमाणे लो द्विगोर्नित्यम्' (वा. ५५८. ५५९) इत्यस्यानुवादः; पुरुषहस्तिनोः शमादिवत्प्रमाणत्वेनाप्रसिद्धत्वात्। अत एव पुरुषद्वयसमित्यादौ 'प्रमाणे लः' (वा. ५५८) इति लुग्न भवति; अन्यथाणो विधानसामर्थ्याल्लुगभावेऽपि द्वयसजादीनां स्यादेव। तस्माद् पूर्वोऽत्र लुग्विधीयते। स च द्वयसजादीनां नाणः, 'ग्रहणवता प्रातिपदिकेन तदन्तविधिप्रतिषेधाद्' (व्या. प. ८९) द्विगोरणः प्राप्त्यभावात्। **द्विपुरुषीति।** 'पुरुषात्प्रमाणेऽन्यतरस्याम्' इति ङीप्॥ ३८॥

**यत्तदेतेभ्यः परिमाणे वतुप्॥ यावानिति।** 'आ सर्वनाम्नः' इत्यात्वम्। 'उगिदचाम्' इति नुम, 'अत्वसन्तस्य' इति दीर्घः, हल्ङ्यादिसंयोगान्तलोपौ। प्रमाणपरिमाणयोरेकत्वं मत्वा यश्चोदयेत्—

**भावबोधिनी**

भी होते हैं। उदा० पुरुषः प्रमाणम् अस्य—( पुरुष की ऊँचाई प्रमाण है इसकी ) इस अर्थ में—(१) पौरुषम्। ( पुरुष + अण्, आदिवृद्धि ) (२) पुरुषद्वयसम्, (३) पुरुषदघ्नम्, (४) पुरुषमात्रम्। [ जिस जल आदि में पुरुष डूब जाय, इतना अधिक हो, उसके लिए ये प्रयोग होते हैं। ] (१) हास्तिनम्, (२) हस्तिद्वयसम्, (३) हस्तिदघ्नम्, (४) हस्तिमात्रम्। [ हस्ती प्रमाणमस्य—इस अर्थ में पूर्ववत् चार प्रत्यय होते हैं। जिस पानी में हाथी भी डूब जाय उसके लिये ये प्रयोग होते हैं। ]

द्विगु समास से नित्य लुक् होता है—द्विपुरुषम् उदकम्, त्रिपुरुषम् उदकम्, ( दो पुरुषों की जितनी लम्बाई होती है उतना पानी, तीन पुरुषों की लम्बाई के बराबर पानी। ] द्विहस्ति, त्रिहस्ति, [ दो हाथी जिसमें डूब जायँ इतनी ऊँचाई वाला पानी, तीन हाथियों की ऊँचाई के बराबर पानी ] द्विपुरुषी, त्रिपुरुषी। [ दो पुरुषों की ऊँचाई की परिखा, तीन पुरुषों की ऊँचाई की परिखा। 'पुरुषात् प्रमाणेऽन्यतरस्याम्'' ( पा० सू० ४।१।२४ ) से ङीप् होता है। ] द्विहस्तिनी, त्रिहस्तिनी। ( दो हाथियों की ऊँचाई के बराबर, तीन हाथियों की ऊँचाई के बराबर ऊँची परिखा आदि। इसमें नकारान्त मानकर ''ऋन्नेभ्यो ङीप्'' ( पा० सू० ४।१।५ ) से ङीप् होता है। )॥ ३८॥

'तदस्य' ( यह उसका ) इस की अनुवृत्ति होती है। प्रथमासमर्थ परिमाणोपाधिक (=परिमाण—समानाधिकरण ) यत्, तत्, एतत् इन शब्दों से 'अस्य' ( इसका ) इस षष्ठी के अर्थ में 'वतुप्' प्रत्यय होता है। उदा० यत् परिमाणम् अस्य—इस अर्थ में—यावान् ( जितना )। तत् परिमाणम् अस्य—इस अर्थ में 'तावान्'

**प्रमाणग्रहणेऽनुवर्तमाने परिमाणग्रहणं प्रमाणपरिमाणयोर्भेदात् ।**

**डावतावर्थवैशेष्यान्निर्देशः पृथगुच्यते ।**
**मात्राद्यप्रतिघाताय भावः सिद्धश्च डावतोः ॥** ( म० भा० ५.२.३९ )

**न्यासः**

प्रत्याह—**प्रमाण इति वर्त्तमान** इत्यादि । स पुनरनयोः प्रमाणपरिमाणयोर्भेदः 'परिमाणं तु सर्वतः, आयामस्तु प्रमाणं स्यात्[1]'—इति प्रागेव व्याख्यातः ।

**डावतावर्थवैशेष्यादिति** । 'डावतोः' इति पूर्वाचार्यसंज्ञाप्रतिपादितापेक्षोऽयं निर्देशः, ते हि यत्तदेतेभ्यो डावतुमेव प्रत्ययं कृतवन्तः । विशिष्यत इति विशेषः, विशेषस्य भावो वैशेष्यम् । अर्थस्य वैशेष्यमर्थस्य विशिष्टत्वमित्यर्थः । प्रमाणशब्दस्यान्योऽर्थः, परिमाणशब्दस्य चान्योऽर्थ इति भिन्नार्थत्वमनयोः; तस्मादर्थवैशेष्याड्डावतौ विधातव्ये परिमाणशब्दस्य निर्देशः **पृथगुच्यते** । उच्यत इति क्रियत इत्यर्थः । किमर्थः पृथग्निर्देशः क्रियते ? इत्याह—**मात्राद्यप्रतिघातायेति** । पृथग्निर्देशेनार्थभेदे सिद्धे सति मात्रजादीनां बाधा मा भूदित्येवमर्थः पृथग्निर्देशः क्रियत इत्याह । अथैकत्वे तु प्रकृतिसामान्ये मात्रजादयो

**पदमञ्जरी**

परिमाणग्रहणमनर्थकम्, प्रमाणाधिकारादिति ? तं प्रत्याह—**प्रमाण इति वर्तमाने' इत्यादि** । स पुनरनयोर्भेदः 'परिमाणं तु सर्वतः, आयामस्तु प्रमाणं स्यात्' इति पूर्वमेव व्याख्यातः ।

**डावताविति** । इहास्माभिर्वतुपं विधाय 'आ सर्वनाम्नः' इत्यात्वं विहितम् । पूर्वाचार्यास्तु डावतुं विदधिरे, तदपेक्षोऽयं निर्देशः । विशिष्यत इति विशेषः, तस्य भावो वैशेष्यम्, अर्थवैशेष्यादर्थभेदात्परिमाणस्य प्रमाणात् पृथग्निर्देशः, उच्यते क्रियत इत्यर्थः । स्यादेतत्—'यद्यपि प्रमाणपरिमाणशब्दयोरर्थौ भिद्यते, तथापि प्रमाणग्रहणमेवानुवर्त्यं तदुपाधिकेभ्य एव वतुब्विधेयः । तत्रायमप्यर्थः—इदमपि सिद्धं भवति—यावानध्वा, यावती रज्जुरिति, अत्र ह्यायाममानं गम्यते । ये तु परिमाणे प्रयोगाः—यावान् धान्यराशिरित्यादयः, तेऽप्युपमानाद्भविष्यन्ति । यथा सिद्धान्ते यावानध्वा, यावती रज्जुः यावत्कृत्वो भुङ्क्त इत्यादयः' इति, तत्राह—**मात्राद्यप्रतिघातायेति** । यदि यथोक्तं क्रियेत ततो डावतुर्विशेषविहितत्वात्सा-

**भावबोधिनी**

(उतना) । एतावत् परिमाणम् अस्य इस—इस अर्थ में—एतावान् ( इतना ) ।

[ यत्+वतुप्=वत्, "आ सर्वनाम्नः" पा० सू० ६।३।९१ से 'त्' का 'आ', सवर्णदीर्घ—यावत् । प्रातिपदिकसंज्ञा, सु, "उगिदचां सर्वनामस्थाने" ( पा०सू० ७।१।८० ) से नुम्=न् आगम, "अत्वसन्तस्य चाधातोः" ( पा० सू० ६।४।१४ ) से उपधादीर्घ-यावान्त्+सु, "हल्ङ्याब्भ्यो दीर्घात् सुतिस्यपृक्तं हल्" से 'ति' का लोप, "संयोगान्तस्य लोपः" ( पा० सू० ८।२।२३ ) से त् लोप-यावान् । इसी प्रकार अन्य में भी समझना चाहिए । ]

[ पूर्व सूत्र से ] 'प्रमाणे' इसकी अनुवृत्ति संभव होने पर भी 'परिमाणे इसका ग्रहण इसलिये किया गया है कि प्रमाण और परिमाण में कुछ भेद है । [ जब सभी प्रकार से माप की जाती है तब 'परिमाण' होता है । जब केवल आयाम की माप की जाती है तब 'प्रमाण' कहा जाता है । इस विषय में यह वचन द्रष्टव्य है—

"ऊर्ध्वमानं किलोन्मानं परिमाणं तु सर्वतः । आयामस्तु प्रमाणं स्यात् संख्या भिन्ना तु सर्वतः ॥ ]

"डावतु' में अर्थवैशिष्ट्य के कारण=दोनों में अर्थभेद के कारण 'प्रमाण' की अपेक्षा 'परिमाण' का

---

१. 'प्रमाणग्रहणेऽनुवर्तमाने' इति काशिका ।

*** वतुप्प्रकरणे युष्मदस्मद्भ्यां छन्दसि सादृश्य उपसंख्यानम् * (म० भा० ५. २. ३९ वा० १) 'न त्वावाँ अन्यो दिव्यो न पार्थिवो न जातो न जनिष्यते' ( ऋ० ७. ३२. २३ ) । त्वावतः पुरुवसो**

**न्यासः**

विधीयमाना उत्सर्गा भवन्ति, प्रकृतिविशेषात् तु वतुब् विधीयमानोऽपवादो भवति, 'अपवादेनोत्सर्गो बाध्यते' इति यत्तदेतेभ्यो मात्रजादयो न स्युः, ततश्च तत्प्रमाणमस्य तन्मात्रमित्यादि न सिध्येत्, अर्थभेद-युत्सर्गापवादभावो नास्तीति न भवत्येष दोषप्रसङ्गः । किञ्च—**भावः सिद्धश्च डावतोरिति** । 'डावतोः' इति पञ्चमी । अर्थभेदे सति वतुप्प्रत्ययान्तात् मात्रजादीनामुत्पत्तिश्च सिद्धा भवति । परिमाणे वतुब् भवति—यत् परिमाणमस्य यावानिति । तदन्तात् परिमाणे मात्रजादयो भवन्ति—यावत् परिमाणमस्य यावन्मात्रम् । अर्थैकत्वे तु 'उक्तार्थानामप्रयोगः' इति मतुपाऽभिहितत्वादस्यार्थस्य तदन्तान्मात्रजादयो न स्युः ।

**पदमञ्जरी**

मान्यविहितान्मात्रजादीन्बाधेत । परिमाणग्रहणे तु सति भिन्नोपाधिकत्वाद् बाध्यबाधकभावाभावः, तेन तन्मात्रं यन्मात्रमित्यादि प्रमाणे सिद्धं भवतीति । **भावः सिद्धश्चेति** । तत्परिमाणमस्य तावद्धान्यं राशीकृतं तावत्प्रमाणमस्य कुडयादेस्तावन्मात्रं यावद्राशीकृतस्य धान्यस्य दैर्घ्यं तादृगस्यापीत्यर्थः । तदेवं भिन्न-विषयत्वे सति वत्वन्तान्मात्राद्यः सिद्ध्यन्ति । एकविषयत्वे तु वतुपैव विशिष्टस्य प्रमेयस्योक्तत्वात्त-दन्तान्मात्रादयो न स्युः । यस्य हि तावत्प्रमाणं तस्य तत्प्रमाणमिति तावच्छब्दस्यैव तत्रापि प्रयोगः स्याद्; अन्यथा हि मात्रजादिप्रत्ययमालाप्रसङ्गः ।

**भावबोधिनी**

निर्देश अलग से कहा गया है । इसी कारण मात्रच् आदि का प्रतिषेध नहीं होता है । डावत्वन्त से मात्रच् आदि होना सिद्ध है ।"

**विमर्श**—भाव यह है कि पाणिनि ने वतुप् प्रत्यय करके 'आ सर्वनाम्नः" सूत्र से आत्व का विधान किया है और यावान् तावान् आदि शब्द रूप बनाये हैं, परन्तु प्राचीन आचार्यों ने दोनों कार्यों के लिए डावतु=आवत् प्रत्यय करके टिलोप करते हुए उक्त रूप बनाये हैं । 'प्रमाण' और 'परिमाण' में अर्थ का कुछ भेद है अतः 'प्रमाणे' की अनुवृत्ति संभव रहने पर भी 'परिमाणे' यह अलग से निर्देश करना पड़ा । यदि सर्वत्र 'प्रमाण' का ही सम्बन्ध रहता तो यह 'डावतु' ( या वतुप् ) मात्रच् आदि का बाधक हो जाता और 'यत् परिमाणमस्य' इस अर्थ मे यावत् बनने के बाद—यावत् परिमाणमस्य–इस अर्थ में मात्रच् होकर 'यावन्मात्रम्' आदि नहीं बन पाते । जब दोनों के अर्थों में भेद माना गया और 'प्रमाण' तथा 'परिमाण' अर्थवाले प्रत्ययों में बाध्यबाधकभाव नहीं माना गया तो सभी इष्ट प्रयोग सिद्ध हो जाते हैं । यदि दोनों का एक ही अर्थ होता तो वतुप्' से अर्थ उक्त हो जाने पर मात्रच् आदि नहीं हो पाते क्योंकि 'उक्तार्थानामप्रयोगः' यह नियम है ।

* वतुप् के प्रकरण में वेदविषय में युष्मद् और अस्मद् से सादृश्य अर्थ मे प्रत्यय कहने चाहिये । * उदा० "न त्वावाँ अन्यो दिव्यो न पार्थिवो न जातो न जनिष्यते ।" [ त्वावान्—युष्मद्+वतुप्=वत् "प्रत्ययोत्तरपदयो-श्च" ( पा० सू० ७।२।९८ ) से मपर्यन्त=युष्म् का त्व आदेश, "आ सर्वनाम्नः" से आत्व—त्वावत् । प्रातिपदिक संज्ञा और विभक्तिसम्बन्धी कार्य करने पर—त्वावान् बनता है । "दीर्घादटि समानपादे" ( पा० सू० ८।३।९ ) से 'न्' का रु और अनुनासिक आदेशादि करने पर 'त्वावाँ अन्यो' बनता है । ] त्वावतः पुरुवसो । [ युष्मद्+वतुप्, पूर्ववत् प्रक्रिया । ] यज्ञे विप्रस्य मावतः । [अस्मद्+वतप्=वत्, मपर्यन्त 'अस्म्' का 'म' आदेश, 'अद्' का आत्व

(ऋ० ८.४६. १ ) । यज्ञं विप्रस्य मावतः ( ऋ० १. १४२. २ ) । त्वत्सदृशस्य, मत्सदृशस्येत्यर्थः ॥

२०६१. किमिदम्भ्यां वो घः ॥ ४० ॥ ( १८४१ )

किमिदम्भ्यामुत्तरस्य वतुपो वकारस्य घकारादेशो भवति । कियान् । इयान् ।

एतदेव चादेशविधानं ज्ञापकम्—किमिदम्भ्यां वतुप्प्रत्ययो भवतीति । अथ वा—योगविभागेन वतुपं विधाय पश्चाद्वो घो विधीयते ( म० भा० ) ॥

न्यासः

**त्वावतः । मावत इति ।** मपर्यन्तयोर्युष्मदस्मदोः 'प्रत्ययोत्तरपदयोश्च' इति त्वमादेशौ, पूर्ववदात्त्वम् ॥ ३९ ॥

**किमिदम्भ्यां वो घः ॥ कियान् । इयानिति ।** 'इदंकिमोरीश्की' इति किमः की । 'इदम ईश्' इति, यस्येतिलोपः । केन पुनः किमिदम्भ्यां विहितस्य वतुपो वकारस्य घत्वं विधीयते ? इत्याह—**अथ वेत्यादि । योगविभागेन वेति ।** 'किमिदम्भ्याम्' इत्येतावता योगेन वतुपं विधाय ततः 'वो घः' इत्यनेन वतुपो वकारस्य घत्वं विधीयते ।

अथ वग्रहणं किमर्थम्, यावता 'आदेः परस्य' इति वकारस्यैव घो विज्ञायते, ननु चानेकाल्त्वात् सर्वादेशः प्राप्नोति ? नैष दोषः, अकारो ह्यत्रोच्चारणार्थो वर्णमात्रमेव, न त्वादेशः । कुतः पुनरेतद् विज्ञेयम् ? व्याख्यानात् । तर्हि वकार एव लघीयानिति युक्तं तस्य स्थानित्वेनोपादानम् । वकारे त्वस्थानिन्युपात्ते यद्यपि समुदायादेशः, तथापि न दोषः; द्वयोरकारयोः पररूपं भविष्यति ॥ ४० ॥

पदमञ्जरी

**सादृश्य इति ।** विषयनिर्देशोऽयम्, सदृशस्तु प्रत्ययार्थः ॥ ३९ ॥

**किमिदम्भ्यां वो घः ॥ कियान्, इयानिति ।** 'इदं किमोरीश्की', यस्येतिलोपः । **एतदेवेति ।** आदेशविधानान्यथानुपपत्त्या प्रत्ययोऽनुमीयते । **योगविभागेन वेति ।** एवं प्रतिपादिते लाघवं भवति । 'आदेः परस्य' इत्येव सिद्धे 'वः इति वचनमादेशप्रतिपत्त्यर्थम्; इतरथा हि घः प्रत्ययान्तरं विज्ञायेत ॥ ४० ॥

भावबोधिनी

करके विभक्तिसम्बन्धी कार्य करने पर षष्ठी एकवचन का रूप है । ] त्वावान्=तुम्हारे सदृश, त्वावतः=तुम्हारे समान का, मावतः=हमारे समान का—ये अर्थ हैं । ३९ ॥

'किम्' और 'इदम्' से परे वतुप् के 'व्' का 'घ्' आदेश होता है । उदा० कियान् । इयान् । [ किम् परिमाणमस्य—इस अर्थ में किम्+वतुप्=वत्, 'व्' का 'घ्' और 'घ्' का 'इय्' आदेश—किम्+इयत् । "इदं किमोरीश्की" ( पा० सू० ६।३।९० ) से किम् का 'की' आदेश—की+इयत्, भसंज्ञा, ईलोप—कियत् । इदम्+वतुप्=वत्, 'व्' का 'घ्' आदेश, 'घ्' का 'इय्' इदम्+इयत्, 'इदम्' का 'इश्' आदेश—इ+इयत् "यस्येति च" ( पा० सू० ६।४।१४८ ) से प्रकृति 'इ' का लोप कर देने पर केवल प्रत्यय बचता है—इयत् । विभक्तिसम्बन्धी कार्य करने पर—कियान्, इयान् बनते हैं । कितना, इतना—ये अर्थ हैं । ]

[ प्रश्न यह है कि "यत्तदेतेभ्यः परिमाणे वतुप्" यह पूर्वसूत्र केवल यत्, तद् और एतद् से ही वतुप् का विधान करता है । अतः किम् और इदम् से वतुप् होता ही नहीं, तब 'व' का 'घ' कैसे होगा ? इसका उत्तर यह है—] प्रस्तुत सूत्र से यह आदेश का विधान करना ही इस बात का ज्ञापक है कि किम् और इदम् से भी वतुप् होता है । [ अन्यथा यह सूत्र व्यर्थ हो जायगा । ] अथवा पूर्वसूत्र से योगविभाग करके [ सामान्यतया ] वतुप् का विधान

**२०६२. किमः संख्यापरिमाणे डति च ॥ ४१ ॥ ( १८४२ )**

**संख्यायाः परिमाणम्, संख्यापरिच्छेद इत्यर्थः । संख्यापरिमाणे वर्त्तमानात् किमः प्रथमासमर्था-दस्येति षष्ठ्यर्थे डतिः प्रत्ययो भवति । चकाराद्वतुप् च । तस्य च वकारस्य घादेशो भवति । पृच्छ्यमानत्वात् परिच्छेदोपाधिकायां संख्यायां वर्त्तमानात्किमः प्रत्ययो विज्ञायते । का संख्या परिमाणमेषां ब्राह्मणानां कति ब्राह्मणाः । कियन्तो ब्राह्मणाः ।**

**न्यासः**

**किमः संख्यापरिमाणे डति च ॥ संख्यायाः परिमाणमिति ।** कृद्योगलक्षणा कर्मणि षष्ठी । परि-मितिः=परिमाणम् । संख्यापरिच्छेद इत्यर्थः । परिच्छेद इति भावे घञ् । **संख्यापरिच्छेदे वर्त्तमानादिति ।** परिच्छेदोपाधिकायां सख्यायां वर्त्तमानादित्येषोऽर्थो विवक्षितः । यथा ह्ययमेवार्थोऽस्य वचनस्योत्तरत्र तथा व्यक्तीकरिष्यते । तस्य वकारस्य घत्वमिति, 'वो घ' इत्यनुवृत्तेः । **पृच्छ्यमानत्वादिति ।** यदा संख्यायाः परिच्छेदे किंशब्दो वर्तते । कदा च वर्त्तते ? यदा संख्या परिपृच्छ्यमाना भवति । न ह्यपरि-पृच्छ्यमानायाः परिच्छेद उपपद्यते । यदा च परिपृच्छ्यमाना भवति, तदा च किंशब्दः परिच्छेदविशि-ष्टायां वर्त्तत इति पृच्छ्यमानत्वात् **परिच्छेदोपाधिकायां संख्यायां वर्त्तमानात् किमः प्रत्ययो भवतीति**

**पदमञ्जरी**

**किमः सङ्ख्यापरिमाणे डति च ॥ सङ्ख्यायाः परिमाणमिति ।** करणस्य कर्तृत्वविवक्षया कृद्योगलक्षणा कर्त्तरि षष्ठी । परिमितिः=परिमाणम् । **सङ्ख्यापरिच्छेद इति ।** सङ्ख्या यं परिच्छेदं करोति तत्रेत्यर्थः । **तस्य च वकारस्य घकार[1] इति ।** 'वो घः' इत्यनुवृत्तेः । ननु का संख्या परिमाणमेषा-मित्यत्र किंशब्दः परिच्छेदिकायां सङ्ख्यायां वर्त्तते, न पुनः परिच्छेदे ? तत्राह—**पृच्छ्यमानत्वादिति ।** परिच्छेदकत्वविशिष्टा संख्या पृच्छ्यते—का संख्या परिच्छेदिकैषामिति । तत्र परिच्छेदस्यापि पृच्छ्य-मानाकारान्तर्भावात्संख्यापरिच्छेदे वर्त्तमानादित्युक्तमित्यर्थः । अपर आह—"संख्यायाः' इति कर्मणि षष्ठी, संख्यापरिच्छेदार्थप्रश्ने वर्त्तमानः संख्यापरिच्छेदे वर्तते इत्युच्यते । संख्यायां परिच्छेत्तुमिष्टायां यः प्रश्नस्तत्र वर्तमानादित्यर्थः" इति । **कति[2] ।** 'षड्भ्यो लुक्' इति जसो लुक् । **अथैकवचनद्विवचने**

**भावबोधिनी**

करके, बाद में प्रस्तुत सूत्र से 'व' का 'घ' किया जाता है । ["किमिदंभ्याम्" यह इन शब्दों से 'वतुप्' करेगा । "वो वध" यह 'व' का 'घ' आदेश करेगा । इस लिये ज्ञापन की आवश्यकता नहीं है । ] ॥ ४० ॥

संख्या का परिमाण, संख्या का परिच्छेद [ संख्या जहाँ परिच्छेद करती है वहाँ—] यह अर्थ है । संख्या के परिमाण अर्थ में वर्तमान प्रथमासमर्थ 'किम्' शब्द से 'अस्य' ( इसका ) इस अर्थ में 'डति' प्रत्यय होता है । और 'च' के बल से 'वतुप्' प्रत्यय भी होता है । और उसके 'व' का 'घ' आदेश होता है । पूछी जाने वाली होने के कारण परिच्छेदोपाधिक संख्या अर्थ में वर्तमान 'किम्' शब्द से प्रत्यय होना ज्ञात होता है । उदा० का संख्या परिमाणम् एषां ब्राह्मणानाम्—[ कौन सी संख्या इन ब्राह्मणों की परिमाण है—] इस अर्थ में—कति ब्राह्मणाः । कियन्तः ब्राह्मणाः । [ (१) किम्+डति=अति, डित् होने से टि=इम् का लोप—कति+जस्, "षड्भ्यो लुक्" ( पा० सू० ७।१।२२ ) से जस् का लुक् । (२) किम्+वतुप् 'व' का 'घ'=इय किम्+इयत्, "इदं किमोरीश्की" ( पा० सू० ६।३।९० ) से किम् का 'की' आदेश, भसंज्ञा, "यस्येति च" सूत्र से 'ई' लोप क्

१. 'वकारस्य घादेशो भवति' इति काशिका।

२. 'कति ब्राह्मणाः' इति वा पाठः।

अथ वा—संख्येव परिमाणात्मिका परिच्छेदस्वभावा गृह्यते—का संख्या परिमाणं येषामिति ।

ननु च संख्या एवमात्मिकैव परिच्छेदस्वभावा, सा किमर्थं परिमाणेन विशेष्यते ? यत्रापरिच्छेदकत्वेन विवक्ष्यते तत्र मा भूदिति । क्षेपे हि परिच्छेदो नास्ति—केयमेषां संख्या दशानामिति ॥

**न्यासः**

विज्ञायते । परिच्छेद उपाधिविशेषणभूतो यस्याः सा परिच्छेदोपाधिका । परिच्छेदविशेषणेति यावत् । तदनेन संख्यापरिच्छेदे वर्त्तमानात् किम इत्यस्य योऽर्थोऽभिमतः स व्यक्तीकृतः । कतीति । जसः 'षड्भ्यो लुक्' इति लुक् ।

**अथ वेत्यादि** । अत्र च व्याख्याने 'संख्यापरिमाणे' इति कर्मधारयः, निपातनादुपसर्जनस्यायं परनिपातः । परिमाणशब्दश्च परिमीयतेऽनेनेति करणसाधनः । **एवमात्मिकैवेति** । अस्यार्थं परिच्छेदस्वभावेत्यनेन विस्पष्टीकरोति । परिच्छिद्यतेऽनेनेति परिच्छेदः, स स्वभावो यस्याः सा तथोक्ता । **यत्रेत्यादिना** यदर्थं परिमाणग्रहणेन संख्या विशेष्यते तद्दर्शयति । स्यादेतत्—नास्त्येव स विशेषो यत्र संख्यायाः परिच्छेदस्वभावो नास्ति, तदपार्थकं विशेषणमिति ? अत आह—क्षेपे हीत्यादि । **केयमेषां संख्या दशानामिति** । नात्र संख्या परिच्छेदकत्वेन विवक्षिता । न ह्यत्र परिच्छेदोऽस्ति; क्षेपपरत्वाद् वाक्यस्य । किंशब्दोऽत्र क्षेपे वर्त्तते, न प्रश्ने ॥ ४१ ॥

**पदमञ्जरी**

कस्मान्नोदाहृते ? उच्यते; संख्याप्रश्ने वर्त्तमानात्किमः प्रत्ययः, प्रश्नश्चानिर्ज्ञाते; अनिर्ज्ञानं च बहुष्विति वृत्तौ बहुवचनमेव भवति । उक्तं च—'अनिर्ज्ञातेऽर्थे बहुवचनं प्रयोक्तव्यम्' इति । कथं तर्हि कियान्, कियन्ताविति ? नात्र संख्याप्रश्ने किंशब्दः, किं तर्हि ? परिमाणमात्रप्रश्ने । संख्याप्रश्ने तु तत्रापि बहुवचनमेव भवति—कियन्तो ब्राह्मणा इति । येदीया च संख्या पृच्छ्यते तत्र प्रत्ययाः, तेन का संख्या परिमाणस्य वर्गावयवगतसंख्याप्रश्ने कति वर्ग इति न भवति । अवयवेष्वेव हि तदा प्रत्ययेन भाव्यम्—कति गावोऽस्मिन्वर्ग इति । सङ्घसङ्घिनोरभेदविवक्षायां तु—कति गावोऽयं वर्ग इति, न तु व्यवस्थितसंख्यासम्बन्धे वर्गे । वर्गसंख्याप्रश्ने तु कति वर्गा इति भवति ।

**अथ वेत्यादि** । अस्मिन्पक्षे संख्यापरिमाण इति कर्मधारयः, निपातनाच्च विशेषणस्य परनिपातः, करणसाधनश्च परिमाणशब्दः । **एवामात्मिकेत्यस्य** विवरणम्—**परिच्छेदस्वभावेति** । **यत्रापरिच्छेदकत्वेन विवक्ष्यते** इति । परिच्छेदकत्वेन न विवक्ष्यत इत्यर्थः । तथैव वा पाठः । क्व पुनरेवं न विवक्ष्यते ? इत्याह—**क्षेपे हीति** । **केयमेषामिति** । केयमीदृशानां दशत्वसंख्या येषाम् ।

अव्रतानाममन्त्राणां जातिमात्रोपजीविनाम् ।
सहस्रशः समेतानां परिषत्त्वं न विद्यते ॥ ( मनु० १२.११४ ) इति ।

एवं संख्येयद्वारेण संख्यायां क्षेपः । प्रकृतः प्ररिमाणशब्दो रूढिशब्दत्वात् संख्यया परिसंम्बन्द्धु नार्हतीति परिच्छित्तिमात्रवचनः पुनरिहोपात्तः ॥ ४१ ॥

**भावबोधिनी**

इयत् = कियत्, जस् प्रत्यय, नुमागमादि करने पर 'कियन्तः ।' ]

अथवा संख्या ही परिमाणात्मिका = परिच्छेदस्वभाववाली ली जाती है—का संख्या परिमाणमेषाम्—(कौन सी संख्या इनका परिमाण है–) इस अर्थ में कति, कियन्तः बनते हैं ।

संख्या तो इसी प्रकार की परिच्छेदस्वभाववाली ही होती है, तो यह किस लिये परिमाण द्वारा विशेषित होती है ? जहाँ परिच्छेदकत्वरूप से विवक्षित नहीं होती है, वहाँ ये प्रत्यय नहीं हों—एषां दशानां का इयं संख्या ।

## २०६३. संख्याया अवयवे तयप् ॥ ४२ ॥ ( १८४२ )

'तदस्य' इत्येव । संख्याया अवयवे वर्त्तमानाया अस्येति षष्ठ्यर्थे तयप् प्रत्ययो भवति । अवयवा अवयविनः सम्बन्धिन इति सामर्थ्यादवयवी प्रत्ययार्थो विज्ञायते । पञ्च अवयवा अस्य पञ्चतयम् । दशतयम् । चतुष्टयम । चतुष्टयी ॥

## २०६४. द्वित्रिभ्यां तयस्यायज्वा ॥ ४३ ॥ ( १८४४ )

पूर्वेण विहितस्य तयस्य द्वित्रिभ्यां परस्य वाऽयजादेशो भवति । द्वाववयवावस्य द्वयम्, द्वितयम् ।

### न्यासः

संख्याया अवयवे तयप् ॥ चतुष्टयीति । चतुरो रेफस्य 'विसर्जनीयस्य सः' इति सः, तस्यापि 'ह्रस्वात्तादौ तद्धिते' इति मूर्धन्यः, 'टिड्ढाणञ्' इत्यादिना ङीप् ॥ ४२ ॥

द्वित्रिभ्यां तयस्यायज् वा ॥ तयप्रत्ययग्रहणं किमर्थम्; यावता प्रकृत एवासावनुवर्त्तिष्यते ?

### पदमञ्जरी

संख्याया अवयवे तयप् ॥ इहास्येत्यधिकारात्संख्याया अवयवे वर्त्तमानायाः स्वार्थे तावत्प्रत्ययो न भवति; अवयवस्वामिनि तु प्राप्नोति—पञ्च अवयवा अस्य देवदत्तस्येति । तत्राह—अवयवावयविनः सम्बन्धिन इति । अवयवशब्दस्य सम्बन्धिशब्दत्वाद्य प्रत्ययवत्वं तत्रैवावयविनि प्रत्यय इत्यर्थः । यथा द्वयसजादिषु प्रमाणे प्रकृत्यर्थे प्रमेयः प्रत्ययार्थः, तद्वत् । चतुष्टयीति । रेफस्य विसर्जनीये तस्य सत्वे 'ह्रस्वात्तादौ तद्धिते' इति षत्वम्, 'टिड्ढाणञ्' इति ङीप् ॥ ४२ ॥

द्वित्रिभ्यां तयस्यायज्वा ॥ ननु तयः प्रकृतः सोऽनुवर्त्तिष्यते, 'द्वित्रिभ्याम्' इति पञ्चमी, 'तस्मादित्युत्तरस्य' इति तस्य षष्ठ्यन्ततां सम्पादयिष्यति; तत्किं 'तयस्य' इत्यनेन ? तत्राह—'तयब्ग्रहणमित्यादि । असत्यामपेक्षायामनुवृत्तिः षष्ठी प्रकृतिश्च दुर्ज्ञानेति भावः । अथ प्रत्ययान्तरे को दोषः ? 'त्रयी गति'रिति 'तयब्निबन्धन ईकारो न स्यात्, 'प्रथमचरमतय' इति चैष विधिर्न स्याद्—द्वये, द्वया इति ।

### भावबोधिनी

क्योंकि क्षेप=निन्दा मे परिच्छेद नहीं होता है । यहाँ 'कि[1]' शब्द क्षेप अर्थ में है, अतः संख्या परिच्छेदकत्व रूप से विवक्षित नहीं है । अतः प्रत्यय नहीं होते हैं । ] ॥ ४१ ॥

'तदस्य' ( यह उसका ) इसकी अनुवृत्ति होती है । अवयव अर्थ में वर्तमान संख्यावाची से, 'अस्य' इस षष्ठी के अर्थ में 'तयप्' प्रत्यय होता है । अवयव अवयवी के सम्बन्धी होते हैं, इस कारण सामर्थ्यवश अवयवी प्रत्ययार्थ ज्ञात हो जाता है । उदा० पञ्च अवयवा अस्य—( पाँच अवयव हैं इसके ) इस अर्थ में—पञ्चतयम्—यह बनता है । [ जिसके पाँच अवयव हैं । पञ्चन्+तयप्, ] दशतयम् [ दश अवयवा अस्य—यह अर्थ है ] चतुष्टयम् । [ चत्वारः अवयवा अस्य—इस अर्थ है—चतुर+तयप्, रेफ का विसर्ग और विसर्ग का सत्व करने के बाद "ह्रस्वात्तादौ तद्धिते" ( पा० सू० ८।३।१०१ ) से 'स' का 'ष'–चतुष्+तय, ष्टुत्व चतुष्टयम् । ] चतुष्टयी [ चत्वारः अवयवा अस्याः–इस अर्थ में चतुर्+तयप्, पूर्ववत् विसर्ग, सत्व और ष्टुत्व करने के बाद "टिड्ढाणञ्" ( पा० सू० ४।१ १५ ) सूत्र से ङीप् प्रत्यय होता ] है ॥ ४२ ॥

पूर्वसूत्र द्वारा विहित तयप् प्रत्यय जो 'द्वि' 'त्रि' शब्द के बाद हो, उसका विकल्प से 'अयच्' आदेश होता है । उदा० द्वौ अवयवौ अस्य—( दो अवयव हैं इस के–) इस अर्थ में–द्वयम् द्वितयम् । [ द्वि+

१. 'तयग्रहणम्' इति काशिका ।
२. 'तयनिबन्धन' इति काशिका ।

त्रयम्, त्रितयम् ।

तयग्रहणं स्थानिनिर्देशार्थम्; अन्यथा प्रत्ययान्तरमयज्विज्ञायेत । तत्र को दोषः ? त्रयी गतिरिति तयनिबन्धन ईकारो ( ४. १. १५ ) न स्यात्, 'प्रथमचरमतय' ( १. १. ३३ ) इत्येष विधिश्च न स्यात् । द्वये, द्वयाः । चकारः स्वरार्थः ॥

## २०६५. उभादुदात्तो नित्यम् ॥ ४४ ॥ ( १८४५ )

उभशब्दात्परस्य तयपो नित्यमयजादेशो[1] भवति स चोदात्तः । वचनसामर्थ्यादादेरुदात्तत्वं

### न्यासः

इत्याह – तयग्रहणमित्यादि । यदि तयब्ग्रहणं न क्रियते, तदा तयप्रत्ययादन्य एवायमयच् प्रत्ययो विज्ञायेत, न तयबादेशः । किं पुनः स्याद् यदि प्रत्ययान्तरं स्यात् ? तयप्कार्य्यमयचो न स्यात् । किं तत् ? 'प्रथमचरम' इत्यादिना जसि विभाषा सर्वनामसंज्ञा—द्वये, द्वयाः, 'टिड्ढाणञ्' इति ङीप्—द्वयी । ननु च पूर्वसूत्रेणैव विहितस्य तयप इह चादेशार्थानुवृत्तिर्विज्ञायते; प्रयोजनान्तराभावात्, 'द्वित्रिभ्याम्' इति पञ्चमीनिर्देशः 'तस्मादित्युत्तरस्य' इति षष्ठ्यन्तं सम्पादयिष्यते, अतोऽनेनान्तरेणापि तयब्ग्रहणं तयप्स्थानित्वं लभ्यत एव ? नैतदस्ति; यद्यनुवृत्तिस्तयपोऽन्यार्था न स्यात्, ततोऽनुवृत्तिसामर्थ्यात् तयपः स्थानित्वं विज्ञायेत । तस्य त्वनुवृत्तिरुत्तरार्थापि भवति । 'उभादुदात्तो नित्यम्' इत्यत्र योगविभागेन तयब्विधातव्यः । न चानुवर्तमानः शक्यते विधातुम् । अत उत्तरार्थायामनुवृत्तौ सत्यां तयप्स्थानित्वमयुक्तमिति तयब्ग्रहणं क्रियते ॥ ४३ ॥

उभादुदात्तो नित्यम् ॥ वचनसामर्थ्यादित्यादि । यद्यन्तोदात्तः स्याद् उदात्तवचनमनर्थकं स्यात् ।

### पदमञ्जरी

क्वचित् तत्र को दोष इत्यादि वृत्तावेव पठ्यते । चकारः स्वरार्थ इति । तेन स्थानिवद्भावेनानुदात्तत्वं न भवति ॥ ४३ ॥

उभादुदात्तो नित्यम् ॥ उदात्तवचनासामर्थ्यादिति । अन्तोदात्तत्वस्य चित्स्वरेणैव सिद्धत्वात् ।

### भावबोधिनी

तयप्, प्रकृत सूत्र से अयच् आदेश–द्वि+अय भसंज्ञा, इलोप–द्वयम् । द्वि+तयप्] त्रयम् त्रितयम् । [ त्रयः अवयवाः अस्य–इस अर्थ में त्रि+तयप्, अयच् आदेश, इलोप, त्रयम् । त्रि+तयप् । दो अवयवों वाला, तीन अवयवों वाला ।]

[ सूत्र में ] 'तय' का ग्रहण स्थानी का निर्देश करने के लिये है, यदि इसका उल्लेख न रहता तो 'अयच्' यह एक अलग प्रत्यय समझ लिया जाता । [ स्थानी षष्ठ्यन्तनिर्दिष्ट है अतः 'अयच्' उसका आदेश ही माना जायगा । ] यदि इसका ग्रहण न होता तो क्या दोष होता ? 'त्रयी गतिः' यहाँ पर 'तयप्' को मान कर होने वाला 'ङीप्' (ई) प्रत्यय नहीं होता और "प्रथमचरमतयाल्प०" (पा० सू० १।१।३३ ) से सर्वनाम—संज्ञाविधि भी नहीं होती—द्वये द्वयाः । अयच् का चकार स्वर [ अन्तोदात्त ] करने के लिये है । [ "टिड्ढाणञ्" पा० सू० ४।१।१५ में तयप् का ग्रहण है अयच् का नहीं । आदेश मानने पर ही अयच्प्रत्ययान्त से ङीप् हो सकता है । इसी प्रकार "प्रथमचरमतयाल्प०" सूत्र भी तयप् से परे जस् रहने पर विकल्प से सर्वनामसंज्ञा करता है । यह भी आदेश मानने पर ही संभव है, स्वतन्त्र प्रत्यय मानने पर नहीं । परन्तु १।१।५६ सूत्रभाष्य में अयच् प्रत्यय ही है ।] ॥४३॥

उभ शब्द से परे तयप् का नित्य अयच् आदेश होता है और वह उदात्त होता है । वचनसामर्थ्य से आदि का उदात्त होना सिद्ध है । [ क्योंकि अयच् चित् है और "चितः" सूत्र से अन्तोदात्तत्व सिद्ध ही है । अतः यह

1. स्थानिवदादेशः (१।१।५६) सूत्रभाष्ये अयचः प्रत्ययत्वमेव साधितम् ।

विज्ञायते। **उभशब्दो यदि लौकिकी संख्या, ततः पूर्वेणैव विहितस्य तयप आदेशविधानार्थं वचनम्। अथ न संख्या, ततो योगविभागेन तयपं विधाय तस्य नित्यमयजादेशो विधीयते। उभयो मणिः। 'उभयेऽस्य देवमनुष्याः'** ( तै० सं० १. ६. ८. १ ) ॥

## न्यासः

अयचि च कृते चित्स्वरेणैव 'सतिशिष्टस्वरो बलीयान्' इत्यन्तोदात्तत्वस्य सिद्धत्वात्। आद्युदात्तत्वं ह्यन्यथा न सिध्यतीति तदर्थं क्रियमाणमर्थवद् वचनं भवतीति। **यदि लौकिकी संख्येति।** द्वित्रादिवत्। पूर्वेण योगेन तयपो विधानम्, तस्यापरेण योगेन नित्यमयजादेशो विधीयते। **उभये देवमनुष्या** इति। उभाववयवौ येषामित्युभये। कथं बहुत्वे देवमनुष्याणां द्वाववयवौ भवतः? यद्यप्यत्र बहुत्वमस्ति, द्वित्वमपि तु प्रातिपदिकयोरस्त्येव; अत्र हि द्वौ राशी समुदायस्यावयवौ—एको देवानां राशिः, अपरो मनुष्याणामित्यदोषः ४४ ॥

## पदमञ्जरी

सर्वोदात्तत्वं तु न भवति, 'अनुदात्तं पदमेकवर्जम्' इति वचनात्। नापि हे उभयेत्यत्रामन्त्रितानुदात्तत्वम् उभयेत्यत्र चामन्त्रिताद्युदात्तत्वं बाधितुमुदात्तवचनम्; 'पुरस्तादपवाद'न्यायेन ( व्या० परि० ९ ) चित्स्वरस्यैव बाधनात्।

**उभशब्दो यदि लौकिकी संख्येति।** उभावित्युक्ते द्वाविति प्रतीतेः। **अथ न संख्येति।** कृत्वसुजादिसंख्याकार्यादर्शनात्; एकः, उभौ, त्रय इत्येवं लोक-गणनाऽदर्शनाच्च। **तस्य नित्यमयजादेश** इति। अथ प्रत्ययान्तरमेवायः कस्मान्नाश्रितः, तत्रायमप्यर्थः—उदात्त इति न वक्तव्यं भवति, प्रत्ययस्वरेणैव सिद्धम्; यच्च सर्वनामसंज्ञायामुक्तमुभयशब्दस्य जसि सर्वादिपाठान्नित्या संज्ञा भवति, न 'प्रथमचरमतय' इति विभाषा; व्यवस्थितविभाषाविज्ञानात्पूर्वविप्रतिषेधाद्वेति, तदप्ययत्नसिद्धं भवति, कथम्, न ह्ययं तयप आदेशः? सत्यम्; उभयीत्यत्र तु तयब्निबन्धन ईकारो न स्यात्। यदि तु ङीब्विधौ मात्रजित्ययचश्चकारेण प्रत्याहारग्रहणम्, ततः प्रत्ययान्तरत्वेऽप्ययचः सिद्ध ईकारः।

उदात्तग्रहणं नित्यग्रहणं च शक्यमकर्तुम्, ङीब्विधौ च तयपो ग्रहणम्।

अथ वा—दघ्नञ्मात्रचोरपि तत्र ग्रहणं शक्यमकर्तुम्, द्वयसजित्येवायचश्चकारेण प्रत्याहारोऽस्तु; तत्तु तथा नाश्रितमित्येव।

**उभयो मणिरिति।** उभौ पीतलोहिताववयवावस्येत्यवयवद्वित्वनिबन्धनोऽवयविनो व्यपदेशः। **उभये देवमनुष्या** इति। वर्गद्वयापेक्षमतिरोहितभेदानां वर्गिणामिदमभिधानम् ॥ ४४ ॥

## भावबोधिनी

विधान आदि का उदात्तत्व ज्ञापित करता है। ]

'उभ' शब्द यदि लौकिक संख्यावाची है तब तो [ द्वि के समान इससे भी ] पूर्वसूत्र द्वारा विहित तयप् का आदेश करने के लिए यह वचन है। और यदि संख्या नहीं है [ क्योंकि एकः, उभौ, त्रयः ऐसा व्यवहार लोके में नहीं होता है ] तब तो योगविभाग से तयप् का विधान करके उसका नित्य अयच् आदेश किया जाता है। उदा० उभयो मणिः। [ उभौ अवयवौ अस्य—इस अर्थ में है। ] उभये देवमनुष्याः। [ यहाँ समुदाय को अवयवी और देवों तथा मनुष्यों को अवयव मान कर प्रत्यय करना चाहिये। नित्य अयच् होने से एक ही रूप बनता है। ]

**विमर्श**—काशिकाकार प्रस्तुत सूत्र द्वारा 'तयप्' का नित्य 'अयच्' आदेश ही मानते हैं। परन्तु भाष्यकार 'अयच्' को स्वतन्त्र प्रत्यय मानते हैं। 'स्थानिवदादेशोऽनल्विधौ" ( पा० सू०१।१।५६ ) पर स्पष्ट लिखा है—

## २०६६. तदस्मिन्नधिकमिति दशान्ताड्डः ॥ ४५ ॥ ( १८४६ )

तदिति प्रथमासमर्थादस्मिन्निति सप्तम्यर्थे दशान्तात्प्रातिपदिकाद् डः प्रत्ययो भवति यत्तत्प्रथमासमर्थमधिकं चेत्तद्भवति। इतिकरणस्ततश्चेद्विवक्षा। एकादश अधिका अस्मिन् शते एकादशं शतम्। एकादशं सहस्रम्। द्वादशं शतम्। द्वादशं सहस्रम्।

दशान्तादिति किम्? पञ्चाधिका अस्मिन् शते। अन्तग्रहणं किम्? दशाधिका अस्मिन् शते।

* प्रत्ययार्थेन च समानजातीये प्रकृत्यर्थे सति प्रत्यय इष्यते[1] * ( म० भा०[1] )—एकादश कार्षापण अधिक अस्मिन् कार्षापणशते एकादशं कार्षापणशतमिति।

### न्यासः

तदस्मिन्नधिकमिति दशान्ताड्डः ॥ प्रत्ययार्थेन चेत्यादि। यथाजातीयः प्रत्ययार्थस्तथाजातीय एव यदि प्रकृत्यर्थो भवति एवं प्रत्यय इष्यते, नान्यथा। प्रत्ययार्थेन प्रकृत्यर्थस्य तुल्यजातीयत्वं दर्शयितु-

### पदमञ्जरी

तदस्मिन्नधिकमिति दशान्ताड्डः ॥ अस्मिन्नधिकम्, यस्मादधिकमिति च निर्देशादधिकशब्दयोगे सप्तमीपञ्चम्यौ भवतः। अधिका खारी द्रोणेनेति कर्त्तरि तृतीयापि भवति। एकादश अधिका अस्मिन् शत इति। व्यपदेशिवद्भावोऽपि प्रातिपदिकेन प्रतिषिद्धः। प्रत्ययार्थेन चेत्यादि। प्रकृतिप्रत्ययार्थयोस्तुल्यजातीयत्वे प्रत्यय इत्यर्थः। न्यायसिद्धश्चायमर्थः। तथा हि—वाक्ये तावदेकादश अधिका अस्मिन् गोशते इति शतविशेषणत्वेनाप्युपात्ता गावः सन्निधानात्प्रकृत्यर्थमपि स्पृशन्ति। वृत्तावप्येकादशं गोशतमित्युक्ते प्रकृत्यर्थतया गावः सन्निहिता एव प्रतीयन्ते। यत्र तु विजातीयसंख्येयवाची शब्दः प्रयुज्यते, तत्र शब्दसन्निहितेन तेनान्यदर्थं सन्निहितं बाध्यते। न च वृत्तौ तादृशेन शब्देन प्रकृत्यर्थः शक्यो विशेषयितुम्; प्रत्ययार्थेनैकार्थीभूतत्वात्, यथा—वृद्धस्यौपगव इति।

### भावबोधिनी

"तस्य दोषस्तयादेश उभयप्रतिषेध"..........नैष दोषः; अयच् प्रत्ययान्तरम्।" 'उभयी' आदि में ङीप् का उपपादन "मात्रच्' को प्रत्याहार मानकर 'मात्र' से अयच् तक का ग्रहण करके किया है। पदमंजरीकार ने भी भाष्यसंमत पक्ष ही स्वीकार किया है ॥ ४४ ॥

'तद्' इस प्रथमासमर्थ से 'अस्मिन्' इस सप्तमी के अर्थ में दशान्त ( दश जिसके अन्त में है उस ) से 'ड' प्रत्यय होता है, यदि जो प्रथमासमर्थ है वह 'अधिक' हो तो। 'इति' का प्रयोग 'उससे वैसी विवक्षा" बताने के लिए है। उदा० एकादश अधिकाः अस्मिन् शते–( ग्यारह हैं अधिक जिस सौ में अर्थात् एक सौ ग्यारह ) इस अर्थ में—एकादशं शतम्। [ एकादशन्+ड=अ, टिलोप ] एकादशं सहस्रम्। एकादश अधिका अस्मिन् सहस्रे–यह अर्थ है। ] द्वादशं शतम्। द्वादशं सहस्रम्। [ द्वादश अधिका अस्मिन् शते, द्वादश अधिका अस्मिन् सहस्रे—एक सौ बारह, एक हजार बारह—ये अर्थ हैं।

दश जिसके अन्त में हैं उससे—इसका क्या फल है? पञ्च अधिकाः अस्मिन् शते। [ यहाँ नहीं होता है। ] अन्त के ग्रहण का क्या प्रयोजन है? दश अधिकाः अस्मिन् शते–यहाँ नहीं होता है। [ क्योंकि 'दश' दशान्त नहीं है। व्यपदेशिवद्भाव का निषेध है। अतः दश अकेला ही माना जाता है। ]

प्रत्ययार्थ के समानजातीय प्रकृत्यर्थ में ही अर्थात् जैसा प्रत्ययार्थ है वैसा ही प्रकृत्यर्थ रहने पर यह प्रत्यय इष्ट है—एकादश कार्षापण अधिका अस्मिन् कार्षापणशते—( ग्यारह कार्षापण जिस सौ कार्षापण में अधिक है—)

---

1. भाष्ये तु "अधिक समानजातीय, इष्टशतसहस्रयोः" इत्येव पाठः।

**इह तु न भवति—एकादश माषा अधिका अस्मिन् कार्षापणशत इति ( म० भा० )। 'शतसहस्रयोश्चेष्यते' ( म० भा० इष्टि )। इह न भवति—एकादशाधिका अस्यां त्रिशतीति। 'इतिकरणो विवक्षार्थः' इत्युक्तम्, तत इदं सर्वं लभ्यते।**

**कथमेकादश शतसहस्रमिति ? शतानां सहस्रम्, सहस्राणां वा शतमिति शतसहस्रमित्युच्यते।**

**न्यासः**

मुदाहरणमुपन्यस्यति—**एकादश कार्षापणा** इति। प्रकृत्यर्थोऽप्येकादश कार्षापणा एवेति प्रकृत्यर्थः प्रत्ययार्थेन समानजातीयः। **इह तु** नेत्यादि। अत्र हि कार्षापणशतं प्रत्ययार्थः। प्रकृत्यर्थस्त्वेकादश माषाः। ते च कार्षापणेभ्यो विजातीया इति न भवति प्रत्ययः। **शतसहस्रयोश्चैवेष्यत** इति। यत् 'तदस्मिन्' इत्युच्यते, तस्मिश्च शते सहस्रे वा प्रत्यय इष्यते, नान्यत्र त्रिंशत्यादौ।

कथं पुनरनुपात्तमेव सूत्रे लभ्यते ? इत्याह—**इतिकरणो विवक्षार्थ इत्यादि। कथमित्यादि।** यदि शते सहस्रे वाधिकिनि प्रत्ययेन भवितव्यम्, इह प्रत्ययो न प्राप्नोति—एकादशं शतसहस्रमिति। अत्र हि शतसहस्रं संख्यान्तरञ्चाधिकम्, न शतं नापि सहस्रमित्यभिप्रायः। **शतानामित्यादि।** अनेन शतसहस्रस्य संख्यान्तरं निरस्यति। यदा शतशब्दः षष्ठ्यन्तः सहस्रशब्देन समस्यते तदा शतानां सहस्रं शतसहस्रशब्देनोच्यते। यदा तु सहस्रशब्दः षष्ठ्यन्तः शतशब्देन समस्यते, तदा सहस्राणां शतं शतसहस्रशब्देनोच्यते। ननु च सहस्रशब्दस्य षष्ठ्यन्तस्य समासे सहस्रशतमिति भवितव्यम् ? राजदन्तादिषु दर्शनात् तस्य परनिपातो भविष्यतीत्यदोषः। **तत्र शतसहस्रयोरित्येव सिद्धमिति।** शतसहस्रवाच्यस्यार्थस्य शतसहस्रयो-

**पदमञ्जरी**

**शतसहस्रयोश्चेष्यत** इति। इयमिष्टिरेव।

**इतिकरणो विवक्षार्थस्ततः इदं सर्वं लभ्यत** इति। यद्यपि पूर्वार्थो न्यायादेव लभ्यते, तथापि शतसहस्रयोश्चेष्यते' इत्ययमर्थ इतिकारणादेव लभ्यते इति लाघवाय साधारणो हेतुरुपदिष्टः।

**कथमित्यादि।** शते सहस्रे चाभिधेये प्रत्ययो भवन्नत्र न प्राप्नोति, अत्र हि संख्यान्तरमधिकं शतसहस्रं नाम, न शतं सहस्रं वेति भावः। अत्रापि शतसहस्रयोरेवान्यतरस्य प्रत्ययार्थत्वं न संख्यान्तरस्येत्याह—**शतनामिति। सहस्राणां वा शतमिति।** तत्रापि पक्षे 'संख्याया अल्पीयस्याः' (वा० ११२)

**भावबोधिनी**

इस अर्थ में—एकादशं कार्षापणशतम्। [ यहाँ प्रकृत्यर्थ भी ग्यारह कार्षापण हैं और प्रत्ययार्थ ( अधिक ) भी कार्षापण ही हैं अतः दोनों सजातीय हैं। इसलिए प्रत्यय होता है। ]

परन्तु इसमें प्रत्यय नहीं होता है—एकादश माषाः अधिका अस्मिन् कार्षापणशते। [ ग्यारह माष अधिक हैं इस कार्षापणशत में। यहाँ प्रत्ययार्थ है—कार्षापणशत और प्रकृत्यर्थ है—एकादश माष। दोनों भिन्नजातीय हैं। अतः प्रत्यय नहीं होता है। "कार्षापणः कार्षिकः स्यात् ···।" अमरकोश २।९।८८ के अनुसार कार्षापण=रुपये का वाचक है। "माषो विंशतितमो भागः पणस्य परिकीर्तितः।" अथवा "गुञ्जाभिर्दशभिर्माषः।" इनके अनुसार दस गुञ्जा के दाने की तौल या कोई सिक्का 'माष' है। ]

* "केवल शत और सहस्र में इष्ट है।" * अतः यहाँ नहीं होता है—एकादशाधिक ।अस्यां त्रिशति। ( ग्यारह अधिक हैं इस तीस में। यहाँ शत या सहस्र नहीं हैं। अतः प्रत्यय नहीं होता है। )

सूत्र में 'इति' का प्रयोग विवक्षार्थक है—यह कहा जा चुका है। इसी से यह सब अर्थ ज्ञात हो जाता है। [ अतः अलग से वचन बनाने की आवश्यकता नहीं है। ]

तत्र 'शतसहस्रयोः' इत्येव सिद्धम्।

अधिके समानजाताविष्टं शतसहस्रयोः।
यस्य संख्या तदाधिक्ये डः कर्तव्यो मतो मम ॥ ( म० भा० ५. २. ४५ )

## न्यासः

रेवान्तर्भावात्।

अधिक इत्यादि। लोके प्रत्ययार्थेन समानजातावधिके शतसहस्रयोरेव प्रत्ययाख्यं कार्यमिष्टम्। यदा त्वसमानजात्यधिकं भवति, न च शतं सहस्रं वा प्रत्ययार्थेन विवक्षितम्, तदा नेष्यते। अथैकादशं शतसहस्रमित्यत्र कस्याधिक्ये सति डः कर्त्तव्यः? इत्याह—यस्येत्यादि। संख्या=संख्यानम्, गणनमित्यर्थः। यस्य संख्या, तस्याधिक्ये डः कर्त्तव्यः। कस्य च संख्या भवति? अधिकत्वं संख्यायते यस्य। यदा शतानि संख्यायते तदा—शतानां सहस्रमिति शतसहस्रम्, तदा शताधिक्ये डः कर्त्तव्यः। एकादशाधिकान्यस्मिन् सहस्र एकादशं शतसहस्रमिति। यदा तु सहस्राणि संख्यायते—सहस्राणां शतं सहस्रशतमिति, तदा सहस्राण्यधिकान्यस्मिन्नेकादशं शतसहस्रमिति। अथ किमर्थं तदिति प्रथमा समर्थविभक्तिरुपादीयते, यावता 'तदस्य सञ्जातम्' इत्युनुवर्त्तत एव, तत्र प्रत्ययार्थं एवास्मिन्निति निर्देष्टव्यः? नैवं शक्यम्; तद-

## पदमञ्जरी

इति द्वन्द्वे चाद्वन्द्वे च स्मरणाच्छतस्यैव पूर्वनिपातः। तत्र पूर्वस्मिन्विग्रहे शतानि संख्यायन्त इति तान्येव प्रकृत्यर्थः—एकादश शतान्यधिकान्यस्मिन्नेकादशं शतशहस्रमिति; उत्तरत्र तु सहस्राणां संख्येयत्वात्तान्येव प्रकृत्यर्थः—एकादशसहस्राण्यधिकान्यस्मिन्नेकादशं शतसहस्रमिति। प्रकरणादिवशाच्च शतानां सहस्राणां वा संख्येयत्वावसायः।

उक्तमेवार्थं श्लोकेन दर्शयति—अधिके समानजाताविति। प्रत्ययार्थसम्बन्धिन्या जात्या प्रकृत्यर्थस्य जातौ समानायां सत्यामधिकेऽर्थे वर्त्तमानात् प्रत्यय इत्यर्थः। यद्वा समानजातौ' इति बहुव्रीहिः। जात्यन्तलक्षणस्तु छो न भवति; भाष्यप्रयोगात्। प्रत्ययार्थेन समानजातीयेऽर्थे वर्त्तमानादित्यर्थः। इष्टमिति। प्रत्ययाख्यं कार्यम्। एकादशं शतशहस्रमित्यत्र निर्वाहार्थमाह—यस्य संख्येति। 'शतानि

## भावबोधिनी

'एकादशं सहस्रम्'—यह प्रयोग कैसे होता है [क्योंकि शत अथवा सहस्र किसी एक संख्या के अधिक रहने पर ही यह प्रत्यय होता है। 'शतसहस्र' यह तो एक अतिरिक्त संख्या प्रतीत हो रही है]? 'शतानां सहस्रम्, सहस्राणां वा शतम् ( सैकड़ों के हजार अथवा हजारों के सौ )—इसे 'शतसहस्रम्' कहा जाता है। [अतः इसमें शत और सहस्र ही हैं। प्रत्यय सिद्ध है क्योंकि ] 'शत और सहस्र में ही' इस वचन से ही संभव है।

[ एकादश अधिका अस्मिन् शतसहस्रे—यहाँ प्रत्यय कैसे होगा क्योंकि शत या सहस्र संख्या वाच्य रहने पर ही प्रत्यय इष्ट है? इस शंका का समाधान यह है कि 'शतसहस्रम्' इसकी दो व्युत्पत्तियाँ हो सकती हैं—एक-'शतानां' सहस्रम् और दूसरी 'सहस्राणां शतम्' इसमें भी "राजदन्तादिषु परम्" (पा०सू० २।२।३१) से सहस्र का पर निपात हो जाता है। जब 'शतानां सहस्रम्' यह है तब शत संख्या है। जब 'सहस्राणां शतम्' यह है तब 'सहस्र' संख्या है। इसलिये प्रकरणादि के अनुसार संख्या का निर्णय करके प्रत्यय करना चाहिए। उपर्युक्त समस्त विषय श्लोकवार्त्तिक रूप में है—]

"समानजाति अधिक रहने पर अर्थात् प्रत्ययार्थसम्बन्धी जाति और प्रकृत्यर्थ-सम्बन्धी जाति समान रहने पर ही अधिक अर्थ में वर्तमानसंख्यावाची से 'ड' प्रत्यय होता है। यह केवल शत और सहस्र अधिक रहने

## २०६७. शदन्तविंशतेश्च ॥ ४६ ॥ ( १८४७ )

'तदस्मिन्नधिकम्' इत्यनुवर्तते, 'डः' इति च। शदन्तात् प्रातिपदिकाद्विंशतेश्च डः प्रत्ययो भवति 'तदस्मिन्नधिकम्' इत्येतस्मिन् विषये। त्रिंदशधिका अस्मिन् शते त्रिंशं शतम्।

शद्ग्रहणेऽन्तग्रहणं प्रत्ययग्रहणे यस्मात्स तदादेरधिकार्थम्। एकत्रिंशं शतम्। एकचत्वारिंशं शतम्। संख्याग्रहणं च कर्त्तव्यम्। इह मा भूत्—गोत्रिंशदधिका अस्मिन् गोशते इति।

**न्यासः**

नुवृत्तौ हि तत्सम्बन्धस्यास्येति प्रत्ययार्थस्याप्यनुवृत्तिः प्रसज्येत। न च षष्ठीसप्तम्यर्थयोर्विरोधः, ततोऽस्मिन्निति निर्देशात् पूर्वः प्रत्ययार्थो न निवर्त्तते, तस्यां त्वनुवृत्तौ षष्ठ्यर्थेऽपि प्रत्ययः स्यात्। तस्मादस्येति निवृत्त्यर्थं पुनस्तदिति प्रथमा समर्थविभक्तिरुपादीयते। यद्येवम्, अस्येति प्रत्ययार्थस्य निवृत्तत्वात् 'संख्याया गुणस्य निमाने मयट्' इत्यत्र षष्ठ्यर्थे प्रत्ययो न प्राप्नोति। इह निवृत्तस्यापि मण्डूकप्लुतिन्यायेनानुवृत्तिर्भविष्यतीत्यदोषः। अन्ये तु ज्ञापकं तदित्यस्य वर्णयन्ति। तदिति प्रकृते यत् तदित्याह, तज् ज्ञापयति—'तदस्य सञ्जातम्' इत्यादौ सूत्रे यन्निर्दिष्टं तदिहानुवर्त्तमानमप्यङ्गभावं न यातीति षष्ठ्यर्थे प्रत्ययो न भवति ॥ ४५ ॥

**शदन्तविंशतेश्च** ॥ ननु च 'पङ्क्ति' इत्यादौ सूत्रे त्रिंदशादादयः शब्दाः शत्प्रत्ययान्ता निपातिताः, ततश्च प्रत्ययग्रहणपरिभाषयैव तदन्तात् प्रत्ययो लभ्यते, तत् किमन्तग्रहणेन? इत्याह—**शद्ग्रहणेऽन्तग्रहणमित्यादि**। यद्यन्तग्रहणं न क्रियेत, तदा प्रत्ययग्रहणपरिभाषया यस्मात् स विहितस्तदादेरेव स्यात्;

**पदमञ्जरी**

सहस्राणि संख्यायन्ते,' इत्युक्तम्, 'अधिके समानजातौ' इति च, तेन यस्य संख्या यज्जातीयं संख्यायते। सामान्यापेक्षमेकवचनम्। तदाधिक्ये स [=डः] कर्त्तव्यो मतो मम। एतच्चोदाहरण एव व्यक्तीकृतम्, नात्र किञ्चिदपूर्वमुक्तम् ॥ ४५ ॥

**शदन्तविंशतेश्च** ॥ अन्तग्रहणमनर्थकम्, केवलस्य शतः प्रातिपदिकस्याभावात्; प्रत्ययग्रहणपरिभाषया तदन्तविधिर्भविष्यति, पङ्क्त्यादिसूत्रे त्रिंशदादीनां शत्प्रत्ययान्तत्वेन निपातितत्वात्तत्राह—**शद्ग्रहणेऽन्तग्रहणमिति**। प्रत्ययग्रहणपरिभाषया ( पुरु० परि० २४ ) तदन्तविधौ सति तदादिनियमः

**भावबोधिनी**

पर ही होता है। जो संख्या रूप से प्रतीत होता है उसी के अधिक रहने पर 'ड' प्रत्यय करना मेरा मत है ॥ ४५ ॥

'तद् अस्मिन् अधिकम्' ( वह इसमें अधिक है )—इसकी और 'ड' इसकी अनुवृत्ति होती है। शदन्त प्रातिपदिक से और 'विंशति' शब्द से 'ड' प्रत्यय 'वह इसमें अधिक है' इस विषय में होता है। उदा० त्रिंशद् अधिका अस्मिन् शते—( तीस अधिक हैं इस सौ में )—इस अर्थ में—'त्रिंशं शतम्' ( =एक सौ तीस ) यह बनता है। [ त्रिंशत्+ड=अ, टिलोप ]।

शद्ग्रहण में जो 'अन्त' का ग्रहण है वह—जिससे 'शत्' किया जाता है वह तदादि का ग्राहक होता है—इस अधिक अर्थ का ज्ञान कराने के लिए है। [ भाव यह है कि 'शत्' यह प्रत्यय है और प्रत्ययग्रहण में जिससे प्रत्यय किया जाता है उसके तदादि तदन्त का ही ग्रहण होता है। अतः अधिक का ग्रहण नहीं होता। किन्तु जब 'अन्त' का ग्रहण किया गया तो उस परिभाषा की प्रवृत्ति नहीं होती है। केवल 'शदन्त' देखा जाता है आदि नहीं। अतः ] एकत्रिंशं शतम्। एकचत्वारिंशं शतम्। [ एकत्रिंशद् अधिका अस्मिन् शते, एकचत्वारिंशद् अधिका अस्मिन् शते—इनमें 'ड' प्रत्यय होता है। ] [ इस सूत्र में ] संख्या का ग्रहण करना चाहिए अर्थात् पूर्वसूत्र से 'संख्यायाः' की अनु-

* विंशतेश्च * ( म० भा० ५. २. ४६ वा० ३ )। विंशं शतम्।

* तदन्तादपीति वक्तव्यम् * ( वा० )। एकविंशं शतम्।

* संख्याग्रहणं च कर्त्तव्यम * ( म० भा० ५. २. ४६ वा० २ ) इह मा भूत्— गोविंशतिरधिकाऽस्मिन्गोशतते इति ॥

## २०६८. संख्याया गुणस्य निमाने मयट् ॥ ४७ ॥ ( १८४८ )

'तदस्य' इत्यनुवर्तते 'तदस्य सञ्जातम्' ( ५. २. ३६ ) इत्यतः। तदिति प्रथमासमर्थात्संख्या·

### न्यासः

नाधिकात्। अतोऽधिकादपि यथा स्यादित्येवमर्थमन्तग्रहणम्। यदि तर्हि यस्मात् प्रत्ययो विहितस्तदादेरधिकार्थमन्तग्रहणं केवलान्न प्राप्नोति ? नैष दोषः, चकारोऽत्र क्रियते, स चानुक्तसमुच्चयार्थः, तेन केवलादपि भविष्यति। **संख्याग्रहणञ्च कर्त्तव्यमिति**। संख्या गृह्यते येन तत् संख्याग्रहणं कर्त्तव्यम्। किं पुनः कर्त्तव्यम् ? व्याख्यानम्। तत्रेदं व्याख्यानम्—'संख्याया अवयवे तयप्' इत्यतः संख्याया इत्यनुवर्त्तते, तेन संख्याधिकादेव भविष्यति, नान्याधिकात्।

**विंशतेश्चेत्यादि**। विंशतिशब्दाच्च तदन्ताच्च प्रातिपदिकाड् डप्रत्ययो भवतीत्येतदर्थंरूपं व्याख्येयमित्यर्थः। तत्रेदं व्याख्यानम्—विंशतिशब्दात् तावत् साक्षात् सूत्रोपात्तात् प्रत्ययो भवति, तदन्तादपि; चकारस्यानुक्तसमुच्चयार्थत्वादिति।

**संख्याग्रहणं चेत्यादौ** पूर्व एवार्थः। व्याख्यानमपि पूर्वकमेव ॥ ४६ ॥

### पदमञ्जरी

स्यात्, अस्मिंस्त्वन्तग्रहणे सति यावतः समुदायस्यान्ते शच्छब्दस्तावतो ग्रहणं भवति। **संख्याग्रहणं चेति**। 'संख्याया अवयवे तयप्' इत्यतः संख्याग्रहणमनुवर्त्तीयमित्यर्थः। तेन संख्यावाचिनः शदन्तात्प्रत्ययो भवतीत्यर्थः। एकत्रिंशदादयश्च संख्यान्तरस्य वाचकाः, न तु समुदायस्य; तेन तेषामपि ग्रहणम्। गोत्रिंशदादयश्च न संख्यावचना इति तेषामग्रणहम्।

**विंशतेश्चेति**। विंशतिशब्दानन्तरमन्तशब्दः पठितव्य इत्यर्थः; अन्यथा 'ग्रहणवता' ( व्या० परि० ८९ ) इति निषेधात्तदन्तान्न स्यात् ॥ ४६ ॥

**संख्याया गुणस्य निमाने मयट्** ॥ तदस्य सञ्जातमित्यत इति। तत्र तावत् 'तदस्य' इति

### भावबोधिनी

वृत्ति करनी चाहिये। क्योंकि यहाँ नहीं होना चाहिये—गोत्रिंशत् अधिका अस्मिन् गोशते। [ गायों के सैकड़ा में तीस गायें अधिक हैं। यहाँ 'संख्यामात्र' की प्रतीति नहीं है गायों की भी है। अतः प्रत्यय नहीं होता है। ]

* विंशति शब्द से भी 'ड' कहना चाहिये। * उदा० विंशं शतम्। [ विंशतिः अधिका अस्मिन् शते—इस अर्थ में विंशति + ड = अ 'तिविंशतेर्डिति' ( पा० सू० ६।४।१४२ ) 'ति' का लोप हो जाता है। एक सौ बीस। ]

* तदन्त = विंशत्यन्त से भी कहना चाहिये। * उदा० एकविंशं शतम्। [ एकविंशतिः अधिका अस्मिन् शते। पूर्ववत् प्रक्रिया। एक सौ इक्कीस। ]

* इसमें भी संख्या का ग्रहण करना चाहिए। * यहाँ न हो सके—गोविंशतिः अधिका अस्मिन् गोशते। [ गायों के सैकड़ा में बीस गायें अधिक हैं। यहाँ संख्याविशिष्ट गायों की अधिकता है। अतः प्रत्यय नहीं होता है। ] ॥ ४६ ॥

"तदस्य संजातं तारकादिभ्यः इतच्" ( पा० सू० ५।२।३६ ) इस पूर्वसूत्र से 'तद् अस्य' इनकी अनुवृत्ति

वाचिनः प्रातिपदिकादस्येति षष्ठ्यर्थे मयट् प्रत्ययो भवति यत्तत्प्रथमासमर्थं गुणस्य निमाने चेत्तद् वर्तते। गुणः=भागः। निमानम्=मूल्यम्। गुणो येन निमीयते मूल्यभूतेन सोऽपि सामर्थ्याद्भाग एव विज्ञायते। यवानां द्वौ भागौ निमानमस्योदश्विद्भागस्य द्विमयमुदश्विद् यवानाम्। त्रिमयम्। चतुर्मयम्।

भागेऽपि तु विधीयमानः प्रत्ययः प्राधान्येन भागवन्तमाचष्टे। तेन सामानाधिकरण्यं भवति—

## न्यासः

**संख्याया गुणस्य निमाने मयट्** ॥ **गुणो येन निमीयत** इति। परिवर्त्यते, विक्रीयत **सोऽपीत्यादि**। न हि तस्य भागत्वमन्तरेण निमेयस्य गुण इत्येव निर्दिष्टस्य भागत्वमध्यवसातुं शक्यम्। यदा हि मूलस्य भागत्वं नास्ति, भागव्यपदेशो न प्रवर्त्तत एव। तेन यद्यपि निमानस्य भागता नोक्ता, तथापि सामर्थ्यात् सा प्रतीयते। **यवानां द्वौ भागौ निमानमस्येति**। ननु चोभयत्रापि परिवर्त्तनम्, तथापि मूल्य एव निमान-शब्दो रूढ इति यन्मूल्यत्वेन विवक्षितं तदेव निमानं भवति, नेतरत्। **यवानामिति**। भागापेक्षया षष्ठी। यद्येवम्, परापेक्ष उदश्विच्छब्दे तद्धितस्य वृत्तिर्विरुध्यते। ननूदश्विद्भागे प्रत्ययः, नोदश्विति, तत् कथं द्विमयमुदश्विदिति प्रत्ययान्तस्योदश्विच्छब्देन सामानाधिकरण्यम्? इत्यत आह—**भागेऽपि त्वित्यादि**। अत्र पुनरभिधानशक्तिस्वाभाव्यं हेतुः। यथैवाणादयोऽपत्यापत्यवत्सम्बन्धेऽपि विधीयमाना

## पदमञ्जरी

समुदायस्य स्वरितत्वं प्रतिज्ञातम्, अनुवृत्तं च बहुषु योगेषु। 'तदस्मिन्नधिकम्' इत्यत्र तु पुनस्तच्छब्दो-पादानान्न सम्बद्ध्यत इत्येतावत्। इह तु प्रतिबन्धाभावात्स एव समुदायोऽनुवर्तत इत्यर्थः, तेन 'तदस्मिन्' इत्यस्यैव तच्छब्दस्यानन्तर्यादनुवृत्तिर्युक्ता। 'अस्मिन्' इत्यनेन विच्छिन्नत्वादस्येत्यनुवृत्तिश्चायुक्तेति न चोदनीयम्। **निमानं मूल्यमिति**। 'मेङ् प्रणिदाने' ( धा० पा० ९६१ ) इत्यस्मान्निपूर्वात्करणे ल्युट्, निमीयते=क्रीयत इत्यर्थः। **गुणस्येति**। कर्मणि षष्ठी। **सोऽपि सामर्थ्यादिति**। गुणशब्दोऽपि सापेक्षं रूपमाचष्टे, तथा हि—द्विगुणम्, त्रिगुणमित्युक्ते किञ्चिदपेक्ष्येति गम्यते; तत्र निमेयस्य गुणत्वं सन्निहितं निमानमपेक्ष्येत्येतत्सामर्थ्यम्। **यवानां द्वौ भागाविति**। यद्यपि तुल्यमुभयत्रापि स्वत्यागः परकीयस्य ग्रहणम्, तथापि क्वचित्काचित्प्रसृततरा गतिः, तद्यथा—समाने त्यागे धान्यं विक्रीणीत इत्युच्यते, न कश्चिदाह–कार्षापणी विक्रीणीत इति, तेन यवभागयोरेव निमानत्वम्, नोदश्विद्भागस्य। देशकालापेक्षो वा निमाननिमेयभावः। निमानस्य च निमेयापेक्षत्वान्निमेयं प्रत्ययार्थः, एकगुणस्योदश्वितो द्विगुणा यवा मूल्यमित्यर्थः। तद्यथा—प्रस्थस्योदश्वितो द्वौ प्रस्थौ यवाः, द्विमयमुदश्विद्यवानामिति। भागविशेष-प्रतिपत्त्यर्थं प्रकृत्यर्थविशेषणस्य यवादेः प्रयोगः। द्विशब्दश्च वृत्तिविषये भागयोरेव संख्येययोर्वर्तत इति सम्बन्धिशब्दत्वेन नित्यसापेक्षत्वात्तद्धितवृत्तिरविरुद्धा। कथं पुन प्रत्ययान्तस्योदश्विच्छब्देन सामाना-

## भावबोधिनी

होती है। 'तत्' इस प्रथमासमर्थ संख्यावाचक प्रातिपदिक से 'अस्य' इस षष्ठी के अर्थ में 'मयट्' प्रत्यय होता है यदि जो प्रथमासमर्थ है वह गुण ( =भाग ) के निमान ( =मूल्य ) अर्थ में वर्तमान हो। गुण=भाग, निमान=मूल्य। मूल्यभूत जिसके द्वारा गुण का निमान ( क्रयण ) किया जाता है वह (मूल्य) भी सामर्थ्यवश भाग ही ज्ञात होता है। उदा० यवानां द्वौ भागौ निमानम् अस्य उदश्विद्भागस्य ( जौं के दो भाग इस उदश्विद्भाग के मूल्य हैं अर्थात् इस मट्ठा का मूल्य दो भाग जौं हैं)—इस अर्थ में—द्विमयम् उदश्वित् यवानाम्। [ द्वि+मयट्। इसी प्रकार यवानां त्रयो भागा निमानमस्य उदश्विद्भागस्य—इस अर्थ में और—यवानां चत्वारो भागा निमानमस्य उदश्विद्-भागस्य—इस अर्थ में ] त्रिमयम्। चतुर्मयम्।

**द्विमयमुदश्विदिति। गुणस्येति चैकत्वं विवक्षितम्, तेनेह न भवति—द्वौ भागौ यवानां त्रय उदश्वितः ( म० भा० ) इति।**

*** भूयसश्च वाचिकायाः संख्यायाः प्रत्यय इष्यते। * इह न भवति—एको भागो निमानमस्येति। भूयस इति च प्रत्ययार्थात्प्रकृत्यर्थस्याधिक्यमात्रं विवक्षितम्। बहुत्वमतन्त्रम्, तेन द्विशब्दादपि भवति।**

**न्यासः**

अभिधानशक्तिस्वाभाव्यात् प्राधान्येन सम्बन्धिनमाचक्षते—औपगवी दाक्षिरिति, तथायमपि भागे विधीयमानो भागवन्तमुदश्विदादिकमाचष्टे। **गुणस्येति चैकत्वं विवक्षितमिति।** गुणस्येति यैकसंख्या सा विवक्षिता। ननु च 'तद्धिता' इति निर्देशेऽपि बहुवचनमप्रमाणम्, तस्याविवक्षितत्वात्' इत्युक्तम्, तत् कथमिहैकत्वविवक्षा युज्यते? नैष दोषः; इह हि षष्ठीसमासं कृत्वा गुणनिमान एव कर्त्तव्यम्, एवं हि लघु सूत्रं भवति। सोऽयमेवं वक्तव्ये सति यद् गुणस्येत्येकवचनमुच्चारयति, तेनैतत् सूचयति—विवक्षितमत्रैकत्वमिति। **तेनेत्यादिनै**कत्वविवक्षायाः फलं दर्शयति। एकत्वविवक्षायां ह्येतत् प्रयोजनम्—एकस्य गुणस्य निमाने वर्त्तमानाद् यथा स्यात्। **द्वौ भागो यवानां त्रय उदश्वित** इति। अत्र त्रयाणां भागानां निमाने द्विशब्दो वर्त्तत इति न भवति प्रत्ययः।

ननु च सत्यामप्येकत्वविवक्षायां नैवात्र प्रत्ययेन भवितव्यम्, यतः 'भूयसश्च वाचिकायाः संख्यायाः प्रत्यय इष्यते' इति वचनम्, न ह्यत्र द्विशब्दो भूयसो वाचकः? एवं तर्हि यवानां यौ द्वौ भागौ, ताविह

**पदमञ्जरी**

धिकरण्य॰, यावतोदश्विद्भागे प्रत्ययो विहितः, नोदश्विति? तत्राह—**भागेऽपि तु विधीयमान** इति। अत्र चाभिधानस्वाभाव्यं हेतुः। अपर आह—यत्रोदश्वितो भागो द्विगुणैर्यवैः क्रीयते, तत्रार्थात्समुदायोऽपि द्विगुणैर्यवैः क्रीतो भवति बहुभिरेकेन वा, तदपेक्षं सामानाधिकरण्यमिति। गुणस्येति चैकत्वं विवक्षितमित्येतदर्थमेव हि 'गुणनिमाने' इति लघुरपि निर्देशो न कृतः। **द्वौ भागौ यवानां त्रय उदश्वित** इति। न तावद् 'भूयसश्च वाचिकायाः' इत्युक्तमिति मत्वेदमुदाहृतम्, न त्वत्र द्विशब्दो भूयसो वाचकः। यद्वा उदाहरणदिगियं दर्शिता, त्रयो यवानां द्वावुदश्वित इति दर्शयितव्यम्, निमाननिमेयभावस्य विपर्ययो वा द्रष्टव्यः। **भूयसश्चेति।** प्रत्ययार्थात्प्रकृत्यर्थस्य भूयसो या वाचिका संख्या ततः प्रत्यय इत्यर्थः। **इह न भवतीति।** निमाननिमेययोः साम्यविषये न भवतीत्यर्थः; अन्यथा गुणस्येत्येकत्वविवक्षायामपि स्यादेव प्रसङ्गः। कुतस्तर्हि न भवति? अनभिधानात्।

**भावबोधिनी**

[ यह प्रत्यय तो उदश्विद्भाग=मट्ठे का भाग इस अर्थ में होता है। न कि उदश्वित् अर्थ में; तब 'द्विमयम् उदश्वित्' यहाँ प्रत्ययान्त का उदश्वित् शब्द के साथ कैसे सामानाधिकरण्य होता है? इसका समाधान देते हैं-] भाग अर्थ में किया जाने वाला भी प्रत्यय प्रधानरूप से भागवान्=भागविशिष्ट द्रव्य को कहता है। इस कारण सामानाधिकरण्य हो जाता है—द्वियमयम् उदश्वित्। यहाँ गुण=भाग की एकत्व संख्या विवक्षित है, इस कारण यहाँ नहीं होता है—द्वौ भागौ यवानां त्रयः उदश्वितः। [ यहाँ पर तीन भागों के निमान=मूल्य में द्वि शब्द है। अतः प्रत्यय नहीं होता है। ]

* अधिक की वाचक संख्या से प्रत्यय इष्ट है। * [ जब निमेय भाग की संख्या से निमानभाग की संख्या अधिक होती है तब यह प्रत्यय होता है। ] अतः यहाँ नहीं होता है—एकः भागः निमानम् अस्य। [ यहाँ दोनों एकत्वविशिष्ट ही हैं। ] और 'भूयस्' इस से प्रत्ययार्थ की अपेक्षा प्रकृत्यर्थ का अधिक होना विवक्षित है। इसमें बहुत्व का अनुशासन इष्ट नहीं है इस कारण दो शब्द से भी प्रत्यय होता है। [ भाव यह है कि 'भूयान्' शब्द की सिद्धि "बहोर्लोपो भू च बहोः" ( पा० सू० ६।३।१५८ ) से 'बहु' का भू आदेश करने

**गुणशब्दः समानावयववचनः। तेनेह न भवति—द्वौ भागौ यवानामध्यर्द्धम् उदश्वितः**[1] ( म० भा० ) इति।

*** निमेये चापि दृश्यते * ( म० भा० ५. २. ४७ वा० ५ ) निमेये वर्त्तमानायाः संख्याया निमाने प्रत्ययो दृश्यते। उदश्वितो द्वौ भागौ निमेयमस्य यवभागस्य द्विमया यवा उदश्वितः। त्रिमया यवा उदश्वितः। चतुर्मयाः ( म० भा० )।**

## न्यासः

निमेयत्वेन विवक्ष्येते। ये त्रय उदश्वितो भागास्ते निमानत्वेन। तत्र यद्येकत्वविवक्षा न स्यात् तदा त्रिषूदश्विद्गुणेषु वर्त्तमानात् प्रत्ययः स्यात्। भूयसश्चेत्यपि प्रत्ययार्थात् प्रकृत्यर्थस्य भूयसो वाचिकायाः प्रत्यय इष्यते, नान्यतः। इह **न भवतीति**। अनभिधानात्। 'तदस्मिन्नधिकम्' इत्यादेः सूत्रादितिकरणानुवृत्तेर्वा। यदि भूयसो वाचिकायाः संख्याया इष्यते यवानां द्वौ भागौ निमानमस्येत्यत्र न प्राप्नोति ? इत्यत आह—**भूयस इति चेत्यादि**।

एवमपि हि प्राप्नोति—द्वौ यवानामध्यर्द्धं उदश्वित इति, अस्ति ह्यत्र प्रत्ययार्थात् प्रकृत्यर्थस्याधिक्यम् ? इत्यत आह—**गुणशब्द इत्यादि**। गुणशब्दो ह्ययं भागवचनोऽपि समतामपि तस्य भागस्य ब्रूते, न चाध्यर्द्धशब्देन समभाग उच्यते।

**निमेये चापि दृश्यत** इति। केन पुनर्विहितो दृश्यते ? अनेनैव। कथम् ? द्वे अत्र वाक्ये निमानशब्दः करणसाधनः—निमीयतेऽनेनेति निमानम्; द्वितीये तु कर्मसाधनो निमीयत इति निमानम्, 'कृत्यल्युटो बहुलम्' इति कर्मणि ल्युट्। यदा करणसाधनस्तदा गुणस्येति कर्मणि षष्ठी, यदा तु कर्मसाधनस्तदा कर्त्तरि। गुणो निमानक्रियाकरणमिति कर्तृत्वेन विवक्ष्यते। भवति हि करणस्य कर्तृत्वेन विवक्षा, यथा—

## पदमञ्जरी

'बहोर्लोपो भू च वहोः' इति भूयःशब्दस्य व्युत्पादितत्वात्प्रकृत्यर्थस्य बहुतरत्वे सति प्रत्ययेन भाव्यम्, ततश्च द्विशब्दान्न स्यादित्याशङ्क्याह—**भूयस इति चेति**। **गुणशब्द इत्यादि**। न ह्ययं भागमात्रवचनः, किं तर्हि ? समानतामपि तस्य भागस्य ब्रूते।

**निमेये चापि दृश्यते** इति। कथ तल्लभ्यत ? तन्त्रावृत्त्येकशेषाणामन्यतमाश्रयणेन। द्वे अत्र वाक्ये; तत्रैकं व्याख्यातम्, द्वितीये निमानमिति, 'कृत्यल्युटो बहुलम्' इति कर्मणि ल्युट्।

## भावबोधिनी

पर होती है। अतः बहुत्वविशिष्ट में ही यह प्रत्यय होना चाहिये द्वित्वविशिष्ट में नहीं। इस शंका के निवारणार्थ कहा गया है कि यहाँ बहुत्व विवक्षित नहीं है। ]

गुणशब्द समान अवयव का वाचक है। इस कारण यहाँ नहीं होता है—द्वौ भागौ यवानाम् अध्यर्द्धम् उदश्वितः। [ यहाँ यव और उदश्वित् समान भागवाले नहीं है। अतः प्रत्यय नहीं होता है। अधिकांश संस्करणों में "द्वौ भागौ·········अध्यर्द्धः उदश्वितः' यह पाठ मिलता है किन्तु यह भाष्यानुकूल नहीं है। 'अध्यर्द्धः' यह पुंल्लिङ्ग अशुद्ध है। नपुंसकलिङ्ग 'अध्यर्द्धम्' यही उचित है। ]

* निमेय (=जो खरीदा जाय इस अर्थ ) में भी यह प्रत्यय देखा जाता है। * निमेय अर्थ में वर्तमान संख्यावाची से भी प्रत्यय देखा जाता है। उदा० उदश्वितः द्वौ भागौ निमेयम् अस्य यवभागस्य। ( उदश्वित् के दो भाग इस यवभाग के निमेय हैं )—इस अर्थ में 'द्विमया यवा उदश्वितः' यह होता हैं। [ उदश्वितः त्रयो भागा निमेयमस्य यवभागस्य—इस अर्थ में ] त्रिमया यवा उदश्वितः। चतुर्मयाः यवा उदश्वितः। [ पूर्ववत् विग्रह है। ]

१. एको यवानामध्यर्धमुदश्वितः—इत्येव भाष्यसम्मतः पाठः।

**गुणस्येति किम् ? द्वौ व्रीहियवौ निमानस्योदश्वितः। निमान इति किम् ? द्वौ गुणौ क्षीरस्यैकस्तैलस्य द्विगुणं तैलं पच्यते क्षीरेणेत्यत्र मा भूत् ॥**

## २०६९. तस्य पूरणे डट् ॥ ४८ ॥ ( १८४९ )

**तस्येति षष्ठीसमर्थात्संख्यावाचिनः प्रातिपदिकात् 'पूरणे' इत्यस्मिन्नर्थे डट् प्रत्ययो भवति। पूर्यतेऽनेनेति पूरणम्। येन संख्या = संख्यानं पूर्यते = सम्पद्यते स तस्याः पूरणः। एकादशानां पूरण एकादशः।**

### न्यासः

साष्वसिश्छिनत्तीति। तत्रैकेन वाक्येन निमाने वर्त्तमानायाः संख्याया निमेयेऽभिधेये प्रत्ययो विधीयते, अपरेण निमेये वर्त्तमानाया निमानेऽभिधेयेऽपि प्रत्ययोऽभिधीयते। वाक्यभेदस्य च संख्याग्रहणं निबन्धनम्—'संख्याया अवयवे तयप्' इत्यतः। एवञ्च संख्याग्रहणमनुवर्त्तते। इदमिह द्वितीयम्। तत्र यद्यत्रैकं वाक्यं स्याद् द्वितीयं संख्याग्रहणमनर्थकं स्यात्, सौत्रानुमिताभ्यां तु द्वे वाक्ये क्रियमाणे तदर्थवद्भवति। तस्माद् द्वे अत्र वाक्ये।

**द्वौ व्रीहियवावित्यादि।** अत्र नोदश्विद्भागस्य द्वौ व्रीहियवौ निमानत्वेन विवक्षितौ, किं तर्हि ? उदश्वितः। एवं **द्वौ गुणावित्यादि।** अत्र प्रथमासमर्थो गुणस्य निमाने न वर्त्तते। न हि क्षीरस्य भागद्वयेन तैलस्य भागो निमीयते। मयटष्टित्करणं ङीबर्थम्—द्वौ गुडस्यैको द्राक्षाया द्विमयी द्राक्षेति ॥ ४७ ॥

**तस्य पूरणे डट् ॥** इह द्वे संख्याग्रहणे अनुवर्त्तते, तत्र चैकेन **संख्यावाचिनः प्रातिपदिकादिति** ब्रुवता प्रकृतिर्विशेषिता। द्वितीयेन तु प्रत्ययार्थं विशेषयितुमाह—**येनेत्यादि।** संख्यानशब्दं समुच्चारयन्

### पदमञ्जरी

**गुणस्येति।** करणस्य कर्तृत्वविवक्षायां कर्तरि षष्ठी, निमेयस्य निमानापेक्षत्वान्निमानं प्रत्ययार्थः; परिशिष्टं सर्वं पूर्ववत्। संख्याया इति किम् ? यवभागौ निमानमुदश्विद्भागस्य द्विवचनान्ताद्यवभागशब्दात्प्रत्ययो न भवति। **व्रीहियवाविति।** अत्रोदश्वित एव निमानं द्वौ न तद्भागस्य, तेन द्विमयमुदश्विद् व्रीहियवाविति न भवति। **द्विगुणं तैलं पच्यते क्षीरेणेति।** क्षीरसम्बन्धिनौ द्वौ गुणावस्मिंस्तैले तत्तेनैव सुभग सह क्षीरेण पच्यत इत्युच्यत इति ॥ ४७ ॥

**तस्य पूरणे डट् ॥** तस्येत्येकत्वमविवक्षितम्। एकस्य पूरणासम्भवात्, तेन द्व्यादिभ्यो द्विवचन-

### भावबोधिनी

**विमर्श**—भाव यह है कि 'निमान' शब्द की दो व्युत्पत्तियाँ हैं—(१) करणसाधन—निमीयतेऽनेनेति निमानम्—जिसके द्वारा खरीदा जाता है = मूल्य। (२) कर्मसाधन—निमीयते यत् तत् निमानम्। द्वितीय व्युत्पत्ति में "कृत्यल्युटो बहुलम्" इस सूत्र के बहुलवचन से कर्म अर्थ में ल्युट् होता है। इस कारण 'निमान' यह 'निमेय' का भी वाचक हो जाता है। सूत्र में दो वाक्य बनाये जाते हैं।

गुण = भाग का—इसके ग्रहण का क्या प्रयोजन है ? द्वौ व्रीहियवौ निमानम् अस्य उदश्वितः। [ दो व्रीहि और यव निमान हैं इस उदश्वित् के। यहाँ उदश्वित् के ही निमान दोनों हैं, उदश्वित् के भाग के नहीं। अतः प्रत्यय नहीं होता है। ] निमान = मूल्य अर्थ में हो—इसका क्या प्रयोजन है ? द्वौ गुणौ क्षीरस्य एकः तैलस्य [ दो भाग क्षीर के एक भाग तेल का ]—इस में "द्विगुणं तैलं पच्यते क्षीरेण यहाँ न होने लग जाय। [ यहाँ क्षीर के दो भागों से तेल के एक भाग को खरीदा जाता है—यह अर्थ नहीं है क्योंकि प्रथमासमर्थ गुण के निमान = मूल्य अर्थ में नहीं है। ] ॥ ४७ ॥

'तस्य' इस षष्ठीसमर्थ संख्यावाची प्रातिपदिक से 'पूरण' अर्थ में 'डट्' प्रत्यय होता है। जिससे पूरा

**त्रयोदशः। यस्मिन्नुपसञ्जातेऽन्या संख्या सम्पद्यते स प्रत्ययार्थः। इह न भवति—पञ्चानां मुष्टिकानां पूरणो घट इति ॥**

### न्यासः

संख्यावचनः, संख्यानशब्देन प्रत्ययार्थो विशेष्यते इति दर्शयति। द्विविधो हि संख्याशब्दः—संख्यानवचनः, संख्येयवचनश्च। तत्र यदि संख्येयवचनेन प्रत्ययार्थो विशेष्यते, तदायमर्थः स्यात्- संख्येयं मुष्टयादिकं येन पूर्यते=द्रव्यान्तरेणातिरिक्तं क्रियते स च पूरण इति, ततश्च पञ्चानां मुष्टिकाणां घट इत्यत्रापि स्यात्। तस्माद् संख्यावचनेनैव प्रत्ययार्थो विशेषयितुं युक्तः। **सम्पद्यत इति**। पूर्यत इत्यस्यार्थमाचष्टे। एतेनैतद्दर्शयति—संख्यानवचनेन प्रत्ययार्थो विशेष्यते। न मुष्टिकाणामिव द्रव्याणां द्रव्यान्तरेणातिरिक्तकरणं संख्यायाः पूरणम्, किं तर्हि? सम्पत्तिरेवेति। **इह न भवतीत्यादि**। न हि घट उपजाते पञ्चत्वसंख्या मुष्टिकाणां सम्पद्यते। किं तर्हि? तत्र पञ्चसङ्ख्यकानामेव द्रव्यान्तरेणातिरिक्तता ॥ ४८ ॥

### पदमञ्जरी

बहुवचनान्तेभ्यः प्रत्ययः। **पूर्यतेऽनेनेति पूरणमिति**। करणे ल्युट्। **पूर्यते** इति। ण्यन्तात्कर्मणि यक्, न प्रकृत्यन्तरात् कर्तरि श्यन्। यदि सख्यावाचिनः शब्दात्पूरणे प्रत्ययो भवति, इहापि प्राप्नोति-पञ्चानामन्यतो लब्धपञ्चसंख्यानामुष्ट्रिकाणां पूरणो घट इति? तत्राह—**येनेति**। संख्येत्यस्य विवरणम्—**संख्यानमिति**। इह संख्यावाचिनः प्रत्ययो विधीयते, तत्र प्रत्यासत्त्या यस्य संख्यावाचिनो यत्प्रवृत्तिनिमित्तं संख्यानं पञ्चत्वादि, तस्य पूरण इति विज्ञायते; न तु विप्रकृष्टे पञ्चादिशब्दवाच्यानन्तर्भूते, यथा 'अतिशायने तमबिष्ठनौ' कुत्सित इत्यादाविति भावः। **एकादशानां पूरण** इति। तथा वैयाकरणपाश इत्यत्र प्रवृत्तिनिमित्तकुत्सायामपि याप्यो वैयाकरण इति विग्रहः, न तु याप्यं वैयाकरणत्वमिति; तथेहापि संख्यानपूरणे विवक्षिते संख्येयवाचिनापि विग्रहो न विरुध्यते। **एकादश इति**। पुनर्गणनायां क्रियमाणायां चरमबुद्धिस्थेन येनैकादशत्वसंख्या पूर्यते स इति वेदितव्यः। एवं च व्युत्क्रमेणाष्टाध्यायेषु गण्यमानेषु समर्थः पदविधिः' इत्यध्यायो यदा चरमं गण्यते तदा ['निर्माण]द्वितीयस्यापि गणनाक्रमेणाष्टमत्वव्यपदेशो भवत्येव। ननु प्रकृत्यर्थव्यतिरिक्तेन प्रत्ययार्थेन भवितव्यम्, इह त्वेकादशस्वन्तर्भूत; एकादशानीयन्तामित्युक्ते एकादशस्याप्यानयनात्? सत्यम्, समुदायावयवयोस्तु भेदात् समुदायः प्रकृत्यर्थोऽवयवः प्रत्ययार्थः, यथा-वृक्षस्यावयवो वार्क्षी शाखेति ॥ ४८ ॥

### भावबोधिनी

किया जाता है, वह 'पूरण' है। जिसके द्वारा संख्या=संख्यान पूरित होता है, सम्पन्न हो जाता है वह उस संख्या का पूरण होता है। उदा० एकादशानां पूरणः (ग्यारहवीं संख्या को पूरा करने वाला) इस अर्थ में 'एकादशः'। [ग्यारहवां। एकादशन्+डट्=अ, टि का लोप। ग्यारहवां व्यक्ति उस संख्या को पूरा करने वाला होता है।] त्रयोदशः। [तेरहवां। त्रयोदशानां पूरणः-यह विग्रह है। पूर्ववत् प्रत्यय होता है।] जिसके हो जाने पर दूसरी संख्या बन जाती है वह प्रत्ययार्थ है। इस कारण यहाँ नहीं होता है—पञ्चानां मुष्टिकानां पूरणः घटः। [यहाँ घट बन जाने पर (उष्ट्रिकों) मुष्टिकों की पञ्चत्वं संख्या पूरी नहीं होती है।]

**विमर्श**—भाष्य में "पञ्चानामुष्ट्रिकाणां पूरणो घटः।" यह पाठ है। कैयट ने भी इसी की व्याख्या की है। नागेश ने लिखा हैं—"उष्ट्रिका=चर्मविकारः पात्रविशेषो मृण्मयो वा, यद्घटमितेनोदकेन पञ्च ताः पूर्यन्ते।" परन्तु न्यासकार ने "पञ्चानां मुष्टिकानां पूरणो घटः" यही पाठ माना है। और व्याख्या की है—"न हि घट उपजाते पञ्चत्वं संख्या मुष्टिकाणां सम्पद्यते।" भाष्योक्तपाठ ही उचित प्रतीत होता है।

---

१. अयं प्रक्षिप्तः प्रतिभाति भाष्यादिविरोधात्।

## २०७०. नान्तादसंख्यादेर्मट् ॥ ४९ ॥ ( १८५० )

**'डट्' इति वर्तते । नकारान्तात्संख्यावाचिनः प्रातिपदिकादसंख्यादेः परस्य डटो मडागमो भवति । नान्तादिति पञ्चमी डट आगमसम्बन्धे षष्ठीं प्रकल्पयति । पञ्चानां पूरणः पञ्चमः । सप्तमः ।**

### न्यासः

**नान्तादसंख्यादेर्मट् ॥ डटो मडागमो भवतीति ।** अथ प्रत्यय एव नान्तात् मट् कस्मान्न भवति ? नार्हति प्रत्ययो भवितुम् । प्रत्यये हि तस्मिन् सति डटोऽनुवृत्तिरपार्थिका स्यात्, स हि पूर्वमेव विहितः, न च विहितस्यानुवृत्तिर्विधानार्थोपपद्यत इति । आगमार्थे च सा विज्ञायते । ननु च पञ्चम इत्यादौ न कश्चिद् विशेषः—मट आगमत्वे, प्रत्ययत्वे वा; तदेव हि रूपम्, स एव हि स्वरः, किञ्चानुवृत्तेन, मट एव प्रत्ययत्वमस्तु ? सत्यम् इह नास्ति विशेषः; विंशतितम इत्यादौ तु विद्यते । तथा हि 'विंशत्यादिभ्यस्तमडन्यतरस्याम्' इति मयट्प्रत्ययः स्यात् । विंशतितमप्रभृतयः शब्दाः प्रत्ययस्वरेण मध्योदात्ताः स्युः । डटि तु प्रत्यये सति तस्याद्युदात्तत्वे कृते ततश्चागमानुदात्तत्वेचान्तोदात्ता भवन्ति । तस्मादुत्तरार्थोऽनुवर्तमानस्येहापि डट एव प्रत्ययत्वं विज्ञायते । कथं पुनर्डटो मडागमः शक्यो विधातुम्, यावता प्रथमानिर्दिष्टं प्रकृतं डड्ग्रहणम्, षष्ठीनिर्दिष्टेन चेहार्थः ? इत्याह—**नान्तादित्यादि** । यद्यपि प्रथमान्तं डड्ग्रहणं प्रकृतम्, तथापि डट आगमसम्बन्धेन 'तस्मादित्युत्तरस्य' इति नान्तादित्येषा पञ्चमी डडिति प्रथमायाः षष्ठीं प्रकल्पयतीत्यदोषः । **पञ्चम** इति । टिलोपोऽत्र न भवति; मटि कृते सत्यभसंज्ञकत्वात् । ननु च परत्वात् टिलोपेनैव

### पदमञ्जरी

**नान्तादसंख्यादेर्मट् ॥ डटो मडागमो भवतीति ।** कथं पुनरयमागमः शक्यो विज्ञातुम्, नात्रागमी निर्दिष्टः, यदपि प्रकृतं तदपि प्रथमान्तम्, षष्ठीनिर्दिष्टेन चेहार्थः ? अत आह—**नान्तादिति** । पञ्चमीग्रहणं तावदनुवर्तते, न च तस्य विधानार्थानुवृत्तिः, पूर्वमेव विहितत्वात् । न च विशेषविहितेन मटा बाधप्रसङ्गे विधानार्था डटोऽनुवृत्तिः, एवं हि प्रकृतस्य समुच्चयार्थश्चकारः क्रियेत मट् चेति; यथान्यत्र । ततोऽनुवृत्तिसामर्थ्यात्षष्ठीप्रक्लृप्तावागमित्वमेव विज्ञायते । कः पुनर्मटः प्रत्ययत्वे आगमत्वे वा विशेषः, यावता तदेव रूपं स एव स्वरः ? सत्यम्; डटि मटि च नास्ति विशेषः, 'विंशत्यादिभ्यस्तमडन्यतरस्याम्' इत्ययं तु तमड् यदि प्रत्ययः स्यादाद्युदात्तः स्याद्, आगमत्वेनागमानुदात्तत्वं भवति, न तु प्रत्ययस्वर इति विंशतितम इत्यस्यान्तोदात्तत्वं भवति ।

### भावबोधिनी

एक शंका यह होती है कि प्रकृत्यर्थ और प्रत्ययार्थ में भेद होता है, परन्तु 'एकादशः' यहाँ प्रत्ययार्थ = ग्यारहवाँ तो प्रकृत्यर्थ 'एकादश' (ग्यारह) में ही अन्तर्भूत है क्योंकि यदि यह कहा जाय कि 'एकादश आनीयन्ताम् ।' तो इसमें ग्यारहवाँ व्यक्ति भी लाया ही जाता है ? समाधान यह है कि समुदाय और अवयव में भेद मानकर समुदाय को प्रकृत्यर्थ और अवयव को प्रत्ययार्थ मानकर भेद का उपपादन करना चाहिए ।। ४८ ।।

'डट्' इसकी अनुवृत्ति होती है । वह नकारान्त संख्यावाची प्रातिपदिक जिसके आदि में संख्यावाचक नहीं है, उससे परे 'डट्' को 'मट्' का आगम होता है । [ सूत्र में ] 'नान्तात्' यह पञ्चमी आगम के सम्बन्ध 'डट्' की षष्ठी की कल्पना कराती है । [ भाव यह है कि डट् की अनुवृत्ति होती है और 'नान्तात्' यह पञ्चमी है इसके कारण प्रथमान्त भी डट् को षष्ठ्यन्त कल्पित कर लिया जाता है । इसी लिये 'डट्' को 'मट्' यह आगम होता है । होने से डट् के आदि में जोड़ा जाता है ।] उदा० पञ्चानां पूरणः—इस अर्थ में 'पञ्चमः ।' [पाँचवाँ । पञ्चन् + डट् = टित् अ, मट = म आगम, नलोप । ] सप्तमः । [ सप्तानां पूरणः—यह अर्थ है । ]

नान्तादिति किम् ? विंशतेः पूरणो विंशः। असंख्यादेरिति किम् ? एकादशानां पूरण एकादशः ॥

**२०७१. थट् चच्छन्दसि ॥ ५० ॥ ( ३४६७ )**

नान्तादसंख्यादेः परस्य डटश्छन्दसि विषये थडागमो भवति। चकारात्पक्षे मडपि भवति। पर्णमयानि पञ्चथानि भवन्ति ( काठ० सं० ८. २. )। पञ्चथः ( काठ० सं० ६. ३ )। सप्तथः ( काठ० सं० ३७. ११ )। मट्-- पञ्चममिन्द्रियमस्यापाक्रामन् ( काठ० सं० ६. १२ )।

**२०७२. षट्कतिकतिपयचतुरां थुक् ॥ ५१ ॥ ( १८५१ )**

'डट्' इत्यनुवर्तते, तदिह सप्तम्या विपरिणम्यते। षट्, कति, कतिपय, चतुर्—इत्येतेषां डटि

**न्यासः**

तावद् भवितव्यम् ? नैतदस्ति; अन्तरङ्गो ह्यागमः, स हि प्रत्ययसन्नियोगेनोच्यते। टिलोपस्तूत्पन्ने प्रत्यये भसंज्ञायां सत्यां प्रकृतिप्रत्ययावाश्रित्य भवतीति बहिरङ्गो भवति।

**एकादशानां पूरण एकादश** इति। कथं पुनरस्मात् प्राप्तिः, यावता संख्याग्रहणमनुवर्त्तते, संख्यासमुदायोऽपि हि संख्याग्रहणेन गृह्यते—संख्यायतेऽनयेति कृत्वा। अवश्यं चैतदेवं विज्ञेयम्; अन्यथाऽदशतया न स्यात् ॥ ४९ ॥ **थट् च छन्दसि** ॥ ५० ॥

**षट्कतिकतिपयचतुरां थुक्** ॥ **तदिह सप्तम्येत्यादि**। पूरणाधिकारे ह्ययं विधीयमानो डट्सन्नियोगेन विधीयते। तत्र यद्यपि सप्तमी नास्ति, तथापि डटि परतो विज्ञायते। तेनार्थाद्

**पदमञ्जरी**

**एकादश** इति। नायं संख्यासमुदायः, किं तर्हि ? संख्यान्तरमेव। अत एवात्र डड्भवति; अन्यथा सोऽपि न स्यात्। न हि संख्यासमुदायः संख्याग्रहणेन गृह्यते, यथा जनपदसमुदायो जनपदग्रणेन—काशिकोशलीयाः। अथाप्ययं संख्यासमुदायः; तथापि संख्याग्रहणेन तत्समुदायो गृह्यत इति ज्ञापनार्थमेव 'असंख्यादेः' इति वक्तव्यम्; तेन सर्वमेव संख्याकार्यमेकादशादीनामपि भवति ॥ ४९ ॥ ५० ॥

**षट्कतिकतिपयचतुरां थुक्** ॥ **तदिह सप्तम्या विपरिणम्यत** इति। यदि पूर्ववत् षष्ठ्या विपरिणाम इष्टः स्यात्, पञ्चम्या निर्दिशेत्; षष्ठ्या निर्देशात्तु षषादीनामेवागमित्वं विज्ञायते। ततश्चानु-

**भावबोधिनी**

नकारान्त से—इसका क्या प्रयोजन है ? विंशतेः पूरणः—इस अर्थ में विंशः। [ यही होता है। विंशति + डट् = अ, 'ति' का लोप "ति विंशतेर्डिति" सूत्र से। ]

संख्या आदि में न हो—इसका क्या फल है ? एकादशानां पूरणः। [ यहाँ नहीं होता है क्योंकि इसके आदि में 'एक' यह संख्यावाची है। ] ॥ ४९ ॥

नकारान्त असंख्यादि प्रातिपदिक से परे 'डट्' को 'थट्' का आगम वेदविषय में होता है। 'च' के बल से 'मट्' आगम भी होता है। उदा० "पर्णमयानि पञ्चथानि भवन्ति।" पंचथः। सप्तथः। [ पञ्चानां पूरणः—इस अर्थ में पंचन् + डट् = अ, थट् = थ का आगम पञ्चन् = थ् + अ, नलोप, पञ्चथः। पाँचवा। सप्तथः = सातवाँ। ] मट् भी होता है—"पञ्चमम् इन्द्रियम् अस्याक्रमन्।" [ पञ्चन् + डट् = अ, मट् = म् का आगम होता है। ] ॥ ५० ॥

'डट्' इसकी अनुवृत्ति होती हैं, और उसे सप्तम्यन्त रूप से बदल दिया जाता है। षट्, कति, कतिपय,

**परतस्थुगागमो भवति । कतिपयशब्दो न संख्या । तस्यास्मादेव ज्ञापकाद् डट् प्रत्ययो विज्ञायते । षण्णां पूरणः षष्ठः । कतिथः । कतिपयथः । चतुर्थः ।**

*** चतुरश्छयतावाद्यक्षरलोपश्च *** ( म० भा० ५. २. ५१ वा० १ ) । **चतुर्णां पूरणः तुरीयः, तुर्यः ॥**

## न्यासः

विभक्तिविपरिणामो भवतीति डडिति यद् वर्त्तते तदिह सप्तम्या विपरिणम्यते । **कतिपयशब्दो न संख्येति ।** लौकिकत्वाभावात् संख्या न भवति; लोकेऽस्य संख्यात्वेनाप्रसिद्धत्वात् । शास्त्रीयोऽपि न भवति; शास्त्रे संख्यासंज्ञाऽविधानात् । यदि न संख्या, कथमस्य डट्, यत्र परतस्थुग् विधीयते ? इत्याह—**तस्येत्यादि ।** यदेतदड् डटि परतः कतिपयशब्दस्य थुग्विधानं तत एव ज्ञापकाड् डट्प्रत्ययोऽस्य भवतीत्यवसीयते । **षष्ठ** इति । ष्टुत्वम् । टिलोपोऽत्र न भवति; थुग्विधानसामर्थ्यात् । आगमस्य पूर्वान्तिकरणं भसंज्ञार्थम् । यदि परादिः क्रियते ततो भसंज्ञा न स्यात्, तथा चासत्याम्, 'स्वादिष्वसर्वनामस्थाने' इति पदसंज्ञा स्यात् । ततश्च षष्ठ इत्यत्र जश्त्वं प्रसज्येत । **चतुर्थ** इति । अत्र रेफस्य 'विसर्जनीयस्य सः' इति सत्वम् । पूर्वान्ते तु संज्ञायां सत्यां न भवति ॥ ५१ ॥

## पदमञ्जरी

वृत्तस्य डटोऽर्थात्सप्तम्या विपरिणाम इत्यर्थः । एवं च कृत्वा षष्ठाष्टमाभ्यां द्वितीयतृतीयचतुर्थेति निर्देश उपपद्यते । **कतिपयशब्दो न संख्येति ।** यद्यप्यसावतिप्रचयरहितं बहुत्वमाचष्टे, तथापि लोके संख्यात्वेन न प्रसिद्धः, यथा-द्वित्राः पञ्चषा इति । शास्त्रेऽपि नैवास्य संख्यासंज्ञा विहिता कथं तर्हि डट्प्रत्ययः ? इत्याह—**तस्येति ।** किं पुनस्थुग्विधीयते, न पञ्चमीनिर्देशेन प्रकृतस्थडेव विधीयत ? नैवं शक्यम्; इह षष्ठ इति जश्त्वं प्राप्नोति, चतुर्थ इति रेफस्य विसर्जनीयस्तस्य च सत्वं प्राप्नोति; थटः परादित्वेन पूर्वस्य पदत्वात् । यदि पुनः पूर्वसूत्रे थुगेव विधीयेत ? नैवं शक्यम्; पञ्चथः, सप्तथः—नलोपो न स्यात् । इह लिङ्गविशिष्टपरिभाषया कतिपयशब्दादाबन्तादपि थुग्भवति, तत्र 'भस्याढे तद्धिते' ( वा० ७३१ ) इति डटि विषयभूत एव पुंवद्भावः, कतिपयानां पूरणी कतिपयथीति भवति ।

**चतुरश्छयताविति ।** छयद्भ्यां डट् न बाध्यते; डटि परतस्थुग्विधानात् । **आद्यक्षरलोपश्चेति ।** अच्सहितं व्यञ्जनमक्षरशब्देनोच्यते, अच्सहितस्यादेर्व्यञ्जनस्येत्यर्थः । व्यञ्जनसहिताज्वचने त्वक्षरशब्दे द्विवर्चनन्यायेन तकारस्यापि लोपः स्यात् ॥ ५१ ॥

## भावबोधिनी

चतुर्—इन शब्दों से डट् परे रहते थुक् (थ्) का आगम होता है । 'कतिपय' शब्द संख्यावाची नहीं है । इसी सूत्र के ज्ञापक होने से ही 'कतिपय' से 'डट्' प्रत्यय का ज्ञान होता है । [ भाव यह है कि प्रस्तुत सूत्र डट् परे रहने पर ही 'कतिपय' से 'थुक्' आगम करता हे । यदि डट् नहीं होगा तो यह आगमविधान व्यर्थ हो जायगा । अतः व्यर्थ होकर वह ज्ञापित करता है कि 'कतिपय' से भी 'डट्' होता है । ] उदा० षण्णां पूरणः—इस अर्थ में 'षष्ठः' । [ षष्+डट्=अ, थुक्=थ् आगम षष् थ्+अ ष्टुत्व करने पर—षष्ठः । ] कतिथः । [कतीनां पूरणः । कौथा] कतिपयथः । [ कतिपयानां पूरणः—यह अर्थ है । ] चतुर्थः । [ चतुर्णां पूरणः । चौथा । ]

* चतुर् शब्द से 'छ' और 'यत्' प्रत्यय होते हैं तथा आद्यक्षर (=स्वरव्यञ्जन-समुदाय=च ) का लोप भी होता है । * उदा० चतुर्णां पूरणः—इस अर्थ में—(१) तुरीयः, (२) तुर्यः । [ चतुर्+छ=ईय आदेश, आद्यक्षर=च का लोप—तुर्+ईय=तुरीयः । चतुर्+य, आद्यक्षर का लोप—तुर्यः] ॥ ५१ ॥

## २०७३. बहुपूगगणसङ्घस्य तिथुक् ॥ ५२ ॥ ( १८५२ )

**'डटि' इत्येव । बहु, पूग, गण, सङ्घ — इत्येतेषां डटि परतस्तिथुगागमो भवति । पूगसङ्घशब्दयोरसङ्ख्यात्वादिदमेव ज्ञापकं डटो भावस्य । बहूनां पूरणो बहुतिथः । पूगतिथः । गणतिथः । सङ्घतिथः ॥**

## २०७४. वतोरिथुक् ॥ ५३ ॥ ( १८५३ )

**'डटि' इत्येव । वतोर्डटि परत इथुगागमो भवति । वत्वन्तस्य सङ्ख्यात्वात्पूर्वेण डड्विहितस्तस्मिन्नयमागमो विधीयते । यावतां पूरणो यावतिथः । तावतिथः । एतावतिथः ॥**

### न्यासः

**बहुपूगगणसङ्घस्य तिथुक् ॥ पूगसङ्घयोरसंख्यात्वादिति ।** अत्र कथं प्रत्यय इति, पूगसङ्घशब्दौ हि न लौकिकी संख्या, नापि शास्त्रीया, तत् कथं ताभ्यां डट्प्रत्ययः, यत्र परतस्तयोस्तिथुग् विधीयते, डटि च विधानम् । अथात्रोत्तरमाह—**इदमेवेत्यादि** । यदेतड् डटि परतस्तयोस्तिथुको विधानमेतदेव ज्ञापयति—भवति ताभ्यां डट्प्रत्यय इति । न ह्यसतस्तिथुगागमं प्रति निमित्तभाव उपपद्यते ॥ ५२ ॥

**वतोरिथुक् ॥ यावतिथ इति ।** 'यत्तदेतेभ्यः परिमाणे वतुप्', 'आ सर्वनाम्नः' ॥ ५३ ॥

### पदमञ्जरी

**बहुपूगगणसङ्घस्य तिथुक् ॥** अत्रापि षष्ठीनिर्देशाद् बह्वादीनामेवागमित्वम् । **पूगसङ्घयोरित्यादिरेक** एव ग्रन्थः । इह बह्वीनां पूरणीति पूर्ववड्डट् प्रत्ययः पुंवद्भावश्च ॥ ५२ ॥

**वतोरिथुक् ॥** अत्रापि पूर्ववद्वत्वन्तस्यैवागमित्वम् । इह तावतीनां पूरणी तावतिथीति लिङ्गविशिष्टपरिभाषया प्रत्ययः, पुंवद्भावश्च । कथं पुनरत्र लिङ्गविशिष्टपरिभाषा, यावता प्रातिपदिकस्वरूपग्रहणे सा भवतीत्युक्तम् ? यत्रापि प्रातिपदिकविशेषणं स्वरूपेणोपादीयते, तत्रापि सा भवति, यथा—'तृजकाभ्यां कर्तरि'—अपां स्रष्ट्रीति । इहापि वतोरिति विशेषणं स्वरूपेणोपादीयते, तेन भवत्येव लिङ्गविशिष्टस्य ग्रहणम् । उक्तं च—"बहुकतिपयवस्तूनां लिङ्गविशिष्टादुत्पत्तिः; "प्रातिपदिकग्रहणे लिङ्गविशिष्टस्यापि ग्रहणात्' ( व्या० परि० २९ ) इति ॥ ५३ ॥

### भावबोधिनी

'डट्' इसकी अनुवृत्ति होती है । 'बहु, पूग, गण, सङ्घ—इनको डट् परे रहते तिथुक् ( तिथ् ) का आगम होता है । 'पूग' और 'संघ' शब्द संख्यावाची नहीं हैं अतः यही सूत्र इनसे भी 'डट्' के आगम का ज्ञापक बनता है । [ अन्यथा तिथुक् आगम संभव न होने से यह विधान व्यर्थ हो जायगा । ] उदा० बहूनां पूरणः—इस अर्थ में—बहुतिथः । [ बहु + डट् = अ, तिथुक् = तिथ् आगम—बहु तिथ् अ ] पूगतिथः । गणतिथः । सङ्घतिथः । [ "पूगः क्रमुकवृन्दयोः ।" अमरकोष ३।३।२० के अनुसार पूग = समूह का वाचक है । गण और संघ भी समूहवाचक हैं । अतः पूगस्य पूरणः, गणस्य पूरणः, सङ्घस्य पूरणः—इन विग्रहो में डट् करने के बाद तिथुक् = तिथ् करना चाहिये । समूह का अन्तिम व्यक्ति इनसे समझना चाहिये ] ॥ ५२ ॥

'डट्' इसकी अनुवृत्ति होती है । वत्वन्त से परे डट् को इथुक् = इथ् का आगम होता है । [ "बहुगणवतुडति संख्या" पा. सू. १।१।२३ से ] वत्वन्त की संख्या संज्ञा होने के कारण पूर्व सूत्र से डट् किया गया है उसी के परे रहते यह इथुक् = इथ् आगम किया जा रहा है । उदा० यावतां पूरणः—इस अर्थ में—**यावतिथः** । **तावतिथः** [ तावतां पूरणः—यह अर्थ है । ] एतावतिथः । [ एतावतां पूरणः—यह अर्थ है । यावत् + डट् = अ, इथुक् = इथ् आगम–यावत् + इथ् + अ यावतिथः । इसी प्रकार अन्य में भी समझना । जितनवां, उतनवां, इतनवां —

**२०७५. द्वेस्तीयः ॥ ५४ ॥ ( १८५४ )**

**द्विशब्दात्तीयः प्रत्ययो भवति 'तस्य पूरणे' इत्यस्मिन्विषये। डटोऽपवादः। द्वयोः पूरणो द्वितीयः ॥**

**२०७६. त्रेः संप्रसारणं च ॥ ५५ ॥ ( १८५५ )**

**त्रिशब्दात्तीयः प्रत्ययो भवति 'तस्य पूरणे' इत्येतद्विषये। तत्सन्नियोगेन त्रेः संप्रसारणं च भवति। डटोऽपवादः। त्रयाणां पूरणस्तृतीयः। 'हलः' ( ६. ४. २ ) इति संप्रसारणस्य दीर्घत्वं न भवति। 'अणः' इति तत्रानुवर्त्तते—'ढ्रलोपे' ( ६. ३. १११ ) इत्यतः, पूर्वेण च णकारेणाण्ग्रहणम् ॥**

**न्यासः**

**द्वेस्तीयः ॥ द्विशब्दात् तीयप्रत्ययो भवतीति।** अथ द्विशब्दादुत्तरस्य डटस्तीयादेशः कस्मादेव न भवति? ज्ञापकत्वात्। यदयम् 'कर्मणि द्वितीया' इति टापा निर्देशं करोति, तज्ज्ञापयति—नायमादेश इति। यद्येवमनेनैव सिद्धत्वात् प्रत्ययविधानमनर्थकम्? न, स्वरार्थत्वात्। निपातनाद्धि प्रातिपदिकस्वरेणान्तोदात्तः स्यात्। तीयप्रत्यये तु प्रत्ययस्वरेण मध्योदात्तो भवति। किञ्च—यदि प्रत्ययो न विधीयते 'बाधकान्यपि निपातनानि भवन्ति' इति डडपि स्यात्। यदि पुनरयं डडादेशः स्यात्, तर्हि किं स्यात्? डटस्वरेण तीयशब्दोऽन्तोदात्तः स्यात्, स्त्रियां च टित्वान्ङीप्, ततश्च द्वितीयेति निर्देशो नोपपद्यते ॥ ५४ ॥

**त्रेः संप्रसारणञ्च ॥ अण इति तत्र वर्त्तत इति।** 'ढ्रलोपे पूर्वस्य दीर्घोऽणः' इत्यतः। ननु च परेण णकारेणाण्ग्रहण ऋकारोऽप्यण् भविष्यति? इत्यत आह—**पूर्वेण चेत्यादि।**

अत्र 'त्रेस्तृ च' इत्येवं कस्मान्नोक्तम्? अशक्यमेवं वक्तुम्, एवं ह्युच्यमाने संन्देहः स्यात्—किमय-

**पदमञ्जरी**

**द्वेस्तीयः ॥ तीयप्रत्ययो भवतीति।** डटो द्विशब्दस्य चादेशो न भवति; द्वितीयेति निर्देशात्। यद्येवम्, तस्मादेव निर्देशान्न सिद्धमस्य साधुत्वम्? सिद्धयतु साधुत्वम्, पूरणार्थस्तु कथं लभ्यते! किञ्च तदाश्रयणे प्रकृतिप्रत्ययविभागाभावात्प्रातिपदिकस्वरेणान्तोदात्तत्वं स्यात्, 'अबाधकान्यपि निपातनानि भवन्ति' इति पक्षे डटः प्रसङ्गश्च ॥ ५४ ॥

**त्रेः सम्प्रसारणं च ॥ अण इति तत्रानुवर्त्तत इति।** 'ढ्रलोपे पूर्वस्य दीर्घोऽणः' इत्यतः; एवमपि यदि परेण णकारेण प्रत्याहारः स्यात्पुनरपि स्यादेव दीर्घः, स तु न तथा? इत्याह—**पूर्वेणेति।** एतच्च 'लण्' इत्यत्रैव प्रतिपादितम्।

'त्रेस्तृ च' इति नोक्तम्, प्रत्ययो मा विज्ञायीति ॥ ५५ ॥

**भावबोधिनी**

ऐसे शब्द हिन्दी में प्रयुक्त नहीं होते हैं। अतः प्रस्तुत उदाहरणों का अनुवाद कल्पित करना चाहिए ] ॥ ५३ ॥

'तस्य पूरणे' ( उसको पूरा करने वाला ) इस अर्थ में 'द्वि' शब्द से 'तीय' प्रत्यय होता है। यह 'डट्' का अपवाद है। उदा० द्वयोः पूरणः—इस अर्थ में—द्वितीयः। [ द्वि+तीय। दूसरा। ] ॥ ५४ ॥

'तस्य पूरणे' ( उसको पूरा करने वाला ) इस विषय में 'त्रि' शब्द से 'तीय' प्रत्यय होता है और उसके सन्नियोग से 'त्रि' का सम्प्रसारण भी होता है। यह 'डट्' का अपवाद है। उदा० त्रयाणां पूरणः—इस अर्थ में—तृतीयः। [ त्रि+तीय, रेफ का सम्प्रसारण, इ का पूर्वरूप—तृतीयः। तीसरा ] "हलः" ( पा. सू. ६।४।२ ) से

## २०७७. विंशत्यादिभ्यस्तमडन्यतरस्याम् ॥ ५६ ॥ ( १८५६ )

**विंशत्यादिभ्यः परस्य डटस्तमडागमो भवत्यन्यतरस्याम् । पूरणाधिकाराद् डट् प्रत्यय आगमो विज्ञायते । विंशतेः पूरणः विंशतितमः, विंशः । एकविंशतितमः, एकविंशः । त्रिंविंशतितमः, त्रिंविंशः । त्रिंशत्तमः, त्रिंशः । एकत्रिंशत्तमः, एकत्रिंशः ।**

**विंशत्यादयो लौकिकाः सङ्ख्याशब्दा गृह्यन्ते, न पङ्क्त्यादिसूत्रसन्निविष्टाः । तद्ग्रहणे ह्येकविंशतिप्रभृतिभ्यो न स्यात् ; ग्रहणवता प्रातिपदिकेन तदन्तविधिप्रतिषेधात् ( व्या० परि० ८६ ) । एवं**

**न्यासः**

मादेशः, उत प्रत्ययः ? इति ॥ ५५ ॥

**विंशत्यादिभ्यस्तमडन्यतरस्याम्** ॥ **विंशत्यादिभ्यः परस्येत्यादि** । ननु च तीयप्रत्ययेन डड् व्यवहितः, तत् कथं तमडागमः शक्यो विज्ञातुम् ? अत आह—**पूरणाधिकरादिति** । पूरणार्थे यो विहितस्तस्य विंशत्यादिभ्यः परस्य तमड् विधीयते, स नान्यो डटः सम्भवतीति डडेव विज्ञायते ।

**विंशत्यादयो लौकिकाः संख्याशब्दा गृह्यन्त** इति । व्याप्तेर्न्यायात् । ते पुनर्त्रिंशत्येकविंशति प्रभृतयः संगृहीता भवन्ति । किं पुनः स्याद् यदि पङ्क्त्यादिसूत्रे सन्निविष्टा गृह्येरन् ? इत्याह—**तत्र ग्रहणे ह्येकविंशतिप्रभृतिभ्यो न स्यादिति** । पङ्क्त्यादिसूत्रेण तेषामसन्निविष्टत्वात् । स्यादेतत्—तदन्तविधिना तेभ्योऽपि भविष्यति ? इत्यत आह—**ग्रहणवतेत्यादि** । ननु च 'असंख्यादेः' इति प्रतिषेधात्

**पदमञ्जरी**

**विंशत्यादिभ्यस्तमडन्यतरस्याम्** ॥ **विंशत्यादिभ्यः परस्येति** । कथं पुनः 'द्वेस्तीयः' इति तीयप्रत्ययेन विच्छिन्नस्य डट आगमित्वं शक्यं विज्ञातुम् ? तत्राह—**पूरणाधिकारादिति** । सत्यं डट्प्रत्ययो विच्छिन्नः; पूरणार्थस्तु न विच्छिन्नः, सोऽनुवर्त्तते, तेन पूरणे यो विहितः स आगमी विज्ञायते । न च डटोऽन्यो विंशत्यादिभ्यः पूरणे विहितोऽस्ति ।

कः पुनः पङ्क्त्यादिसूत्रनिर्दिष्टानां ग्रहणे सति दोषः ? तत्राह—**तद्ग्रहणे हीति** । स्यादेतत्—तदन्तविधिना एकविंशतिप्रभृतिभ्योऽपि भविष्यतीति ? तत्राह—**ग्रहणवतेति** । ननु यदयं 'षष्ट्यादेश्चा-

**भावबोधिनी**

सम्प्रसारण का दीर्घ नहीं होता है क्योंकि उस सूत्र में "ढ्रलोपे पूर्वस्य दीर्घोऽणः" ( पा. सू. ६।३।१११ ) से 'अण्' की अनुवृत्ति होती है और अण् में प्रथम णकार से ही प्रत्याहार माना जाता है । [ अतः 'ऋ' के दीर्घ की प्राप्ति नहीं है ] ॥ ५५ ॥

'विंशति' आदि से परे 'डट्' के लिए विकल्प से 'तमट्' का आगम होता है । 'पूरण' का अधिकार है अतः 'डट्' प्रत्यय आगमी [ जिसके लिए आगम होता है ऐसा ] ज्ञात होता है । विंशतेः पूरणः—इस अर्थ में—(१) विंशतितमः, (२) विंशः [ दो रूप होते हैं । विंशति+डट्=अ, तमट् का वैकल्पिक आगम होने से 'ति' का लोप न होकर 'विंशतितमः' और आगम न होने पर 'ति विंशतेर्डिति' सूत्र से 'ति' का लोप हो जाने पर 'विंशः' ये रूप होते हैं । ] एकविंशतितमः, एकविंशः । [ एकविंशतेः पूरणः—यह अर्थ है । इक्कीसवाँ । ] त्रिविंशतितमः, त्रिविंशः । [ त्रिविंशतेः पूरणः—यह अर्थ है । तेईसवाँ । ] त्रिंशत्तमः, त्रिंशः । [ तमट् न होने पर टि लोप होता है । तीसवाँ । ] एकत्रिंशत्तमः, एकत्रिंशः । [ एकतीसवाँ ]

विंशति आदि शब्द लौकिक संख्यावाची लिये जाते हैं न कि "पङ्क्तिविंशतित्रिंशत्० (पा० सू० ५।१।५९) आदि सूत्र में सन्निविष्ट । कारण यह है कि यदि सूत्र में उल्लिखित शब्दों का ग्रहण माना जाता तब तो 'एक०

**च सति 'षष्टयादेश्चासङ्ख्यादेः' ( ५. २. ५८ ) इति पर्युदासो युज्यत एव ॥**

## न्यासः

तदन्तविधिरिति विज्ञायते ? नैवं शक्यम्; 'व्यपदेशिवद्भावोऽप्रातिपदिकेन' इति केवलेभ्यो न स्यात्। **एवञ्चेत्यादि**। लौकिकानां ग्रहणे सति विंशत्यादिभ्यः प्राप्तौ सत्याम्। **षष्टयादेश्चासंख्यादेरिति पर्युदासो युज्यत इति**। अन्यथा कथञ्चिन्न प्रयुज्यते। सूत्रसन्निविष्टानां तु ग्रहणे तदन्तविधिज्ञापनार्थः पर्युदासो न प्रयुज्यत एव,* केवलानामप्राप्तिप्रसङ्गात् ॥ ५६ ॥

## पदमञ्जरी

संख्यादेः' इत्याह, तज्ज्ञापयति—भवति पूरणप्रकरणे तदन्तविधिरिति। तेनैकविंशतिप्रभृतिभ्योऽपि भविष्यति। अस्त्वेतत्, केवलेभ्यस्तु न स्यात्, अतदन्तत्वात्। व्यपदेशिवद्भावेन भविष्यति, 'व्यपदेशिवद्भावोऽप्रातिपदिकेन ( शा० परि० ६५ )। एवं चेत्यादि। लौकिकानां विंशत्यादीनां यदीदं ग्रहणम्, तदा षष्टयादेश्च' इत्यत्रापि लौकिकानामेव षष्टयादीनां ग्रहणम्, ततश्चैकषष्टिप्रभृतिभ्यो नित्यस्य तमटः प्रसङ्गे 'असंख्यादेः' इति पर्युदासो युज्यत एव। [न कथञ्चिन्न युज्यते; अनिष्टलेशस्याभावात्।] सूत्रसन्निविष्टानां तु ग्रहणे तदन्तविधिज्ञापनार्थं पर्युदासो [न] युज्यते। केवले तु न युज्यत एव, केवलानामप्रसङ्गादिति तावद्वृत्तरर्थः। यथा तु भाष्य तथा सूत्रसंनिविष्टानां ग्रहणम्, ज्ञापनाच्च तदन्तविधिरिति स्थितम्। न च केवलानामप्रसङ्गस्तदन्तानामपि भवतीति ज्ञापनशरीरम्, न तु तदन्तानामेव भवतीति। यदि वा यत्र प्रातिपदिकस्य श्रुतिरस्ति—'ग्रहणवता प्रातिपदिकेन' ( व्या० परि० ८९ ), 'व्यपदेशिवद्भावोऽप्रातिपदिकेन' (शा० परि० ६५) इति, तदुभयमपि न प्रवर्तत इति सामान्येन ज्ञापनम्। एवं च कृत्वेदमपि सिद्धं भवति—एकान्नविंशतेः पूरणः एकान्नविंशतितम इति। भवति ह्येतत्सूत्रसन्निविष्टविंशत्यन्तं संख्यादि संख्यावाचि च। लौकिकानां तु ग्रहणे नैतत्सिध्यति; विंशतेः प्राग्भावित्वादस्यास्संख्यायाः ॥ ५६ ॥

## भावबोधिनी

विंशति' आदि से यह आगम नहीं हो पाता (क्योंकि सूत्र में केवल विंशति आदि ही है)। क्योंकि 'उपात्त प्रातिपदिक के साथ तदन्तविधि नहीं होती है।' [ अतः विंशति से 'एकविंशति' का ग्रहण नहीं होगा।] और ऐसा होने पर "षष्टयादेश्चासंख्यादेः" ( पा० सू० ५।२।५८ ) इस सूत्र में पर्युदास उचित ही है। [ क्योंकि यहाँ जैसे लौकिक 'विंशति' आदि लिए जाते हैं इसी प्रकार अग्रिम सूत्र "षष्टयादेश्चासंख्यादेः" सूत्र में भी लौकिक ही लिये जायेंगे। 'षष्टि' के समान 'एकषष्टि' से भी प्राप्त होगा। उसका वारण करने के लिए 'असंख्यादेः' यह नञ् पर्युदास उचित ही है। ]

**विमर्श**—प्रस्तुत सूत्र में 'विंशति' आदि से किन शब्दों को लिया जाय—इस पर मतभेद है। काशिकाकार यह मानते हैं कि लोक में संख्यावाची रूप से 'विंशति', 'एकविंशति' आदि जितने प्रसिद्ध हैं, सभी का ग्रहण होता है। यदि "पङ्क्त्यादि" सूत्र में गृहीत 'विंशति' आदि का ग्रहण मानेगें तो 'एकविंशति' आदि शब्दों से आगम नहीं हो पायेगा। क्योंकि सूत्र में इनका उल्लेख नहीं है। और तदन्तविधि मानना संभव नहीं है क्योंकि "ग्रहणवता प्रातिपदिकेन तदन्तविधिर्नास्ति" और "व्यपदेशिवद्भावोऽप्रातिपदिकेन" ये दो नियम हैं।

परन्तु भाष्यकार तथा सिद्धान्तकौमुदीकार और उनके अनुयायी यहाँ लौकिक संख्या का ग्रहण न मानकर सूत्रोपात्त संख्या का ही ग्रहण मानते हैं। अब समस्या यह है कि "षष्टयादेश्चासंख्यादेः" इस सूत्र में 'असंख्यादेः' यह पर्युदास कैसे सार्थक होगा क्योंकि सूत्रोपात्त कोई भी संख्यादि नहीं है। इसका समाधान यह है कि इस पर्युदासबल से ही यह ज्ञापन मानना चाहिए कि यहाँ 'तदन्तविधि' होती है। अतः 'विंशति' से 'एकविंशति' का भी ग्रहण होता

## २०७८. नित्यं शतादिमासार्धमाससंवत्सराच्च ॥ ५७ ॥ ( १८५७ )

शतादयः संख्याशब्दा लौकिका गृह्यन्ते। शतादिभ्यो मासार्धमाससंवत्सरशब्देभ्यश्च परस्य डटो नित्यं तमडागमो भवति। मासादयः सङ्ख्याशब्दा न भवन्ति, तेभ्योऽस्मादेव ज्ञापकाद् डट् प्रत्ययो विज्ञायते। शतस्य पूरणः शततमः। सहस्रतम। लक्षतमः। मासस्य पूरणो मासतमो दिवसः। अर्धमासतमः। संवत्सरतमः।

'षष्टयादेश्चासङ्ख्यादेः' ( ५. २. ५८ ) इति वक्ष्यमाणेन सिद्धे शतादिग्रहणं सङ्ख्याद्यर्थम्। एकशततमः। द्विशततमः॥

## २०७९. षष्टयादेश्चासंख्यादेः ॥ ५८ ॥ ( १८५८ )

षष्टयादेः सङ्ख्याशब्दादसङ्ख्यादेः परस्य डटो नित्यं तमडागमो भवति। 'विंशत्यादिभ्यः' ( ५. २. ५६ ) इति विकल्पेन प्राप्ते नित्यार्थम्। षष्टितमः। सप्ततितमः[१]।

### न्यासः

नित्यं शतादिमासार्धमाससंवत्सराच्च॥ शतादिग्रहणमित्यादि। संख्यादिभ्यः शतादिभ्यो यथा स्यादित्येवमर्थं शतादिग्रहणम्। अथ नित्यग्रहणं किमर्थम्, यावताऽऽरम्भसामर्थ्यादेव नित्यो विधिर्भविष्यति ? भवेच्छतादिभ्यः आरम्भसामर्थ्यादित्येवम्। मासादिभ्यस्त्वन्यतरस्यांग्रहंणानुवृत्तेर्विभाषा स्यात्। ननु चास्वरितत्वादेव निवर्तिष्यतेऽन्यतरस्यांग्रहणम् ? विस्पष्टार्थं तर्हि नित्यग्रहणम्॥ ५७॥

शष्टयादेश्चासंख्यादेः॥ प्राक्शतात् षष्टयादयो विज्ञेयाः। शतादीनां स्वशब्देन तमटो

### पदमञ्जरी

नित्यं शतादिमासार्धमाससंवत्सराच्च॥ मासादय इत्यादिर्विज्ञायत इत्यन्त एको ग्रन्थः।

अथ शतादिग्रहणं किमर्थम्, यावता 'षष्ट्यादेश्च' इति वक्ष्यमाणेनैव सिद्धम् ? तत्राह—षष्टयादेरित्यनेनैवेति। यदि तेन स्याद्, एकशतादिभ्यो न स्याद्; असंख्यादेरिति प्रतिषेधात्॥ ५७॥

षष्टयादेश्चासंख्यादेः॥ संख्यादेस्तु विकल्प एव भवतीति। न ह्ययं विकल्पस्यापि प्रतिषेधः।

### भावबोधिनी

है। अतः प्रस्तुत सूत्र के लक्ष्यों के समान 'षष्ठ्यादेश्चासंख्यादेः' के लक्ष्यों में भी तमट् प्राप्त है उसका वारण करने के लिए नञ् 'पर्युदास चरितार्थ है। इसीलिये 'एकान्नविंशतेः पूरणः' इस अर्थ में 'एकान्नविंशतितमः' यही होता है। यदि लौकिक संख्याओं का ही ग्रहण होता तो उक्त उदाहरण से तमट् नहीं हो पाता क्योंकि 'एकान्नविंशति' यह बीस से पहले की संख्या है। ज्ञापन के बल से ही उक्त तदन्तविधि की प्रतिषेधिका परिभाषायें भी नहीं प्रवृत्त होती हैं। पदमंजरी में इस पर विशद विचार है। कैयट के प्रदीप में भी इसकी चर्चा है॥ ५६॥

शत आदि लौकिक संख्यावाची शब्द ही लिये जाते हैं। शतादि से और मास, अर्धमास, संवत्सर—इन शब्दों से परे डट् को तमट् का आगम नित्य होता है। मास आदि संख्याशब्द नहीं होते हैं, इसी ज्ञापक के कारण उनसे डट् प्रत्यय होना भी ज्ञापित होता है। उदा० शतस्य पूरणः—इस अर्थ में—शततमः। [ सौवाँ—यह होता है। ] सहस्रतमः [ हजारवाँ ]। लक्षतमः। [ लाखवाँ ] मासस्य पूरणः—इस अर्थ में 'मासतमः दिवसः।' [ महीना को पूरा करने वाला अर्थात् अन्तिम दिन। ] अर्धमासतमः। [ अर्धमासस्य पूरणः—यह विग्रह है। पन्द्रहवां दिन।] संवत्सरतमः। [ 'संवत्सरस्य पूरणः'—यह अर्थ है। ]

अग्रिम सूत्र "षष्टयादेश्चासंख्यादेः" इस से वक्ष्यमाण सूत्र से ही शत आदि से तमट् सिद्ध रहने पर इस में

१. 'अशीतितमः, नवतितमः'—इत्यधिकं पुस्तकान्तरे।

असङ्ख्यादेरिति किम् ? एकषष्टः। एकषष्टितमः। एकसप्तः। एकसप्ततिमः॥

**२०८०. मतौ छः सूक्तसाम्नोः ॥ ५६ ॥ ( १८५६ )**

'मतौ' इति मत्वर्थ उच्यते। प्रातिपदिकान्मत्वर्थे छः प्रत्ययो भवति सूक्ते सामनि चाभिधेये। मत्वर्थग्रहणेन समर्थविभक्तिः, प्रकृतिविशेषणम्, प्रत्ययार्थ इति सर्वमाक्षिप्यते। अच्छावाकशब्दोऽस्मिन्निति

**न्यासः**

विधानात्॥ ५८॥

**मतौ छः सूक्तसाम्नोः॥ मताविति मत्वर्थ उच्यते**; साहचर्यात्। **मत्वर्थनेत्यादि। समर्थविभक्तिः** प्रथमा, **प्रकृतिविशेषणम्**—अस्तित्वम्, **प्रत्ययार्थः**—अस्यास्मिन्निति च, सर्वमेतद् मत्वर्थग्रहणेन **आक्षिप्यत इति।** सन्निधाप्यते, उपस्थाप्यत इत्यर्थः। युक्तं यन्मतुब्ग्रहणे प्रत्ययार्थ आक्षिप्यते; तस्य तद्विषयत्वात्। समर्थविभक्त्यादि कथमाक्षिप्यते? अर्थसाहचर्यात्।

**पदमञ्जरी**

पर्युदासो ह्ययं संख्यादेः, न विधिर्न प्रतिषेधः, यदि केनचित् प्राप्नोति भवत्येव, पूर्वेण च प्राप्नोति, प्रसज्य-प्रतिषेधेऽप्यनन्तरा प्राप्तिः प्रतिषिध्यते, न व्यवहिता॥ ५८॥

**मतौ छः सूक्तसाम्नोः॥ मताविति मत्वर्थ उच्यत** इति। साहचर्याद् मुख्यस्य ग्रहणं न भवति। कथं हि मतुरभिधेयः स्याच्छब्दस्य शब्दः? **मत्वर्थग्रहणेनेत्यादि।** समर्थविभक्तिः प्रथमा, प्रकृतेरर्थद्वारकं विशेषणम् अस्तित्वम्, प्रत्ययार्थः-अस्यास्मिन्निति च। तत्र यद्यपि प्रत्ययार्थो मतोरभिधेयम्, इतरदन-

**भावबोधिनी**

शतादि का ग्रहण संख्यादि [ =संख्या है आदि में जिसके ऐसे ] शतादि का ग्रहण ज्ञापित करने के लिए है। [ क्योंकि अग्रिम सूत्र असंख्यादि से ही आगम करता है। प्रस्तुत सूत्र संख्यादि शतादि से भी करता है अत: ] एकशततमः द्विशततमः। [ एक सौवाँ, दो सौवाँ। यहाँ एक और दो संख्या आदि में हैं तो भी तमट् आगम होता है ]॥ ५७॥

जिनके आदि में संख्यावाची शब्द नहीं है ऐसे 'षष्टि' आदि शब्दों से परे डट् को नित्य तमट् आगम होता है। "विंशत्यादिभ्यस्तमट्" इस पूर्वोक्त सूत्र से विकल्प से प्राप्त रहते नित्य आगम करने के लिए यह सूत्र है। उदा० षष्टितमः, सप्ततितमः। [ साठवाँ। सत्तरवाँ—ये अर्थ हैं। ]

[ यहाँ षष्टि से लेकर 'नवति' तक ही लिये जाते हैं क्योंकि शत और उसके बाद के सङ्ख्यावाची से तमट् का आगम पूर्व सूत्र से ही किया जा चुका है। ]

असङ्ख्यादि ( जिसके आदि मे सङ्ख्यावाची न हो )—इसका क्या प्रयोजन है? एकषष्टः, एकषष्टि-तमः। एकसप्तः, एकसप्ततितमः। [ यहाँ नित्य तमट् न होकर "विंशत्यादिभ्यस्तमडन्यतरस्याम्" इस पूर्वसूत्र से विकल्प से होता है। अत: केवल डट् रहने पर टिलोप हो जाता है। यहाँ सङ्ख्यावाची लौकिक लिये जाते हैं या "पंक्तिविंशति" आदि सूत्र में उपात्त—इसका विवेचन 'विंशत्यादिभ्यः' ५।२।५७ में किया जा चुका है ]॥ ५८॥

'मतौ' इससे मतुप् प्रत्यय के अर्थ में—ऐसा कहा गया है। प्रातिपदिक से मत्वर्थ में 'छ' प्रत्यय होता है यदि सूक्त और साम अर्थ हो तो। मत्वर्थ के ग्रहण से [ प्रथमा—यह ] समर्थविभक्ति [ अस्तित्व=होना—यह ] प्रकृति का विशेषण और [ अस्य या अस्मिन्—यह ] प्रत्ययार्थ—इन सभी का आक्षेप होता है, उपस्थापन होता है। [ मतुबर्थ का विषय होने से उसकी सभी विशेषतायें यहाँ भी उपस्थित हो जाती हैं। "तद् अस्य अस्ति अस्मिन् इति मतुप्" ( पा० सू० ५।२।९४ ) यह सूत्र जिस स्थिति में मतुप् करता है। उसी में यह

**अच्छावाकीयं सूक्तम् । मित्रावरुणीयम् । यज्ञायज्ञीयं साम । वारवन्तीयम् ।**

**अनुकरणशब्दाश्च स्वरूपमात्रप्रधानाः प्रत्ययमुत्पादयन्ति, तेनानेकपदादपि[1] सिद्धम्—अस्य-**

**न्यासः**

अथ वा—प्रधानानुवृत्तित्वाद् गुणानाम्, प्राधान्येन प्रत्ययार्थे उपस्थापिते प्रत्ययसामर्थ्यात् तदपि गुणभूतमुपस्थाप्यत एव। इहास्यवामादिशब्दोऽनेकपदान्तत्वाद् वाक्यम्। वाक्यस्य चार्थवत्समुदायानां समासग्रहणं नियमार्थमिति प्रातिपदिक-संज्ञा नास्ति, अतस्तेभ्यो न प्राप्नोति; अप्रातिपदिकत्वादिति यश्चोदयेत्, तं प्रत्याह—**अनुकरणशब्दादेश्चेत्यादि**। अनुकरणग्रहणेन च वाक्यत्वमस्यवामप्रभृतीयानां निरस्यति। न ह्यनुकरणशब्दानामवयवभूतानि पदानि सन्ति, तत् कुतस्तेषां वाक्यत्वम्? यतः प्रातिपदिक-संज्ञा न स्यात्। **स्वरूपमात्रप्रधाना**—इत्यनेनार्थवत्त्वं तेषां दर्शयति। अनर्थकत्वे ह्यर्थवतः प्रातिपदिक-संज्ञाविधानात् प्रातिपदिकत्वं न स्यात्। तथा च स एव प्रत्ययाभावः प्रसज्येत। मात्रशब्दोऽर्थान्तरव्य-वच्छेदाय। स्वरूपमात्रं प्रधानमभिधेयं येषां ते तथोक्ताः। चशब्दो यस्मादर्थे। यस्मादनुकरणशब्दाः स्वरूपमात्रप्रधानाः प्रत्ययमुत्पादयन्ति, तेनानेकपदादपि प्रत्ययाख्यं कार्यं सिद्धम्; तस्य प्रातिपदिकत्वात्। अप्राप्तिपदिकत्वञ्च वाक्यत्वादनर्थकत्वाद्वा भवेत्। न चास्यवामप्रभृतीनां वाक्यत्वम्; अनुकरणशब्दत्वात्। नाप्यनर्थकत्वम्; स्वरूपमात्रेणार्थवत्वात्। यदि ह्यस्यवामेत्यादावनुकरणशब्देनानेकानि पदान्यस्यावयव-

**पदमञ्जरी**

भिधेयम्; तथापि साहचर्यमविशिष्टमिति सर्वमेतदाक्षिप्यते=सन्निधाप्यते, उपस्थाप्यत इत्यर्थः। अथ वा–प्रधानवशवर्तित्वाद् गुणानां प्रधाने प्रत्ययार्थे उपस्थापिते समर्थविभक्त्यादिकमपि गुणभूतमुपस्था-प्यते एव, आचमनादिवत्, यथा—ब्राह्मणा भोज्यन्तामित्युक्तेऽनुक्ता अप्याचमनादयोऽङ्गभूता आक्षिप्यन्ते।

इहास्यवाम इत्यस्मिन्नस्तीति षष्ठीप्रथमयोरुपलम्भादनेकपदसमुदायोऽयम्, ततश्चार्थवत्स-मुदायानां समासग्रहणं नियमार्थमिति प्रातिपदिकसंज्ञाया अभावादेवंविधेभ्यः प्रत्ययो न प्राप्नोतीत्यत आह—**अनुकरणशब्दाश्चेति**॥ **स्वरूपमात्रप्रधान** इति। नात्र तदानीमुच्चरितमनुकरणस्वरूपं विवक्षितम्, किं तर्हि? अनुकार्यस्वरूपम्। मात्रशब्दो बाह्यार्थव्यवच्छेदार्थः, एतदुक्तं भवति—यथा गवादयः शब्दाः सास्नादिमदाकृतिमर्थं प्रत्याययन्तस्तेनार्थेन तद्वति मतुपमुत्पादयन्ति—गोमान्, वृक्षवानिति; तथानुकरण-शब्दाः प्रथमासमर्थाः स्वेनानुकार्येण तद्वति छप्रत्ययमिति। तत्र 'अनुकरणशब्दाः' इत्यनेन पदसमुदायत्वं निरस्यति। अनुकार्यो हि पदसमुदायः, न त्वनुकरणम्। किं पुनरन्यदनुकार्यमनुकरणं च, ननु रूपभेदो नोपलभ्यते? यद्यप्येवम्, तथाप्यर्थभेदाद् भेदः, अनुकार्यस्य बाह्योऽर्थः, अनुकरणस्य तु तदेवानुकार्यम्। अत एवास्यवामीयमित्यादौ विभक्त्यर्थाप्रतिपादनात्सुप्त्वाभावात्स्यशब्दादीनां लुग्न भवति। ये चाम्नाय-शब्दानां नियमाः—'श्मशाने नाध्येयम्', 'चतुर्दश्यां नाध्येयम्', 'शूद्रस्य वेदमुपशृण्वतस्त्रपुजतुभ्यां श्रोत्र-पूरणम्' इत्येवमादयः, तेऽप्यनुकरणेषु न भवन्ति। अस्यवामीयमिति हि सर्वत्र सर्वदा सर्वेषां च सकाशे प्रयुज्यते। तस्मादन्येऽनुकरणशब्दाः। अनुकार्यशब्दाश्च स्वरूपमात्रप्रधाना इत्यनेन त्वर्थवत्त्वमाह।

**अनेकपदादपीति**। अनेकं पदं यत्र समुदाये तस्मादपीत्यर्थः। परप्रसिद्धया चैवमुच्यते. यम्भवान-

**भावबोधिनी**

'छ' प्रत्यय होता है।] उदा० अच्छावाकशब्दः अस्मिन् अस्ति—इस विग्रह में—'अच्छावाकीयम्' सूक्तम्। [जिस सूक्त में 'अच्छावाक' यह शब्द है उसे 'अच्छावाकीयम्' कहते हैं।] मित्रावरुणीयम्। [मित्रावरुणौ स्तः अस्मिन् तत्—यह विग्रह है। जिस सूत्र में मित्रावरुण दोनों शब्द हैं।] यज्ञायज्ञीयम् साम। [यज्ञायज्ञशब्दः अस्ति

१. भाष्ये तु—'छप्रकरणेऽनेकपदादपि'—( म० भा० ५. २. ५९. वा १. )।

**वामीयम्, कयाषुभीयम् ॥**

## न्यासः

भूतानि सन्ति तत् कथं तेनानेकपदादपि सिद्धमित्युक्तम् ? परमप्रसिद्धया पदस्य । अस्यवामादयोऽप्येवम्, एषामनेकावयवाः प्रसिद्धाः; तस्मात् तत्प्रसिद्धयैवमुक्तम्; न तु विद्यमानानेकपदत्वात् ।

अथ कथमनुकरणशब्दाः स्वरूपमात्रप्रधाना भवन्ति, यावतानुकार्यमेव तेषामभिधेयम्, अतस्तदेव प्रधानस्वरूपम् ? नैतदस्ति; इह हि प्रथमासमर्थादस्तिना समानाधिकरणात् प्रत्ययो विधीयते । अनुकरणशब्दाश्चानुक्रियमाणेनार्थेनार्थवन्तोऽपि प्रत्यवमृष्टा इतिकरणेन शब्दशब्देन वा प्रथमासमर्थास्तिसमानाधिकरणा भवन्ति । अर्थे हि गुणीभूतानां प्रथमासमर्थत्वमस्त्युपाधिकत्वञ्च नोपपद्यते । तथा ह्यास्यवामोऽस्मिन्नस्तीत्युक्तेऽनुकरणप्रत्यायितस्यानुकार्यस्यैव शब्दस्य प्रथमासमर्थत्वमस्त्युपाधिकत्वञ्च गम्यते, न त्वनुकरणशब्दस्य । तस्मादितिकरणेन शब्दशब्देन वाऽवश्यम्भावी प्रत्यवमर्शः । अस्यवाम इत्यस्मिन्नस्त्यस्यवामशब्दो वास्मिन्नस्तीति भेदानुक्रियमाणपदार्थता निवर्त्तते, स्वरूपपदार्थतैवानुजायते । नन्वेवं सति मत्वर्थो नोपपद्यते, अनुकार्या ह्याम्नायशब्दाः सूक्तसाम्नोः सन्ति, न तु तदनुकरणशब्दा लौकिकादयः ? नैष दोषः; वाक्ये स्वातन्त्र्यहेतोरितिकरणादेः सन्निधौ तेन प्रत्यवमृश्यमाना अनुकरणशब्दाः स्वरूपेणार्थवन्तो भवन्ति, वृत्तौ त्वनुकार्येणैव; तत्र स्वातन्त्र्यहेतोरितिकरणादेरभावात् । वृत्तावेव सूक्तसामनी मत्वर्थवत्तया वक्तुमिष्टे, न वाक्य इति किमत्र नोपपद्यते ? अस्यवामशब्दोऽस्मिन्नस्त्य**स्यवामीयम्** । कयाषुभाशब्दोऽस्मिन्नस्ति **कयाषुभीयम्** । योगश्चायं मत्वर्थीयानामपवादः ॥ ५९ ॥

## पदमञ्जरी

नेकपदसमुदायं मन्यते तस्मादपीत्यर्थः । न त्वत्र वस्तुतोऽनेकपदत्वमस्ति—अस्यवामीयमिति, अस्य वामस्येति वेदे यत्पदद्वयं पठितं तदैकदेशस्यास्यवामशब्दस्य छप्रत्ययप्रकृतिरस्यवामशब्दः प्रतिपादक इत्यर्थवत्त्वम्, पदसमुदायत्वाभावाच्च प्रातिपादिकत्वे सति प्रत्ययः । किं पुनरत्र छप्रत्ययप्रकृतेरनुकरणत्वे प्रमाणम् ? छप्रत्यय एव । न ह्यसावनुकरणत्वमन्तरेण सम्भवति । तस्मादितिशब्दवच्छप्रत्ययोऽप्यनुकरणत्वे प्रमाणम् ॥ ५९ ॥

## भावबोधिनी

अस्मिन् तत्=यह विग्रह है । जिस साम में यह शब्द है । ] वारवन्तीयम् । [ वारवन्त-शब्दः अस्ति अस्मिन्—इस विग्रह में यह बनता है । यह सामविशेष है । ]

अनुकरण शब्दों का केवल स्वरूप [आनुपूर्वी] प्रधान होता है अतः वे 'स्वरूप' से प्रत्यय का विधान कराते हैं, इस कारण अनेक पद वाले समुदाय से भी यह प्रत्यय सिद्ध है—अस्यवामीयम् । कयाषुभीयम् । [ अस्य वाम शब्दः अस्मिन् अस्ति—यह विग्रह है । 'कयाषुभा' शब्दः अस्मिन् अस्ति—यह विग्रह है । अस्यवाम + छ=ईय, भसंज्ञा, अलोप । कयाषुभा शब्दः अस्मिन् अस्ति—इसमें कयाषुभा + छ = ईय । ]

**विमर्श**—अस्य वाम अस्ति अस्मिन्—यहाँ षष्ठ्यन्त और प्रथमान्त दो पद हैं अतः पदसमुदाय हो जाने से इसकी प्रातिपदिकसंज्ञा नहीं हो सकती । क्योंकि "कृत्तद्धितसमासाश्च" ( पा० सू० १।२।४६ ) इस सूत्र में समासग्रहण नियमार्थ है कि अनेक पदों के समुदाय की यदि प्रातिपदिक संज्ञा होगी तो केवल समास की । तब प्रकृत स्थल में प्रातिपदिकत्व ही नहीं है, 'छ' प्रत्यय किस प्रकार होगा ? इसका समाधान यह है कि जो शब्द अनुकरण परक हैं वे केवल अपनी आनुपूर्वीरूप अर्थ को कहते हैं बाह्य किसी अर्थ के वाचक नहीं होते हैं । पदसमुदाय अनुकार्य

## २०८१. अध्यायानुवाकयोर्लुक् ॥ ६० ॥ ( १८६० )

'मतौ' इत्येव। मत्वर्थ उत्पन्नस्य छस्य लुग्भवति, अध्यायानुवाकयोरभिधेययोः। केन पुनरध्यायानुवाकयोः प्रत्ययः ? इदमेव लुग्वचनं ज्ञापकं तद्विधानस्य। विकल्पेन च लुगयमिष्यते। गर्दभाण्डशब्दोऽस्मिन्नस्ति गर्दभाण्डोऽध्यायः, अनुवाको वा; गर्दभाण्डीयः ( म० भा० )। दीर्घजीवितः दीर्घजीवितीयः। पलितस्तम्भः, पलितस्तम्भीयः ॥

## २०८२. विमुक्तादिभ्योऽण् ॥ ६१ ॥ ( १८६१ )

'मतौ' इत्येव, 'अध्यायानुवाकयोः' इति च। विमुक्तादिभ्यः प्रातिपदिकेभ्योऽण् प्रत्ययो भवति

### न्यासः

अध्यायानुवाकयोर्लुक् ॥ अनन्तरसूत्रे सूक्तसाम्नोरेव च्छस्य विहितत्वात् प्रकरणान्तरे च क्वचिदध्यायानुवाकयोश्छस्याविधानात् पृच्छति—**केन पुनरित्यादि**। न ह्यासतस्तस्य लुगुपपद्यते, आह एवायं लुकम्, अत एतदेव लुग्वचनं ज्ञापयति—अध्यायानुवाकयोश्छस्य विधानमस्तीति। **विकल्पेन चेत्यादि**। चशब्दोऽवधारणे, विकल्पेनैवेत्यर्थः। कथं पुनर्विकल्पेन लभ्यते? 'विंशत्यादिभ्यस्तमडन्यतरस्याम्' इत्यन्यतरस्यांग्रहणानुवृत्तेः। यद्येवम्, पूर्वत्रापि विकल्पेन विधिः प्राप्नोति ? मण्डूकप्लुतिन्यायेनानुवृत्तिर्भविष्यतीत्यदोषः ॥ ६० ॥

### पदमञ्जरी

अध्यायानुवाकयोर्लुक् ॥ **केन पुनरिति**। सूक्तसाम्नोरेव छो विहित इति प्रश्नः। **इदमेवेति**। न ह्यसतो लुग्विधानमुपपद्यते। **विकल्पेन चेति**। तत्कथं मतुप्प्रकरणे एवास्मिन्सूत्रे कर्तव्ये तदत्र छस्य

### भावबोधिनी

होता है न कि अनुकरण। अनुकार्य का बाह्य अर्थ होता है किन्तु अनुकरण का तो वही शब्द स्वयं अर्थ होता है। इसीलिये 'अस्यवामीयम्' आदि में विभक्त्यर्थ का प्रतिपादन न होने से उस श्रूयमाण को विभक्ति नहीं माना जाता है इसलिये 'स्य' आदि का लुक् नहीं होता है ॥ ५९ ॥

'मतौ' इसकी अनुवृत्ति है। अध्याय और अनुवाक ये अर्थ रहने पर मतुबर्थ में उत्पन्न 'छ' प्रत्यय का लुक् हो जाता है। किस सूत्र से अध्याय और अनुवाक अर्थों में प्रत्यय होता है ? यह लुक् करना ही इन अर्थों में 'छ' प्रत्यय के विधान का ज्ञापक है। [भाव यह है कि जब तक 'छ' का विधान नहीं होगा तब तक लुक् करना सफल नहीं हो सकता। यही व्यर्थ होकर ज्ञापित करता है कि इन अर्थों में भी 'छ' प्रत्यय होता है। ] और यह लुक् विकल्प से इष्ट है। उदा० गर्दभाण्डशब्दः अस्मिन् अस्ति—इस विग्रह में (१) गर्दभाण्डः अध्यायः अनुवाकः वा, (२) गर्दभाण्डीयः। [ गर्दभाण्ड + छ। छ का लुक् होने पर पहला रूप होता है। जब लुक नहीं होता है तब दूसरा रूप होता है। जिस अध्याय या अनुवाक मे गर्दभाण्ड शब्द है उसके लिए दोनों शब्द हैं। ] दीर्घजीवितः, दीर्घजीवितीयः। [ दीर्घजीवितशब्दोऽस्मिन्नस्ति—यह विग्रह है। 'छ' प्रत्यय के लुक् होने और न होने पर दो रूप बनते हैं। ] पलितस्तम्भः, पलितस्तम्भीयः। [ पलितस्तम्भशब्दोऽस्मिन्नस्ति—यह विग्रह है। ] कुछ विद्वान् अनुवाक के साहचर्य से केवल वैदिक अध्याय का ही ग्रहण मानते हैं दूसरे लोग साधारणतया अध्याय का ग्रहण मानते हैं। जैसा कि चरक संहिता में लिखा है—"अथातो दीर्घजीवितमध्यायं व्याख्यास्यामः" चरक १।१ ] ॥ ६० ॥

'मतौ' (=मतुबर्थ में) और 'अध्यायानुवाकयोः' ( अध्याय तथा अनुवाक अर्थों में ) इनकी अनुवृत्ति होती है। विमुक्त आदि प्रातिपदिकों से मतुबर्थ में अण् प्रत्यय होता है यदि अनुवाक और अध्याय अर्थ प्रतीत होते हों। उदा० विमुक्तः शब्दः अस्मिन् अस्ति—इस विग्रह में—वैमुक्तः अध्यायः, अनुवाकः वा। [ विमुक्त + अण्, आदि-

मत्वर्थे, अध्यायानुवाकयोरभिधेययोः। विमुक्तशब्दोऽस्मिन्नस्ति वैमुक्तोऽध्यायः, अनुवाको वा। दैवासुरः।

विमुक्त। देवासुर। वसुमत्। सत्वत्। उपसत्। दशार्हपयस्। हविर्द्धान। मित्री। सोमापूषन्। अग्नाविष्णु। वृत्रहति। इडा। रक्षोसुर। सदसत्। परिषादक्। वसु। मरुत्वत्। पत्नीवत्। महीयल। दशार्ह। वयस्। पतत्रि। सोम। महित्री। हेतु[1]। विमुक्तादिः॥

**२०८३. गोषदादिभ्यो वुन् ॥ ६२ ॥ (१८६२)**

'मतौ' इत्येव, 'अध्यायानुवाकयोः' इति च। गोषदादिभ्यः प्रातिपदिकेभ्यो वुन्प्रत्ययो भवति मत्वर्थेऽध्यायानुवाकयोः। गोषदशब्दोऽस्मिन्नस्ति गोषदकोऽध्यायोऽनुवाको वा। इषेत्वकः। मातरिश्वकः।

गोषद। इषेत्वा। मातरिश्वन्। देवस्यत्वा। देवीरापः। कृष्णोस्याखरेष्ठः। दैवींधियम्। रक्षोहण। अञ्जन। प्रभूत। प्रतूर्त। कृशानु[2]। गोषदादिः॥

### न्यासः

**विमुक्तादिभ्योऽण्** ॥ पूर्वेणच्छे तस्य च पक्षे लुकि प्राप्ते विमुक्तादिभ्योऽण्विधीयते ॥ ६१ ॥

**गोषदादिभ्यो वुन्।** 'अध्यायानुवाकयोर्लुक्' इति च्छस्य च लुकि प्राप्ते गोषदादिभ्यो वुनारभ्यते ॥ ६२ ॥

### पदमञ्जरी

लुग्विधानम्? तस्मात्पाक्षिको लुगनुमीयते। अत्र केचिदाहुः—अनुवाकसाहचर्याद्वैदिकोऽध्यायो गृह्यत इति। अन्ये पुनः-पौरुषेयग्रन्थविशेषस्याप्यध्यायस्य ग्रहणमिच्छन्ति। तथा च 'दीर्घंजीवितीयमध्यायं व्याख्यास्यामः' इत्यादिवैद्यकग्रन्थेषु दृश्यते ॥ ६० ॥ ६१ ॥ ६२ ॥

### भावबोधिनी

वृद्धि, भसंज्ञा, अलोप।] दैवासुरः। [देवासुरशब्दः अस्ति अस्मिन्—इस अर्थ में दैवासुरः अध्यायः अनुवाकः वा।]

[विमुक्तादिगण में पठित शब्द—] विमुक्त। देवासुर। वसुमत्। सत्वत्। उपसत्। दशार्हपयस्। हविर्धान। मित्री। सोमापूषन्। अग्नाविष्णु। वृत्रहति। इडा। रक्षोऽसुर। सदसत्। परिषादक। वसु। मरुत्वत्। सोम। महित्री। हेतु। ये विमुक्तादि हैं। [दशार्ह। वयस्। वृत्रहन्। परिसारक। मरुत्। पतत्रिन्। अस्यहत्य। दशार्ण। उर्वशी। सुपर्ण—ये शब्द तथा कुछ दूसरे शब्द भी इस गण में पठित मिलते हैं।] ॥ ६१ ॥

'मतौ' (=मतुबर्थ में) और 'अध्यायानुवाकयोः' (=अध्याय तथा अनुवाक अर्थ रहने पर—) इनकी अनुवृत्ति होती है। गोषद आदि प्रातिपदिकों से मत्वर्थ में वुन् प्रत्यय होता है यदि अध्याय और अनुवाक अर्थ वाच्य हों तो। उदा० गोषदशब्दः अस्मिन् अस्ति—इस विग्रह में—गोषदकः अध्यायः, अनुवाकः वा। [जिस अध्याय या अनुवाक में 'गोषद' यह शब्द है उसे 'गोषदकः' कहते हैं। गोषद+वुन्=वु=अक, भसंज्ञा, अलोप] इषेत्वकः। [इषे त्वा शब्दः अस्ति अस्मिन् इस अर्थ में—इषेत्वा+वुन्=वु=अक, भसंज्ञा, आलोप] मातरिश्वकः। [मातरश्विन् शब्दः अस्ति अस्मिन्—इस अर्थ में—मातरश्विन्+वुन्=वु=अक, टिलोप।]

[इस गण में पठित शब्द—] गोषद। इषे त्वा। मातरिश्वन्। देवस्यत्व। देवीरापः। कृष्णोऽखरेष्ठः। देवीं धियम्। रक्षोहण। अञ्जन। प्रभूत। प्रतूर्त। कृशानु। ये गोषदादि हैं। [कुछ अन्य शब्द भी इस गणपाठ में मिलते हैं।] ॥ ६२ ॥

---

१. अस्यहत्य, दशार्ण, उर्वशी, सुपर्ण—शब्दाः पुस्तकान्तरेऽत्र गणेऽधिकाः।

२. युञ्जान, सहस्रशीर्षा, वास्तस्यते, कृशाश्व, स्वाहाप्राण, प्रसुम—एते शब्दा अत्र गणेऽधिकाः पुस्तकान्तरे।

**२०८४. तत्र कुशलः पथः ॥ ६३ ॥ (१८६३)**

'वुन्' इत्येव। तत्रेति सप्तमीसमर्थात् पथिन्शब्दात् 'कुशलः' इत्यस्मिन्नर्थे वुन्प्रत्ययो भवति। पथि कुशलः पथकः ॥

**२०८५. आकर्षादिभ्यः कन्[1] ॥ ६४ ॥ ( १८६४ )**

'तत्र' इत्येव, 'कुशलः' इति च। आकर्षादिभ्यः प्रातिपदिकेभ्यः सप्तमीसमर्थेभ्यः 'कुशलः' इत्येतस्मिन्नर्थे कन्प्रत्ययो भवति। आकर्षे कुशलः आकर्षकः। त्सरुकः।

आकर्ष। त्सरु। पिपासा। पिचण्ड। अशनि। अश्मन्। विचय। चय। जय। आचय। अय। नय। निपाद। गद्गद। दीप। ह्रद। ह्राद। ह्लाद्। शकुनि[2]। आकर्षादिः ॥

**न्यासः**

**तत्र कुशलः पथः** ॥ 'कृतलब्धक्रीतकुशलाः' इत्यणि प्राप्ते वुन् विधीयते ॥ ६३ ॥

**आकर्षादिभ्यः कन्** ॥ आकर्षादिषु यद्वृद्धं ततश्छे प्राप्ते शेषेभ्यस्त्वणि, कन्विधीयते। प्रत्ययान्तरकरणम्—यदत्रोकारान्तं तस्यात्र गुणो मा भूत्, यच्चेकारान्तं तस्य यस्येतिलोपो मा भूदित्येवमर्थम्। वुनि तु सति तदुभयं प्रसज्येत। तत् पुनरिहाशिष्टं प्रसज्येत। तस्य पुनर्वुनि कनि वा सति न कश्चिद् विशेष इति न तत्प्रत्ययान्तरं प्रयोजयति ॥ ६४ ॥

**पदमञ्जरी**

**तत्र कुशलः पथः** ॥ **पथि कुशल** इति। 'आयुक्तकुशलाभ्यां चासेवायाम्' इति सप्तमी, कौशलस्य क्रियाविषयत्वात्पथिन्शब्देन गमनादिका तद्विषया क्रिया लक्ष्यते। योगश्चायम् 'कृतलब्धक्रीतकुशलाः' इत्यणोऽपवादः ॥ ६३ ॥

**आकषादिभ्यः कन्** ॥ आकषत्यस्मिन्सुवर्णादिकमित्याकषः, 'पुंसि संज्ञायाम्' इति घः। 'हलश्च' इति घञ् तु न भवति; प्रायग्रहणानुवृत्तेः, यथा निकष इति। ये तु **आकर्षादिभ्य** इति सरेफं पठन्ति, तेषामाकृष्यतेऽस्मिन्निति घञि रूपम्। **त्सरुक** इति। 'त्सर छद्मगतौ', ( धा० पा० ५५४ ) 'भृमृशृ' ( उ० सू० १.९२ ) इत्यादिनौणादिक उप्रत्ययः। त्सरुः—खड्गग्रहणप्रदेशः। एतदर्थं प्रत्ययान्तरकरण-

**भावबोधिनी**

'वुन्' इसकी अनुवृत्ति होती है। 'तत्र' (=उसमें) इस सप्तमीसमर्थ पथिन् शब्द से 'कुशल' इस अर्थ में 'वुन्' प्रत्यय होता है। उदा० पथि कुशलः—इस अर्थ में—पथकः। [पथिन्+वुन्=वु=अक, टिलोप। पन्था=यात्राकर्म में कुशल ] ॥ ६३ ॥

'तत्र' और 'कुशलः' इनकी अनुवृत्ति होती है। सप्तमीसमर्थ 'आकर्ष' आदि प्रातिपदिकों से 'कुशल' इस अर्थ में 'कन्' प्रत्यय होता है। उदा० आकर्षे कुशलः—इस अर्थ में "आकर्षकः। [त्सरौ कुशलः—इस अर्थ में—] त्सरुकः।

[ इस गण में पठित शब्दः—] आकर्ष। त्सरु। पिपासा। पिचण्ड ( =पेट )। अशनि। अश्मन्। विचय। चय। जय। आचय। अय। नय। निपाद। गद्गद। दीप। ह्रद। ह्राद। ह्लाद। शकुनि। [ पिशाच और चण्ड—ये शब्द भी हैं। ] ये आकर्षादि हैं।

---

१. 'अकषादिभ्यः कन्' इत्यपि पदमञ्जरी सम्मतः पाठः।

२. पिशाच, पिण्ड—एतौ शब्दौ पुस्तकान्तरेऽत्र गणेऽधिकौ।

## २०८६. धनहिरण्यात्कामे ॥ ६५ ॥ ( १८६५ )

'तत्र' इत्येव, 'कन्' इति च। धनहिरण्यशब्दाभ्यां तत्रेति सप्तमीसमर्थाभ्याम् 'कामे' इत्यस्मिन्नर्थे कन्प्रत्ययो भवति। कामः=इच्छा, अभिलाषः। धने कामः धनको देवदत्तस्य। हिरण्यको देवदत्तस्य ॥

## २०८७. स्वाङ्गेभ्यः प्रसिते ॥ ६६ ॥ ( १८६६ )

'तत्र' इत्येव, 'कन्' इति च। स्वाङ्गवाचिभ्यः शब्देभ्यस्तत्रेति सप्तमीसमर्थेभ्यः 'प्रसिते' इत्येतस्मिन्नर्थे कन्प्रत्ययो भवति। प्रसितः=प्रसक्तः, तत्पर इत्यर्थः। केशेषु प्रसितः केशकः। केशादिरचनायां प्रसक्त एवमुच्यते।

### न्यासः

**धनहिरण्यात् कामे** ॥ **धने काम** इति। धनविषय इच्छेत्यर्थः ॥ ६५ ॥

**स्वाङ्गेभ्यः प्रसिते** ॥ **प्रसित** इति। यद्यपि सिनोतिरयम् 'षिञ् बन्धने' इति बन्धने पठ्यते, तथाप्यनेकार्थत्वादिहासक्तौ वर्त्तते। **केशेषु प्रसित** इति। 'प्रसितोत्सुकाभ्यां तृतीया' इति सप्तमी। आसक्तिश्च क्रियाविषयो धर्म इति केशादिस्थानबला [=बद्धा] क्रिया केशादिशब्देनोच्यते। अत एवाह—**केशादिरचनायां प्रसक्त एवमुच्यत** इति।

### पदमञ्जरी

मिवर्णान्तार्थं च। अकारान्तेष्वाकर्षादिषु प्रकृतेन वुनापि सिद्धम् ॥ ६४ ॥

**धनहिरण्यात् कामे** ॥ **काम इच्छेति**। कामयिता तु न गृह्यते; अनभिधानात् ॥ ६५ ॥

**स्वाङ्गेभ्यः प्रसिते** ॥ **प्रसितः प्रसक्त** इति। 'षिञ् बन्धने' ( धा० पा० १४७७ ) कर्मणि क्तः, यो यत्र प्रसक्तः स तत्र प्रकर्षेण बद्ध इव भवतीत्युपमानादिदमभिधानम्। **केशेषु प्रसित** इति। 'प्रसितोत्सुकाभ्यां तृतीया च' इति सप्तमी। **केशादिरचनायामिति**। केशादिस्थायां रचनायां केशादिशब्दस्य वृत्ति दर्शयति। एतच्च क्रियाविषयत्वात् प्रसक्त लभ्यते।

### भावबोधिनी

**विमर्श**—पदमञ्जरीकार के अनुसार यह सूत्र 'आकषादिभ्यः' और 'आकर्षादिभ्यः' दोनों प्रकार का है। 'आकष' का अर्थ सोना आदि परखने की कसौटी। इस कार्य में जो कुशल है। 'आकर्ष' इस का भी कसौटी अर्थ है। परन्तु "द्यूतेऽक्षे शारिफलकेऽप्याकर्षः ··· ···।" अमरः ३।३।२२२ के अनुसार 'आकर्ष' का अर्थ जुआ और जुआ खेलने के पाशा आदि भी हैं। अतः सफल पक्का जुआड़ी—यह अर्थ होता है। त्सरु=तलवार की मूठ। उसे पकड़ने में कुशल। अकारान्त शब्दों से वुन् करने पर भी काम चल सकता है। अतः इवर्णान्त और उवर्णान्त से रूपसिद्धि के लिये 'कन्' यह नया प्रत्यय बनाया गया ॥ ६४ ॥

'तत्र' इसकी और 'कन्' इसकी अनुवृत्ति होती है। 'तत्र' इस सप्तमीसमर्थ धन और हिरण्य शब्दों से 'काम' (=इच्छा) अर्थ में 'कन्' प्रत्यय होता है। काम=इच्छा, अभिलाषा। उदा० धने कामः इस अर्थ में—धनकः देवदत्तस्य। ( देवदत्त की धनविषयिणी इच्छा )। हिरण्यकः देवदत्तस्य। [ हिरण्ये कामः—इस अर्थ में कन् होता है। देवदत्त की स्वर्णविषयक इच्छा। ] ॥ ६५ ॥

'तत्र' इसकी और 'कन्' इसकी अनुवृत्ति होती है। 'तत्र' इस सप्तमीसमर्थ स्वाङ्गवाची शब्दों से 'प्रसित' इस अर्थ में 'कन्' प्रत्यय होता। प्रसित=प्रसक्त, तत्पर=लगा हुआ—यह अर्थ है। उदा० केशेषु प्रसितः—इस अर्थ में 'केशकः।' जो व्यक्ति केशादिरचना=बालों को सजाना आदि में लगा हुआ होता है उसे 'केशकः' ऐसा

बहुवचनं स्वाङ्गसमुदायशब्दादपि यथा स्यात्—दन्तौष्ठकः। केशनखकः ॥

२०८८. उदराट्ठगाद्यूने ॥ ६७ ॥ ( १८६७ )

'तत्र' इत्येव, 'प्रसिते' इति च। उदरशब्दात्सप्तमीसमर्थात् 'प्रसिते' इत्येतस्मिन्नर्थे ठक् प्रत्ययो भवति। 'आद्यूने' इति प्रत्ययार्थविशेषणम्। उदरेऽविजिगीषुर्भण्यते। यो बुभुक्षयाऽत्यन्तं पीड्यते स एवमुच्यते। उदरे प्रसित औदरिक आद्यूनः। [ 'आद्यूनोऽविजिगीषुः। ]

आद्यून इति किम्? उदरकः ( ५. २. ६६ ) ॥

### न्यासः

बहुवचनं स्वाङ्गसमुदायादपि यथा स्यादिति। असति हि तस्मिन्, यथा जनपदसमुदायो जनपद-ग्रहणेन न गृह्यते, तथा स्वाङ्गसमुदायोऽपि स्वाङ्गग्रहणेन नेति स्वाङ्गसमुदायान्न स्यात्, तस्मिंस्तु सति भवति; अन्यथा तस्य प्रयोजनाभावात्। स्वरूपविधिनिरासस्तस्य प्रयोजनमिति चेत्? न; 'अद्रवम्' इत्यादिना स्वाङ्गस्य परिभाषितत्वेन स्वरूपविधेरसम्भवात् ॥ ६६ ॥

उदराट्ठगाद्यूने ॥ पूर्वेण कनि प्राप्ते ठग् विधीयते। आद्यूनोऽविजिगीषुरिति। 'दिवोऽविजि-गीषायाम्' इत्यविजिगीषायामेव दिवो निष्ठातकारस्य नत्वविधानात्। उदरक इति। पूर्वेण कनेव भवति ॥ ६७ ॥

### पदमञ्जरी

बहुवचनमित्यादि। स्वरूपविधिनिरासार्थं तु बहुवचनं न भवति, अद्रवम्' ( कारि० ४।१।५४ ) इत्यादिना स्वाङ्गस्य परिभाषितत्वेन स्वरूपग्रहणासम्भवात् ॥ ६६ ॥

उदराट्ठगाद्यूने ॥ आद्यूनोऽविजिगीषुरिति। 'दिवोऽविजिगीषायाम्' इति तत्र निष्ठानत्वविधानात्। उदरक इति। उदरपरिमार्जनादौ प्रसित उच्यते ॥ ६७ ॥

### भावबोधिनी

कहा जाता है।

बहुवचन का प्रयोग इस लिये किया गया है जिससे स्वाङ्गसमुदायवाचक शब्द से भी यह प्रत्यय हो सके—दन्तौष्ठकः। [ दन्तौष्ठे प्रसक्तः। ] केशनखकः। [ केशनखे प्रसक्तः। यहाँ द्वन्द्व में प्राण्यङ्ग मानकर एकवद्भाव हो जाता है। अतः विग्रह में एकवचन शुद्ध है। सूत्र में बहुवचन न होने पर अवयव से होने वाला कार्य अवयव-समुदाय से नहीं किया जा सकता। फलतः वे प्रयोग शुद्ध नहीं होते। अतः सूत्र में बहुवचन सार्थक है। ] ॥ ६६ ॥

'तत्र' इसकी और 'प्रसिते' इसकी अनुवृत्ति होती है। सप्तमीसमर्थ 'उदर' शब्द से 'प्रसित' (=प्रसक्त, तत्पर ) इस अर्थ में ठक् प्रत्यय होता है। 'आद्यूने' यह प्रत्ययार्थ का विशेषण है। उदरविषय में अविजिगीषु= जीतने के अनिच्छुक को कहा जाता है। जो भूख से बहुत अधिक परेशान होता है उसे ऐसा कहा जाता है। उदा० उदरे प्रसितः—इस अर्थ में औदरिकः आद्यूनः। [ आद्यून=अविजिगीषु होता है। क्योंकि दिव् धातु से अविजिगीषा अर्थ में निष्ठा के क्त का 'न' होकर यह बनता है। जो व्यक्ति सदा भूखा रहता है, पेटू है, उसे 'औदरिक' कहते हैं। "आद्यूनः स्यादौदरिको विजिगीषाविवर्जिते।" अमरकोष ३।१।२१। ]

आद्यून (=पेटू ) अर्थ में—इसका क्या प्रयोजन है? उदरकः। [ उदरे प्रसितः—यहाँ सामान्य अर्थ है। पेट को सहलाने वाला आदि अर्थ है। अतः पूर्व सूत्र से 'कन्' ही होता है। ] ॥ ६७ ॥

---

१. न्यासपदमञ्जर्यामधिकोऽयं पाठः।

## २०८९. सस्येन परिजातः ॥ ६८ ॥ ( १८६८ )

कन्प्रत्यय इत्येव स्वर्यते, न ठक्। निर्देशादेव तृतीया समर्थविभक्तिः। सस्यशब्दात्तृतीयासमर्थात् 'परिजातः' इत्यस्मिन्नर्थे कन् प्रत्ययो भवति। सस्यशब्दोऽयं गुणवाची। परिः=सर्वतो भावे वर्त्तते। यो गुणैः सम्बद्धो जायते, यस्य किञ्चिदपि वैगुण्यं नास्ति, तस्येदमभिधानम्। सस्येन परिजातः सस्यकः शालिः। सस्यकः साधुः। सस्यको मणिः। आकरशुद्ध इत्यर्थः॥

## २०९० अंशं हारी ॥ ६९ ॥ ( १८६९ )

अंशशब्दान्निर्देशादेव द्वितीयासमर्थाद् 'हारी' इत्येतस्मिन्नर्थे कन्प्रत्ययो भवति। अंशं हारी अंशको दायादः। अंशकः पुत्रः।

'हारी' इत्यावश्यके णिनिः ( ३. ३. १७० ), तत्र षष्ठीप्रतिषेधात् कर्मणि द्वितीयैव भवति॥

### न्यासः

**सस्येन परिजातः॥ सस्येनेति** सहयोगलक्षणे तृतीया, इत्थम्भूतलक्षणे वा। **सस्यशब्दोऽयं गुणवाचीति।** सस्यशब्दो ह्ययं धान्यवचनोऽप्यस्ति, यथा—शालिः सस्यम्, यवाः सस्यमिति; तस्य ग्रहणं मा विज्ञायीत्येवमर्थमिदमुक्तम्—**इदमभिधानमिति।** सस्यक इत्येतत् कन्प्रत्ययान्तम्॥ ६८॥

**अंशं हारी॥ कर्मणि द्वितीयैव भवतीति।** कर्मणि द्वितीयायां प्राप्तायां कृद्योगलक्षणा तदपवादा षष्ठ्यारभ्यते, तस्याश्चावश्यके णिनि प्रत्यये 'अकेनोर्भविष्यदाधमर्ण्ययोः' इति प्रतिषेधः। तेन निरपवादाद् द्वितीयैव भवति॥ ६९॥

### पदमञ्जरी

**सस्येन परिजातः॥ सस्यशब्दो गुणवाचीति।** न धान्यवाची; अनभिधानात्। केचित्तु 'शंसिदुहिगुहिभ्यो वा' ( वा० २१७ ) इति क्यबन्तं शस्यशब्दं पठन्ति। सस्येनेति कर्त्तरि तृतीया। परिगतो जातः **परिजातः**, 'प्रादयो गताद्यर्थे प्रथमया' ( वा० ९० ) इति समासः। समन्तात्सम्बद्धः परिगतः, तत्र सस्यस्य कर्तृत्वम्, तदाह—**यो गुणैः सम्बद्धो जायत** इति॥ ६८॥

**अंशं हारी॥ तत्र षष्ठीप्रतिषेधादिति।** 'अकेनोर्भविष्यदाधमर्ण्ययोः' इत्यनेन। ननु तत्र भविष्यदधिकारविहितस्याकस्य ग्रहणम्? सत्यम्; इनस्त्वविशेषेण ग्रहणम्, अस्मादेव द्वितीयानिर्द्देशात्॥ ६९॥

### भावबोधिनी

'कन्' इसी की अनुवृत्ति होती है न कि 'ठक्' इसकी। [सूत्रस्थ] निर्देश से ही तृतीया समर्थ विभक्ति है। तृतीयासमर्थ सस्य शब्द से 'परिजातः' इस अर्थ में कन् प्रत्यय होता है। यह सस्य शब्द गुणवाची है। [ धान्यवाची नहीं है। ] 'परि' यह सभी ओर से होना अर्थ में है। जो गुणों से सम्बद्ध होता है, जिसका कुछ भी वैगुण्य नहीं होता है उसका यह अभिधान=कथन है। उदा० सस्येन परिजातः—इस अर्थ में सस्यकः शालिः। [जो गुणों से भरा हुआ है ऐसा शालि=धानविशेष ] सस्यकः साधुः। [ सभी ओर से गुणों से परिपूर्ण, अर्थात् जिसमें कोई कमी नहीं है, ऐसा साधु। ] सस्यको मणिः। आकरशुद्ध अर्थात् खान से ही शुद्ध निकला हुआ मणि—यह अर्थ है॥ ६८॥

[ सूत्रस्थ ] निर्देश के कारण ही द्वितीयासमर्थ 'अंश' शब्द से 'हारी' (=हरण करने वाला)–इस अर्थ में 'कन्' प्रत्यय होता है। उदा० अंशं हरति (=अपना भाग लेता है)—इस अर्थ में—अंशकः दायादः। [ पूर्वजों की सम्पत्ति से अपना हिस्सा लेने वाला भाई-बन्धु आदि। ] अंशकः पुत्रः। [ अपना हिस्सा लेने वाला पुत्र। ]

'हारी' इसमें [ "आवश्यकाधमर्ण्ययोर्णिनिः" पा. सू. ३।३।१७० सूत्र से ] आवश्यक ( अवश्यंभाव )

## २०९१. तन्त्रादचिरापहृते ॥ ७० ॥ ( १८७० )

तन्त्रशब्दान्निर्देशादेव पञ्चमीसमर्थाद् 'अचिरापहृते' इत्येतस्मिन्नर्थे कन् प्रत्ययो भवति। अचिरापहृत[1]=स्तोककालापहृत इत्यर्थः। तन्त्रादचिरापहृतः तन्त्रकः पटः। तन्त्रकः प्रावारः। प्रत्यग्रो नव उच्यते ॥

## २०९२. ब्राह्मणकोष्णिके संज्ञायाम् ॥ ७१ ॥ ( १८७१ )

ब्राह्मणक, उष्णिक—इत्येतौ शब्दौ कन्प्रत्ययान्तौ निपात्येते संज्ञायां विषये। ब्राह्मणको देशः। उष्णिका यवागूः।

यत्रायुधजीविनो ब्राह्मणाः सन्ति तत्र 'ब्राह्मणक' इति संज्ञा। अल्पान्ना यवागूः 'उष्णिका' इत्युच्यते ॥

### न्यासः

तन्त्रादचिरापहृते ॥ अचिरापहृत[1]मिति। अचिरशब्दोऽल्पकालवचनः, तस्यापहृतशब्देनापहृतो गतः कालोऽस्येति 'कालाः परिमाणिना' इति समासः। पञ्चमीसमर्थादिति। निर्देशादेव। न हीह काचित् प्रकृता विभक्तिरनुवर्तते, पञ्चमीनिर्देशश्च श्रूयते, तस्माद् निर्देशादेव पञ्चमीसमर्थात् प्रत्ययो विज्ञायते। सा पुनः पञ्चम्यपहरतेरपायवचनत्वात् तद्योगेन तन्त्रमपादानमेव भवतीत्यपादानलक्षणा वेदितव्या ॥ ७० ॥

ब्राह्मणकोष्णिके संज्ञायाम् ॥ किमर्थं पुनरिदम्, यावता संज्ञायां व्युत्पाद्यते, संज्ञायामेव तु ब्राह्मणकोष्णिके ? न; विषयान्तरेऽपि। तमेव विषयं दर्शयितुमाह—यत्रेत्यादि। गतार्थम् ॥ ७१ ॥

### पदमञ्जरी

तन्त्रादचिरापहृते ॥ तन्यन्ते तन्तवोऽस्मिन्निति तन्त्रम्=तन्तुवायशलाका, तन्त्रयतेर्वा एरचि णिलोपः। अचिरापहृत[1] इति। अचिरः कालोऽपहृतस्येति 'कालाः परिमाणिना' इति समासः। पञ्चमीसमर्थादिति। अपहृतयोगे 'अपादाने पञ्चमी' ॥ ७० ॥

ब्राह्मणकोष्णिके संज्ञायाम् ॥ कन्प्रत्ययान्तौ निपात्येते इति। किं पुनरत्र निपात्यते, ब्राह्मणशब्दादायुधजीव्युपाधिकात्प्रथमान्तात्सप्तम्यर्थे कन्प्रत्ययः, अन्नशब्दादल्पत्वोपाधिकात्सप्तम्यर्थ एव कन्प्रत्ययः, अन्नशब्दस्योष्ण्यादेशः—तदाह—यत्रायुधजीविन इत्यादि ॥ ७१ ॥

### भावबोधिनी

अर्थ में णिनि हुआ है, इसमें [ "अकेनोर्भविष्यदाधमर्ण्ययोः" पा. सू. २।३।७० सूत्र से ] षष्ठी का प्रतिषेध होने के कारण कर्म में द्वितीया ही होती है ॥ ६९ ॥

[ सूत्रस्थ ] निर्देश से ही पञ्चमीसमर्थ 'तन्त्र' शब्द से 'अचिरापहृत' इस अर्थ में कन् प्रत्यय होता है। अचिरापहृत=कुछ समय पहले ही लिया गया—यह अर्थ है। उदा० तन्त्रात् अचिरापहृतः पटः—इस अर्थ में—तन्त्रकः पटः। तन्त्रकः प्रावारः। तत्काल बना हुआ, नया। [ तन्त्र=जुलाहे की बुनने वाली खड्डी। उससे तुरन्त हटाया गया वस्त्र—तन्त्रक कहा जाता है। भाव यह है कि तुरन्त बुना हुआ कपड़ा आदि 'तन्त्रक' कहा जाता है। ] ॥ ७० ॥

संज्ञाविषय में 'ब्राह्मणक' और 'उष्णिक' ये शब्द कन्प्रत्ययान्त निपातित होते हैं। उदा० ब्राह्मणकः देशः, उष्णिका यवागू।

जिस देश=स्थान पर आयुधजीवी=शस्त्र से जीविका चलाने वाले ब्राह्मण रहते हैं उसकी 'ब्राह्मणक'

---

१. न्यासे 'अचिरापहृतम्' पदमञ्जर्याम् 'अपहृतः' इति पाठः।

## २०६३. शीतोष्णाभ्यां कारिणि ॥ ७२ ॥ ( १८७२ )

शीतोष्णशब्दाभ्यां कारिण्यभिधेये कन्प्रत्ययो भवति। क्रियाविशेषणाद् द्वितीयासमर्थादयं प्रत्ययः। शीतं करोति शीतकः=अलसः, जड उच्यते। उष्णं करोति उष्णकः=शीघ्रकारी, दक्ष उच्यते ॥

## २०६४. अधिकम् ॥ ७३ ॥ ( १८७३ )

'अधिकम्' इति निपात्यते। अध्यारूढस्योत्तरपदलोपः कँश्च प्रत्ययः ( म० भा० )। अधिको

### न्यासः

**शीतोष्णाभ्यां कारिणि** ॥ **क्रियाविशेषणादिति**। क्रियाविशेषणस्य हि कर्मत्वं प्रतिपादितम्। **कारिणीति**। ताच्छील्ये णिनिः। तस्य च प्रयोगे षष्ठी प्रतिषिद्धा, तस्मात् कर्मणि द्वितीययैव भवितव्यम्। क्रियाविशेषणाच्छीतादिशब्दात् द्वितीयासमर्थात्प्रत्ययो विज्ञायते। तेन नेह शीतोष्णशब्दौ स्पर्शविशेषे वर्त्तमानौ प्रत्ययमुत्पादयतः। क्व तर्हि? मान्द्ये, शैघ्र्ये च; यस्मादावश्यके णिनिः। न स पदार्थोऽस्ति यः शीतोष्णस्पर्शौ नियोगतः करोति। तुषारातपावपि हि नावश्यं कुरुतः; प्रतिबन्धसम्भवात्। कर्तृशक्तिस्तु पदार्थानां नियतेति सा शक्तिः कर्तृत्वे कश्चिन्नियोगतो मन्दं करोति, कश्चित् शीघ्रमिति युज्यत एवावश्यकत्वम् ॥ ७२ ॥

**अधिकम्** ॥ **अध्यारूढशब्दस्योत्तरपदलोप** इति। उत्तरपदमारूढशब्दस्तस्य लोपो निपात्यते। कथं

### पदमञ्जरी

**शीतोष्णाभ्यां कारिणि** ॥ शीतं करोति स शीतकः, यश्चोष्णं करोति स उष्णकः। किं चातः? तुषारे आदित्ये च प्राप्नोति, शीतोष्णशब्दयोर्हि स्पर्शविशेषो मुख्योऽर्थः, तं च ताववश्यं कुरुत एवेति मुख्यार्थग्रहे दोषं दृष्ट्वा गौणार्थयोर्ग्रहणमिति दर्शयन्नाह—**क्रियाविशेषणादिति**। तत्र शीतोष्णशब्दयोरुपमानाद् वृत्तिः—शीतमिव शीतम्' मन्दकरणमित्यर्थः। शीतं हि मन्दतायुक्तम्; सति शीते कार्यकरणे पाटवाभावात्। एवमुष्णमिवोष्णम्=पटुकरम्, शीघ्रकरणमित्यर्थः। एवं क्रियाविशेषणाभ्यां प्रत्ययः। **द्वितीयासमर्थादिति**। 'कृद्योगलक्षणा तु षष्ठी क्रियाविशेषणान्न भवति' इति प्रागेवोक्तम्। मुख्यार्थवृत्तिभ्यां तु प्रत्ययो न भवति; अनभिधानात् ॥ ७२ ॥

**अधिकम्** ॥ **अध्यारूढशब्दस्येति**। यदि पुनरधिशब्दात्ससाधनक्रियावचनात् कन्निपात्यते, तदा कर्तृकर्मणोरन्यतरस्यैवाभिधानं प्राप्नोति। अध्यारूढशब्दस्तूभयार्थ इति तस्यैवेदमङ्गीकृतसाधनभेदं निपातन-

### भावबोधिनी

यह संज्ञा है। अल्प अन्नवाली [ अधिक जलादि वाली ] लपसी यवागू 'उष्णिका' कही जाती है। [ यहाँ उपाधिरूप अर्थ तथा 'अल्पान्न' को 'उष्णि' यह आदेश निपातन से किया जाता है। अतः संज्ञा में ही इन शब्दों का प्रयोग होता है। ] ॥ ७१ ॥

'कारी' (=करने वाला ) अर्थ वाच्य रहने पर 'शीत' और उष्ण' शब्दों से 'कन्' प्रत्यय होता है। क्रियाविशेषण द्वितीयासमर्थ से यह प्रत्यय होता है। उदा० शीतं करोति—इस अर्थ में शीतकः=आलसी, जड़ को कहा जाता है। उष्णं करोति=इस अर्थ में उष्णकः=शीघ्रकारी, दक्ष कहा जाता है।

[ यहाँ 'शीत' तथा 'उष्ण' क्रियाविशेषण हैं। मन्दरूप से और शीघ्रतापूर्वक जो काम करते हैं उनके लिये इन शब्दों का प्रयोग होता है। अतः आलसी और शीघ्रकारी अर्थ फलित होते हैं। ] ॥ ७२ ॥

'अधिकम्' यह निपातन से सिद्ध होता है। 'अध्यारूढ' के उत्तरपद (=आरूढ ) का लोप होता है और

**द्रोणः खार्याम् । अधिका खारी द्रोणेन ।**
**कर्त्तरि कर्मणि चाऽध्यारूढशब्दः ।।**

**न्यासः**

पुनरधिको द्रोणः खार्यामित्यस्य प्रथमान्तस्य द्रोणशब्दस्य प्रयोगः, अधिका खारी द्रोणेनेति तृतीयान्तस्य च ? इत्यत आह— **कर्त्तरि कर्मणि चेत्यादि** । 'गत्यर्थाकर्मकश्लिष' इत्यादिना सूत्रेण रुहेः कर्त्तरि कर्मणि च क्तो विहितः, तेन कर्त्तरि कर्मणि चाध्यारूढशब्दो वर्त्तते, ततश्च तस्यार्थे व्युत्पाद्यमानोऽधिकशब्दोऽपि तत्पर्यायो भवँस्तयोरेवार्थयोर्भवति । तत्र यदा कर्त्तरि वर्त्तते तदा द्रोणशब्दात् प्रथमा भवति, न तृतीया । यदा कर्मणि वर्तते तदा कर्त्तुरनभिहितत्वादधिकशब्देन द्रोणशब्दात् तृतीया भवति । कर्मणस्त्वभिहितत्वात् खारी-शब्दात् प्रथमैव भवति, न द्वितीया । **अधिका खारी द्रोणेनेति** । ननु चाधिको द्रोणः खार्यामस्यामित्यत्र कर्मणोऽनभिहितत्वात् खारीशब्दात् द्वितीया प्राप्नोति ? नैष दोषः, यदयम् 'यस्मादधिकम्' 'तदस्मिन्न-धिकम्' इति च निर्देशं करोति, तज्ज्ञापयति—अधिकशब्देन योगे पञ्चमीसप्तम्यावेव विभक्ती भवत इति ।। ७३ ।।

**पदमञ्जरी**

मुचितमिति भावः । **अधिको द्रोणः खार्याम्, अधिका खारी द्रोणेनेति** । यथैतत्प्रयोगद्वयमुपपद्यते तथा दर्शयति—**कर्त्तरि कर्मणि चाध्यारूढशब्द** इति । 'गत्यर्थाकर्मक' इत्यादिना रुहेः कर्त्तरि कर्मणि च क्तो विहितः । निपातनसामर्थ्याच्च सकृदुपात्तोऽप्यङ्गीकृतसाधनभेदः संगृह्यते । तत्र यदा कर्त्तरि तदा तत्राभि-हितत्वात्प्रथमैव भवति, न तृतीया; यदा तु कर्मणि तदा कर्तुरनभिहितत्वात्तृतीया, कर्मणस्त्वभिहित-त्वात्प्रथमा । यदा च कर्त्तरि क्तस्तदा कर्मणोऽनभिधानादध्यारूढयोगे यथा द्वितीया भवति—अध्यारूढो द्रोणः खारीमिति, ग्रामं गत इतिवत्, तथाधिकशब्देनापि योगे द्वितीयायां प्राप्तायाम् 'यस्मादधिकम्' 'तदस्मि-न्नधिकम्' इति च निर्देशात् पञ्चमीसप्तम्यौ भवतः ।। ७३ ।।

**भावबोधिनी**

'कन्' प्रत्यय होता है । उदा० अधिकः द्रोणः खार्याम् । अधिका खारी द्रोणेन । ( द्रोणनामक परिमाण खारी नामक परिमाण से अधिक है । )

कर्ता और कर्म दोनों अर्थों में 'अध्यारूढ' बनता है ।।

**विमर्श**—आङ्पूर्वक 'रुह' धातु से "गत्यर्थाकर्मकश्लिषशीङ्स्थासवसजन-रुह जीर्यतिभ्यश्च" ( पा० सू० ३।४।७२ ) सूत्र से कर्ता और कर्म दोनों अर्थों में 'क्त' प्रत्यय होकर आरुह् + क्त = आरूढः बनता है । अतः इस 'क्त' से कर्ता और कर्म दोनों का अभिधान हो जाता है । फलतः (१) 'आरूढो वृक्षं भवान्, (२) आरूढो वृक्षो भवता— दोनों प्रयोग होते हैं । इसी प्रकार—'अध्यारूढो द्रोणः खारीम्', और 'अध्यारूढा खारी द्रोणेन' ये दोनों प्रयोग होते हैं ।

प्रस्तुत सूत्र 'अध्यारूढ' के स्थान पर 'अधिकः' का निपातन करता है । इस 'अधिक' शब्द के योग में "यस्मादधिकं यस्य चेश्वरवचनम्" ( पा० सू० २।३।९ ) और "तदस्मिन्नधिकमिति" ( पा० सू० ५।२।४५ ) सूत्रों के निर्देश से सप्तमी और पञ्चमी होती है । इसी कारण 'अधिकः द्रोणः खार्याम्' ऐसा वृत्ति में लिखा है । यहाँ कर्ता अभिहित होने से 'द्रोणः' में प्रथमा है और कर्म में द्वितीया प्राप्त होने पर उक्त सूत्रों से सप्तमी है । जब कर्म में क्त प्रत्ययान्त मान कर 'अधिक' आदेश होता है तब कर्ता अनभिहित होने से 'द्रोणेन' में तृतीया और कर्म अभिहित होने से 'खारी' में प्रथमा होती है । खारी और द्रोण प्राचीन काल के मापविशेष हैं । इनके अर्थ विवादग्रस्त हैं ।। ७३ ।।

**२०९५. अनुकाभिकाभीकः कमिता ॥ ७४ ॥ ( १८७४ )**

अनुक, अभिक, अभीक—इत्येते शब्दाः कन्प्रत्ययान्ता निपात्यन्ते 'कमिता' इत्यस्मिन्नर्थे। अभेः पक्षे दीर्घत्वं च निपात्यते। अनुकामयते अनुकः। अभिकः। अभीकः॥

**२०९६. पार्श्वेनान्विच्छति ॥ ७५ ॥ ( १८७५ )**

पार्श्वशब्दात्तृतीयासमर्थाद् 'अन्विछति' इत्येतस्मिन्नर्थे कन्प्रत्ययो भवति। अनृजुरुपायः=पार्श्वम्, तेनार्थानन्विच्छति पार्श्वकः=मायावी, कौसृतिकः, जालिक उच्यते॥

**२०९७. अयः शूलदण्डाजिनाभ्यां ठक्ठञौ ॥ ७६ ॥ ( १८७६ )**

'अन्विच्छति' इत्येव। अयःशूलदण्डाजिनाभ्यां तृतीयासमर्थाभ्याम् 'अन्विच्छति' इत्येतस्मि-

**न्यासः**

**अनुकाभिकाभीकः कमिता॥** अनुक इति। अनुशब्दात् कन्। अभिकोऽभीक इति। अत्राप्यभिशब्दात् ॥ ७४ ॥

**पार्श्वेनान्विच्छति॥** निर्देशादेव तृतीया समर्थविभक्तिर्लभ्यत इत्याह—**पार्श्वशब्दात् तृतीयासमर्थादिति** ॥ ७५ ॥

**अयःशूलदण्डाजिनाभ्यां ठक्ठञौ॥** अयःशूलदण्डाजिनाभ्यामिति। तृतीयान्तनिर्देशादेवार्थात् तृतीया समर्थविभक्तिर्लभ्यत इत्याह—**तृतीयासमर्थाभ्यामिति** ॥ ७६ ॥

**पदमञ्जरी**

**अनुकाभिकाभीकः कमिता॥** सूत्रे समाहारद्वन्द्वे लिङ्गव्यत्ययः, अनुशब्दादभिशब्दाच्च ससाधनक्रियावचनात्स्वार्थे कन्निपात्यत इत्याह—**अनुकामयतेऽनुक** इति। 'अभिकामयते' इत्येतद् गम्यमानत्वान्नोक्तम् ॥ ७४ ॥

**पार्श्वेनान्विच्छति॥ अनृजुरुपायः पार्श्वमिति।** तिर्यगवस्थानात्पार्श्वं तावदनृजु, तद्वदन्योऽप्यनृजुरुपाय एवमुच्यत इत्यर्थः। य ऋजुनोपायेनान्वेष्टव्यानर्थाननृजुनाऽन्विच्छति स **पार्श्वकः**। कुत्सितो मार्गः=कुसृतिः, जालम्=आनायः, ताभ्यां चरतीति **कौसृतिको जालिकः**॥ ७५ ॥

**अयःशूलदण्डाजिनाभ्यां ठक्ठञौ॥ तृतीयासमर्थाभ्यामिति।** निर्देशादेव तृतीया हीयम्, न

**भावबोधिनी**

'कमिता' (=इच्छा करने वाला, चाहने वाला) इस अर्थ में 'अनुक' 'अभिक' 'अभीक'—ये कन्प्रत्ययान्त शब्द निपातित होते हैं। 'अभि' इसका पाक्षिक दीर्घ भी निपातित होता है। उदा० अनुकामयते—इस अर्थ में—अनुकः। [ अनु+कन्, ] अभिकः, अभीकः। [ अभि+कन्, पाक्षिक दीर्घ होने से दो रूप बनते हैं। चाहने वाला—यही अर्थ है। ] ॥ ७४ ॥

तृतीयासमर्थ 'पार्श्व' शब्द से 'अन्विच्छति' ( चाहता है ) इस अर्थ में 'कन्' प्रत्यय होता है। अनृजु=कुटिल, गलत उपाय=पार्श्व है, उसके द्वारा अर्थों=प्रयोजनों को चाहता है ( अन्विच्छति )—इस अर्थ में 'पार्श्वकः'=मायावी, कौसृतिक, जालिक कहा जाता है। [ कुत्सितमार्ग=कुसृति, जाल=छल से आचरण करने वाला व्यक्ति कौसृतिक, जालिक कहा जाता है। पार्श्वक भी इसी प्रकार का होता है। सीधे उपाय से प्राप्त करने योग्य पदार्थों को गलत तरीके से प्राप्त करने की इच्छा करने वाला व्यक्ति 'पार्श्वक' कहा जाता है ] ॥ ७५ ॥

'अन्विच्छति' इसकी अनुवृत्ति होती है। तृतीयासमर्थ 'अयःशूल' और 'दण्डाजिन' शब्दों से 'अन्विच्छति'

र्थं ठक्ठञौ प्रत्ययौ भवतः। तीक्ष्ण उपायः=अयःशूलमुच्यते, तेनान्विच्छति आयःशूलिकः ( म० भा० )। साहसिकः इत्यर्थः। दम्भः=दण्डाजिनम्, तेनान्विच्छति दाण्डाजिनिकः। दाम्भिकः इत्यर्थः॥

**२०९८. तावतिथं ग्रहणमिति लुग्वा॥ ७७॥ ( १८७७ )**

तावतां पूरणं तावतिथम्। गृह्यतेऽनेनेति ग्रहणम्। प्रकृतिविशेषणं चैतत्। पूरणप्रत्ययान्तात्प्रातिपदिकाद् ग्रहणोपाधिकात्स्वार्थे कन्प्रत्ययो भवति। पूरणस्य प्रत्ययस्य वा लुक्। द्वितीयेन रूपेण ग्रन्थं गृह्णाति द्विकं ग्रहणम्, द्वितीयकम्। त्रिकम्, तृतीयकम्। चतुष्कम्, चतुर्थकम्।

**न्यासः**

**तावतिथं ग्रहणमिति लुग् वा॥** पूरणप्रत्ययान्तानां सामान्यनिर्देशोऽयम्। अथ स्वरूपग्रहणं कस्मान्न भवति? अर्थप्रधानत्वान्निर्देशस्य। शब्दप्रधाने हि निर्देशे स्वरूपग्रहणं भवतीत्युक्तम्। कथं प्रत्ययः स्वार्थे भवतीति? अनिर्दिष्टार्थाः प्रत्ययाः स्वार्थे भवन्तीति कृत्वा। **द्विकं, त्रिकमिति।** तीयस्य

**पदमञ्जरी**

पञ्चमी, पूर्वेण साहचर्यात्। **तीक्ष्ण उपायोऽयःशूलमिति।** यथायःशूलं तीक्ष्णं तथान्योऽपि तीक्ष्ण उपायोऽयःशूलमित्युपचारादुच्यत इत्यर्थः। **दम्भो दण्डाजिनमिति।** दम्भसाधनत्वात्। दम्भवन्तो हि प्रायेण दण्डमजिनं च धारयन्ति। **तनेति।** दम्भेन दण्डाजिनं तु धारयतु मा वाऽदीधरदित्यर्थः, सर्वत्र मुख्यार्थाग्रहणेऽनभिधानमेव हेतुः॥ ७६॥

**तावतिथं ग्रहणमिति लुग्वा॥** यथा 'तस्यापत्यम्' इत्यत्र तस्येति षष्ठ्यन्तानां सामन्यनिर्देशः, तथा तावतिथमिति पूरणप्रत्ययान्तानां सामान्यनिर्देशः। **पूरणप्रत्ययस्य चेति**[1]। न तु कनः लुक्; वाग्रहणानर्थक्यप्रसङ्गात्, महाविभाषाधिकाराद्विकल्पेन कन उत्पत्तेः पञ्चमं ग्रहणम्, पञ्चमकं ग्रहणमिति रूपद्वयस्य सिद्धत्वात्। तथा च वार्त्तिकम्—'तावतिथं ग्रहणमिति लुग्वचनानर्थक्यं विभाषाप्रकरणात्' ( कात्या० वा० ३१७१ ) इति। अतो लुग्वाग्रहणं कुर्वतः सूत्रकारस्य पूरणप्रत्ययस्य वा लुग्विधीयत इति

**भावबोधिनी**

( चाहता है ) इस अर्थ अर्थ में ठक् और ठञ् दो प्रत्यय होते हैं। तीक्ष्ण उपाय=अयःशूल कहा जाता है, उससे प्राप्त करना चाहता है ( अयः शूलेन अन्विच्छति )—इस अर्थ में 'आयःशूलिकः' है। साहसिक यह अर्थ है। दम्भ=दण्डाजिन, इससे प्राप्त करना चाहता है ( दण्डाजिनेन अन्विच्छति )—इस अर्थ में—दाण्डाजिनकः। दाम्भिक यह अर्थ है।

**विमर्श**—अयःशूल=लोहे का शूल जिस प्रकार तीखा होता है उसी प्रकार जो व्यक्ति तीखे से तीखे उपाय का सहारा लेकर अपना कार्य करना चाहता है उसे 'आयःशूलिक' कहते है। ठक् और ठञ् दोनों में रूप समान ही है केवल स्वर का भेद है।

दण्डाजिन=दण्ड और अजिन=मृगचर्म धारण करके लोग अपने को संन्यासी होने का दम्भ करते हैं। उसी प्रकार जो व्यक्ति दम्भ से अपना कार्य करना चाहता है। उसके लिये यह 'दाण्डाजिनिकः' शब्द है। इन शब्दों का मुख्यार्थ न लेकर औपचारिक अर्थ मानकर प्रत्यय किये जाते हैं॥ ७६॥

तावतां पूरणम्—इस अर्थ में 'तावतिथम्' है। ग्रहण किया जाता है जिसके द्वारा—वह 'ग्रहण' है। यह प्रकृति का विशेषण है। पूरणप्रत्ययान्त प्रातिपदिक जो ग्रहण अर्थ में है, उससे स्वार्थ में 'कन्' प्रत्यय होता है।

१. 'पूरणस्य प्रत्ययस्य वा' इति काशिका।

* **तावतिथेन गृह्णातीति कन्वक्तव्यः, पूरणप्रत्ययस्य च नित्यं लुक् * ( म० भा० ५. २. ७७ वा० १, २ )। षष्ठेन रूपेण ग्रन्थं गृह्णाति षट्को देवदत्तः। पञ्चकः। चतुष्कः।**

**इतिकरणो विवक्षार्थः, तेन ग्रन्थविषयमेव ग्रहणं विज्ञायते, नान्यविषयम् ॥**

### न्यासः

लुक्। **चतुष्कमिति**। पूरणः प्रत्ययस्य डटः सथुकश्च लुक्, चतूरेफस्य 'विसर्जनीयस्यः सः', तस्य 'इदुदुपधस्य चाप्रत्ययस्य' इति षत्वम्।

**तावतिथेनेत्यादि**। पूरणप्रत्ययान्तात् प्रातिपदिकात् तृतीयासमर्थाद् गृह्णातीत्येतस्मिन्नर्थे कन्प्रत्ययो भवतीति वक्तव्यम्। पूरणप्रत्ययस्य च नित्यं लुक्। **षट्क इति**। षकारस्य जश्त्वं डकारः,

### पदमञ्जरी

पक्षो लक्ष्यते। **द्वितीयेन रूपेण ग्रन्थं गृह्णातीति**। अत्र ग्रहणे द्वितीयस्य करणत्वं प्रदर्शयितुमिदं वाक्यम्। वस्तुतस्तु द्वितीयं ग्रहणं देवदत्तस्येति विग्रहीतव्यम्। **द्विकं ग्रहणमिति**। ग्रहीतर्यपि प्रत्ययो वक्ष्यते, तेन प्रकृत्युपाधिभूतस्य ग्रहणस्य नियमेनाप्रतीतेर्ग्रहणशब्दप्रयोगः। द्विकं रूपं देवदत्तस्येत्येव तु नोदाहृतम्, स्वच्छन्दतो हि वचसां प्रवृत्तिः,। **चतुष्क**[1] इति। सन्नियोगशिष्टपरिभाषया ( ह० भा० परि० १४ ) डटि निवृत्ते थुकोऽपि निवृत्तिः, रेफस्य विसर्जनीयः, 'इदुदुपधस्य' इति षत्वम्।

**तावतिथेनेति**। स्वार्थे प्रत्ययो विधीयमानो ग्रहीतरि न प्राप्नोतीति वचनम्। **नित्यं च लुकं वक्ष्यामी**[2]ति। **षट्क इति**। रूपशब्दस्य वाक्ये प्रयुक्तस्यापि वृत्तौ गम्यमानत्वादयोगः, पदत्वाज्जश्त्वचर्त्वे।

### भावबोधिनी

और पूरणार्थक प्रत्यय का विकल्प से लुक् होता है। उदा० द्वितीयेन रूपेण ग्रन्थं गृह्णाति—इस अर्थ में द्विकं ग्रहणम् द्वितीयकं ग्रहणम्। [ द्वितीय—कन्, तीय प्रत्यय का वैकल्पिक लोप। इसी प्रकार तृतीयेन रूपेण गृह्णाति—इस अर्थ में ] त्रिकम्, तृतीयकम्। [ चतुर्थंरूपेण गृह्णाति—इस अर्थ में ] चतुष्कं, चतुर्थकम्।

**विमर्श**—जिस प्रकार 'तस्यापत्यम्' इस सूत्र में 'तस्य' यह षष्ठ्यन्तसामान्य का बोधक है उसी प्रकार प्रस्तुत सूत्र में 'तावतिथम्' यह पूरणप्रत्ययान्त का बोधक है क्योंकि 'तावतां पूरणम्' इस अर्थ में वतु-प्रत्ययान्त तावत् से 'वतोरिथुक्' सूत्र से इथुक् प्रत्यय होता है—तावतिथ बनता है। यह अर्थपरक नहीं है अपि तु पूरणप्रत्ययान्त का सामान्य निर्देशक है। त्रिकम्, तृतीयकम्—तीय प्रत्यय और सम्प्रसारण से 'तृतीय' होता है।

'लुक् वा' का सम्बन्ध 'कन्' के साथ नहीं है क्योंकि महाविभाषा का अधिकार होने से यह सिद्ध ही है। अतः 'पूरणप्रत्यय का विकल्प से लुक्' होता है यही सूत्र का अर्थ समझना चाहिये।

काशिका में द्वितीयेन रूपेण गृह्णाति यह विग्रह करके करण में तृतीया मानी है। वास्तव में 'द्वितीयं ग्रहणं देवदत्तस्य—' ऐसा ही विग्रह उचित है। पदमञ्जरीकार और सिद्धान्तकौमुदीकार ऐसा ही मानते हैं।

* पूरणप्रत्ययान्त तृतीयासमर्थ प्रातिपदिक से 'गृह्णाति' ( ग्रहण करता है ) इस अर्थ में 'कन्' प्रत्यय कहना चाहिए और पूरणप्रत्यय का नित्य लुक् कहना चाहिए। * उदा० षष्ठेन रूपेण गृह्णाति देवदत्तः—इस अर्थ में 'षट्कः देवदत्तः' यह बनता है। [ छः बार में सुनकर ग्रहण कर लेने वाला देवदत्त। ] पञ्चकः। चतुष्कः। [ पाँच बार सुनकर ग्रहण—समझ लेने वाला। चार बार सुनकर समझ लेने वाला देवदत्त। इनमें 'षष्ठ' के डट् और थुक् का, 'पञ्चम' के डट् और मट् का, 'चतुर्थ' के डट् और थुक् का लोप होता है। क्योंकि 'डट्' आगमी और 'थुक्' तथा 'मट्' आगम सन्नियोगशिष्ट हैं अतः दोनों का लोप होता है। ]

---

१. 'चतुष्कम्' इति काशिका।

२. वक्ष्यामीति काशिकायां नास्ति।

**२०९९. स एषां ग्रामणीः ॥ ७८ ॥ ( १८७८ )**

'स' इति प्रथमासमर्थाद् 'एषामि'ति षष्ठ्यर्थे कन्प्रत्यो भवति, यत्तत्प्रथमासमर्थं ग्रामणीश्चेत्स भवति। ग्रामणीः=प्रधानः मुख्यः, इत्यर्थः। देवदत्तो ग्रामणीरेषां—देवदत्तकाः। यज्ञदत्तकाः।

ग्रामणीरिति किम् ? देवदत्तः शत्रुरेषाम् ॥

**२१००. शृङ्खलमस्य बन्धनं करभे ॥ ७९ ॥ ( १८७९ )**

शृङ्खलशब्दात्प्रथमासमर्थादस्येति षष्ठ्यर्थे कन्प्रत्ययो भवति। यत्तत्प्रथमासमर्थं बन्धनं चेत्तद्भवति, यत्तदस्येति निर्दिष्टं करभश्चेत्स भवति। शृङ्खलं बन्धनमस्य करभस्य—शृङ्खलकः।

**न्यासः**

तस्यापि चर्त्वे टकारः। अत्र च डटः सथुको लुक्। पञ्चक इति। अत्रापि डटः। अथेह कस्मान्न भवतीति—द्वितीयेन हस्तेन दण्डं गृह्णाति ? इत्याह–इतिकरणो विवक्षार्थ इत्यादि। सुबोधम् ॥ ७७ ॥

**स एषां ग्रामणीः ॥ ७८ ॥**

**शृङ्खलमस्य बन्धनं करभे ॥** ननु च न शृङ्खलमात्रेण करभो बद्धयते, किं तर्हि? रज्ज्वादिकेन च,

**पदमञ्जरी**

इह यः षष्ठेन रूपेण गृह्णाति षड्भिरसौ रूपैर्गृह्णाति, ततः किंसङ्ख्यायाः, तेन गृह्णातीत्येव वक्तव्यम्, एवं हि लुग्वेति न वक्तव्यं भवति ? नैवं शक्यम्; एवं ह्युच्यमाने इहापि प्राप्नोति—एकेन रूपेण गृह्णातीति। पूरणप्रत्ययस्त्वेकशब्दान्नास्ति, तेन ग्रन्थविषयमेव ग्रहणं विज्ञायत इति। तेनेह न भवति-द्वितीयो हस्तो ग्रहणो दण्डस्येति ॥ ७७ ॥

**स एषां ग्रामणीः ॥** इह त्वत्को मत्को वा विजय इत्यादावनेन कन्। त्वं ग्रामणीरस्य त्वत्कः। अहं ग्रामणीरस्य मत्कः। प्रायेण त्विदमर्थमात्रे प्रयुज्यते ॥ ७८ ॥

**शृङ्खलमस्य बन्धनं करभे ॥** ननु न शृङ्खलमात्रेण करभो बद्धयते, किं तर्हि ? रज्ज्वा, कीलेन च,

**भावबोधिनी**

**विमर्श**—यहाँ यह ध्यान रखना चाहिए कि सूत्रकार ने 'ग्रहण' इस स्वार्थ में कन् प्रत्यय का विधान और पूरण प्रत्यय का वैकल्पिक लोप कहा है। किन्तु वार्त्तिककार ने 'ग्रहणकर्ता' अर्थ में कन् प्रत्यय और पूरणप्रत्यय का नित्य लुक् कहा है। अतः 'द्विकं ग्रहणं देवदत्तस्य'—देवदत्त का दो बार सुनकर ग्रहण करना—यह अर्थ है। 'द्विकः देवदत्तः—इसका 'दो बार सुनकर ग्रहण=ज्ञान कर लेने वाला देवदत्त'—यह अर्थ है। यही दोनों में अन्तर है।

भाष्य में 'तावतिथेन गृह्णातीति लुक् च' यह वार्त्तिक का स्वरूप है। काशिकाकार ने 'तावतिथेन गृह्णातीति कन् वक्तव्यः, पूरणप्रत्ययस्य च नित्यं लुक्' ऐसा सरल रूपान्तर लिखा है ॥ ७७ ॥

'सः' ( वह ) इस प्रथमासमर्थ से 'एषाम्' ( इनका ) इस षष्ठ्यर्थ में 'कन्' प्रत्यय होता है यदि जो प्रथमासमर्थ है वह 'ग्रामणी' ( गाँव का प्रमुख=मुखिया ) हो तो। ग्रामणी=प्रधान, मुख्य यह अर्थ है। उदा० 'देवदत्तः ग्रामणीः एषाम्–इस अर्थ में देवदत्तकाः।' [ देवदत्त जिन लोगों का ग्रामणी है वे लोग। ] यज्ञदत्तकाः। [ यज्ञदत्तः ग्रामणीः एषाम्—यह विग्रह है। यज्ञदत्त है ग्रामणी जिन लोगों का वे लोग। ]

ग्रामणी—इसका क्या प्रयोजन है ? देवदत्तः शत्रुः एषाम्। [ देवदत्त है शत्रु इनका—यहाँ कन् प्रत्यय नहीं होता है। काशिका में 'ग्रामणीः=प्रधानम्—यह नपुंसकलिङ्ग उचित है ] ॥ ७८ ॥

प्रथमासमर्थ 'शृङ्खल' शब्द से 'अस्य' इस षष्ठी के अर्थ में 'कन्' प्रत्यय होता है जो प्रथमासमर्थ है वह यदि बन्धन होता है तो, और 'यत् तत् अस्य' ( जो वह इसका )—इससे निर्दिष्ट है वह 'करभ' होता है तो।

उष्ट्राणां बालकाः = करभा, तेषां काष्ठमयं पाशकं पादे व्यतिषज्यते, तदुच्यते शृङ्खलमिति ।

यद्यपि रज्ज्वादिकमपि तत्रास्ति तथापि शृङ्खलमस्यास्वतन्त्रीकरणे भवति साधनमिति बन्धनमित्युच्यते ।।

## २१०१. उत्क उन्मनाः ।। ८० ।। ( १८८० )

'उत्कः' इति निपात्यते, उन्मनाश्चेत्स भवति । उद्गतं मनो यस्य स उन्मनाः । उच्छब्दात् ससाधनक्रियावचनात् तद्वति कन्प्रत्ययो निपात्यते । उत्को देवदत्तः । उत्कः प्रवासी । उत्सुक इत्यर्थः ।।

### न्यासः

तत् कथं शृङ्खलं बन्धनमुच्यते ? इत्याह—यद्यपीत्यादि । यद्यपि तत्र रज्ज्वादिकमप्यपरमस्ति, तथापि शृङ्खलमस्य तन्त्रीकरणं प्रति साधनं भवत्येव, न हि तेन तद् भवति । ततः शृङ्खलं बन्धनमुच्यते । रज्ज्वादिकमपि यदि बन्धनं भवति । भवतु; न ह्यत्रावधार्यते—शृङ्खलमेवेति ।। ७९ ।।

उत्क उन्मनाः ।। ससाधनक्रियावचनादिति । साधनम् = मनः । क्रिया = गमनम्, सह तेन गमनक्रिया । तद्वचनात् ससाधने गमने वर्त्तमानादित्यर्थः । तद्वतीति । तच्छब्देन क्रिया प्रत्यवमृश्यते । ससाधनक्रियावतीत्यर्थः । उत्सुक इति । उत्कण्ठित इत्यर्थः ।। ८० ।।

### पदमञ्जरी

तस्माच्छृङ्खलमस्य बन्धनमिति न युक्तं वक्तुम्, एवं तु वक्तव्यम्—'शृङ्खलवदस्य सम्बन्धनं करभे लुक्च मतोः' इति ? तत्राह—यद्यपीति । अस्तु रज्ज्वादेरपि करणत्वम्, शृङ्खलस्यापि करणत्वमस्त्येव; तदन्तरेण बन्धनस्यानिर्वृत्तेरित्यर्थः ।। ७९ ।।

उत्क उन्मनाः ।। उच्छब्दात्ससाधनक्रियावचनादिति ।। साधनम् = मनः, क्रिया = गमनम्, उद्गते मनसि वर्त्तमानादित्यर्थः । तद्वतीति । उद्गतं मनो यस्य तस्मिन्नित्यर्थः । उत्सुकः = उत्कण्ठितः ।। ८० ।।

### भावबोधिनी

उदा० शृङ्खलं बन्धनम् अस्य करभस्य—इस अर्थ में—शृङ्खलकः । ऊंटों के बच्चे 'करभ' ( कहे जाते ) हैं उनके पैरों में लकड़ी का पाश ( बीच में काटकर पैर फसाने लायक काष्ठ = लकड़ी का गोल टुकड़ा ) लगा दिया जाता है, [ उसके कारण वे स्वच्छन्दतापूर्वक इधर उधर नहीं भाग सकते ] उसे 'शृङ्खल' कहा जाता है ।

यद्यपि इस बन्धन में रस्सी आदि भी होती है तथापि उस करभ के अस्वतन्त्र करने में शृङ्खल साधन होता है अतः उसे बन्धन कहा जाता है ।

[ हाथी की सूड़ भी 'करभ' कही जाती है जैसा कि "अंके निधाय करभोरु यथासुखं ते" (शाकु०) आदि में देखा जाता हैं । परन्तु औचित्य और व्यावहारिकता देखकर ऊंट के जवान तीन-चार साल के बच्चे को ही यहाँ करभ समझना चाहिए । ] ।। ७९ ।।

"उत्कः' यह निपातित किया जाता है, यदि वह 'उन्मनाः' होता है तो । उद्गत है मन इसका वह—उन्मनाः है । [ इधर-उधर विक्षिप्त मन वाला पुरुष—ऐसा अर्थ होता है । ] साधन ( = कारक )-विशिष्ट क्रियावाचक से 'तद्वान्' अर्थ में कन् प्रत्यय निपातित होता है । [ साधन = कारक अर्थात् मन, क्रिया = गमन, गमनविशिष्ट मन अर्थ में यह निपातित होता है । तद्वान् = उद्गत मन है जिसका वह । ] उदा० उत्कः देवदत्तः । उत्क = प्रवासी । उत्सुक = उत्कंठित—यह अर्थ है । [उत् + कन् ] ।। ८० ।।

## २१०२. कालप्रयोजनाद् रोगे ॥ ८१ ॥ (१८८१)

**अर्थलभ्या समर्थविभक्तिः। कालात्प्रयोजनाच्च यथायोगं समर्थविभक्तियुक्ताद् रोगेऽभिधेये कन्प्रत्ययो भवति। कालः=दिवसादिः, प्रयोजनम्=कारणम्, रोगस्य फलं वा। द्वितीयेऽह्नि भवो द्वितीयको ज्वरः। चतुर्थकः। प्रयोजनात—विषपुष्पैर्जनितो विषपुष्पको ज्वरः। काशपुष्पकः। उष्णं कार्यमस्य उष्णकः, शीतको ज्वरः।**

### न्यासः

**कालप्रयोजनाद् रोगे ॥ अर्थलभ्येत्यादि।** अर्थोऽधिकरणादिः। तेनात्र सप्तमीप्रभृतिरनुक्तापि समर्थविभक्तिर्लभ्यते। **प्रयोजनं कारणमिति।** यदि तर्हि प्रयोजनं कारणशब्देनोच्यते कालग्रहणं पृथग् न कर्त्तव्यम्। कालोऽपि रोगस्य कारणं भवति? नैतदस्ति; न ह्यवश्यं कालो रोगस्य कारणं भवति। तत्र यदा ह्यसौ रोगस्य कारणं न भवति; तथापि ततो यथा स्यादित्येवमर्थं कालग्रहणम्। **द्वितीयेऽह्नि भवो द्वितीयक** इति। तत्र कारणान्तराद् वातादेः कुतश्चिद् भवतो ज्वरस्य कालः केवलमधिकरणभावेन विवक्षितः, न तु हेतुभावेन। कथं पुनः कालादन्यतः प्रत्ययो द्वितीयादिभ्यः शब्देभ्यो भवति, न ह्येते कालशब्दाः प्रसिद्धाः, सामान्यशब्दा ह्येते, शब्दान्तरसन्निधानात् तु काले वृत्तिरेषां गम्यते? नैष दोषः; वाक्ये ह्येषां शब्दान्तरसन्निधौ काले वृत्तिः, वृत्तिगतश्च प्रकृत्यर्थः प्रत्ययानां विशेषणम्; सन्निहितत्वात्। न वाक्यगतः, विप्रकर्षात्। **विषपुष्पैर्जनित** इति। तृतीया। **उष्णं कार्यमस्येति।** अत्र कार्यकारणसम्बन्धो

### पदमञ्जरी

**कालप्रयोजनाद्रोगे ॥ अर्थलभ्येति।** अर्थः=सामर्थ्यम्, तेन लभ्या। तत्र काले सप्तमी समर्थविभक्तिः, भवो हि तत्र प्रत्ययार्थः। प्रयोजने तृतीया, जनितो हि तत्र प्रत्ययार्थः। फले तु प्रयोजने प्रथमा। **प्रयोजनं कारणं रोगस्य फलं** चेति। उभयमपि प्रयोजयतीति प्रयोजनमुच्यते। यदि तर्हि कारणमपि प्रयोजनमुच्यते, कालग्रहणमनर्थकम्, कथम्? योऽसौ द्वितीयेऽह्नि भवो ज्वरस्तस्य द्वितीयमप्यहः कारणम्; अहरन्तरे तदनुत्पत्तेः? सत्यम्; सदपि कारणत्वं यदा न विवक्ष्यते 'तत्र भवः' इत्येव तु विवक्ष्यते, तदापि यथा स्यादित्येवमर्थं कालग्रहणम्। **द्वितीयेऽह्नि भव** इति। सामान्यशब्दस्यापि द्वितीयशब्दस्यार्थ-प्रकरणादिना वृत्तिविषये कालेऽपि वृत्तेः कालशब्दत्वम्। किं पुनः कारणं साक्षात्कालवाचिभ्यो मासादिभ्यः प्रत्ययो न भवति द्वितीयादिभ्यश्च भवति, तत्रापि सप्तमीसमर्थेभ्यो भवार्थ एव भवति कारणवाचिनस्तृतीया-

### भावबोधिनी

यहाँ अर्थ से प्रतीत होने वाली समर्थ विभक्ति है। यथायोग समर्थ विभक्ति से युक्त (क) कालवाचक से और (ख) प्रयोजनवाचक से 'रोग' अर्थ अभिधेय=वाच्य रहने पर 'कन्' प्रत्यय होता है। [ यहाँ काल में सप्तमी समर्थ विभक्ति है क्योंकि 'उसमें होने वाला'—ऐसा अर्थ होता है। प्रयोजन में तृतीया समर्थविभक्ति है क्योंकि वहाँ 'उनसे जनित=पैदा कराया गया' यह अर्थ है। इसी कारण 'यथायोग समर्थ विभक्ति लिखी गई। ] काल=दिन आदि, प्रयोजन=कारण अथवा रोग का फल। उदा० (क) द्वितीये अह्नि भवः—इस अर्थ में—द्वितीयकः ज्वरः। [ दूसरे दिन होने वाला बुखार। ] चतुर्थकः। [ चतुर्थेऽह्नि भवः—यह अर्थ है। इनमें कन् प्रत्यय होता है ] (ख) प्रयोजन का उदा० विषपुष्पैः जनितः—इस अर्थ में विषपुष्पकः ज्वरः। विष के फूलों से पैदा होने वाला बुखार। यहाँ विषपुष्प प्रयोजन=कारण हैं। ] काशपुष्पकः। [ काश=सरकंडे के फूलों से जनित बुखार। ] उष्णं कार्यम् अस्य—उष्णकः, शीतं कार्यम् अस्य—शीतकः ज्वरः। [ जिस बुखार का कार्य=परिणाम उष्णता हो, जिस बुखार का कार्य परिणाम शीतलता हो अर्थात् जिसमें बहुत गर्मी लगती है और जिसमें बहुत सर्दी लगतीहै ऐसे

**उत्तरसूत्रादिह संज्ञाग्रहणमपकृष्यते । तेनायं प्रकारनियमः सर्वो लभ्यते ॥**

## २१०३. तदस्मिन्नन्नं प्राये संज्ञायाम् ॥ ८२ ॥ ( १८८२ )

**तदिति प्रथमासमर्थादस्मिन्निति सप्तम्यर्थे कन् प्रत्ययो भवति, यत्तत्प्रथमासमर्थमन्नं चेत्प्राय-**

### न्यासः

विवक्षितः। स चेदंशब्दादेवोत्पन्नया षष्ठ्याभिहित इत्युष्णशब्दात् प्रथमैव भवति। इह कालप्रयोजन-विशेषवाचिभ्यः प्रत्ययोऽभिहितः, न कालप्रयोजनशब्दाभ्याम्; कालविशेषवाचिभ्यो भवन् क्रियायाः कर्त्तरि ज्वरे प्रयोजनविशेषवाचिभ्यः प्रयोजनमिति, कार्यकारणविवक्षायाञ्च कार्यसम्बन्धिनि। न चायं प्रकार-नियमः सूत्रे उक्तः, तत् कथं लभ्यते ? इत्यत आह—**उत्तरसूत्रादिह संज्ञाग्रहणमपकृष्यते**। तेन तस्मिन् सत्ययमर्थो भवति—प्रत्ययान्तश्चेत् संज्ञा भवति, तस्मिंश्चार्थे सति प्रत्ययान्तं यदि संज्ञा भवत्येवं प्रत्यय उत्पद्यते, नान्यथेति। संज्ञाग्रहणसन्निधानादिह सर्वप्रकारोऽयं नियमो लभ्यते। न हि विना तेन प्रकारेण प्रत्ययान्तं संज्ञा भवति। ननु चोत्तरसूत्रे संज्ञाग्रहणं तस्यैव शेषभूतम्, तत् कथं ततोऽपकृष्टुं शक्यते ? नैष दोषः, उभयोरपि योगयोस्तच्छेषभूतम्। कथम् ? योगविभागः करिष्यते—'तदस्मिन्नन्नं, प्राये' ततः 'संज्ञायाम्' इति, तेन संज्ञाग्रहणमुभयेषां शेषो विज्ञास्यते ॥ ८१ ॥

**तदस्मिन्नन्नं प्राये संज्ञायाम्** ॥ **अन्नञ्चेत् प्रायविषयमिति**। प्रायो विषयो यस्य तत् तथोक्तम्। विषयग्रहणेन 'प्राये' इति सप्तम्या विषयसप्तमीत्वं दर्शयति। **प्रत्ययो भवतीति**। अन्यथा गुडापूपाः प्रायेणान्नमिति विवक्षायाः कारकाणि भवन्ती'ति प्रायस्य विषयभूतस्य करणत्वेन विवक्षितत्वात् तृतीया।

### पदमञ्जरी

समर्थात्, फलवाचिनस्तु प्रथमासमर्थात्, न ह्येतत्सर्वं सूत्राक्षरैरुपात्तम् ? तत्राह—**उत्तरसूत्रात्संज्ञाग्रहणमि-हानुकृष्यत इति**। सिंहावलोकितन्यायेन, यथा सिंहा धावन्तः पृष्ठतोऽवलोकयन्ते। अपर आह—उत्तर-सूत्रे योगविभागः, 'तदस्मिन्नन्नं प्राये', ततः 'संज्ञायाम्', यदेतदनुक्रान्तं तत्संज्ञायां द्रष्टव्यमित्यर्थः। संज्ञा-ग्रहणमुभयोः शेषः एतदेव चानुकर्षणं विवक्षितम् ॥ ८१ ॥

**तदस्मिन्नन्नं प्राये संज्ञायाम्** ॥ अन्नम्=अभ्यवहार्यम्, अद्यते स्मेति कृत्वा। गुडामिश्रा अपूपा

### भावबोधिनी

बुखार का क्रमशः— उष्णकः और शीतकः कहा जाता है। यहाँ प्रथमासमर्थ से यह प्रत्यय होता है। ]

[ पूर्वोक्त व्याख्यान की प्रतीति किस आधार पर होती है ? ] उत्तरवर्त्ती सूत्र से संज्ञाग्रहण का अपकर्ष होता है। इसी से यह सब प्रकारनियम [ अर्थ का संकोच-विस्तार ] ज्ञात हो जाता है।

**विमर्श**—यहाँ साक्षात्कालवाची से प्रत्यय न होकर 'द्वितीय' आदि से होता है। इसमें भी सप्तमीसमर्थ से होता है। प्रयोजन यह करण और कर्म दोनों अर्थों में निष्पादित मानकर कारण और फल दोनों अर्थ होते हैं। कारण में तृतीया समर्थ विभक्ति है। किन्तु फल में प्रथमा ही समर्थ विभक्ति है। यह सारा व्याख्यान तभी संभव होता है जब अग्रिम सूत्र से 'संज्ञायाम्' इसका अपकर्ष इस सूत्र में कर लिया जाता है ॥ ८१ ॥

'तत्' इस प्रथमा समर्थ से 'अस्मिन्' इस सप्तमी के अर्थ में 'कन्' प्रत्यय होता है, जो प्रथमासमर्थ अन्न है वह प्रायविषयक हो तो। प्रायः=बाहुल्य, बहुत होना। संज्ञा का ग्रहण तदन्तोपाधि, है अर्थात् प्रत्ययान्त से संज्ञा की प्रतीति होनी चाहिए। उदा० गुडापूपाः प्रायेण अन्नम् अस्यां पौर्णमास्याम्—इस अर्थ में गुडापूपिका। [ गुडमिश्रिताः अपूपाः=इस अर्थ में गुडापूपाः। ये ही बहुल रूप से अन्न जिस पौर्णमासी में होता है वह—गुडा-

**विषयं तद् भवति । प्रायः=बाहुल्यम् । संज्ञाग्रहणं तदन्तोपाधिः । गुडापूपाः प्रायेणान्नमस्यां पौर्णमास्यां गुडापूपिका । तिलापूपिका पौर्णमासी ।**

*** वटकेभ्य इनिर्वक्तव्यः * ( म० भा० ५.२.८२ वा० १ ) । वटकिनी पौर्णमासी ॥**

**२१०४. कुल्माषादञ् ॥ ८३ ॥ ( १८८३ )**

**कुल्माषशब्दादञ् प्रत्ययो भवति 'तदस्मिन्नन्नं प्राये संज्ञायाम्' ( ५.२.८२ ) इत्येतस्मिन्नर्थे । अकारो वृद्धिस्वरार्थः । कुल्माषाः प्रायेणान्नमस्यां—कौल्माषी पौर्णमासी ॥**

## न्यासः

**गुडापूपिकेति ।** 'प्रत्ययस्थात् कात् पूर्वस्यातः' इतीत्वम् ।

**वटकेभ्य इनिर्वक्तव्य इति ।** व्याख्येय इत्यर्थः । तत्रेदं व्याख्यानम्—इह संज्ञाग्रहणस्य प्रत्ययान्तोपाधिकत्वाद् यत्र प्रत्ययान्तं संज्ञा भवति तत्र प्रत्ययेन भवितव्यम् । न च वटकशब्दः कन्प्रत्ययान्तः कस्यचित् संज्ञा, तेन ततः कन् न भविष्यति, तस्मिंश्चासति मत्वर्थीय इनिर्भविष्यतीति । **वटकिनीति ।** 'ऋन्नेभ्यो ङीप्' ॥ ८२ ॥

**कुल्माषादञ् ॥** संज्ञाग्रहणेन पूर्वेण कनः प्राप्तावसत्यां वाक्येनाभिधाने प्राप्ते मत्वर्थीये मनुबादाविदमुच्यते । **कौल्माषीति ।** 'टिड्ढाणञ्' इति ङीप् ॥ ८३ ॥

## पदमञ्जरी

**गुडापूपाः**=कृसरस्तिलौदनः, तिलक्षोद इत्यन्ये । त्रिबिलोऽपूपस्त्रिपुटः । **वटकेभ्य इनिरिति ।** कनि प्राप्ते वचनम् । ननु संज्ञाग्रहणात्कन्न भविष्यति, तस्मिंश्चासति मत्वर्थीय इनिर्भविष्यति ? न सिद्ध्यति; 'सप्तम्यां च न तौ स्मृतौ' इति वचनात् ॥ ८२ ॥

**कुल्माषादञ् ॥** कुल्माषाः=मुद्गाः ॥ ८३ ॥

## भावबोधिनी

पूपिका कही जाती है । गुडापूप+कन्=क, टाप्=आ, "प्रत्ययस्थात् कात् पूर्वस्यातः" (पा० सू० ७।३।४४) से इत्व करने पर रूप बनता है । गुड़ मिले पुआ जिसमें विशेष रूप से अन्न होते हैं । वह पौर्णमासी इस शब्द से कही जाती है ।] तिलापूपिका पौर्णमासी । [तिलापूपाः प्रायेणान्नम् अस्यां सा पौर्णमासी—यह अर्थ है । अधिक तिलों से युक्त पुआ अन्न जिसमें होता है वह पौर्णमासी है । [ कहीं कहीं—कृशरिका, कृसरिका त्रिपुटिका—इनका भी उल्लेख मिलता है । जिसमें तिल और चावल अन्न है वह पौर्णमासी 'कृशरिका है । जिसमें इलायची मिले पुआ अन्न हैं वह पौर्णमासी 'त्रिपुटिका' है । 'त्रिपुटा' छोटी इलायची का वाचक है । द्र० अमरकोष २।४।१२५ ]

* वटक से इनि प्रत्यय कहना चाहिए ।* उदा० वटकिनी पौर्णमासी । [ वटका प्रायेण अन्नम् अस्यां पौर्णमास्याम् । जिस पौर्णमासी में वटक=बड़ा ( उड़द की दाल पीस कर बनाये जाने वाले भक्ष्य पदार्थ ) अधिक हों उसे 'बटकिनी' कहा जाता है । ] ये शब्द पाणिनि और कात्यायन आदि के समय पर विभिन्न पौर्णमासियों में बनाये जाने वाले अन्न के व्यंजनों का संकेत करते हैं । ] ॥ ८२ ॥

'वह इसमें बहुल रूप से अन्न होता है' इस अर्थ में 'कुल्माष' शब्द से अञ् होता है । अकार आदिवृद्धि और स्वर के लिए है । उदा० कुल्माषाः प्रायेणान्नम् अस्याम्—इस अर्थ में—'कौल्माषी पौर्णमासी । [ आरनालकसौवीरकुल्माषाभिषुतानि च । अवन्तिसोमधान्याम्लकुञ्जलानि च काञ्जिके ॥" अमरकोष २।९।३९ के अनुसार कुल्माष=काजी को कहते हैं । यह अन्न रूप से जिसमें अधिक रहता है वह पौर्णमासी 'कौल्माषी' होती है । पदमञ्जरी में

१. 'कृशरिका, त्रिपुटिका'—इत्युदाहरणद्वयमधिकं पुस्तकान्तरे ।

## २१०५. श्रोत्रियँश्छन्दोऽधीते ॥ ८४ ॥ ( १८८४ )

**'श्रोत्रियन्'** इति निपात्यते 'छन्दोऽधीते' इत्यस्मिन्नर्थे। नकारः स्वरार्थः। श्रोत्रियो ब्राह्मणः।
* 'श्रोत्रियँश्छन्दोऽधीते' इति वाक्यार्थे पदवचनम् * (म० भा० ५।२।८४ वा० १)।
* छन्दसो वा श्रोत्रभावः, तदधीते'* इति घँश्च प्रत्ययः। ( म०भा० वा० २ )
कथं छन्दोऽधीते छान्दसः ? वाग्रहणमनुवर्त्तते, 'तावतिथं ग्रहणमिति लुग्वा' ( ५.२ ७७ )

### न्यासः

**श्रोत्रियँश्छन्दोऽधीते ॥ नकार स्वरार्थ** इति। ननु च नकार इद् यस्य तस्मिन्निति परतः स्वर उच्यते, न च समुदायानुबन्धे नकारे नित्परत्वमस्ति ? नैष दोषः, न एवेत् नित्, तत्पुरुषोऽयम्। तेन नकार इत्संज्ञे परतः पूर्वस्य स्वरो भविष्यति। किं पुनरत्र निपात्यते ? इत्याह—**छन्दोऽधीते** इति। अस्य वाक्यस्यार्थे श्रोत्रियन्निति निपात्यते। **छन्दसो वेत्यादि**। पूर्वत्र वाक्यार्थे पदमविद्यमानप्रकृतिप्रत्ययविभागं निपातितम्, इदानीं तु प्रकृतिप्रत्ययौ निपात्येते तदधीत इत्यस्मिन्नर्थे। अत्र यद्यपि निदिति बहुव्रीहिः; तथापि स्वरः सिध्यत्येव; घन्प्रत्ययस्य नितः परस्य विद्यमानत्वात्।

**कथमित्यादि**। यदि 'छन्दःशब्दस्य श्रोत्रशब्द आदेशो घश्च प्रत्ययः तदधीते' इत्यस्मिन्नर्थे निपात्यते, निपातनेन बाधित्वादत्रार्थे 'छान्दस इति न सिध्यतीत्यभिप्रायः ॥ ८४ ॥

### पदमञ्जरी

**श्रोत्रियँश्छन्दोऽधीते ॥ वाक्यार्थ** इति। वाक्यार्थग्रहणेन तदाश्रयश्छन्दोऽध्यायी पुरुष उपचारादुच्यते, कुतः ? मुख्यो हि वाक्यार्थः क्रियारूपः, सम्बन्धरूपो वा, स चासत्त्वभूतः। श्रोत्रियशब्दस्तु सत्त्वभूतार्थाभिधायी, तस्मिन्वाक्यार्थेऽविद्यमानप्रकृतिप्रत्ययविभागः। श्रोत्रियशब्दो निपात्यत इत्यर्थः। अथ कथमस्मिन् पक्षे स्वरसिद्धिः, यावता नकार इद्यस्य तत्र परतः स्वरो विधीयते, न चात्रैवं व्यपवर्गोऽस्ति ? मा भूद् व्यपवर्गः, नित्करणसामर्थ्यात्तदभावेऽपि भविष्यति। यद्वा नितीति कर्मधारयोऽयम्-नश्चासाविच्च नित्, तत्र परत इति।

**कथमित्यादि**। छन्दसः श्रोत्रभावो घन् च प्रत्ययः, छान्दस इति न सिद्ध्यति; घनाऽणो बाधितत्वात्, श्रोत्रभावेन च छन्दःशब्दस्य निर्वर्तितत्वादिति प्रश्नः। **वाग्रहणमनुवर्तत** इति। अपर आह—यश्छन्दोऽधीते तदर्थं चानुतिष्ठति तत्र श्रोत्रियशब्दः, अध्येतृमात्रे तु छान्दसशब्द इत्यर्थभेदान्नास्ति बाध्यबाधकत्वमिति। 'एकां शाखामधीत्य श्रोत्रियो भवति' इति **धर्मशास्त्रम्** ॥ ८४ ॥

### भावबोधिनी

कुल्माष = मूँग माना गया है ] ॥ ८३ ॥

'छन्दः = वेद को पढ़ता है—इस अर्थ में 'श्रोत्रियन्' यह निपातन होता है। नकार [ यह नित् मान कर आद्युदात्त ] स्वर के लिए है। उदा० श्रोत्रियः ब्राह्मणः। वेद को पढ़ता है वह श्रोत्रिय है—इस वाक्यार्थ में पद कहा गया है, अर्थात् पद से वाक्यार्थ की प्रतीति होती है। अथवा 'छन्दस्' का 'श्रोत्र' आदेश होता है, 'उस छन्दः को पढ़ता है' इस अर्थ में घन् प्रत्यय होता है। [ छन्दः = श्रोत्र; श्रोत्र + घन् = घ = इय ]

[ यदि 'छन्दोऽधीते' इस अर्थ में यह 'श्रोत्रियः' बनता है तो ] छन्दः अधीते—इस अर्थ में 'छान्दसः' यह कैसे बनता है ? इसमें 'तावतिथं ग्रहणमिति लुग्वा" ( पा० सू० ५।२।७७ ) से 'वा' ग्रहण की अनुवृत्ति होती है। [ अतः यह आदेश और प्रत्यय दोनों के न होने पर छन्दस् + अण् यह औत्सर्गिक प्रत्यय करने पर 'छान्दसः' भी बन जाता है। ]

इत्यतः ॥

## २१०६. श्राद्धमनेन भुक्तमिनिठनौ ॥ ८५ ॥ ( १८८५ )

'श्राद्धम्' इति प्रकृतिः, 'अनेन' इति प्रत्ययार्थः, 'भुक्तम्' इति प्रकृतिविशेषणम्। श्राद्धशब्दाद् भुक्तोपाधिकादनेनेत्यस्मिन्नर्थे इनिठनौ प्रत्ययौ भवतः। श्राद्धशब्दः कर्मनामधेयं तत्साधने द्रव्ये वर्तित्वा प्रत्ययमुत्पादयति। श्राद्धं भुक्तमनेन श्राद्धी, श्राद्धिकः।

* इनिठनोः समानकालग्रहणम् * (म० भा०)—अद्य भुक्ते श्राद्धे श्वः श्राद्धिक इति प्रयोगो मा भूत् ॥

### न्यासः

श्राद्धमनेन भुक्तमिनिठनौ ॥ श्राद्धशब्द इत्यादि। शास्त्रोक्तेन विधिना निष्पाद्यस्य कस्यचिदेव क्रियाविशेषस्य श्राद्धशब्दः संज्ञा। कर्मशब्दोऽयं क्रियावाची। श्रद्धा यत्र कर्मण्यस्ति तच्छ्राद्धम्, 'प्रज्ञाश्रद्धार्चावृत्तिभ्यो णः' इति णप्रत्ययः। तत्साधन इत्यादि। भुक्तत्वं कर्मणो विशेषणं न सम्भवतीति तत्साधने भक्तादौ वर्त्तित्वा श्राद्धे प्रत्ययमुत्पादयतीति विज्ञायते। तत्साधने तु तस्य वृत्तिः, तादर्थ्याद्; यथा—प्रदीपार्थायां मल्लिकायां प्रदीपशब्दस्य। समानकालग्रहणमिति। समानः कालो गृह्यते येन तत्समानकालग्रहणम्। व्याख्यानं कर्त्तव्यमित्यर्थः। किमर्थम्? इत्याह—अद्य भुक्त इत्यादि। यस्मिन्नहनि श्राद्धमनेन भुक्तं तस्मिन्नेव श्राद्धिक इति स्यात्, अद्य भुक्ते श्वो मा भूदित्येवमर्थम्। तत्रेदं व्याख्यानम्—इहापि वेत्यनुवर्त्तते, सा च व्यवस्थितविभाषा, तेन यस्मिन्नेवाहनि श्राद्धं भुक्तं तस्मिन्नेवेष्यते, नान्यत्रेति ॥ ८५ ॥

### पदमञ्जरी

श्राद्धमनेन भुक्तमिनिठनौ ॥ श्राद्धशब्दः कर्मनामधेयमिति। श्रद्धया निष्पाद्यस्य पित्र्यस्य कर्मणः श्राद्धशब्दः संज्ञा, श्रद्धास्मिन्नस्तीति 'प्रज्ञाश्रद्धार्चावृत्तिभ्यो णः' इति णः। तत्साधने द्रव्य इति। मुख्यश्राद्धस्य भोजनासम्भवात्। समानकालग्रहणमिति। भुजिना समाने काले प्रत्ययान्तस्य प्रयोगो यथा स्यात्, यद्यपि भुजिक्रिया कतिपयक्षणसाध्या, तथापि यावन्तं कालं तदाशिनस्तृप्तिशेषस्तल्लिङ्गं चानुवर्तते तावत्समानकालः, स च प्रायोवृत्त्याऽद्यतन एवेति तस्मिन्नेव प्रत्ययान्तस्य प्रयोगः। यदा तु कस्यचिद्दुर्बलस्य द्वितीयेऽप्यह्नि भुक्तमपरिणतं तदा प्रयोगाभावः। तदिदमाह—अद्य भुक्ते श्वः श्राद्धिक इति प्रयोगो मा भूदिति ॥ ८५ ॥

### भावबोधिनी

**विमर्श**—वेद पढ़ने वाला और उसके अनुसार आचरण करने वाला 'श्रोत्रिय' कहा जाता है और जो केवल वेद पढ़ने वाला है वह 'छान्दस' है ॥ ८४ ॥

'श्राद्ध यह प्रकृति है, 'अनेन' यह प्रत्ययार्थ है, 'भुक्तम्' यह प्रकृति का विशेषण है। भुक्त (=खाया) इस उपाधि ( विशेषण ) वाले 'श्राद्ध' शब्द से 'अनेन' ( इसने ) इस अर्थ मे 'इनि' और 'ठन्' ये प्रत्यय होते हैं। श्राद्ध शब्द एक कर्मविशेष का नाम है, यह उस कर्म के साधनभूत पदार्थ के लिये होकर प्रत्यय उत्पन्न कराता है। [ चूँकि श्राद्ध=कर्मविशेष का भक्षण संभव नहीं है। अतः उसमें प्रयुक्त वस्तुओं का भक्षण जिसने किया है, उस अर्थ में यह प्रत्यय होता है। ] उदा० श्राद्धं भुक्तम् अनेन–इस अर्थ में 'श्राद्धी' और 'श्राद्धिकः' होते। [ श्राद्ध+इन्, श्राद्ध+ठन्=ठ=इक, भसंज्ञा, अलोप ]

* इनि और ठन् में ( भुज् ) के समान काल का ग्रहण है। * अतः आज श्राद्ध भुक्त=खा लेने पर कल 'श्राद्धिकः' यह प्रयोग नहीं होता। [ जब भोजन हो रहा है उसी काल में इन प्रत्ययों के प्रयोग से निष्पन्न शब्दों का

## २१०७. पूर्वादिनिः ॥ ८६ ॥ ( १८८६ )

'अनेन' इति प्रत्ययार्थः कर्ताऽनुवर्त्तते । न च क्रियामन्तरेण कर्त्ता सम्भवतीति यां काञ्चित्क्रिया-मध्याहृत्य प्रत्ययो विधेयः । पूर्वाद् 'अनेन' इत्यस्मिन्नर्थे इनिः प्रत्ययो भवति । पूर्वं गतमनेन, पीतं, भुक्तं, वा पूर्वी, पूर्विणौ, पूर्विणः ॥

## २१०८. सपूर्वाच्च ॥ ८७ ॥ ( १८८७ )

विद्यमानं पूर्वं यस्मादिति[1] सपूर्वं प्रातिपदिकम्, तस्य पूर्वशब्देन तदन्तविधिः । सपूर्वात्प्राति-पदिकात्पूर्वशब्दान्तादनेनेत्यस्मिन्नर्थे इनिः प्रत्ययो भवति । पूर्वं कृतमनेन कृतपूर्वी कटम् । भुक्तपूर्वी

### न्यासः

**पूर्वादिनिः ॥ पूर्वं गतं पीतं भुक्तमीति ।** पूर्वशब्दोऽत्र क्रियाविशेषणत्वात् कर्म भवतीति द्वितीया-समर्थात् प्रत्ययो विज्ञायते । **पूर्वीति ।** 'सौ च' इति दीर्घः ॥ ८६ ॥

**सपूर्वाच्च ॥** सहशब्दो विद्यमानवचनः । अत एवाह—**विद्यमानं पूर्वमिति ।** 'वोपसर्जनस्य' इति सहस्य सभावः । **कृतपूर्वी कटमिति ।** ननु च निष्ठया कर्मणोऽभिहितत्वाद् द्वितीयात्र न प्राप्नोति ? नैष दोषः, नेयं कर्मणि निष्ठा, किं तर्हि ? भावे । यदापि कर्मणि तदापि न दोषः, निष्ठया हि सामान्यं कर्माभिहितम्, न विशेषकर्म । तस्माद् विशेषकर्मणोऽनभिहितत्वाद् द्वितीया भविष्यति । ननु च पूर्वं

### पदमञ्जरी

**पूर्वादिनिः ॥ पूर्वं गतमेनेत्यादि ॥** क्रियाविशेषणाद् द्वितीयान्तात्प्रत्ययः ॥ ८६ ॥

**सपूर्वाच्च ॥ विद्यमानं पूर्वमस्मिन्निति[1] सपूर्वमिति ।** 'तेन सहेति तुल्ययोगे' इत्युपाधिवचनस्य प्रायिकत्वाद्विद्यमानवचनस्यापि समासः । पूर्वशब्दोऽवयववचनः । न च शब्दान्तरं पूर्वशब्दस्यावयव उप-पद्यते । सकारस्त्वव्यभिचारी, तेन प्रातिपदिकस्यैतद्विशेषणम्—सपूर्वं यत्प्रातिपदिकमिति । एवं च पूर्वशब्दोऽपि तस्यैव विशेषणम्, विशेषणेन च तदन्तविधिरित्याह—**तस्य पूर्वशब्देन तदन्तविधिरिति । सपूर्वादित्यादि ।** यद्यपि पूर्वशब्दान्तं प्रातिपदिकं सपूर्वमेव, तथापि असति सपूर्वग्रहणे तदन्तविधिर्न लभ्यत इति 'सपूर्वात्' इत्युक्तम् । **कृतपूर्वी कटमिति ।** 'कर्तृकर्मणोः कृति' इत्यत्रायं प्रयोग उपपादितः ।

### भावबोधिनी

प्रयोग होता है आज जिसने श्राद्ध की सामग्री खा ली, कल उसके लिए इन प्रत्ययों वाले शब्दों का प्रयोग नहीं हो सकता । ] ॥ ८५ ॥

[ पूर्व सूत्र से ] 'अनेन' [ इसके द्वारा ] यह प्रत्ययार्थ कर्ता अनुवृत्त होता है । और क्रिया के बिना कर्त्ता संभव नहीं है इस लिए जिस किसी क्रिया का अध्याहार करके प्रत्यय का विधान करना चाहिए । 'पूर्व' इस शब्द से 'अनेन इस अर्थ में 'इनि' प्रत्यय होता है । उदा० पूर्वम् अनेन गतम्, पीतम्, अथवा भुक्तम् = इन अर्थो में—पूर्वी, [ द्विवचन में ] पूर्विणौ, बहुवचन में पूर्विणः [ ये रूप बनते हैं । पूर्व + इनि, भसंज्ञा, अलोप । इसने पहले गमन किया, पिया अथवा खाया—ये अर्थ 'पूर्वी' के हैं । ] ॥ ८६ ॥

विद्यमान है पूर्व में जिससे वह 'सपूर्व' प्रातिपदिक है, उस प्रातिपदिक की 'पूर्व' शब्द के साथ तदन्तविधि है । सपूर्व = जिसके पूर्व में विद्यमान है कोई शब्द ऐसा जो प्रातिपदिक 'पूर्व' शब्दान्त है उससे 'अनेन' इस अर्थ

---

१. 'सपूर्वं यत्प्रातिपदिकम्' इति पदमञ्जरीसम्मतः पाठः ।

२. 'पूर्वं यस्मादिति' इति काशिका ।

ओदनम् । 'सुप्सुपा' ( २.१.४ ) इति समासं कृत्वा तद्धित उत्पाद्यते ।

योगद्वयेन चानेन—'पूर्वादिनिः' ( ५. २. ८६ ) 'सपूर्वाच्च' ( ५. २. ८७ ) इति—परिभाषाद्वयं ज्ञाप्यते 'व्यपदेशिवद्भावोऽप्रातिपदिकेन' ( शाक० परि० ६५ ), 'ग्रहणवता प्रातिपदिकेन तदन्तविधिर्नास्ति' ( व्या० परि० ८९ ) इति ॥

**न्यासः**

कृतमित्यनेकपदावयवत्वाच्च वाक्यमिदम् । वाक्यस्य चार्थवत्समुदायानां समासग्रहणं नियमार्थमिति प्रातिपदिकसंज्ञा नास्ति । तत् कथमतः प्रत्ययः ? इत्याह—**सुप्सुपेत्यादि** ।

**योगद्वयेन चेत्यादि** । यदि 'व्यपदेशिवद्भावोऽप्रातिपदिकेन' इत्येषा परिभाषा न स्यात्, तदा 'सपूर्वात्पूर्वादिनिः' इत्येकयोगं कुर्यात्, किं योगविभागेन ? एकयोगे हि सति केवलादपि व्यपिदेशिवद्भावेन प्रत्ययो भविष्यति । तदेवमेकयोगेन सिद्धे यत् 'पूर्वादिनिः' इति पृथग्योगं करोति, तज्ज्ञापयति—अस्तीयं परिभाषा 'व्यपदेशिवद्भावोऽप्रातिपदिकेन' इति । यदि वा 'ग्रहणवता' इत्यादिका परिभाषा न स्यात् 'सपूर्वाच्च' इतीमं योगं न कुर्यात् । 'पूर्वादिनिः' इत्यनेनैव हि कृतपूर्वीत्यादावपि भविष्यति तदन्तविधिना । तदेवं पूर्वयोगेणैव पूर्वशब्दान्तादपि सिद्धे प्रत्यये यत् 'सपूर्वाच्च' इतीमं योगं करोति, तज् ज्ञापयति—अस्तीयं परिभाषा 'ग्रहणवता प्रातिपदिकेन तदन्तविधिर्न भवति' इति ॥ ८७ ॥

**पदमञ्जरी**

**योगद्वयेनेत्यादि** । यदि 'व्यपदेशिवद्भावोऽप्रातिपदिकेन' ( सीर० परि० ५६ ) इत्येषा परिभाषा न स्यात् 'पूर्वादिनिः सपूर्वात्' इत्येकमेव योगं कुर्यात्; व्यपदेशिवद्भावात्केवलादपि भविष्यति, किं योगद्वय-

**भावबोधिनी**

में 'इनि' प्रत्यय होता है। उदा० पूर्वं कृतम् अनेन—इस विग्रह में—कृतपूर्वी कटम्, भुक्तपूर्वी ओदनम् । [ पहले चटाई बना लेने वाला, पहले भात खा लेने वाला ] "सुप् सुपा" इस योगविभाग से समास करने के बाद तद्धित प्रत्यय [इनि] उत्पन्न होता है ।

पूर्वोक्त 'पूर्वादिनिः' "सपूर्वाच्च" इन दोनों सूत्रों से ये दो परिभाषाएं ज्ञापित होतीं हैं—"प्रातिपदिक से व्यपदेशिवद्भाव नहीं होता हैं" और 'ग्रहणवान्=उल्लिखित प्रातिपदिक से तदन्तविधि नहीं होती है ।"

**विमर्श**—रहस्य यह है कि 'पूर्वादिनिः सपूर्वात्' यह एक ही सूत्र बनाना चाहिए था, 'क्योंकि "व्यपदेशिवदेकस्मिन्" इस परिभाषा द्वारा अकेला 'पूर्व' भी पूर्वविशिष्ट मान लिया जाता । अतः अकेले से और विशिष्ट से–दोनों प्रकार के 'पूर्व' और 'कृतपूर्व' से 'इनि' हो ही जाता। न दोनों सूत्र बनाने पड़ते और न 'च' की आवश्यकता पड़ती । अतः इन दोनों सूत्रों का बनाना व्यर्थ होकर यह परिभाषा ज्ञापित करता है "व्यपदेशिवद्भावोऽप्रातिपदिकेन" । अतः अकेला 'पूर्व' शब्द सपूर्व नहीं हो सकता है । उससे प्रत्यय सम्भव नहीं हो पाता ।

इसी प्रकार 'पूर्वादिनिः' यह एक ही सूत्र बनाना चाहिए था, तदन्तविधि मान कर पूर्वशब्दान्त=कृतपूर्व आदि से भी 'इनि' हो ही जाता, पुनः दो सूत्र बनाना व्यर्थ है । वही व्यर्थ होकर यह ज्ञापित करता है "ग्रहणवता प्रातिपदिकेन तदन्तविधिर्नास्ति ।" अतः 'पूर्व' से पूर्वशब्दान्त=कृतपूर्व आदि का ग्रहण नहीं हो सकता । इसलिए दूसरा सूत्र आवश्यक है ।

एक प्रश्न यह है कि 'कृतपूर्वी कटम्' यह शब्द किस प्रकार सम्भव है क्योंकि 'पूर्वं कृतम् अनेन' इस अर्थ में 'क्त' द्वारा कर्म का अभिधान हो जाने के कारण 'कटम्' यहाँ द्वितीया की प्राप्ति नहीं है ? उत्तर यह है कि ऐसे स्थलों पर पहले कर्मविशेष का सम्बन्ध न करके 'भाव' में प्रत्यय करके 'कृत' बनाना चाहिए । बाद में 'पूर्व' शब्द

## २१०९. इष्टादिभ्यश्च ॥ ८८ ॥ ( १८८८ )

'अनेन' इत्येव । इष्टादिभ्यः प्रातिपदिकेभ्योऽनेनेत्यस्मिन्नर्थे इनिः प्रत्ययो भवति । इष्टमनेन इष्टी यज्ञे । पूर्ती श्राद्धे । 'क्तस्येन्विषयस्य कर्मणि' इति सप्तम्युपसंख्यायते ।

इष्ट । पूर्त । उपसादित । निगदित । परिवादित । निकथित । परिकथित । सङ्कलित । निपठित । सङ्कल्पित । अर्नाचत । विकलित । संरक्षित । निपतित । पठित । परिकलित । अचित । परिरक्षित । पूजित । परिगणित । उपगणित । अवकीर्ण । परित । उपकृत । उपाकृत । आयुक्त । आम्नात । श्रुत । अधीत । आसेवित । अपवारित । अवकल्पित । निराकृत । अनुयुक्त । उपनत । अनुगुणित । अनुपठित । व्याकुलित । निगृहीत[1] । इष्टादिः ॥

### न्यासः

इष्टादिभ्यश्च ॥ इष्टी यज्ञ इति । कथं पुनरत्र सप्तमी, यावता यज्ञस्य कर्मतायां द्वितीयया भवितव्यम् ? इत्याह—क्तस्येन्विषयस्येत्यादि ॥ ८८ ॥

### पदमञ्जरी

करणेन ? अत्र चकारः कर्तव्यो न भवति । यदि च 'ग्रहणवता प्रातिपदिकेन' ( व्या० परि० ८९ ) इत्येषा परिभाषा न स्यात्, 'पूर्वादिनिः' इत्येतावदेव ब्रूयात्, तदन्तविधिना सपूर्वादपि भविष्यतीति किं द्वितीयेन योगेन ? तदिह योगद्वयेन परिभाषाद्वयं ज्ञाप्यते ॥ ८७ ॥ ८८ ॥

### भावबोधिनी

के साथ समास किया जाता है और तद्धित प्रत्यय करके 'कृतपूर्वी' बनाकर बाद में 'कर्म' 'कटम्' आदि का सम्बन्ध किया जाता है। ऐसे प्रयोगों के लिए यही उपाय है। यहाँ केवल कृत् प्रत्यय नहीं है अतः "कर्तृकर्मणोः कृति" ( पा० सू० २।३।६५ ) से कर्म में षष्ठी नहीं होती है ॥ ८७ ॥

'अनेन' इसकी अनुवृत्ति होती है। 'इष्ट' आदि प्रातिपदिकों से 'अनेन' इस अर्थ में 'इनि' प्रत्यय होता है। उदा० इष्टम् अनेन—इस अर्थ में 'इष्टी यज्ञे।' पूर्तम् अनेन —इस अर्थ में-'पूर्ती श्राद्धे' यह होता है। 'क्तस्य इन्विषयस्य कर्मण्युपसंख्यानम्" [ इन् प्रत्यय जिससे होने वाला है ऐसे क्तान्त के कर्म में षष्ठी का उपसंख्यान करना चाहिए। ] इस वचन से कर्म में सप्तमी का उपसंख्यान किया जाता है। [ अतः 'इष्टी यज्ञे'= पहले यज्ञ करने वाला। 'पूर्ती श्राद्धे'=पहले श्राद्ध पूर्त करने वाला—ये अर्थ है"। -'त्रिष्वथ क्रतुकर्मेष्टं पूर्तं खातादि कर्म यत्।" अमरकोष २।७।२८ के अनुसार तालाब आदि बनवाना 'पूर्त' है।

[ इस गण में पठित शब्द—] इष्ट। पूर्त। उपसादित। निगदित। परिवादित। निकथित। परिकथित। सङ्कलित। निपठित। सङ्कल्पित। अर्नावत। विकलित। संरक्षित। निपतित। पठित। परिकलित। अचित। परिरक्षित। पूजित। परिगणित। उपगणित। अवकीर्ण। परित। उपकृत। उपाकृत। आयुक्त। आम्नात। श्रुत। अधीत। आसेवित। अपवारित। अवकल्पित। निराकृत। अनुयुक्त। उपनत। अनुगुणित। अनुपठित। व्याकुलित। निगृहीत। ये इष्टादि हैं।

[ कहीं-कहीं ये शब्द भी मिलते हैं—परिगदित, परिकलित, परिरक्षित, अनुगणित, अवधारित, गणित, निषादित। ] ॥ ८८ ।

---

१. 'अवधारित, अपचित'—एतौ शब्दावत्र गणे पुस्तकान्तरेऽधिकौ ।

२११०. छन्दसि परिपन्थिपरिपरिणौ पर्यवस्थातरि ॥ ८९ ॥ ( १८८९ )

परिपन्थिन्, परिपरिन्—इत्येतौ शब्दौ छन्दसि विषये निपात्येते पर्यवस्थातरि वाच्ये। पर्यवस्थाता=सम्पन्नप्रतिपक्ष उच्यते। 'मा त्वा परिपन्थिनो विदन्। मा त्वा परिपरिणो विदन्' (वाज० सं० ४.३४)॥

२१११. अनुपद्यन्वेष्टा ॥ ९० ॥ ( १८९० )

'अनुपदी' इति निपात्यतेऽन्वेष्टा चेत्स भवति। पदस्य पश्चादनुपदम्। अनुपदी गवाम्। अनुपदी उष्ट्राणाम्॥

न्यासः

छन्दसि परिपन्थिपरिपरिणौ पर्यवस्थातरि ॥ किं पुनरत्रेदं निपात्यते ? पर्यवस्थातृशब्दं व्यवस्थाप्य तदवयवस्यावस्थातृशब्दस्य पन्थ आदेश एकत्र क्रियते, अपरत्र तस्यैव परिशब्दः, पश्चादिनिप्रत्ययः॥ ८९॥

अनुपद्यन्वेष्टा ॥ अनुपदीति। पश्चात् पदस्यानुपदम्, पश्चादर्थेऽव्ययीभावः। तस्मादिनिप्रत्ययो निपात्यते॥ ९०॥

पदमञ्जरी

छन्दसि परिपन्थिपरिपरिणौ पर्यवस्थातरि ॥ अत्र पर्यवस्थातृशब्दात्स्वार्थे इनिप्रत्ययोऽवस्थातृशब्दस्य च पन्थि, परि—इत्येतावादेशौ निपात्येते। भाषायां तु परिपन्थिशब्दस्यासाधुः प्रयोगः॥ ८९॥

अनुपद्यन्वेष्टा ॥ पदस्य पश्चादनुपदम्, पश्चादर्थेऽव्ययीभावः, अन्वेष्टरीनिप्रत्ययो निपात्यते। अनुपदी गवामिति। पदापेक्षया षष्ठी, गोपदस्य पश्चादन्वेषणं गवामेव, हिरण्यादावन्वेष्ये न भवति; पदाभावात्। यदि त्वन्वेष्टृशब्दात् स्वार्थे इनिप्रत्ययः, एष्टृशब्दस्य च पदशब्द आदेशो निपात्येत; यदि वा श्रोत्रियवदविद्यमानप्रकृतिप्रत्ययमन्वेष्टरि निपात्येत; ततो गवामिति षष्ठी न प्राप्नोति—कृतपूर्वी कटम्, अनुको भार्यामभिको दासीमितिवत् द्वितीया प्राप्नोति; हिरण्यादौ चान्वेष्ये—अनुपदी हिरण्यमिति। तस्माद्यथोक्तमेव साधीयः॥ ९०॥

भावबोधिनी

परिपन्थिन् और परिपरिन् ये दो शब्द वेदविषय में पर्यवस्थाता अर्थ वाच्य रहने पर निपातित होते हैं। पर्यवस्थाता=सम्पन्न प्रतिपक्ष=प्रतिपक्षी शत्रु को कहा जाता है। उदा० मा त्वा परिपन्थिनो विदन्; मा त्वा परिपरिणो विदन्। [ तुम्हें बलशाली शत्रु न प्राप्त कर सकें। यहाँ पर्यवस्थाता का अर्थ शत्रुसामान्य नहीं है अपि तु मार्ग में मिलने वाला लुटेरा आदि है। पर्यवस्थातृ शब्द से 'इनि' प्रत्यय और 'अवस्थातृ' का 'पन्थ' आदेश—परिपन्थ+इन्, भ संज्ञा, अलोप। इसी प्रकार पर्यवस्थातृ+इनि यहाँ अवस्थातृ का 'परि' आदेश—परिपरि+इन्, भसंज्ञा, इलोप-परिपरिन् होता है। ये दोनों शब्द वेद में ही शुद्ध हैं। लौकिक संस्कृत में 'पर्यवस्थातृ' शब्द ही है। ]॥ ८९॥

यदि वह अन्वेष्टा (=खोज करने वाला, ढूढ़ने वाला ) होता है तो 'अन्वेष्टा' यह निपातित होता है। उदा० पदस्य पश्चात्—इस विग्रह में [ अव्ययीभाव समास करने पर ] 'अनुपदम्' शब्द होता है। [ इससे 'इनि' प्रत्यय करने पर ] अनुपदी गवाम्, अनुपदी उष्ट्राणाम्। [ गायों के पीछे पीछे चलने वाला, ऊँटो के पीछे पीछे चलने वाला। ]

**विमर्श**—अन्वेष्टा=खोजने वाला इस अर्थ में 'अनुपदी' यह निपातित होता है। पदस्य पश्चात्=

## २११२. साक्षाद् द्रष्टरि संज्ञायाम् ॥ ९१ ॥ ( १८९१ )

**साक्षाच्छब्दोऽव्ययम्। तस्मादिनिः प्रत्ययो भवति द्रष्टरि वाच्ये। संज्ञाग्रहणमभिधेयनियमार्थम्। साक्षाद् द्रष्टा—साक्षी, साक्षिणौ, साक्षिणः। संज्ञाग्रहणादुपद्रष्टैवोच्यते; न दाता, ग्रहीता वा ॥**

### न्यासः

**साक्षाद् द्रष्टरि संज्ञायाम् ॥ संज्ञाग्रहणमित्यादि ।** विशिष्ट एवाभिधेये प्रत्ययान्तस्य वृत्तिरभिधेयनियमः, स यथा स्यादित्येवमर्थं संज्ञाग्रहणम् । **साक्षीति ।** 'अव्यायानां भमात्रेटिलोपः सायंप्रातिकाद्यर्थम्' इति टिलोपः । **संज्ञाग्रहणादित्यादि ।** असति हि संज्ञाग्रहणे यथोपद्रष्टा साक्षिशब्देनोच्यते, तथा दाता ग्रहीता चोच्येयाताम्, एतावपि हि द्रष्टारौ भवत एव । संज्ञाग्रहणादुपद्रष्टैवोच्यते । दातृग्रहीतृभ्यां योऽन्यो द्रष्टा समीपे स उपद्रष्टा । ननु च 'स्वामीश्वराधिपतिदायादसाक्षि' इति निपातनादेव साक्षिशब्दः साधुर्भविष्यति, अभिधेयनियमोऽपि लौकिकत्वादस्य पदस्य लोकोक्त एव विज्ञास्यते, तदपार्थक मिदम्? नैतदस्ति; न हि तस्मिन् निपातने साक्षिशब्दस्य नकारान्तता शक्यते व्यवसातुम्, प्रमाणा भावात् । लोके न स्वाभिधेये प्रतीयमाने प्रतिपत्तिगौरवं स्यात् । तस्मान्नकारान्तताप्रतिपत्तिगौरवपरिहारार्थं चेदमुच्यते ॥ ९१ ॥

### पदमञ्जरी

**साक्षाद् द्रष्टरि संज्ञायाम् ॥ साक्षाच्छब्दोऽव्ययमिति ।** तेन 'प्रकृतिवदनुकरणं भवति' ( व्या० परि० ११३ ) इति सूत्रे पञ्चम्या लुक्, उदाहरणे च 'अव्ययानां भमात्रे' ( वा० ८४२ ) इति टिलोप इति भावः । **संज्ञाग्रहणादित्यादि ।** त्रिभिः साक्षाद् दृष्टं भवति—यश्च ददाति, यस्मै च दीयते, यश्च पार्श्वे स्थितः पश्यति, तत्र सर्वत्र प्रत्ययः प्राप्नोति । संज्ञाग्रहणाद्धनिकाधमर्णयोर्न भवतीत्यर्थः ॥ ९१ ॥

### भावबोधिनी

पैर के पीछे—इस अर्थ में अव्ययीभाव है । 'अनुपदी गवाम्' यहाँ षष्ठ्यर्थ का अन्वय 'पद' के साथ ही है क्योंकि गाय के पैरों के चिह्न के द्वारा अन्वेषण गाय का ही किया जाता है । इसी अर्थ में षष्ठी संभव है । यदि अनु एष्टृ' शब्द से 'इनि' प्रत्यय और 'एष्टृ' का 'पद' आदेश मानेगें तो 'गवाम्' यहाँ षष्ठी नहीं हो सकेगी, 'कृतपूर्वी कटम्' आदि के समान द्वितीया होने लगेगी । ] ॥ ९० ॥

'साक्षात्' यह अव्यय शब्द है । इससे 'इनि' प्रत्यय 'द्रष्टा' अर्थ वाच्य रहने पर होता है । सूत्र में संज्ञा का ग्रहण अभिधेय अर्थ का नियम करने के लिए है, अर्थात् संज्ञा प्रतीत होने पर ही यह शब्दरूप होता है; अन्यथा नहीं । उदा० साक्षात् द्रष्टा—इस अर्थ में—साक्षी, द्विवचन में=साक्षिणौ, बहुवचन में—साक्षिणः-ये रूप होते हैं । [ साक्षात्+इनि, 'अव्ययानां भमात्रे टिलोपः' (म० भा० वा० ७।३।१४४) इस वचन से टि=आत् का लोप—साक्ष्+इनि,=इन्, विभक्तिसम्बन्धी कार्य । ]

[ सामान्यतया किसी दानादि कर्म को देखने वाले तीन लोग होते हैं—(१) जो देने वाला है, (२) जो लेने वाला है (३) जो समीप में तटस्थ है, इन तीनों अर्थों में प्रत्यय प्राप्त होता है ? इसका समाधान यह है— ] 'संज्ञायाम्' इसके ग्रहण के कारण 'साक्षी' शब्द से 'उपद्रष्टा' ही कहा जाता है, दाता अथवा ग्रहीता नहीं । [ व्यवहार में ऐसा ही अनुभव सिद्ध भी है । ] ॥ ९१ ॥

## २११३. क्षेत्रियच् परक्षेत्रे चिकित्स्यः ॥ ९२ ॥ ( १८९२ )

क्षेत्रियजिति निपात्यते । 'परक्षेत्रे चिकित्स्यः' इत्येतस्मिन् वाक्यार्थे पदवचनम् । परक्षेत्राद्वा तत्रेति सप्तमीसमर्थात् 'चिकित्स्यः' इत्येतस्मिन्नर्थे घच् प्रत्ययः परशब्दलोपश्च निपात्यते। परक्षेत्रे चिकित्स्यः क्षेत्रियो व्याधिः । क्षेत्रियं कुष्ठम् । परक्षेत्रम्=जन्मान्तरशरीरम्, तत्र चिकित्स्यः क्षेत्रियः । असाध्योऽप्रत्याख्येयो व्याधिरुच्यते । नामृतस्य निवर्तत इत्यर्थः ।

अथ वा—क्षेत्रियं विषम् । यत्परक्षेत्रे=परशरीरे संक्रमय्य चिकित्स्यते ।

अथ वा—क्षेत्रियाणि तृणानि । दानि सस्यार्थे क्षेत्रे जातानि चिकित्स्यानि=नाशयितव्यानि ।

अथ वा—क्षेत्रियः=पारदारिकः । परदाराः=परक्षेत्रम्, तत्र चिकित्स्यः=निग्रहीतव्यः । सर्वं

### न्यासः

**क्षेत्रियच् परक्षेत्रे चिकित्स्यः** ।। चिकित्स्य इति शक्यार्थे कृत्यः । **वाक्यार्थं** इत्यादि । 'परक्षेत्रे चिकित्स्यः' इत्यस्य वाक्यस्यार्थे क्षेत्रिय इत्येतत् पदवचनमविद्यमानप्रकृतिप्रत्ययविभागं निपात्यते । चकारोऽन्तोदात्तार्थः । **परक्षेत्राद्वेत्यादि** । वाशब्दः प्रकारान्तरं द्योतयति । अथ वा—परक्षेत्रशब्दात् तत्रेति सप्तमीसमर्थात् चिकित्स्य इत्यत्रार्थे प्रत्ययो निपात्यते, परशब्दस्य च लोपः। **परक्षेत्रं जन्मान्तरशरीरमिति** । इहत्याच्छरीरादन्यत्वादसाध्य इत्यनेन परशब्दस्यार्थं दर्शयति ।

सस्यार्थं हि यत् क्षेत्रं संस्कृतं तदनुत्पाद्यत्वात् तृणानां परक्षेत्रं भवति ।

### पदमञ्जरी

**क्षेत्रियच् परक्षेत्रे चिकित्स्यः** ।। क्षि निवासगत्योः' ( धा० पा० १४०७) इत्यस्माद्यथायोगमधिकरणादौ ष्ट्रन्, क्षेत्रम् । **परक्षेत्रं जन्मान्तरशरीरमिति** । आत्मनो निवासस्थानत्वात्क्षेत्रम्, परं च तत्क्षेत्रं चेति कर्मधारयः । तत्र चिकित्स्यः=प्रतिकार्योपनेय इत्यर्थः, न तु तत्र भिषजितव्य इति । यदाह—**नामृतस्येति** ।

**अथ वेति** । समुच्चय एवात्र विवक्षितः, न तु विकल्पः । वक्ष्यति—'सर्वं चैतत्प्रमाणम्' इति । अत्र **परस्य** क्षेत्रमिति षष्ठीसमासः, एवमुत्तरयोः । **चिकित्स्य** इति । कृत्यः शक्यार्थे, पूर्वत्र तु कर्ममात्रे, उत्तरयोरर्हार्थे । **सस्यार्थ** इति । अनेन क्षेत्रस्य परकीयत्वमाह—**परदाराः परक्षेत्रमिति** । कर्मणि ष्ट्रन्,

### भावबोधिनी

'क्षेत्रियच्' यह निपातित होता है । 'दूसरे क्षेत्र में चिकित्सा करने योग्य' इस वाक्यार्थ में इस [ क्षेत्रियः ] पद का विधान किया जा रहा है । [ जिस प्रकार 'छन्दोऽधीते इस वाक्यार्थ में 'श्रोत्रियः' इस पद का विधान है उसी प्रकार 'परक्षेत्रे चिकित्स्यः' इस वाक्य के अर्थ में 'क्षेत्रियः' पद का विधान है । ] अथवा सप्तमीसमर्थ 'परक्षेत्र' शब्द से 'चिकित्स्य' इस अर्थ में 'घच्' प्रत्यय होता है और 'पर' शब्द का लोप निपातित होता है। [ परक्षेत्र+घच्=घ=इय, 'पर' का लोप' भसंज्ञा, अलोप=परक्षेत्+इय् अ ] परक्षेत्र में चिकित्सा करने योग्य व्याधि 'क्षेत्रियः' है । क्षेत्रियं कुष्ठम् । परक्षेत्र=दूसरे जन्म का शरीर, उसमें चिकित्सा करने योग्य=क्षेत्रियः । असाध्य, अप्रत्याख्येय=दूर न करने योग्य व्याधि के लिए यह शब्द है। क्योंकि विना मृत्यु को प्राप्त किये दूसरा शरीर ग्रहण किये विना जो रोग दूर नहीं होता है, उसे 'क्षेत्रियः व्याधि' कहा जाता है; यह अर्थ है ।

अथवा—क्षेत्रिय=विष है जो कि परक्षेत्र=दूसरे के शरीर में संक्रमित करके चिकित्सा करने योग्य होता है ।

अथवा—क्षेत्रिय=तृण हैं जो कि सस्य=अन्नादि के लिए तैयार किये गये खेत में उत्पन्न होते हैं वे चिकीत्स्य=नष्ट करने योग्य, काट कर हटाने योग्य होते हैं ।

चतत्प्रमाणम् ॥

२११४. इन्द्रियमिन्द्रलिङ्गमिन्द्रदृष्टमिन्द्रसृष्टमिन्द्रजुष्टमिन्द्रदत्तमिति वा ॥ ९३ ॥ ( १८९३ )

इन्द्रियमित्यन्तोदात्तं शब्दरूपं निपात्यते। रूढिरेषा चक्षुरादीनां करणानाम् । तथा च व्युत्पत्तेरनियमं दर्शयति । इन्द्रशब्दात्षष्ठीसमर्थात् 'लिङ्गम्' इत्येतस्मिन्नर्थे घच्प्रत्ययो भवति । इन्द्रस्य लिङ्गमिन्द्रियम् । इन्द्रः=आत्मा, स चक्षुरादिना करणेनानुमीयते, नाकर्तृकं करणमस्ति । इन्द्रेण दृष्टम्,

### न्यासः

सर्वं चेतत् प्रमाणमिति । सर्वस्याचार्येण प्रतिपादितत्वात् ॥ ९२ ॥

इन्द्रियमिन्द्रलिङ्गमिन्द्रदृष्टमिन्द्रसृष्टमीन्द्रजुष्टमिन्द्रदत्तमिति वा ॥ रूढिरेषेत्यनेनावयवार्थं त्याजयति । कथं पुनर्ज्ञायते रूढिरेषा ? इत्याह–तथा चेत्यादि । यद्येषा रूढिर्न स्याद्, व्युत्पत्तेरनियमो न स्यात्; अरूढिशब्देषु नियतत्वादेव तदर्थस्य । रूढिशब्दे त्वस्मिन् युज्यते व्युत्पत्तेरनियमः । रूढिशब्दानां हि यथाकथञ्चिद् व्युत्पत्तिः क्रियते परिकल्पितेनावयवार्थेन । कथं पुनरात्मा चक्षुरादिना करणेन शक्योऽनुमातुम् ? इत्याह—नाकर्तृकमित्यादि । अनेनाविनाभावं दर्शयति । इतिकरणो हेतौ । यस्मात् करणादीनां

### पदमञ्जरी

क्षेतव्याः=गन्तव्याः, उपगमनार्हा दाराः=क्षेत्रम् । तत्रेति । तस्मिन्विषये । निगृहीतव्य इति । दण्डादिना ॥ ९२ ॥

इन्द्रियमिन्द्रलिङ्गमिन्द्रदृष्टमिन्द्रसृष्टमिन्द्रजुष्टमिन्द्रदत्तमिति वा ॥[1] अन्तोदात्त इति । 'क्षेत्रियच्' इत्येतत्साहचर्यात् । रूढिरेवेति[2] । किमत्र प्रमाणम् ? इत्याह—तथा चेति । न हि यौगिकेषु व्युत्पत्तेरनियमो भवति । इन्द्र आत्मेति । कार्यकारणसङ्घातं प्रतीश्वरत्वात् । विज्ञायते च तमिन्द्रं सन्तमिन्द्र इत्याचक्षते परोक्षेणेति । करणेनेति । हेतुगर्भविशेषणम् । यथा पुनरयं हेतुस्तथा दर्शयति—नाकर्तृकमिति । इतिकरणो हेतौ । न हि वाश्यादिकरणमनधिष्ठितं कर्त्रा प्रवर्तते । इन्द्रेण दृष्टमिति । दृष्टम्=ज्ञातम्, तथा

### भावबोधिनी

अथवा—क्षेत्रिय=पारदारिक है, क्योंकि परदारा=परक्षेत्र है, उस में निग्रहीतव्य । [ दूसरे की स्त्रियों से सम्पर्क करने पर दण्डनीय व्यक्ति क्षेत्रिय है । ]

उपर्युक्त सभी अर्थ प्रामाणिक हैं । [ क्योंकि विभिन्न आचार्यों के व्याख्यान मिलते हैं । ] ॥ ९२ ॥

'इन्द्रियम्' यह अन्तोदात्त शब्दरूप निपातित होता है । यह शब्द नेत्र आदि करणों=साधनों अवयवों की रूढि संज्ञा है । और इस प्रकार व्युत्पत्ति के अनियम को प्रदर्शित करते हैं । षष्ठीसमर्थ 'इन्द्र' शब्द से 'लिङ्ग' इस अर्थ में 'घच्' प्रत्यय होता है । उदा० (१) इन्द्रस्य लिङ्गम्—इस अर्थ 'इन्द्रियम्' यह होता हैं । इन्द्र=आत्मा है, चक्षुरादि करणों से उस ( आत्मा ) का अनुमान किया जाता है क्योंकि विना कर्ता के करण नहीं हो सकते । [ अतः कर्तृरूपेण आत्मा का अनुमान करना चाहिए । इस प्रकार इन्द्र=आत्मा के अनुमापक इन्द्रिय हैं । ] (२) इन्द्रेण दृष्टम्—इस तृतीयासमर्थ से प्रत्यय होता है । आत्मा के द्वारा देखा गया–यह अर्थ है । (३) इन्द्रेण

१. 'अन्तोदात्तम्' इति काशिका ।

२. 'रुढिरेषा' इति काशिका ।

तृतीयासमर्थात्प्रत्ययः। आत्मना दृष्टमित्यर्थः। इन्द्रेण सृष्टम्। आत्मना सृष्टम्, तत्कृतेन शुभाशुभेन कर्मणोत्पन्नमिति कृत्वा। इन्द्रेण जुष्टम्, आत्मना जुष्टम् = सेवितम्; तद्द्वारेण विज्ञानोत्पादनाद् इन्द्रेण दत्तम्, आत्मना विषयेभ्यो दत्तं यथायथं ग्रहणाय।

इतिकरणः प्रकारार्थः। सति सम्भवे व्युत्पत्तिरन्यथापि कर्तव्या; रूढेरनियमादिति।

वाशब्दः प्रत्येकमभिसम्बध्यमानो विकल्पानां स्वातन्त्र्यं दर्शयति॥

## २११५. तदस्यास्त्यस्मिन्निति मतुप्॥ ९४॥ (१८९४)

तदिति प्रथमा समर्थविभक्तिः। अस्यास्मिन्निति प्रत्ययार्थौ। अस्तीति प्रकृतिविशेषणम्।

### न्यासः

प्रवृत्तिर्निवृत्तिर्वा कर्त्रधीना, तस्माद् यत्र तानि तत्रावश्यं कर्त्रा भवितव्यम्। चक्षुरादिना करणेनाविनाभावेन लिङ्गेनात्मानुमीयते। कथं पुनस्तदात्मना सेवितम्? इत्याह— **तद्द्वारेणेत्यादि**। द्वारेण हि विषयेष्वात्मनो ज्ञानमुत्पद्यते। तस्माद् विषयान् ज्ञातुमात्मा चक्षुरादीन्द्रियं सेवते। **यथायथमिति**। यथास्वम्। यो यस्येन्द्रियस्य विषयस्तत् तस्मै दत्तम्।

**इतिकरणः प्रकारार्थ** इति। एवं प्रकारान्तरेणापि व्युत्पत्तिः कर्त्तव्येत्येतदितिकरणः प्रकारार्थं द्योतयति। अत एवाह—**सति सम्भव इत्यादि**। इन्द्रेण विषया नीयन्ते = सम्बध्यन्त इतीन्द्रियमित्येवमादिका सति सम्भवे तथा व्युत्पत्तिः कर्त्तव्या।

**वाशब्द इत्यादि**। असति हि वाशब्दे 'इन्द्रलिङ्गम्' इत्येवमादीनां विकल्पप्रकाराणां पारतन्त्र्यं विज्ञायेत। परस्परापेक्षया समुच्चिताया एव व्युत्पत्तेः कारणमिति। वाशब्दस्त्विन्द्रलिङ्गमितीन्द्रदृष्टमिति चेत्येवं प्रत्येकं सम्बध्यमानस्तेषां स्वातन्त्र्यं दर्शयति। तेनैकैकः प्रकारः प्रकारान्तरनिरपेक्षो व्युत्पत्तावङ्गभावमुपयाति॥ ९३॥

**तदस्यास्त्यस्मिन्निति मतुप्**॥ **प्रत्ययार्थाविति**। ननु च यद् यस्य भवति तत् तस्मिन्नस्ति,

### पदमञ्जरी

च कार्यकारणसङ्घातं प्रस्तुत्य भवति वादः—'स एतमेव पुरुषं ब्रह्मततमपश्यत्,' 'इदमदर्शम्' इत्यादि। कथं पुनश्चक्षुरादिकमात्मना सृष्टम्? इत्याह-**तत्कृतेनेति**। शुभं कर्म = विहितम्, प्रतिषिद्धम् = अशुभम्-तदुभयं मिलितं करणानामुत्पादकम्; इष्टानिष्टानां रूपादीनां चक्षुरादिभिरुपलम्भात्। **यथायथमिति**। यो यस्य विषयः—चक्षुषो रूपम्, घ्राणस्य गन्ध इत्यादि, तद्ग्रहणायेत्यर्थः।

**अन्यथापि कर्त्तव्येति**। तद्यथा—इन्द्रेण दुर्जयमिति। **प्रत्येकमभिसम्बन्ध्यमान इति**। हेतुगर्भविशेषणम्; यस्मात्प्रत्येकमभिसम्बध्यते तस्मादित्यर्थः॥ ९३॥

### भावबोधिनी

सृष्टम्, आत्मा द्वारा निर्मित, उस आत्मा के द्वारा किए गए शुभ और अशुभ कर्मों से उत्पन्न—यह मान कर अर्थ होता है। (४) इन्द्रेण जुष्टम्, आत्मा द्वारा जुष्ट = सेवित, क्योंकि उस के द्वारा विज्ञान की उत्पत्ति होती है। (५) इन्द्रेण दत्तम्—आत्मा द्वारा विषयों के लिए योग्यतानुरूप ग्रहण करने के लिए दिया गया, अर्थात् जिस इन्द्रिय का जो विषय है उसका ग्रहण करने के लिये दिया गया—इस अर्थ में भी 'इन्द्रिय' होता है।

'इति' शब्द का प्रयोग प्रकार अर्थ के लिए है, क्योंकि यदि संभव है तो अन्य प्रकार से भी व्युत्पत्ति की जा सकती है क्योंकि रूढि का नियम नहीं होता हैं। [ अतः 'इन्द्रेण दुर्जयम्'—यह भी 'इन्द्रिय' है। ]

[ सूत्रघटक ] 'वा' शब्द प्रत्येक के साथ सम्बद्ध होता हुआ विकल्पों की स्वतन्त्रता प्रदर्शित करता है, अर्थात् सभी का विकल्प संभव होने से अनेक अर्थों में इस शब्द की सिद्धि की जा सकती है॥ ९३॥

न्यासः

यद्यस्मिन्नस्ति तत् तस्य भवति, यथा—वृक्षे शाखा, वृक्षस्य शाखेति; तत्रान्यतरनिर्देशेनैव सिद्धम्, तत् किमर्थं द्वौ निर्दिश्येते ? नैतदस्ति ; न हि षष्ठीसप्तम्यर्थयोरवश्यम्भावी समावेशः, तथा हि—गावो गङ्गायां भवन्ति, न च ते तस्याः, तथा देशान्तरगतोऽपि पुत्रो देवदत्तस्य च भवति, न चासौ तत्र। तस्मादुभावपि निर्देष्टव्यौ। **अस्तीति प्रकृतिविशेषणमिति**। ननु च सम्भवे व्यभिचारे च विशेष्यविशेषणभावो भवति नीलोत्पलवत्, न चास्तित्वस्य व्यभिचारोऽस्ति, यथोक्तम्—'न सत्तां पदार्थो व्यभिचरति' इति, तस्या व्यवच्छेद्याभावादपार्थकमिदं विशेषणम् ? नैतदस्ति; विशेषणोपादानसामर्थ्यादेव विशिष्टैव सत्ता विशेषणत्वेनोपात्ता, न सत्तामात्रमिति प्रतीयते। सा पुनर्विशिष्टसत्ता सम्प्रतिसत्तैव। अस्ति च तस्या व्यभिचार इति प्रसज्य एव विशेष्यविशेषणभावः। किं पुनः सम्प्रतिसत्ता विशेषणत्वेनोपात्ता ? तस्यामेव प्रत्ययो यथा स्यात्, भूतभविष्यत्सत्तायां मा भूदित्येवमर्थम्। तेन गावोऽस्यासन्, गावोऽस्य भवितार इत्यत्र न

पदमञ्जरी

**तदस्यास्त्यस्मिन्निति मतुप्**॥ **अस्यास्मिन्निति प्रत्ययार्थाविति**। ननु च यद्यस्य भवति तस्मिन्नपि तद्भवति, यच्च यस्मिन् भवति तस्यापि तद्भवति; यथा—वृक्षस्य शाखा, वृक्षे शाखेति; तत्रान्यतरनिर्देशेनैव सिद्धम्, किमर्थमुभावर्थौ निर्दिश्येते ? नैतयोरवश्यम्भावी समावेशः; तथा हि—षष्ठ्यर्थमात्रनिर्देशे यत्राधिकरणं तेनैव रूपेण विवक्ष्यते, न तज्जन्यः शेषसम्बन्धः, यथा - वृक्षा अस्मिन्पर्वते सन्तीति न तत्र प्रत्ययः स्यात्। न ह्यत्र क्रियाकारकपूर्वकः शेषसम्बन्धो दृश्यते; वृक्षैः पर्वतस्यानारम्भात् नावयवावयविभावः। आनन्तर्यादिसम्बन्धस्तु सम्भवति। न तु तत्र मत्वर्थीयो भवति; अनभिधानात्। तथा केवलसप्तम्यर्थनिर्देशे कारकान्तरपूर्वः सम्बन्धो न गृहीतः स्यात्; ततश्च पुत्रवान्, गोमानित्यादौ न स्याद्। उत्पादनप्रतिग्रहादिक्रियाविषयकर्तृत्वजन्यो ह्यत्र सम्बन्धः, नाधारपूर्वकः; देशान्तरगतेऽपि पुत्रादौ तद्वानिति व्यपदेश्यस्य भावात्। सामीपिकस्याप्यधिकरणस्यासम्भवः। स्यादेतत्—पुत्रस्य पित्रधीनत्वाद् गवां च स्वाम्यधीनत्वाद् गुरौ वसतीतिवदधिकरणं भविष्यति, करणसंज्ञायां हि तमब्ग्रहणेन कारकप्रकरणे प्रकर्षस्यानाश्रयणाद्गौणस्याप्याधारस्याधिकरणसञ्ज्ञा भवत्येवेति ? भवत्वेवमधिकरणसंज्ञा, मत्वर्थीयस्तु मुख्य एवाधिकरणे स्यात्—वृक्षवान् पर्वतः, गोमाञ्जनपद इत्यादौ; न गौणे—पुत्रवान् गोमान्देवदत्त इत्यादौ; न ह्यत्र गौणग्रहणस्य लिङ्गमस्ति। तस्मादुभयोरपि निर्देशः कर्तव्यः। **अस्तीति प्रकृतिविशेषणमिति**। अर्थद्वारेणेति द्रष्टव्यम्।

ननु सम्भवे व्यभिचारे च विशेषणविशेष्यभावो भवति नीलोत्पलवत्, न च सत्तां पदार्थो व्यभिचरति, तामन्तरेण पदस्योच्चारयितुमप्यशक्यत्वात्; तथा हि—यावद्बुद्ध्या पदार्थो न विषयीकृतस्तावत्पदस्य प्रयोगाभावः, तेन बुद्धिसत्तासमाविष्टमर्थं शब्दो गोचरयति, तस्यैव बहिस्सत्त्वासत्त्वप्रतिपादनाय वृक्षोऽस्ति, वृक्षो नास्तीति प्रयोगः। यदि—

बाह्यसत्तासमाविष्टं वस्तु वाच्यं भवेत् तदा।
विरोधपौनरुक्त्याभ्यां प्रयोगो न भवेदयम्॥

एवमेवात्यन्तासतोऽपि बहिः शशविषाणादीनर्थान्बुद्ध्या विषयीकृत्य तद्वाचिशब्दप्रयोगः। तस्माद्

भावबोधिनी

'तत्' यह प्रथमा समर्थविभक्ति है। 'अस्य' और 'अस्मिन्' ये दो प्रत्ययार्थ हैं। 'अस्ति' यह प्रकृति का विशेषण है। 'इति' का प्रयोग विवक्षा के लिए है। 'तत्' इस प्रथमासमर्थ से 'अस्य' (इसका) इस षष्ठ्यर्थ में और 'अस्मिन्' (इसमें) इस सप्तम्यर्थ में विकल्प से मतुप् प्रत्यय होता है, यदि जो प्रथमासमर्थ है वह 'अस्ति—

## २१३०. केशाद्वोऽन्यतरस्याम् ॥ १०९ ॥ ( १९१६ )

केशशब्दाद्वः प्रत्ययो भवति मत्वर्थेऽन्यतरस्याम् ।

ननु च प्रकृतमन्यतरस्यांग्रहणमनुवर्त्तत एव ? मतुप्समुच्चयार्थं तदित्युक्तम्, अनेन त्विनिठनौ प्राप्येते । ततश्चातूरूप्यं भवति—केशव:, केशी, केशिकः, केशवानिति ॥

* वप्रकरणेऽन्येभ्योऽपि दृश्यत इति वक्तव्यम् * ( म० भा० ५. २. १०९ वा० १ ) । मणिवः । हिरण्यवः । कुररावम् । कुमारावम् । राजीवम् । कुञ्जावम् । इष्टकावम् । बिम्बावम् ।

### न्यासः

केशाद्वोऽन्यतरस्याम् ॥ इनिठनोः प्राप्तयोर्मतुपि चेदमारभ्यते । ननु च प्रकृतमन्यतरस्यांग्रहणमस्त्येव, तत् किमर्थं पुनरिदं क्रियते ? इत्याह—**ननु च प्रकृतमि**त्यादि । **वप्रकरणे** इत्यादि । इतिकरणो हेतौ । केशशब्दाद्यथा वप्रत्ययः, एवमन्येभ्योऽपि तथा वप्रत्ययो दृश्यते, तस्माद् वक्तव्यं=व्याख्येयम् । तथा व्याख्यानं कर्त्तव्यं यथासावन्येभ्यो भवतीत्यर्थः । तत्रेदं व्याख्यानम्—इहापि स एव चकारोऽनुक्तसमुच्चयार्थोऽनुवर्त्तते, तेनान्येभ्योऽपि भवतीत्यर्थः ।

### पदमञ्जरी

**केशाद्वोऽन्यतरस्याम्** ॥ **मतुप्समुच्चयार्थं तदित्युक्त**मिति । एतच्च 'सिध्मादिभ्यश्च' इत्यत्रैव व्याख्यातम् ।

**वप्रकरण** इति । प्रकरणम्=प्रस्तावः । मणिवः=नागविशेषः । हिरण्यवः=निधिविशेषः, कुञ्जरविशेष इत्यन्ये । **बिम्बावः, कुरराव** इति । 'अन्येषामपि दृश्यते' इति दीर्घः । **राजीव** इति । 'कृदिकारादक्तिनः' ( ग० सू० ५० ) ( ४. १. ४५ ) इति ङीषन्तात्प्रत्ययः ।

### भावबोधिनी

[ "विहायसोऽपि नाकोऽपि द्युरपि स्यात्तदव्ययम्" । अमरकोष १।२।२ प्रक्षिप्त के अनुसार 'द्यु' आकाश का वाचक है । न्यासकार ने 'द्यौः अस्यास्ति—इस अर्थ में 'दिव उत्' से उकारादेश करके 'द्यु' की सिद्धि मानी है । "अनोकहः कुटसालः पलाशी द्रुद्रुमागमाः" । अमरकोष के अनुसार अकेला 'द्रु' भी वृक्ष का वाचक है । यहाँ शाखावाचक मानकर प्रत्यय करना चाहिए । ] ॥ १०८ ॥

'केश' शब्द से मतुबर्थ में 'व' प्रत्यय विकल्प से होता है ।

प्रश्न—प्रकृत' अन्यतरस्याम्' ग्रहण की अनुवृत्ति होती ही है [ तब इसमें दूसरी बार इसके ग्रहण की क्या आवश्यकता ] ? उस 'अन्यतरस्याम्' को मतुप् का समुच्चय करने के लिए कहा है, और इस 'अन्यतरस्याम्' से 'इनि' 'ठन्' प्राप्त होते हैं । इस कारण चार रूप बनते हैं—(१) केशवः ( केश+व ) । (२) केशी ( केश+इनि ) । (३) केशिकः ( केश+ठन्=ठ=इक ) । (४) केशवान् ( केश+मतुप् ) ।

**विमर्श**—'प्राणिस्थादातो लजन्यतरस्याम्' ( ५।२।९६ ) से 'अन्यतरस्याम्' की अनुवृत्ति होती है वह 'मतुप्' का समुच्चय करता है । किन्तु यहाँ भी जो 'अन्यतरस्याम्' का ग्रहण है वह 'अत इनिठनौ' का भी समुच्चय करता है । अतः 'व' के साथ साथ, 'इनि' 'ठन्' और 'मतुप्' ये चार प्रत्यय भी होते हैं । अतः 'केशाः सन्ति अस्य—इस अर्थ में चार रूप होते हैं ।

* 'व' के प्रकरण में अन्य शब्दों से भी यह प्रत्यय दिखाई देता है' ऐसा कहना चाहिए । * उदा० मणिवः । [ मणिः अस्ति अस्य—इस अर्थ में 'मणि+व । एक प्रकार का सर्प जो मणि रखता है । ] हिरण्यवः । [ हिरण्यम् अस्य अस्ति—इस अर्थ में है । यह एक निधिविशेष अथवा हाथीविशेष की संज्ञा है । ] कुररावम्

* अर्णसो लोपश्च * । ( ? ) । अर्णवः ।

* छन्दसीवनिपौ च वक्तव्यौ * ( म० भा० ) । वश्च मतुप् च । "रथीरभून्मुद्गलानी गविष्ठौ" ( ऋ० १०. १०२. २ ) । "सुमङ्गलीरियं वधूः" ( ऋ० १०. ८५. ३३ ) । वनिप्—"मघवानमीमहे" ( ऋ० १०. १६७ २ ) । वकारमतुपौ च, उद्वा च—उद्वती च ।

* मेधारथाभ्यामिरन्निरचौ वक्तव्यौ * ( म० भा० वा० ३ ) । मेधिरः ( ऋ० १. ३१. २ ) । रथिरः ( ऋ० ३. १. १७ ) ॥

## न्यासः

**अर्णसो लोपश्चे**ति । 'अलोऽन्त्यस्य' इत्यन्त्यस्य वेदितव्यः ।

**वक्तव्यावि**ति । व्याख्येयावित्यर्थः । व्याख्यानं तु 'तद्धिताः' इत्यत्रैव कृतम् । **रथीरभूद् मुद्गलानी**ति । रथशब्दादीप्रत्ययः । **सुमङ्गलीरियं वधू**रिति । ईकारस्योदाहरणम् । **मघवानमिति** च वनिपः । 'सर्वनामस्थाने च' इति दीर्घः । **उद्वा चे**ति । उच्छब्दाद्वप्रत्ययः, अदन्तत्वाट्टाप् । **उद्वती चे**ति । उच्छब्दादेव मतुप्, 'उगितश्च' इति ङीप्, 'झयः' वत्वम् ॥ १०९ ॥

## पदमञ्जरी

**अर्णव** इति । अर्णः=उदकम्, 'अर्त्तेरसुन्नुट् च' । **छन्दसीवनिपौ चे**ति । चकाराद्वश्च, अन्यतरस्यांग्रहणानुवृत्तेस्तु मतुप्, तदाह—**वश्च मतुप् चे**ति । **रथीरि**ति । रथोऽस्यास्तीत्यर्थः । **सुमङ्गलीरि**ति । सुष्ठु मङ्गलम्, 'सुः पूजायाम्' इति प्रादिसमासः, ततोऽनेन मत्वर्थीय ईकारः, लाघवाद् बहुव्रीहिणा भवितव्यमिति न्यायश्छान्दसत्वादनाश्रितः ।

**मघवानमि**ति । मघं-धनं तदस्यास्तीति वनिप् । मतुपि तु मघवच्छब्दः । किमर्थं तर्हि 'मघवा बहुलम्' इति ? तत्रैव वक्ष्यामः । **उद्वा चे**ति । उच्छब्दादुद्गताभिप्रायिणो वप्रत्यये टाप् । **उद्वती**ति । मतुपः 'झयः' इति वत्वम्, ङीप् ।

**मेधारथाभ्यामि**ति । इदमपि छन्दोविषयम् । १०९ ॥

## भावबोधिनी

[ कुरर+व ] । कुमारावम् [ कुमार+व ] । राजीवम् [ राजि+व ] । कुञ्जावम् [ कुञ्ज+व ] । इष्टकावम् [ इष्टक+व ] । बिम्बावम् । [ बिम्ब+व । इन सभी शब्दों में "अन्येषामपि दृश्यते" ( पा० सू० ६।३।१३७ ) से दीर्घ होने के कारण सभी में दीर्घ सुनाई देता है । भाष्य में नपुंसक लिङ्ग और पदमञ्जरी में पुंलिंग पठित हैं । ]

* अर्णस् से 'व' प्रत्यय और 'स्' का लोप कहना चाहिए । * उदा० अर्णवः । [ अर्णांसि सन्ति अस्मिन्—इस अर्थ में 'अर्णस्+व, 'स्' का लोप : समुद्र । ]

*वेद में 'ई' और 'वनिप्' प्रत्यय होते हैं । * च के बल से 'व' और मतुप् भी होते हैं । उदा० रथीरभून्मुद्गलानी गविष्ठौ । [ रथः अस्ति अस्य—रथ+ई, भसंज्ञा, अलोप, ] 'सुमङ्गलीरियं वधूः' । [ सुष्ठु मङ्गलमस्या अस्ति—इस अर्थ में सुमङ्गल+ई । ] वनिप् का उदा० मघवानमीमहे । [ मघ+वनिप्=वन्, उपधादीर्घादि करने पर रूप होता है । मघ=धन । ] 'व' और 'मतुप्' भी होते हैं—"उद् वा च, उद्वती च' । [ उद्+व, टाप् । उद्+मतुप्=मत्, म का व ङीप् ] ।

* मेधा और रथ— इन शब्दों से 'इरन्' और 'इरच्' प्रत्यय कहने चाहिए । *उदा० मेधिरः । रथिरः । [ मेधा+इरन्, भसंज्ञा, आलोप । रथ+इरच्, भसंज्ञा, आलोप । यहाँ भी वेदविषय में मतुबर्थ में समझना चाहिए ।]

**विमर्श**—प्रस्तुत सूत्रभाष्य में 'वप्रकरणे मणिहिरण्याभ्यामुपसंख्यानम्' "छन्दसीवनिपौ च" "मेधा-

## २१३१. गाण्ड्यजगात्संज्ञायाम् ॥ ११० ॥ ( १९१७ )

गाण्डी, अजग—इत्येताभ्यां वः प्रत्ययो भवति संज्ञायां विषये मत्वर्थे। गाण्डीवं धनुः। अजगवं धनुः। ह्रस्वादपि भवति—गाण्डिवं धनुरिति। तत्र तुल्या हि संहिता दीर्घह्रस्वयो। उभयथा च सूत्रं प्रणीतम्॥

## २१३२. काण्डाण्डादीरन्नीरचौ ॥ १११ ॥ (१९१८)

काण्ड, अण्ड—इत्येताभ्यां यथासंख्यमीरन्नीरचौ प्रत्ययौ भवतो मत्वर्थे। काण्डीरः। अण्डीरः॥

### न्यासः

**गाण्ड्यजगात् संज्ञायाम्**॥ **ह्रस्वादपि भवतीति**। कथं पुनर्दीर्घस्य ग्रहणे ह्रस्वादपि भवतीति? **तत्र तुल्या हीत्यादि**। यादृशी दीर्घस्येह संहिता, ह्रस्वग्रहणेऽपि तादृश्येव दृश्यते। तस्माद् ह्रस्वस्यापि ग्रहणमिह न विरुध्यत इति भावः। तत्र चैतत् स्यात्—यद्यपि तुल्या संहिता, तथापि कृतयणादेशोऽयमेक एव शब्दः, तस्य स्वरूप' इत्यन्यतरस्य परिग्रहणेन भवितव्यम्। तत्र यदि दीर्घस्य ग्रहणं, ह्रस्वान्न प्राप्नोति, अथ ह्रस्वस्य ग्रहणं, दीर्घान्न प्राप्नोतीत्यत आह—**उभयथेति**। उभयप्रकारं ह्याचार्येण प्रणीतं सूत्रम्। तस्मादुभयोरपि ग्रहणमित्यदोषः।

अथ संज्ञाग्रहणं किम्, यावतेतिकरणस्य चानुवृत्ते रसंज्ञायां न भविष्यति, यथा द्युद्रुभ्यां मप्रत्ययः? एवं तर्हि तस्यैवेतिकरणस्य प्रपञ्चः संज्ञाग्रहणमिति द्रष्टव्यम्॥ ११०॥

**काण्डाण्डादीरन्नीरचौ**। इनिठनोरपवादोऽयम्॥ १११॥

### पदमञ्जरी

**गाण्ड्यजगात् संज्ञायाम्**॥ **गाण्डीवं धनुरिति**। अर्जुनस्य। **अजगवं धनुरिति**। पिनाकमेतत्। **उभयथा सूत्रं प्रणीतमिति**। तन्त्रन्यायाश्रयेण। प्रयोगश्चोभयथापि भवति—'गाण्डीवी कनकशिलानिभं भुजाभ्याम्' (किरात०), 'अधिरोहति गाण्डिवं महेषौ' इति च। संज्ञाग्रहणस्यैव प्रपञ्चः॥ ११०॥ १११॥

### भावबोधिनी

रथाभ्यामिरनिरचौ" केवल ये तीन ही वार्तिक हैं। अन्त में "अपर आह—वप्रकरणे 'अन्येभ्योऽपि दृश्यते' इति वक्तव्यम्।" यही लिखा है। अन्य वचनों का मूल अस्पष्ट है।

भाष्योक्त उदाहरण नपुंसकलिङ्ग में अधिक हैं। अतः यहाँ भी वही स्वीकार किया गया है।

* "अर्णसो लोपश्च" यह वचन कात्यायन और भाष्यकार किसी का नहीं है। परन्तु काशिकाकार और सिद्धान्तकौमुदीकार दोनों ने इसी प्रसङ्ग में लिखा है। आश्चर्य है कि पदमञ्जरीकार का ध्यान इधर नहीं गया। बालमनोरमाकार ने स्पष्ट लिखा है "इदं तु वार्तिकं भाष्ये न दृश्यते।" अतः संभव है कात्यायन से भिन्न किसी अन्य आचार्य का यह वचन है॥ १०९॥

'गाण्डी' और 'अजग' इन दो प्रातिपदिकों से मतुबर्थ में संज्ञाविषय में 'व' प्रत्यय होता है। उदा० गाण्डीवं धनुः। अजगवं धनुः। [ गाण्डी + व ] यह अर्जुन के धनुष की संज्ञा है। अजग + व। यह शंकर के धनुष की संज्ञा है। ] ह्रस्व 'गाण्डि' शब्द से भी होता है—गाण्डि + व = गाण्डिवं धनुः। गाण्डी या गाण्डि इनकी अजग के साथ संहिता [यण् सन्धि] में समान रूप ही रहता है। [अतः दोनों माने जाते हैं।] और आचार्य पाणिनि ने दोनों प्रकार के सूत्र बनाए हैं॥ ११०॥

काण्ड और अण्ड—इन शब्दों से क्रमशः 'ईरन्' और 'ईरच्' प्रत्यय मत्वर्थ में होते हैं। उदा० काण्डीरः। अण्डीरः। [ काण्ड + ईरन्, अण्ड + ईरच्, भसंज्ञा, अलोप। ये प्रत्यय इनि और ठन् के अपवाद हैं। काण्डम्

## २१३३. रजःकृष्यासुतिपरिषदो वलच् ॥ ११२ ॥ [ १९१९ ]

रजःप्रभृतिभ्यः प्रातिपदिकेभ्यो वलच् प्रत्ययो भवति मत्वर्थे। रजस्वला स्त्री। कृषीबलः कुटुम्बी। आसुतीबलः शौण्डिकः। परिषद्वलो राजा। 'वले' ( ६. ३. ११८ ) इति दीर्घत्वम्। इतिकरणो विषयनियमार्थः सर्वत्र सम्बध्यते। तेनेह न भवति—रजोऽस्मिन् ग्रामे विद्यत इति।

* वलच्प्रकरणेऽन्येभ्योऽपि दृश्यत इति वक्तव्यम् * ( म० भा० ५. २. ११२ बा० १ )। भ्रातृवलः। उत्साहवलः[1] ॥

### न्यासः

रजःकृष्यासुतिपरिषदो वलच् ॥ रजःशब्दाद् 'अस्मायामेधास्रजो विनिः' इति विनौ प्राप्ते, इतरेभ्यस्तु मतुपि वलज् विधीयते।

वलच्प्रकरणे इत्यादि। वप्रत्ययस्य व्याख्यानेनेदमपि व्याख्यातप्रायम्। अत्र 'वले' इति दीर्घत्वं

### पदमञ्जरी

रजः कृष्यासुतिपरिषदो वलच् ॥ आसुतीवल इति। 'षुञ् अभिषवे', ( धा० पा० १२४७ ) क्तिन्, आसुतिः—अभिषवः। परिषद्वल इति। परितः सीदन्तीति परिषत्, 'सत्सूद्विष' इत्यादिना क्विप्, 'सदिरप्रतेः' इति षत्वम्। पर्षच्छब्दमन्ये पठन्ति, 'शदिभसोऽदिः'। बाहुलकात्पृषेरपि भवति—'पर्षदेषा दशावरा' इति हि दृश्यते; 'पार्षदकृतिरेषा तत्र भवताम्' 'सर्ववेदपार्षदं हीदं शास्त्रम्' इति च भाष्ये। 'पर्षद्वला महाब्रह्मैरागतैः कठकाश्रमात्' ( भट्टि० ४.१५ ) इति च भट्टिकाव्ये[2]। परिषच्छब्दस्तु प्रसिद्ध एव—'सहस्रशः समेतानां परिषत्त्वं न विद्यते' ( १२. ११४ ) इति मनुः। अत्र च सूत्रे उभयोरपि ग्रहणम्, उभयथा सूत्रप्रणयनात्।

भ्रातृवल इति। 'वलेः' इत्यत्राण्ग्रहणानुवृत्तेर्दीर्घाभावः। पुत्रवलः, उत्साहवल इत्यत्र त्वसंज्ञाया

### भावबोधिनी

अस्य अस्ति—इस अर्थ में है। वाण धारण करने वाला 'काण्डीर' है। अण्डम् अस्य अस्ति—इस अर्थ में है अण्डा धारण करने वाला ] ॥ १११ ॥

'रजः' आदि प्रातिपदिकों से मतुबर्थ में वलच् प्रत्यय होता है। उदा० रजस्वला स्त्री। [ रजः=मासिकधर्मः अस्ति अस्याः सा—इस अथ में रजस्+वलच्, स्त्रीलिङ्ग में टाप्=आ। यह असन्त है अतः 'विनि' प्राप्त रहते 'वलच्' किया गया है। ] कृषीवलः कुटुम्बी। [ कृषिः अस्ति अस्य—इस विग्रह में कृषि+वलच्। "वले" ( ६।३।११८ ) सूत्र से दीर्घ करने परे—कृषीवलः कुटुम्बी। खेती करने वाला किसान आदि ] आसुतीवलः शौण्डिकः [ आसुति+वलच्, पूर्ववत् दीर्घ। आसुति=अभिषव=मदिरा जिसके पास है। शराब बेचने वाला। ] परिषद्वलः राजा। परिषद्+वलच्। सभा जिसकी है, अर्थात् सभाविशिष्ट। ] इनमें "वले" ( पा० सू० ६।१। ११८। ) से दीर्घ होता है। 'इति' का प्रयोग विषय के नियम के लिए है, वह सर्वत्र सम्बद्ध होता है। अतः यहाँ नहीं होता है—रजः अस्मिन् ग्रामे विद्यते। [ इस गाँव में रजः=धूलि है। यहाँ 'वलच्' नहीं होता है। ]

* वलच् के प्रकरण में अन्य शब्दों से भी देखा जाता है, ऐसा कहना चाहिए। * उदा० भ्रातृवलः। [भ्राता अस्ति अस्य—इस अर्थ में भ्रातृ+वलच्। यहाँ अण् प्रत्याहार न होने से दीर्घ नहीं होता है। ] पुत्रवलः। [ पुत्राः

---

१. 'उत्सङ्गवलः' इत्यधिकं पुस्तकान्तरे।

२. 'पर्षबलान् महाब्रह्मै राटनैकटिकाश्रमात्' इति पाठः भट्टिकाव्ये।

## २१३४. दन्तशिखात्संज्ञायाम् ॥ ११३ ॥ ( १९२० )

दन्त, शिखा—शब्दाभ्यां वलच् प्रत्ययो भवति मत्वर्थे संज्ञायां विषये। दन्तावलः सैन्यः। दन्तावलो गजः। शिखावलं नगरम्। शिखावला स्थूणा ॥

## २१३५. ज्योत्स्नातमिस्राशृङ्गिणोर्जस्विन्नूर्जस्वलगोमिन्मलिन-मलीमसाः ॥ ११४ ॥ ( १९२१ )

### न्यासः

कस्मान्न भवति ? 'वनगिर्योः संज्ञायाम्' इत्यतः संज्ञाग्रहणानुवृत्तेः ॥ ११२ ॥

**दन्तशिखात् संज्ञायाम्** ॥ दन्तशब्दादिनिठनोः प्राप्तयोर्वलज् विधीयते। शिखाशब्दादिनिप्रत्ययो वक्ष्यते 'व्रीह्यादिभ्यश्च' इत्यत्र—'शिखादिभ्य इनिर्वाच्यः' इति। अदेशार्थं शिखाग्रहणम्, शिखावला स्थूणेत्यत्र यथा स्यात्। देशे तु 'शिखाया वलच्' इत्यनेनैव चातुरर्थिक एव सिद्धः। यद्येवम्, इदमेव वक्तव्यम्, किं तेन ? नैतदस्ति; तदपि हि वक्तव्यमेव—निर्वृत्तादिष्वर्थेषु यथा स्यात्। अत्रापि संज्ञाग्रहणं तस्यैवार्थस्यानुवादार्थम्। इतिकरणानुवृत्त्यैवाभिधेयनियमसिद्धेः ॥ ११३ ॥

### पदमञ्जरी

दीर्घाभावः। संज्ञायां तु दीर्घत्वम्, 'वले' इत्यत्र हि 'वनगिर्योः संज्ञायाम्' इत्यनुवर्तते ॥ ११२ ॥

**दन्तशिखात्संज्ञायाम्** ॥ दन्तावलः=गजः, 'दन्ती दन्तावलो हस्ती' इत्यमरसिंहः। **शिखावलं नगरमिति**। ननु देशे 'शिखाया वलच्' इति चातुरर्थिकेनैव सिद्धम्, तच्चावश्यं कर्तव्यम्—निर्वृत्ताद्यर्थम् ? सत्यम्; इहापि शिखाग्रहणमदेशार्थमवश्यं कर्त्तव्यम्, इहापि यथा स्यात्—शिखावला स्थूणेति। यद्येवंविधा संज्ञा भवति, तत्र देशे मत्वर्थे परत्वादनेनैव वलज्युक्त इति मत्वा **शिखावलं नगरमित्युदाहृतम्** ॥ ११३ ॥

### भावबोधिनी

सन्ति अस्य—इस अर्थ में पुत्र+वलच्। ] उत्साहवलः। [ उत्साहः अस्ति अस्य—इस अर्थ में है। ये संज्ञा अर्थ में नहीं हैं। अतः दीर्घ नहीं होता है। ]

**विमर्श**—परिषत् और पर्षत्—ये दोनों शब्द है। पदमंजरीकार के अनुसार दोनों प्रकार के शब्दों से वलच् होने से 'परिषद्वलः' और पर्षद्वलः' दोनों शब्द शुद्ध हैं "वले" ( ६।३।११८ ) इसमें 'अणः' और 'संज्ञायाम्' दोनों की अनुवृत्ति होने से वहीं दीर्घ होता है जहाँ 'वल' परे रहते अण्=अ, इ, उ हैं और निष्पन्न शब्द संज्ञावाची है ॥ ११२ ॥

'दन्त' और 'शिखा'—इन शब्दों से वलच् प्रत्यय मतुबर्थ में संज्ञाविषय में होता है। उदा० दन्तावलः सैन्यः। दन्तावलः गजः। [ "सेनायां समवेता ये सैन्यास्ते सैनिकाश्च ते"। अमरकोष २।८।६१ के अनुसार सैनिकविशेष को 'दन्तावल' कहा जाता है—ऐसा काशिकाकार का आशय है। "दन्ती दन्तावलो हस्ती"......... । "अमरकोश २।८।३४ के अनुसार हाथी की संज्ञा है। ] शिखावलं नगरम्। शिखावला स्थूणा। [ ये नगरविशेष और यज्ञादि के स्थूणाविशेष की संज्ञा है। "शिखावलः शिखी केकी——।" अमरकोश २।५।३० के अनुसार मोर की संज्ञा है। यद्यपि आगे "शिखाया वलच्" ( पा० सू० ४।२।८९ ) इस सूत्र से वलच् प्राप्त है। यहाँ पुनर्विधान का क्या प्रयोजन है ? वह चातुरर्थिक प्रत्यय है। अतः मत्वर्थ में देश अर्थ में यह वलच् ही उचित है। इसी लिए 'शिखावलं नगरम्' ऐसा उदाहरण दिया गया है। ] ॥ ११३ ॥

ज्योत्स्नादयः शब्दा निपात्यन्ते मत्वर्थे संज्ञायां विषये। ज्योतिष उपधालोपो नश्च प्रत्ययो निपात्यते—ज्योत्स्ना चन्द्रप्रभा। तमस उपधाया इकारो रश्च—तमिस्रा रात्रिः। स्त्रीत्वमतन्त्रम्। अन्यत्रापि दृश्यते—तमिस्रं नभः। शृङ्गादिनच्प्रत्ययो निपात्यते—शृङ्गिणः। ऊर्जोऽसुगागमो निपात्यते विनिवलचौ प्रत्ययौ—ऊर्जस्वी। ऊर्जस्वलः। गोर्मिनिप्रत्ययो निपात्यते—गोमी। मलशब्दादिनजीमसचौ प्रत्ययौ निपात्येते—मलिनः, मलीमसः ॥

## न्यासः

ज्योत्स्नातमिस्राशृङ्गिणोर्जस्विन्नूर्जस्वलगोमिन्मलिनमलीमसाः ॥ स्त्रीत्वमतन्त्रमिति। अप्रधानम्, अविवक्षितत्वात्। स्त्रीलिङ्गनिर्देशस्तु वैचित्र्यार्थः ॥ ११४ ॥

## पदमञ्जरी

ज्योत्स्नातमिस्राशृङ्गिणोर्जस्विन्नूर्जस्वलगोमिन्मलिनमलीमसाः। ज्योत्स्ना चन्द्रप्रभेति। तत्रावयवभूतं ज्योतिरस्तीति मत्वर्थोपपत्तिः। एतेन तमःसमूहे तमिस्रशब्दो व्याख्यातः। निघण्टुषु तु तमःपर्यायस्तमिस्रशब्दः पठितः, तत्र समूह समूहिनोरभेदोपचारः। स्त्रीत्वमतन्त्रमिति। व्याख्यानमत्र शरणम्। शृङ्गादिनच्प्रत्यय इति। यद्यपि सूत्रे चकारोऽनुच्चारितः, तथाप्यन्तोदात्तस्योच्चारणादेवं कल्प्यते। ऊर्जोऽसुगागम इति। ऊर्जस्वतीः, पयस्वतीः। ऊर्जस्वत्, पयस्वदित्यसुनन्तान्मतुप् दृश्यते, इह त्वनाश्रयणे हेतुर्मृग्यः। सूत्रे ऊर्जस्विन्गोमिन्निति नान्तत्वाभिव्यक्तये नलोपो न कृतः ॥ ११४ ॥

## भावबोधिनी

ज्योत्स्ना, तमिस्रा, शृङ्गिण, ऊर्जस्विन्, ऊर्जस्वल, गोमिन्, मलिन और मलीमस-ये शब्द मत्वर्थ में निपातित होते हैं। उदा० (१) ज्योतिष् शब्द की उपधा का लोप और 'न' प्रत्यय निपातित होता है—[ ज्योतिष् + न, उपधा 'इ' का लोप हो जाने पर मूर्धन्यत्व समाप्त होकर दन्त्य नन्' रह जाता है—ज्योत्स् + न, टाप् = आ ] ज्योत्स्ना = चन्द्रमा की प्रभा है। [ ज्योतिः यत् अवयवभूतं तद् अस्य अस्ति—यह विग्रह है। ] (२) तमस् की उपधा का इकार आदेश होता है और 'र' प्रत्यय होता है—[ तमस् + र, उपधा 'अ' का 'इ' आदेश तमिस् + र, टाप् = । तमः अस्ति अस्यां सा—यह विग्रह है। ] तमिस्रा रात्रिः। इस शब्द में स्त्रीत्व अतन्त्र है अर्थात् नियमित नहीं है अन्य लिङ्ग में भी होता है—तमिस्रं नभः। [ अन्धकार वाला बादल—इसमें नपुंसकलिङ्ग का प्रयोग है। ] (३) शृङ्ग शब्द से 'इनच' प्रत्यय निपातित होता है—शृङ्गिणः। [ शृङ्गम् अस्ति अस्य—इस अर्थ में शृङ्ग + इनच्, भसंज्ञा, अलोप, णत्व। सींग वाला—यह अर्थ है। शृङ्गिणी यह गाय का पर्याय है। (४-५) ऊर्जस् शब्द से 'असुक्' का आगम निपातित होता है और 'विनि' तथा 'वलच्' प्रत्यय होते है—ऊर्जस्वी, ऊर्जस्वलः। [ ऊर्जः अस्ति अस्य—यह विग्रह है। ] (६) गो शब्द से मिनि प्रत्यय निपातित होता है—गोमी। [ गौः अस्ति—यह विग्रह है। ] (७-८) मल शब्द से 'इनच्' और ईमसच्' ये दो प्रत्यय होते हैं—मलिनः, मलीमसः। [ मलम् अस्ति अस्य, अस्मिन् वा—यह विग्रह है। ]

**विमर्श**—ऊर्जस्विन् और ऊर्जस्वल में काशिकाकार ने 'ऊर्जोऽसुगागमः निपात्यते' यह लिखा है किन्तु यह प्रामादिक है क्योंकि 'ऊर्जस्' यह शब्द स्वतः 'असन्त' है अतः केवल विनि और वलच् प्रत्यय का ही विधान करना उचित है। इसी लिये सिद्धान्तकौमुदीकार ने लिखा है "ऊर्जोऽसुगागमः" इति वृत्तिस्तु चिन्त्या, 'ऊर्जस्वतीः' इतिवदसुन्नन्तत्वेनैवोपपत्तेः।" ( प्रस्तुत सूत्र पर सिद्धान्तकौमुदी ) ॥

'ऊर्जस्वतीः' आदि में मतुप् देखा जाता है। अतः यहाँ भी पाक्षिक रूप लिखना चाहिए था। सम्भव है उसे सामान्य रूप मानकर विशेष के लिए निपात का समाश्रयण किया गया ॥ ११४ ॥

## २१३६. अत इनिठनौ ॥ ११५ ॥ ( १८२२ )

**अकारान्तात्प्रातिपदिकादिनिठनौ प्रत्ययौ भवतः । दण्डी, दण्डिकः । छत्री, छत्त्रिकः । अन्यतरस्यामित्यधिकारान्मतुबपि भवति । दण्डवान् । छत्रवान् ।**

**तपरकरणं किम् ? श्रद्धावान् ।**

**'एकाक्षरात्कृतो जातेः सप्तम्यां च न तौ स्मृतौ' । ( म० भा० ५. २. ११५ श्लोक० )**

**एकाक्षरात्तावत्—स्ववान् । खवान् । कृतः—कारकवान् । जातेः— व्याघ्रवान् । सिंहवान् । सप्तम्याम्—दण्डा अस्यां सन्ति दण्डवती शालेति ।**

### न्यासः

**अत इनिठनौ** ॥ अत इत्यकारस्तपरो गृह्यते । अत एवाह—**अकारान्तादित्यादि** । अथाच्छब्दस्य स्वरूपग्रहणं कस्मान्न विज्ञायते—अच्छब्दात् प्रातिपदिकादिति ? अदित्ययुक्तं स्वरूपग्रहणं भवितुम्; स्वरूपग्रहणे हि रसादिभ्यो मतुपो विधानमनर्थकं स्यात् । स हीनिठनोर्बाधनार्थं विधीयते । न चेह स्वरूपग्रहणे तेभ्यस्तौ प्रत्ययौ प्राप्नुत इति किं तद्विधानार्थेन मतुपो विधानेन ?

**तपरकरणं किम् ? श्रद्धावान् ।** ननु च व्रीह्यादिषु मालादय आकारान्ताः पठ्यन्ते, ते च नियमार्था भविष्यन्ति—एतेभ्य एवाकारान्तेभ्य इति ? नैतदस्ति; तुल्यजातीयस्यैवं नियमः स्यात् डाप्चाबन्ताभ्यां स्यातामेवेतीनिठनौ । तस्मादकारस्तपरः कर्तव्यः ।

### पदमञ्जरी

**अत इनिठनौ** ॥ **अकारान्तादिति** । स्वरूपग्रहणं तु न भवति, अच्छब्दान्तात्कुर्वत्, पचदित्येवमादेरिति, 'रसादिभ्यः' पुनर्वचनात् । तद्वचनेन प्राप्तयोरिनिठनोर्बाधनार्थमित्युक्तम् ।

**तपरकरणं किमिति** । व्रीह्यादिषु मालादीनामाकारान्तानां पाठो नियमार्थो भविष्यतीति प्रश्नः । किमाकारान्तविषयो नियमः ? उत स्त्रीप्रत्ययान्तविषयः ? आहोस्विदाबन्तविषयः ? इति सन्देहसम्भवादवश्यं कर्त्तव्यं तपरकरणमित्युत्तरेऽभिप्रायः । **एकाक्षरादिति** । रसादिभ्यः पुनर्वचनमन्यनिवृत्त्यर्थमित्युक्तम्, तत्र

### भावबोधिनी

अकारान्त प्रातिपदिक से [ मतुबर्थ में ] इनि और ठन् प्रत्यय होते हैं । उदा० दण्डी, दण्डिकः । [ दण्डः अस्ति अस्य—इस अर्थ में दण्ड + इनि, भसंज्ञा, अलोप । दण्ड + ठन् = इक, भसंज्ञा, अलोप । डण्डेवाला—यह अर्थ है । ] छत्री, छत्त्रिकः । [छत्त्रमस्ति अस्य—यह विग्रह है । छातावाला—यह अर्थ है ।]

इसमें 'अन्यतरस्याम्' ( विकल्प ) की अनुवृत्ति के कारण मतुप् भी होता है । दण्डवान् । छत्रवान् [ दण्ड + मतुप्, छत्त्र + मतुप्, म् का व ]

अकार के तपरकरण का क्या प्रयोजन है ? श्रद्धावान् । [ 'श्रद्धा' यह दीर्घ आकारान्त है अतः यहाँ इनि और ठन् प्रत्यय नहीं होते हैं । कहीं-कहीं खट्वावान् यह पाठ है । ]

* 'एकाक्षर = एकाच् से, कृदन्त से, जातिवाचक से और सप्तम्यर्थ में ये दोनों इनि, ठन् प्रत्यय नहीं होते है ।" [ म० भा० वार्त्तिक ] क्रमशः उदा० (१) एकाक्षर = एक अच् वाले शब्द से—स्ववान्, खवान् । [ स्वमस्ति अस्य, खमस्ति अस्ति—इसमें ये प्रत्यय न होकर केवल मतुप् होता है । ] ( २ ) कृदन्त से—कारकवान् । [ कारक यह कृत्प्रत्ययान्त है । अतः इससे भी ये नहीं होते हैं । ] (३) जातिवाचक से—व्याघ्रवान्, सिंहवान् [ व्याघ्र और सिंह ये जातिवाचक हैं । अतः इनसे भी ये प्रत्यय न होकर केवल मतुप् होता है । ] सप्तम्यर्थ में भी नहीं होते हैं—दण्डाः सन्ति अस्यां शालायाम्—इस में सप्तम्यर्थ में मतुप् ही होता है, ये दोनों नहीं होते है । किन्तु षष्ठ्यर्थ में होते

'इतिकरणो विषयनियमार्थः सर्वत्र सम्बध्यते' इत्युक्तम्, तेन क्वचिद्भवत्यपि—कार्यी, हार्यी, तण्डुली, तण्डुलिक इति ॥

## २१३७. व्रीह्यादिभ्यश्च ॥ ११६ ॥ ( १८२३ )

व्रीह्यादिभ्यः प्रातिपदिकेभ्य इनिठनौ प्रत्ययौ भवतो मत्वर्थे। मतुब्भवत्येव। व्रीही, व्रीहिकः, व्रीहिमान्। मायी, मायिकः, मायावान्।

न च व्रीह्यादिभ्यः सर्वेभ्यः प्रत्ययद्वयमिष्यते, किं तर्हि ?

'शिखादिभ्य इनिर्वाच्य इकन्यवखादिषु।' ( म० भा० ५.२.११६ श्लोकभाष्यम् )

परिशिष्टेभ्य उभयम्।

शिखा, मेखला, संज्ञा, बलाका, माला, वीणा, वडवा, अष्टका, पताका, कर्मन्, चर्मन, हंसा-

### न्यासः

कार्यीति। कृत इनिः। तण्डुली, तण्डुलिक इति। जातेरिनिठनौ ॥ ११५ ॥

व्रीह्यादिभ्यश्च ॥ शिखादिभ्य इत्यादि। उभयत्रादिशब्दः प्रकारे। शिष्टप्रयोगे येभ्य इनिरेव दृश्यते, ते शिखादयो द्रष्टव्याः, ते हि तेभ्यष्ठनं विहितवन्तः। एष तु विषयविभाग इतिकरणानुवृत्तेरेव गृह्यते। वाच्य इति। अस्य तु व्याख्येय इत्यर्थः। यवखदादिष्विति विषयसप्तमी।

### पदमञ्जरी

च 'एकाचः' इति पठितम्, तेनैतत्सिद्धम्। कार्यीति। कार्यशब्दात्कृदन्तात् प्रत्ययः। 'तन्दुलीति। जातेः ॥ ११५ ॥

व्रीह्यादिभ्यश्च ॥ शिखादिभ्य इति। शिखादयोऽत्रैव वक्ष्यन्ते।

इकन्यवखदादिष्विति। विषयसप्तम्येषा। एतेऽप्यत्रैव वक्ष्यन्ते। इकन्निति। ठन्नित्यर्थः। पूर्वाचार्यप्रक्रियापेक्षस्त्विकन्निति निर्देशः श्लोकपूरणार्थः। परिशिष्टेभ्य उभयमिति। एतच्च सर्वमिति

### भावबोधिनी

हैं—दण्डः अस्ति अस्य दण्डी, दण्डिकः। ]

'इतिकरण विषयनियम के लिए है, यह सर्वत्र सम्बद्ध होता है' ऐसा कहा जा चुका है। अतः कहीं कहीं पूर्वोक्त निषिद्ध विषयों में भी होता है—कार्यी, हार्यी। [ यहाँ कृदन्त कार्य+इनि, हार्य+इनि है। ] तण्डुली, तण्डुलिक। [ यहाँ जातिवाचक से भी दोनों प्रत्यय होते हैं। ] [ भाष्यकार ने अनभिधान मानकर अनिष्ट प्रयोगों का वारण किया है। ] ॥ ११५ ॥

'व्रीहि' आदि प्रातिपदिकों से मतुबर्थ में 'इनि' और 'ठन्' ये प्रत्यय होते हैं। और मतुप् भी होता ही है। उदा० व्रीही, व्रीहिकः, व्रीहिवान्। [ व्रीहयः सन्ति अस्य—इस अर्थ में व्रीहि+इन्, व्रीहि+ठन्=इक, व्रीहि+मतुप् ] मायी, मायिकः, मायावान्। [ माया+इनि, माया+ठन्, माया+मतुप्। आगे 'अस्मायामेधास्रजो विनिः" ५.२.१२१ सूत्र से 'विनि' प्रत्यय करने पर—मायावी—यह चौथा रूप भी होता है। ]

सभी व्रीह्यादि शब्दों से ये दोनों प्रत्यय इष्ट नहीं हैं। तो क्या ?

* शिखा आदि से 'इनि' प्रत्यय और यवखदादि से 'इकन्' यह प्रत्यय कहना चाहिए। * अवशिष्ट शब्दों से दोनों प्रत्यय [ कहने चाहिए ]।

शिखादि—शिखा। मेखला। संज्ञा। बलाका। माला। वीणा। वडवा। अष्टका। पताका। कर्मन्।

---

१. 'तण्डुली' इति काशिका।

इत्येतेभ्य इनिरेवेष्यते। यवखद, कुमारी, नौ-इत्येतेभ्य इकन्नेवेष्यते। परिशिष्टेभ्यो द्वावपि प्रत्ययौ भवतः।

व्रीहिग्रहणं किमर्थम्, यावता तुन्दादिषु व्रीहिशब्दः पठ्यते, तत्र इनिठनौ चकारेण विधीयेते? एवं तर्हि तुन्दादिषु व्रीहिग्रहणमर्थग्रहणं विज्ञायते। शालयोऽस्य सन्ति शालिलः, शाली, शालिकः, शालिमान् इति।

व्रीहिशिखादयः पूर्वं पठिताः। यवखद। कुमारी। नौ। * शीर्षान्नञः *। (ग० सू० १३२)। अशीर्षी, अशीर्षिकः॥

## न्यासः

एवं तर्हीत्यादि। तुन्दादिषु व्रीहिशब्दस्य स्वरूपग्रहणे सतीह तस्य ग्रहणमनर्थकं ज्ञायत इति सामर्थ्यात् तत्र व्रीहिग्रहणेनार्थग्रहणं विज्ञायते। अर्थग्रहणे सति यदिष्टं सिध्यति तद् दर्शयितुमाह—**शालयोऽस्य सन्ति शालिल इत्यादि।**

**शीर्षान्नञ इति।** नञ उत्तरस्य शीर्षन्नित्येतस्य प्रत्ययो भवति। निपातनाच्छिरसः शीर्षभावः—अशीर्षी, अशीर्षिकः। अन्ये तु शीर्षन्निति शब्दान्तरं पठन्ति। तस्य तु पाठो भाषायामपि यथा स्यादित्येवमर्थः। अन्यथा 'शीर्षंश्छन्दसि' इति विधानात् भाषायाम् अशीर्षिकः, अशीर्षवानिति न स्यात्॥ ११६॥

## पदमञ्जरी

करणानुवृत्तेर्लभ्यते।

**एवं तर्हीति।** विपर्ययस्तु न भवति—तत्र स्वरूपग्रहणम्, इहार्थग्रहणमिति; असञ्जातविरोधित्वेनानैव स्वरूपग्रहणस्य युक्तत्वात्।

**शीर्षान्नञ इति।** नञः परो यः शीर्षशब्दस्तस्मादिनिठनौ भवतः—अशीर्षी, अशीर्षिकः। न विद्यते शिरो यस्य स एवमुच्यते। 'अचि शीर्षः' इति शिरसः शीर्षभावः, वाक्येऽपि तस्यैव भाविनो निर्देशः॥ ११६॥

## भावबोधिनी

चर्मन्। हंसा—इन शब्दों से केवल 'इनि' प्रत्यय ही इष्ट है। यवखद। कुमारी। नौ—इनसे इकन् ही इष्ट है। शेष शब्दों से दोनों प्रत्यय होते हैं।

[ प्राचीन आचार्यों ने 'इकन्' प्रत्यय कहा था उसी के स्थान पर पाणिनि ने 'ठन्' प्रत्यय कहा है। ठ=इक होकर समान रूप ही बनता है। ]

व्रीहि-ग्रहण किस लिए है? क्योंकि तुन्दादिगण (अगले सूत्र) में 'व्रीहि' शब्द पठित है, वहाँ 'च' के कारण इनि और ठन् का विधान हो जाता है? यदि ऐसी बात है तो तुन्दादिगण में व्रीहिग्रहण उसके अर्थ का ग्रहण ज्ञात होता है। [ अतः पर्याय शब्दों से भी प्रत्यय होता है। ] शालयः सन्ति अस्य—इस अर्थ में—शालिलः, शाली, शालिकः और शालिमान्—ये चार रूप होते हैं। [ शालि यह धान की एक विशेष प्रजाति है। ]

व्रीहि और शिखा आदि पहले ही पढ़े जा चुके हैं। यवखद। कुमारी। नौ।

नञ्विशिष्ट शीर्ष से ये प्रत्यय होते हैं। अशीर्षी, अशीर्षिकः। [ न विद्यते शिरः यस्य सः—इस अर्थ में "अचि शीर्षः (६।१।६२) से या निपातन से 'शिरस्' का 'शीर्ष' आदेश प्रत्यय करने पर हो जाता है। यह वचन भाष्य में नहीं है किन्तु गणपाठ में है ]॥ ११६॥

## २१३८. तुन्दादिभ्य इलच्च ॥ ११७ ॥ ( १६२४ )

तुन्दादिभ्यः प्रातिपदिकेभ्य इलच् प्रत्ययो भवति मत्वर्थे । चकारादिनिठनौ मतुप् च । तुन्दिलः, तुन्दी, तुन्दिकः, तुन्दवान् । उदरिलः, उदरी, उदरिकः, उदरवान् ।

तुन्द । उदर । पिचण्ड । घट । यव । व्रीहि । * स्वाङ्गाद्विवृद्धौ च * ( ग० सू० १३३ ) । तुन्दादिः ॥

## २१३६. एकगोपूर्वाट्ठञ् नित्यम् ॥ ११८ ॥ ( १६२५ )

एकपूर्वाद् गोपूर्वाच्च प्रातिपदिकान्नित्यं ठञ् प्रत्ययो भवति मत्वर्थे । एकशतमस्यास्तीति ऐकशतिकः । ऐकसहस्रिकः । गोपूर्वाच्च—गौशतिकः । गौसहस्रिकः ।

### न्यासः

**तुन्दादिभ्य इलच्च** ॥ यथासम्भवं मतुबादिषु प्राप्तेष्विदमारभ्यते । **चकारादिनिठनौ मतुप् चेति** । एतेन प्रत्ययचतुष्टयं तुन्दादिभ्यो भवतीति दर्शयति । अत एव पिच्छादिषु तुन्दादयो न पठिताः । पिच्छादिभ्य इलज्मतुपावेव भवतः । तुन्दादिभ्यस्त्विनिठनावपि ।

**स्वाङ्गाद्विवृद्धाविति** । स्वाङ्गाद्विवृद्धौ वर्त्तमानात् प्रत्ययो भवति । वृद्धौ=महान्तौ कर्णावस्य स्तः—कर्णिलः, कर्णिकः, कर्णी, कर्णवान् ॥ ११७ ॥

**एकगोपूर्वाट्ठञ् नित्यम्** ॥ मतुबादिषु प्राप्तेषु ठञ्विधीयते । स च समानाधिकरणतत्पुरुषादेकपूर्वाद् भवति, न तु सर्वत एकपूर्वात् । एतच्चेतिकरणानुवृत्तेर्लभ्यते । एकञ्च तच्छतं चैकशतम्, तदस्यास्तीति ऐकशतिकः । षष्ठीतत्पुरुषे—एकशतवान् ।

### पदमञ्जरी

**तुन्दादिभ्य इलच्च** ॥ **स्वाङ्गाद्विवृद्धादि**[1]ति । विवृद्ध्युपाधिकात्स्वाङ्गवाचिन इलजादयो भवन्ति, विवृद्धौ कर्णावस्य कर्णिलः, कर्णी, कर्णिकः, कर्णवान् ॥ ११७ ॥

**एकगोपूर्वाट्ठञ् नित्यम्** ॥ **एकशतमस्यास्तीति** । एकं च तच्छतं चेति 'पूर्वकालैक' इत्यादिना

### भावबोधिनी

तुन्दादि प्रातिपदिकों से मत्वर्थ में इलच् प्रत्यय होता है । 'च' के बल से इनि, ठन् तथा मतुप्—ये प्रत्यय भी होते हैं । उदा० तुन्दिलः, तुन्दी, तुन्दिकः, तुन्दवान् । [ तुन्दम् अस्ति अस्य—इस विग्रह में तुन्द+इलच् भसंज्ञा, अलोप । तुन्द+इनि, तुन्द+ठन्=इक, तुन्द+मतुप् म का व ] उदरिलः, उदरी, उदरिकः, उदरवान् । [ उदरमस्ति अस्य—यह विग्रह है । पूर्वोक्त चार प्रत्यय होने से चार रूप बनते हैं । ]

[ इस गण में पठित शब्द—] तुन्द । उदर । पिचण्ड । घट । यव । व्रीहि । * स्वाङ्गवाची से विवृद्धि=विशेष बड़ा होना—अर्थ मे यह प्रत्यय होता है । * [ अतः विवृद्धौ कर्णौ अस्य—इस विग्रह में—कर्णिलः, कर्णी, कर्णिक: और कर्णवान् ये सभी रूप होते हैं । ] ये तुन्दादि शब्द हैं । [ इस गण में 'घट' शब्द का पाठ प्रक्षिप्त है । 'स्वाङ्गाद् विवृद्धौ, 'स्वाङ्गाद् विवृद्धे च', 'स्वाङ्गाद् विवृद्धात्', 'स्वाङ्गाद् विवृद्धान्ते,' 'स्वाङ्गेभ्यो वृद्धौ,' 'स्वाङ्ग विवृद्धम्'—ये अनेक पाठान्तर उपलब्ध होते हैं । ] ॥ ११७ ॥

एकपूर्वक तथा गोपूर्वक प्रातिपदिक से मतुबर्थ में ठञ् प्रत्यय नित्य होता है । उदा० एकशतम् अस्ति अस्य इति—ऐकशतिकः । [ एकशत+ठञ्=इक, आदिवृद्धि । एक सौ रुपये आदि जिसके पास हैं ।] ऐकसहस्रिकः । [एकसहस्रम् अस्ति अस्य सः, एक हजार रुपये आदि वाला । ] और गोपूर्वक शत का उदा० गौशतिकः,

---

१. 'स्वाङ्गाद्विवृद्धौ' इति काशिका ।

अत इत्येव—एकविंशतिरस्यास्तीति न भवति।

कथमैकगविकः? समासान्ते कृते भविष्यति। कथं गौशकटिकः? शकटीशब्देन समानार्थः शकटशब्दोऽस्ति ततो भविष्यति। अवश्यं च 'अत' इत्यनुवर्त्यम्, 'द्वन्द्वोपतापगर्ह्यात्' (५.२.१२८) इत्येवमाद्यर्थम्।

नित्यग्रहणं मतुपो बाधनार्थम्। कथमेकद्रव्यवत्त्वादिति? नवायं साधुः। एकेन वा द्रव्यवत्त्वा-

## न्यासः

कथमित्यादि। यदि 'अतः' इत्येतदनुवर्त्तते, गोशकटीशब्दान्न सिध्यति, तस्यानकारान्तत्वादिति भावः। ततो भविष्यतीति। तदन्ताद् भविष्यतीत्यभिप्रायः। एषोऽर्थः—एकगोपूर्वाददन्तात् प्रातिपदिकाद् ठञ् विधीयत इति सामर्थ्याल्लभ्यते। अथ वा—ततो हेतोर्भविष्यतीत्यदोषः। अवश्यं चेत्यादि। असत्यां ह्यत इत्यनुवृत्तौ द्वन्द्वोपतापगर्ह्यादिषु योगेषु, चित्रकललाटिकादिशब्देभ्योऽपि प्रत्ययः स्यात्।

नित्यग्रहणमित्यादि। असति हि नित्यग्रहणेऽन्यतरस्यांग्रहणं मतुप्समुच्चयार्थं सर्वत्रानुवर्त्तत इति मतुबपि स्यात्। तस्माद् बाधनार्थं नित्यग्रहणम्। कथमेकद्रव्यवत्त्वादिति। यदि नित्यग्रहणं मतुब्बाधनार्थम्, एवम्, न ह्येकद्रव्यवत्वादित्यत्रैकपूर्वाद् द्रव्यशब्दान्मतुप् सिध्यतीति मन्यते। एकेनेत्यादि। एकशब्दस्य

## पदमञ्जरी

कर्मधारयः। षष्ठीतत्पुरुषाद् बहुव्रीहेर्द्वन्द्वाच्च न भवति; अनभिधानात्; इतिकरणानुवृत्तेश्च।

कथमिति। एकगोशब्दस्याप्यनकारान्तत्वात्प्रश्नः। समासान्ते कृत इति। 'गोरतद्धितलुकि' इति टचि। कथमिति। इवर्णान्त एव शकटिशब्दोऽस्तीति मन्यमानस्य प्रश्नः। अनभिधानादेव एकविंशत्यादिभ्यो न भविष्यति, किम् 'अतः' इत्यस्यानुवृत्त्या? तत्राह—अवश्यं चेति। एवमाद्यर्थमिति। एवमादि यत्सूत्रं तदर्थमित्यर्थः। ततः परे तु ये योगाः 'वातातीसाराभ्याम्' इत्येवमादयः, तेषु 'अतः' इत्यस्योपयोगो नास्तीति।

नित्यग्रहणमित्यादि। अन्यथान्यतरस्यांग्रहणेन सर्वत्रैवात्र प्रकरणे मतुप्समुच्चयादत्रापि प्रसङ्गः। एकेन वेति। यद्यवश्यं समर्थयितव्यमिति भावः। तत्र 'सुप्सुपा' इति समासः। कथमेकदण्डीति?

## भावबोधिनी

गौसहस्रिकः। [ गौशतम् अस्ति अस्य सः, गोसहस्रम् अस्तिः सः। सौ गायों वाला, हजार गायों वाला। एकशतम्—यहाँ एकं च तत् शतम्—यह कर्मधारय है। ]

अकारान्त से ही होता है, अतः 'एकविंशतिः अस्ति अस्य'—यहाँ नहीं होता है। [ क्योंकि 'विंशति' अकारान्त नहीं है। ]

[ यदि अकारान्त से मानते हैं तो ] 'ऐकगविकः' [ एकगवः अस्य अस्ति— ] यह कैसे होता है? समासान्त प्रत्यय करने पर होता है। [ 'एकगो' समास के बाद "गोरतद्धितलुकि" सूत्र से टच्=अ प्रत्यय करने पर अवादेश करने से 'एकगव' यह अकारान्त हो जाता है। ठञ् संभव है। ] गौशकटिकः—यह कैसे होता है [ क्योंकि 'शकटी' ईकारान्त है ]? शकटी शब्द का समानार्थक 'शकट' यह अकारान्त है अतः ठञ् में बाधा नहीं है। ] और 'अकारान्त से' इसकी अनुवृत्ति अवश्य करनी चाहिए क्योंकि "द्वन्द्व-उपताप गर्ह्य—"आदि ( पा० सू० ५।२।१२८ ) इस सूत्र के लिये आवश्यक है। [ यह सूत्र अकारान्त शब्दों से 'इनि' प्रत्यय कर सके, इसके लिए यहाँ भी 'अतः' (=अकारान्त से ) इसकी अनुवृत्ति आवश्यक है। विशेष उसी सूत्र में देखें। ]

'नित्यम्' का ग्रहण मतुप् का बाध करने के लिए है।

द्विति समर्थनीयम् ॥

## २१४०. शतसहस्रान्ताच्च निष्कात् ॥ ११९ ॥ ( १९२६ )

शतान्तात् सहस्रान्ताच्च प्रातिपदिकाट्ठञ् प्रत्ययो भवति मत्वर्थे। तौ चेच्छतसहस्रशब्दौ निष्कात् परौ भवतः। निष्कशतमस्यास्ति नैष्कशतिकः। नैष्कसहस्रिकः।

सुवर्णनिष्कशतमस्यास्तीत्यत्रानभिधानान्न भवति ॥

## २१४१. रूपादाहतप्रशंसयोर्यप् ॥ १२० ॥ ( १९२७ )

आहतप्रशंसे प्रकृत्युपाधी। आहतप्रशंसाविशिष्टार्थे वर्तमानाद्रूपशब्दाद्यप् प्रत्ययो भवति मत्वर्थे। आहतं रूपमस्य रूप्यो दीनारः। रूप्यः केदारः। रूप्यं कार्षापणम्। प्रशस्तं रूपमस्यास्ति

### न्यासः

द्रव्यवत्त्वादित्यनेन 'सुप्सुपा' इति समासं कृत्वा साधुत्वमस्य प्रतिपादनीयमित्यर्थः ॥ ११८ ॥

शतसहस्रान्ताच्च निष्कात् ॥ ११९ ॥

### पदमञ्जरी

'एकदेशिनैकाधिकरणे' इति निर्देशो ज्ञापयति—इनिरपि क्वचिद्भवतीति ॥ ११८ ॥

शतसहस्रान्ताच्च निष्कात्॥ निष्कादित्येतद् गुणभूताभ्यामपि शतसहस्राभ्यां सम्बध्यते न तदन्तेनेत्याह—तौ चेदिति।

सुवर्णनिष्कशतमित्यादि। यत्र निष्कशब्दः पूर्वपदं न भवतीत्यर्थः।

अन्तग्रहणं किम्? 'निष्काच्छतसहस्राभ्याम्' इत्युच्यमाने सन्देहः स्यात्—किं पूर्वपदम्?—किमुत्तरपदम्?—इति ॥ ११९ ॥

रूपादाहतप्रशंसयोर्यप्॥ रूप्यो दीनार इति। पुरुषाद्याकारचिह्नितौ सुवर्णपरिमाणविशेषौ

### भावबोधिनी

'एकद्रव्यवत्त्वात्' यह प्रयोग कैसे होता है [ क्योंकि एकपूर्वक 'द्रव्य' से ठञ् ही होना चाहिए ]? यह प्रयोग शुद्ध नहीं है। अथवा कर्मधारय न करके तृतीया तत्पुरुष करना चाहिए—] 'एकेन द्रव्यवत्त्वात्।'

[ "पूर्वापराधरोत्तरम् एकदेशिना एकाधिकरणे" पा० सू० २।२।१ में 'एकदेशी' का प्रयोग है। अतः यहाँ 'नित्यम्' यह प्रायिक अर्थ में है। अतः कहीं कहीं ठञ् न होकर 'इनि' भी होता है—एकदण्डी। ] ॥ ११८ ॥

शतशब्दान्त और सहस्र-शब्दान्त प्रातिपदिक से ठञ् प्रत्यय मतुबर्थ में होता है, यदि वे शत और सहस्र शब्द 'निष्क' से परे हों तो। उदा० निष्कशतम् अस्य अस्ति इस विग्रह में—नैष्कशतिकः। [ एक सौ निष्कोंवाला ] नैष्कसहस्रिकः। [ निष्कसहस्रम् अस्ति अस्य—यह विग्रह है। एक हजार निष्कोंवाला।

"साष्टे शते सुवर्णानां हेम्न्युरोभूषणे।
दीनारेऽपि च निष्कोऽस्त्री··· ··· ···॥" (अमर कोष ३।३।१४)

इसके अनुसार १०८ अशर्फियों वाले हार और दीनार=मोहर के लिए 'निष्क' शब्द है। ]

सुवर्णनिष्कशतम् अस्य अस्ति—यह प्रयोग अनभिधान के कारण नहीं होता है, अर्थात् यहाँ ठक् नहीं होता है ॥ ११९ ॥

'आहत' और 'प्रशंसा' ये प्रकृति के उपाधि ( विशेषण ) हैं। आहत और प्रशंसा से विशिष्ट अर्थ में वर्तमान 'रूप' शब्द से मतुबर्थ में 'यप्' प्रत्यय होता है। उदा० आहतं रूपम् अस्य अस्ति—इस अर्थ में—रूप्यः

रूप्यः पुरुषः। निघातिकाताडनादिना दीनारादिषु रूपं यदुत्पद्यते तदाहतमित्युच्यते।

आहतप्रशंसयोरिति किम् ? रूपवान्।

* यप्प्रकरणेऽन्येभ्योऽपि दृश्यत इति वक्तव्यम् * ( म० भा० ५. २. १२० वा० १ )। हिम्याः पर्वताः। गुण्या ब्राह्मणाः॥

## २१४२. अस्मायामेधास्रजो विनिः॥ १२१॥ ( १९२८ )

असन्तात्प्रातिपदिकात्, माया, मेधा, स्रज्—इत्येतेभ्यश्च विनिः प्रत्ययो भवति मत्वर्थे। मतुप् सर्वत्र समुच्चीयत एव। असन्तात्तावत्—यशस्वी, तपस्वी, पयस्वी। मायावी। मेधावी। स्रग्वी।

### न्यासः

**रूपादाहतप्रशंसयोर्यप्**॥ तदाहतमुच्यत इति। आहतम्=आहननम्, ताडनमित्यर्थः। अतो निष्पन्नं पुरुषादिरूपम्, तदपि कार्ये कारणोपचारादाहतमित्युच्यते।

**यप्प्रकरण** इति। यप्प्रकरणेऽन्येभ्योऽपि दृश्यत इति वक्तव्यमिति। अनेनास्य तु तुल्यत्वात् तद्वदेव व्याख्यानं कर्तव्यम्। चकारस्त्विह 'शतसहस्रान्ताच्च निष्कात्' इत्यतोऽनुवर्त्तते॥ १२०॥

**अस्मायामेधास्रजो विनिः**। यशस्वी। तपस्वी। पयस्वी। 'तसौ मत्वर्थे' इति भत्वम्, अतो

### पदमञ्जरी

व्यवहाराय कल्पितौ दीनारकार्षापणौ। **निघातिकाताडनादिनेति**। तीक्ष्णाग्रा आयसी शलाका= निघातिका, यया पुरुषाद्याकारं सुवर्णादौ सुवर्णकारा उद्भावयन्ति। 'कृत्यल्युटो बहुलम्' इति करणे ण्वुल—निहन्यतेऽनया निघातिका, तया यत्ताडनम्, तदादिना। आदिशब्देन मुद्राप्रतिमुद्रणादि गृह्यते। क्वचिन्निघातिकाताडनेन पुरुषाद्याकार उद्भाव्यते, क्वचिन्मुद्रया प्रतिमुद्र्यते दीनारादिषु। **तदाहतमित्युच्यत इति**। आहननेन निष्पादितत्वात्।

प्रायेण केदारशब्दः पठ्यते, तस्यैवंविधेऽर्थे प्रसिद्धिर्मृग्या।

**हिम्याः पर्वता** इति। हिमवान् तत्पर्यन्तवर्तिनश्च भूम्नि यप्। **गुण्याः**=गुणवन्तः। इनिरपि दृश्यते—'गुण्यगुण्य इति न व्यजीगणत्'॥ १२०॥

### भावबोधिनी

दीनारः। [ आहतम्=आहननम्—कूटना पीटना आदि के द्वारा बनाया गया मनुष्य आदि का रूप जिसमें है ऐसा सिक्का। पुराने समय में सिक्के पर राजा की या किसी देवी देवता की आकृति बनाई जाती थी। ] रूप्यः केदारः। [ प्रशस्तं रूपम् अस्य अस्ति—इस अर्थ में रूप+यप्; भसंज्ञा, अलोप करने पर रूप बनता है। ] रूप्यं कार्षापणम्। [ आहतं रूपम् अस्य अस्ति—यह अर्थ है। ] प्रशस्तं रूपम् अस्य अस्ति सः—रूप्यः पुरुषः। [ सुन्दर रूपवाला पुरुष। ] निघातिका=लोहे का वह औजार जिसके कूटने आदि से दीनार आदि में जो रूप बन जाता है उसे 'आहत' कहा जाता है। वह रूप जिसमें है वह रूप्य है। ]

आहत और प्रशंसा में—इसका क्या प्रयोजन है ? रूपवान्। [ यहाँ सामान्य अर्थ में मतुप् है क्योंकि प्रस्तुत दोनों अर्थों की प्रतीति नहीं होती है।

* यप् के प्रकरण में अन्य शब्दों से भी देखा जाता है, ऐसा कहना चाहिए। * उदा० हिम्याः पर्वताः। [ बर्फीले पहाड़। हिमम् अस्ति येषाम्—यह विग्रह है। ] गुण्याः ब्राह्मणाः। [ गुणों वाले ब्राह्मण। गुणाः सन्ति येषाम्—यह विग्रह है। ]॥ १२०॥

असन्तप्रातिपदिक से और माया, मेधा तथा स्रज्—इन से मतुबर्थ में विनि प्रत्यय होता है। मतुब् का

मायाशब्दाद् व्रीह्यादिषु पाठादिनिठनावपि भवतः—मायी, मायिकः ॥

## २१४३. बहुलं छन्दसि ॥ १२२ ॥ ( ३४६८ )

छन्दसि विषये बहुलं विनिः प्रत्ययो भवति मत्वर्थे। 'अग्ने तेजस्विन्' ( तै० सं० ३.३.११ )। न भवति—'सूर्यो वर्चस्वान्।'

* छन्दसि विनिप्रकरणेऽष्ट्रामेखलाद्वयोभयरुजाहृदयानां दीर्घत्वं चेति वक्तव्यम् * ( म० भा० ५.२.१२२ वा० १ )। अष्ट्रावी ( ऋ० १०.१०२.८ )। मेखलावी। द्वयावी ( अ० प्रा० ३.४.१ )। उभयावी ( ऋ० ५.७.१० )। रुजावी। हृदयावी। द्वयोभयहृदयानि दीर्घत्वं प्रयोजयन्ति।

### न्यासः

भत्वाज्जश्त्वं न भवति। जश्त्वेन सकारस्य दकारः प्राप्नोति, स न भवति ॥ १२१ ॥

बहुलं छन्दसि ॥ द्वयोभयहृदयानीत्यादि। अवधारणमिह द्रष्टव्यम्। द्वयादीन्येव दीर्घत्वं प्रयोज-

### पदमञ्जरी

अस्मायामेधास्रजो विनिः ॥ मतुप् सर्वत्र समुच्चीयत एवेति। पूर्वं नित्यग्रहणेन अन्यतरस्यांग्रहणं तत्रैव न सम्बध्यत, इह तु सम्बध्यत एवेत्येवशब्दस्यार्थः। तथा च 'तसौ मत्वर्थे' इत्यत्र पयस्वान् यशस्वानिति भाष्ये उदाहृतम्। पयस्वीति। 'तसौ मत्वर्थे' इति भत्वाज्जश्त्वाभावः ॥ १२१ ॥

बहुलं छन्दसि ॥ अष्ट्रावीति। अशेष्ट्रनि अष्ट्रा, दंष्ट्रापर्यायोऽयं मन्त्रेषु प्रयुज्यते—'अष्ट्रां पूषा शिथिरामुद्वरीवृजत्,' (ऋ० ६.५८.२), 'शुनमष्ट्रा व्यचरत्कपर्दी' ( ऋ० १०.१०२.८ ) इति, तत्रास्मादेव पाठाट्टाप्। द्वयोभयहृदयानीति। अन्येषां स्वत एव दीर्घत्वात्।

### भावबोधिनी

सबमें समुच्चय होता ही है अर्थात् दोनों प्रत्यय होते हैं। असन्त प्रातिपदिक के उदा० यशस्वी, तपस्वी, पयस्वी। [ यशः अस्ति अस्य, तपः अस्ति अस्य, पयः अस्ति अस्य—ये विग्रह हैं। यशवाला, तपवाला, पय=दूध या जल वाला। यशस्+विनि=विन्, विभक्ति और उपधादीर्घादि करने पर रूप सिद्ध होता है। ] मायावी। [ माया अस्ति अस्य, मायावाला। ] मेधावी। [ मेधा अस्ति अस्य, मेधा=उत्तम बुद्धिवाला ] स्रग्वी। [ स्रक् अस्ति अस्य—स्रज्+विनि=विन्, कुत्व के कारण 'ज्' का 'ग्' हो जाता है। 'यशस्वी' आदि सान्त शब्द हैं अतः 'तसौ मत्वर्थे' से पदसंज्ञा की बाधिका भसंज्ञा हो जाती है अतः जश्त्व नहीं होता है। ]

'माया' शब्द व्रीह्यादि (५।२।११६) में पढ़ा गया है। अतः 'इनि' और 'ठन्' ये प्रत्यय भी होते हैं—मायी, मायिकः। [ माया+इनि, माया+ठन्=इक, भसंज्ञा, आलोप। इस प्रकार मायी, मायिकः, मायावी, मायावान्—ये चार रूप होते ] ॥ १२१ ॥

* वेदविषय में मतुबर्थ में 'विनि' प्रत्यय बहुलरूप से होता है। * उदा० अग्ने तेजस्विन्! [ यहाँ तेजः अस्ति अस्य—इस में बहुलरूप से विनि=विन्—तेजस्+विन्, संबोधन एकवचन का रूप है। ] नहीं भी होता है—सूर्यो वर्चस्वान्। [ वर्चः अस्ति अस्य–यहाँ 'विनि' प्रत्यय न होकर 'मतुप्' ही होता है। ]

* वेदविषय में विनि प्रत्यय के प्रकरण में—अष्ट्रा, मेखला, द्वय, उभय, रुजा और हृदय—इन शब्दों से 'विनि' प्रत्यय तथा दीर्घ होना कहना चाहिए। * उदा० अष्ट्रावी। [ अष्ट्रा अस्ति अस्य—इस अर्थ में विनि प्रत्यय होता है। ] मेखलावी। [ मेखला अस्ति अस्य—यह विग्रह है। ] द्वयावी। [ द्वयम् अस्ति अस्य सः। ] उभयावी। [ उभयम् अस्ति अस्य सः। ] रुजावी। [ रुजा अस्ति अस्य सः। ] हृदयावी। [ हृदयम् अस्ति अस्य सः। ] द्वय, उभय और हृदय ये शब्द दीर्घत्व कराने वाले हैं। शेष तो स्वतः दीर्घ हैं। ]

* मर्मणश्चेति वक्तव्यम् * (म० भा० ) । मर्मावी ।

* सर्वत्रामयस्योपसंख्यानम् * ( म० भा० वा० २ ) । छन्दसि भाषायां च । आमयावी ( तै० सं० ३.२ ३ ) ।

* शृङ्गवृन्दाभ्यामारकन्वक्तव्यः * (म० भा० वा० ३) । शृङ्गारकः । वृन्दारकः ( श० ब्रा० १४.६.११.१ ) ।

* फलबर्हाभ्यामिनज्वक्तव्यः * ( म० भा० वा० ४ ) । फलिनः । बर्हिणः ।

* हृदयाच्चालुरन्यतरस्याम् * ( म० भा० वा० ५ ) । हृदयालुः, हृदयी, हृदयिकः, हृदयवान् ।

* शीतोष्णतृप्रेभ्यस्तन्न सहत इत्यालुज्वक्तव्यः * ( म० भा० वा० ६ ) । शीतं न सहते शीतालः । उष्णालुः । तृप्रालुः ।

* तन्न सहत इति हिमाच्चेलुः * ( म० भा० वा० ७ ) । हिमं न सहते हिमेलुः ।

* बलादूलच् * ( म० भा० वा० ८ ) । बलं न सहते बलूलः ।

## पदमञ्जरी

हृदयाच्चालुरन्यतरस्यामिति । अन्यतरस्यांग्रहणेनेनिठनौ प्राप्येते, चकारस्य 'चुटू' इतीत्संज्ञा । एवमुत्तरत्रापि । अन्ते तु चकारो नैवास्ति ।

हिमाच्चेलुरिति । एकारादिः प्रत्ययः ।

बलादूलजिति । सिध्मादिषु मत्वर्थे वलूलवालूलयोः प्रकारान्तरेण व्युत्पत्तिर्दर्शिता ।

## भावबोधिनी

* मर्मन् शब्द से भी विनि प्रत्यय और दीर्घ होता है—ऐसा कहना चाहिए । * उदा० मर्मावी । ( मर्माणि सन्ति अस्य इस अर्थ में मर्मन् + विनि = विन्, न् का लोप दीर्घ । मर्मों वाला ।

* 'आमय' से विनि प्रत्यय और दीर्घ का होना सर्वत्र कहना चाहिए । * सर्वत्र = लोक और वेद दोनों में । उदा० आमयावी । ( आमय + विनि = विन्, दीर्घ । आमय = रोग वाला । )

* शृङ्ग और वृन्द शब्दों में मतुबर्थ में आरकन् प्रत्यय कहना चाहिए । * उदा० शृङ्गारकः, वृन्दारकः । [ शृङ्गाणि सन्ति अस्य यह, वृन्दम् अस्ति अस्य यह विग्रह है । ]

* फल और बर्ह शब्दों से इनच् कहना चाहिए । * उदा० फलिनः, बर्हिणः । [ फलानि सन्ति अस्य—यह विग्रह है । फलों वाला वृक्ष आदि । बर्हः अस्ति अस्य—यह विग्रह है । बर्ह वाला = मयूर । ]

* हृदय से आलुच् प्रत्यय विकल्प से कहना चाहिए । * [ विकल्प के कारण इनि, ठन्, मतुप्—ये तीनों प्रत्यय होते हैं । ] उदा० हृदयालुः, हृदयी, हृदयिकः, हृदयवान् । [ हृदयम् अस्ति अस्य सः—इस अर्थ में क्रमशः (क) हृदय + आलुच्, (ख) हृदय + इनि, (ग) हृदय + ठन् = इक, (घ) हृदय + मतुप् । ]

* शीत, उष्ण और तृप्र—इन शब्दों से 'उसे सहन नहीं कर पाता है–' इस अर्थ में 'आलुच्' प्रत्यय कहना चाहिए । * उदा० शीतं न सहते—इस विग्रह में—शीतालुः । [शीत = ठंड न सहन कर सकने वाला । ] उष्णालुः, तृप्रालुः । ( उष्णं न सहते–यह विग्रह है । गर्म—गर्मी सहन न कर सकने वाला । तृप्तं न सहते—यह अर्थ है । ]

* 'उसे नहीं सह पाता है–' इस अर्थ में 'हिम' शब्द से 'चेलु' प्रत्यय कहना चाहिए । * हिमं न सहते—इस अर्थ में—हिमेलुः । हिम + चेलु = एलु, भसंज्ञा, आलोप । )

* बल शब्द से 'ऊलच्' कहना चाहिए । * उदा० बलं न सहते–इस अर्थ में–बलूलः । ( बल + ऊलच् = ऊल, भसंज्ञा, अलोप ) * वात शब्द से समूह अर्थ में ऊलच् कहना चाहिए । * वात सहन नहीं कर पाता हैं–इस अर्थ में भी कहना चाहिए । * (अतः दो अर्थों में यह प्रत्यय होता है–) (क) वातानां समूहः, (ख) वातं न

* वातात्समूहे च * ( म० भा० वा० ९ ) । * वातं न सहत इति च * । वातानां समूहः, वातं न सहत इति वा वातूलः ।

* पर्वमरुद्भ्यां तन्' वक्तव्यः * ( म० भा० वा० १० ) पर्वतः ( मं० सं० ४.१२.५ ) । मरुत्तः (ऐ० ब्रा० ३९.७ ) ।

* अर्थात्तदभावे इनिर्वक्तव्यः * (?) । अर्थी । तदभाव इत्येव—अर्थवान् ।

तदेतत्सर्वं बहुलग्रहणेन सम्पद्यते ॥

## २१४४. ऊर्णाया युस् ॥ १२३ ॥ ( १९२९ )

ऊर्णाशब्दाद्युस् प्रत्ययो भवति मत्वर्थे । सकारः पदसंज्ञार्थः । ऊर्णाऽस्य विद्यते ऊर्णायुः ( वाज० सं० १३.५० ) ।

### न्यासः

यन्ति, नेतराणि; स्वतं एव दीर्घत्वात् । तदेतत् सर्वं बहुलग्रहणेन सम्पद्यत इति । वक्तव्यशब्दस्तु व्याख्याने वर्त्तत इत्यभिप्रायः ॥ १२२ ॥

### पदमञ्जरी

पर्वमरुद्भ्यां तन्निति । आद्युदात्तार्थो नकारः । मरुत्तो नाम राजा, यत्रेदं श्रूयते—'मरुतः परिवेष्टारो मरुत्तस्यावसन् गृहे ( ऐ० ब्रा० ३९.७ ( ८.२१.१४ ) पृ० १३०४ ) इति । उपसर्गसंज्ञायां तु मरुच्छब्दस्योपसंख्यानाद् 'अच उपसर्गात्तः' इति तत्वमनजन्तत्वेऽपि भवति । 'मरुत एनं देयासुर्मरुत्तः' इति व्युत्पत्तिर्दर्शिता । तत्र तृतीया कर्मणि' इति पूर्वपदप्रकृतिस्वरः प्राप्नोति । मरुच्छब्दः 'मृग्रोरुतिः' इति उतिप्रत्ययान्तत्वादन्तोदात्तः, तत्र 'उपसर्गाश्चाभिवर्जम्' ( फि० सू० ८१ ) इत्याद्युदात्तत्वं द्रष्टव्यम् ॥ १२२ ॥

### भावबोधिनी

सहते—इन अर्थों में—वातूलः । ( वात+ऊलच् = भसंज्ञा, आलोप )

* पर्वन् और मरुत्—शब्दों से तन् प्रत्यय होता है । * उदा० पर्वतः, मरुत्तः । [ पर्वन्+तन्, मरुत्+तन् । रूढ शब्द हैं अतः मतुप् नहीं होता है ।]

* अर्थ शब्द से उसके अभाव अर्थ में 'इनि' कहना चाहिए । * उदा० अर्थी । [ अर्थः नास्ति यस्य सः—इस अर्थ में—अर्थ+इनि । ] अर्थ का अभाव—इसी में यह होता है—[ अतः अर्थः अस्ति अस्य—आदि में ] अर्थवान् । [ मतुप् ही होता है । ]

उक्त सारा व्याख्यान 'बहुल' के बल से सम्भव है ॥

विमर्श—'बहुलं छन्दसि' यह सूत्र वेदविषय में मतुबर्थ में प्रत्यय विधान करता है। भाष्योक्त कई वार्तिक काशिका में उद्धृत हैं। किन्तु भाष्य में 'बलाच्चोलः' यह वार्तिक 'तन्न सहते' इस अर्थ में 'ऊल' प्रत्यय करता है किन्तु काशिका में 'बलादूलच्' वार्तिक मानकर 'ऊलच्' प्रत्यय किया गया है। भाष्य में 'पर्वमरुद्भ्यां तप्' ऐसा वार्तिक मानकर 'तप्' यह पित् प्रत्यय करके 'पर्वतः' 'मरुत्तः' इन्हें मध्योदात्त ही किया गया है। किन्तु काशिकाकार 'तन्' करके 'नित्' मानकर आद्युदात्त स्वर ही मानते हैं। हरदत्त और नागेश भी यही स्वीकार करते हैं। किन्तु भाष्य वार्तिक और सिद्धान्तकौमुदी में 'तप्' यह पित् ही माना गया है। अन्तिमवार्तिक प्रस्तुत सूत्र-भाष्य में नहीं है ॥ १२२ ॥

---

१. 'पर्वमरुद्भ्यां तबिति । पिदयम् । नित्पाठस्तु लेखकप्रमादात् । मरुत्तस्य मध्योदात्तस्यैवेष्टेः ।' इति भाष्ये उद्द्योतकारः । 'केचित्तु—एवं हि ... 'मरुद्भिः' इत्यादिप्रयोगोपपत्तिः । एवञ्च नित्पाठ एवोचितः । वेदे तु क्वचिन्मध्योदात्तत्वं तु छान्दसत्वाद् बोध्यम् । इति उद्द्योतकारः ।

केचिच्छन्दोग्रहणमनुवर्तयन्ति ॥

२१४५. वाचो ग्मिनिः ॥ १२४ ॥ ( १९३० )

वाच्शब्दात् ग्मिनिः प्रत्ययो भवति मत्वर्थे । वाग्ग्मी, वाग्ग्मिनौ, वाग्ग्मिनः ॥

२१४६. आलजाटचौ बहुभाषिणि ॥ १२५ ॥ ( १९३ )

वाच्-शब्दात्प्रथमासमर्थादालच्, आटच् —इत्येतौ भवतो त्वर्थे बहुभाषिण्यभिधेये । ग्मिनेरपवादः । वाचालः । वाचाटः ।

* कुत्सित इति वक्तव्यम्* ( म०भा० ) । यो हि सम्यग् बहु भाषते स वाग्मीत्येव भवति ( म० भा० ) ॥

**न्यासः**

ऊर्णाया युस् ॥ ऊर्णायुरिति । पदत्वेन भसंज्ञाभावाद् यस्येतिलोपो न भवति ॥ १२३ ॥

वाचो ग्मिनिः ॥ अथ मिनिरेव कस्मान्नोच्यते ? जश्त्वे कृते वाग्मीति सिध्यति; ननु च 'यरोऽनुनासिकेऽनुनासिको वा' इत्यनुनासिकः प्राप्नोति ? नैष दोषः; व्यवस्थितविभाषा विज्ञास्यते । एवं तर्हि गकारमधिकं कुर्वन्नेतत् सूचयति-ग्मिनिरयमिति ।

यः सम्यग्बहु भाषते तत्रापि वक्ष्यमाणावालजाटचौ बाधित्वा ग्मिनिरेव भवति । एवं ह्यधिकं भवति यद्यपवादविषयेऽपि क्वचिद्भवति, नान्यथा । एवञ्चालजाटचौ कुत्सितं यो बहु भाषते तत्रैव पारिशेष्याद् भवत इति वेदितव्यम् ॥ १२४ ॥

आलजाटचौ बहुभाषिणि ॥ कुत्सित इति । वक्तव्यशब्दस्तु व्याख्याने वर्त्तत इत्यभिप्रायः ।

**पदमञ्जरी**

ऊर्णाया युस् ॥ ऊर्णायुरिति । पदत्वाद्यस्येतिलोपो न भवति ॥ १२३ ॥

वाचो ग्मिनिः ॥ वाग्ग्मीति । चकारस्य कुत्वजश्त्वे, द्वयोर्गकारयोः श्रवणं भवति । अथ मिनिरेव कस्मान्नोच्यते, तत्रापि हि कुत्वजश्त्वयोर्वाग्ग्मीति सिद्ध्यत्येव; ननु चैवमेको गकारः स्यात्; न च 'अनचि च' इति द्विर्वचनम्, 'दीर्घादाचार्याणाम्' इति प्रतिषेधात् । अथापि द्वयोरेकस्य वा श्रवणे विशेषो नास्तीत्युच्येत ? एवमपि 'यरोऽनुनासिके' प्रत्यये भाषायां नित्यवचनम्' इति नित्यमनुनासिकः प्राप्नोति, यथा—वाङ्मयम्, वाङ्मयमिति ॥ १२४ ॥

आलजाटचौ बहुभाषिणि ॥ यो हि सम्यग्भाषत[1] इति बह्वपीति भावः ॥ १२५ ॥

**भावबोधिनी**

मतुबर्थ में 'ऊर्णा' शब्द से 'युस्' प्रत्यय होता है । सकार [ "सिति च" सूत्र द्वारा पदसंज्ञा करने के लिए है । ] उदा० ऊर्णा अस्य विद्यते—इस अर्थ में—ऊर्णायुः । [ ऊर्णा+युस्, स् का रुत्व विसर्ग । पदसंज्ञा के कारण भसंज्ञा का बाध हो जाने से 'आ' का लोप नहीं होता है । ]

कुछ विद्वान् 'छन्दः' ग्रहण की अनुवृत्ति मानते हैं । [ अतः यह सूत्र भी वेदविषयक है । ] ॥ १२३ ॥

वाच् शब्द से मतुबर्थ में 'ग्मिनि' प्रत्यय होता है । उदा० वाग्ग्मी, वाग्ग्मिनौ, वाग्ग्मिनः । [ वाचः सन्ति अस्य—इस अर्थ में वाच्+ग्मिनि, चकार का कुत्व और जश्त्व करने पर वाग्ग्मिन्, सु, उपधादीर्घ, न् लोप, सुलोप—वाग्ग्मी । यह अच्छे वक्ता के लिए प्रयुक्त होता है । ] ॥ १२४ ॥

प्रथमासमर्थ 'वाच्' शब्द से मतुबर्थ में बहुभाषी ( बहुत बोलने वाला ) अर्थ में आलच् और आटच् प्रत्यय होते हैं । यह ग्मिनि का अपवाद है । उदा० वाचालः । वाचाटः । [ वाच्+आलच् । वाच्+आटच् । ]

* यह प्रत्यय कुत्सित अर्थ में है ऐसा कहना चाहिए । * अतः जो अच्छी तरह खूब बोलता है, इस अर्थ

1. 'सम्यग् बहु भाषते' इति काशिका ।

२१४७. स्वामिन्नैश्वर्ये ॥ १२६ ॥ ( १८३२ )

'स्वामिन्' इति निपात्यते ऐश्वर्ये गम्यमाने। स्वशब्दादैश्वर्यवाचिनो मत्वर्थे आमिन्प्रत्ययो निपात्यते। स्वमस्यास्तीति=ऐश्वर्यमस्यास्तीति स्वामी, स्वामिनौ, स्वामिनः।

ऐश्वर्य इति किम् ? स्ववान् ॥

२१४८. अर्शआदिभ्योऽच् ॥ १२७ ॥ ( १८३३ )

'अर्शस्' इत्येवमादिभ्यः प्रातिपदिकेभ्योऽच्प्रत्ययो भवति मत्वर्थे। अर्शांसि अस्य विद्यन्ते

न्यासः

वक्तव्यमिति। कुत्सितं यो बहु भाषते तत्रालजाटचौ भवत इत्येतदर्थरूपं व्याख्येयमित्यर्थः। व्याख्यानं पूर्वसूत्र एव कृतम् ॥ १२५ ॥

स्वामिन्नैश्वर्ये ॥ 'एकाक्षः' इति रसादिषु ( ५. २. ९५ ) पाठान्मतुपि प्राप्त इदमारभ्यते। ऐश्वर्यवाचिन इति। धनवचनोऽयं स्वशब्द ऐश्वर्यवाची। तथा च धनयोगादैश्वर्यं तदुच्यते।

स्ववानिति। आत्मादावर्थान्तरे स्वशब्दो वर्त्तते ॥ १२६ ॥

पदमञ्जरी

स्वामिन्नैश्वर्ये ॥ स्वशब्दादैश्वर्यवाचिन इति। अन्यत्रात्मात्मीयज्ञातिधनवाचिनोऽपि स्वशब्दस्यैत-द्वृत्तिविषये ऐश्वर्यवाचित्वं स्वभावतो भवति, तेन धनवान्निर्धनो वेशिता-स्वामीत्युच्यते, न त्वयं धनवचनः। तथा च धनस्य स्वामीत्यपि भवति; अन्यथा मतुप आमिनचा बाधप्रसङ्गः। अन्यतरस्यांग्रहणेन मतुप्स-मुच्चयेऽपि धनस्य स्वामीतिवद् धनस्य स्ववानित्यपि प्राप्नोति। तस्मादैश्वर्यवचनः स्वशब्दः, न धनादिवचन इति स्थितम्। धनयोगादैश्वर्यमित्यपि नास्ति; वागादिविषयेऽपि दर्शनात्—वाचस्पतिः, वाचः स्वामीति; न च तत्र धनत्वप्रसिद्धिरस्ति ॥ १२६ ॥

भावबोधिनी

में 'ग्मिनि' ही होता है। [खराब बोलना अर्थ में आलच्, आटच् और सुन्दर तथा अधिक बोलना अर्थ में ग्मिनि प्रत्यय होता है ॥ १२५ ॥

ऐश्वर्य ( =ईश्वर होना ) अर्थ के प्रतीत होने पर 'स्वामिन्' यह निपातित होता है। ऐश्वर्यवाचक 'स्व' शब्द से मतुबर्थ में 'आमिन्' प्रत्यय निपातित होता है। स्वम् अस्य अस्ति=ऐश्वर्य है इसका—इस अर्थ में—स्वामी, स्वामिनौ, स्वामिनः। [स्व+आमिन्, सवर्णदीर्घ अथवा असंज्ञा अलोप, विभक्ति सम्बन्धी कार्य। स्वामिन्+औ, स्वामिन्+जस्=अस्। ]

ऐश्वर्य अर्थ में—इसका क्या फल है? स्ववान्। [ यहाँ 'स्व' शब्द आत्मीयवाची है अतः यह प्रत्यय नहीं होता है। ]

विमर्श—'स्व' शब्द आत्मीय धन और ऐश्वर्य—अर्थों का वाचक है। यहाँ मतुप् के प्रसङ्ग में ऐश्वर्य वाचक से प्रत्यय किया जा रहा है। अतः 'धनस्य स्वामी' यह भी होता है। यहाँ यह भी ध्यान रखना चाहिए कि जहाँ धनयोग से ऐश्वर्य है वहीं इस प्रत्यय का होना आवश्यक नहीं है। अतः 'वाचस्पतिः' के समान 'वाचः स्वामी' आदि प्रयोग भी होते हैं ॥ १२६ ॥

'अर्शस्' आदि प्रातिपदिकों से मतुबर्थ में अच् प्रत्यय होता है। उदा० अर्शांसि अस्य विद्यन्ते—इस अर्थ में—अर्शसः। [ बवासीर रोगवाला ] उरसः। [ उरः अस्य अस्ति—यह विग्रह है। जिसका उरस्थल दृढतर और सुन्दर होता है उसे 'उरसः' कहा जाता है। यह आकृतिगण है। अतः अपठित शब्द भी इसके लक्ष्य बन जाते हैं। ]

अशसः । उरसः । आकृतिगणश्चायम् ।

यत्राभिन्नरूपेण शब्देन तद्वतोऽभिधानं तत्सर्वमिह द्रष्टव्यम् ।

अर्शस् । उरस् । तुन्द । चतुर । पलित । जटा । घटा । अभ्र । कर्दम । आम । लवण ।
* स्वाङ्गाद्धीनात् * ( ग० सू० १३४ ) । * वर्णात् * ( ग० सू० १३५ ) । अर्शआदिः ॥

## २१४६. द्वन्द्वोपतापगर्ह्यात्प्राणिस्थादिनिः ॥ १२८ ॥ ( १९३४ )

द्वन्द्वः=समासः, उपतापः=रोगः, गर्ह्यम्=निन्द्यम्, तद्विषयेभ्यः शब्देभ्यः प्राणिस्थार्थवाचिभ्य

### न्यासः

**अर्शआदिभ्योऽच्** ॥ यथासम्भवं मतुबादिष्वज् विधीयते । **आकृतिगणश्चायमिति** । अवृत्कृतत्वात् । आदिशब्दश्चायं प्रकारे । **स्वाङ्गाद्धीनादिति** । हीनस्वाङ्गवृत्तेः प्रातिपदिकादज् भवति—खञ्जः पादोऽस्तीति खञ्जः, काणश्चक्षुरस्तीति काणः । **वर्णादिति** । वर्णवाचिभ्यः शुक्लादिभ्योऽज् भवति—शुक्लोऽस्यास्तीति शुक्लम् । ननु च शुक्लशब्दो गुणवचनः, तत्राभेदोपचारेणाप्येतत् सिध्यति ? एवं तर्हि द्रव्यवृत्तेरपि वर्णवाचिनः प्रातिपदिकाद् यथा स्यादित्येवमर्थं वर्णग्रहणं कृतम् । शुक्लगुणयुक्ताः प्रासादाः शुक्लाः, तेऽस्मिन् सन्ति शुक्लं नगरम् । प्रत्ययस्वरेणैवान्तोदात्तत्वे सिद्धे चकारोऽर्शोऽस्यास्तीति 'स्वरितो वानुदात्तेऽपदादौ' इति स्वरितबाधनार्थः ॥ १२७ ॥

**द्वन्द्वोपतापगर्ह्यात् प्राणिस्थादिनिः** ॥ **तद्विषयेभ्य** इति । तच्छब्देनोपतापगर्हावेव परामृश्येते । ते उपतापगर्हे विषयो येषामिति बहुव्रीहिः । प्राणिस्थवाचिनां सर्वेषामेव द्वन्द्वादीनामिदं विशेषणम् ।

### पदमञ्जरी

**अर्शआदिभ्योऽच्** ॥ **स्वाङ्गाद्धीनादिति** । हीनम्=विकलम् । हीनस्वाङ्गवाचिनोऽज्भवति । खञ्जः पादोऽस्यास्तीति खञ्जः । काणं चक्षुरस्यास्तीति काणः । कथं कुणिर्हस्तोऽस्यास्ति कुणिरिति ? अभेदोपचारात् । खञ्जादिष्वपि तर्हि तथैव भविष्यति ? इदं तर्हि प्रयोजनम्—भेदविवक्षायां मतुब्मा भूदिति । अथ कुणिशब्दान्मतुप् कस्मान्न भवति ? अनभिधानात् । खञ्जादिभ्योऽपि तर्ह्यनभिधानादेव मतुब्न भविष्यति ? अन्तोदात्तार्थं तु । ये आद्युदात्ता हीनस्वाङ्गवाचिनस्तेष्वन्तोदात्तत्वं यथा स्याद्, यदि सम्भवति । **वर्णादिति** । वर्णवाचिनः शुक्लशब्दादच्प्रत्ययो भवति—शुक्लोऽस्यास्तीति शुक्लः पटः । 'गुणवचनेभ्यो मतुपो लुग्वक्तव्यः' ( वा० ५७४ ) इति सिद्धम् ? अन्तोदात्तार्थं तु । ये आद्युदात्ता वर्णवाचिनस्तेषु तद्वत्यन्तोदात्तत्वं यथा स्यात् । अपर आह—गुणवचनेभ्योऽयं तद्वति प्रत्ययो विधीयते, तेन शुक्लाः प्रासादा अस्मिन्नगरे शुक्लं नगरमिति भवतीति ॥ १२७ ॥

**द्वन्द्वोपतापगर्ह्यात्प्राणिस्थादिनिः** ॥ **तद्विषयेभ्य** इति । तच्छब्देनोपतापो गर्ह्यं च प्रत्यवमृश्यते,

### भावबोधिनी

जहाँ अभिन्न [ उसी प्रकार के ] रूप द्वारा तद्वान् का अभिधान होता है वे सब इसके उदाहरण समझने चाहिए । [ मूल शब्द द्वारा ही मूल शब्दार्थ विशिष्ट का अभिधान रहने पर यह प्रत्यय होता है । ]

[ इस गण में पठित शब्द हैं—] अर्शस् । उरस् । तुन्द । चतुर । पलित । जटा । घटा । अभ्र । कर्दम । आम । लवण । * हीन स्वाङ्गवाचक से प्रत्यय होता है । * [ उदा०—खञ्जः पाद अस्य अस्ति सः—खञ्जः । काणं चक्षुः अस्य अस्ति सः—काणः आदि । ] * वर्णवाचक से प्रत्यय होता है । * [ वर्ण=रंगवाचक से अच् प्रत्यय के उदा०—शुक्लः वर्णः अस्य अस्ति सः—शुक्लः । शुक्ल+अच्, भसंज्ञा अलोप । इस प्रकार 'शुक्लः, कृष्णः' आदि शब्द सफेदी और सफेदीवाला=सफेद, कालापन और काला दोनों अर्थों के वाचक हो जाते हैं । मूल प्रकृति द्वारा ही दोनों अर्थ प्रतीत हो जाते हैं । ] ये अर्श आदि हैं ॥ १२७ ॥

द्वन्द्व समास, उपताप=रोग, गर्ह्य=निन्दनीय—इन अर्थों को विषय बनाने वाले शब्द जो

इनिः प्रत्ययो भवति मत्वर्थे। द्वन्द्वात्तावत्—कटकवलयिनी, शङ्खनूपुरिणी। उपतापात्—कुष्ठी, किलासी। गर्ह्यात्—ककुदावर्त्ती, काकतालुकी।

प्राणिस्थादिति किम्? पुष्पफलवान् वृक्षः।

* प्राण्यङ्गान्नेष्यते *—पाणिपादवती।

अत इत्यनुवर्त्तते, तेनेह न भवति—चित्रललाटिकावती॥

सिद्धे प्रत्यये पुनर्वचनं ठनादिबाधनार्थम्॥

२१५०. वातातिसाराभ्यां कुक् च॥ १२९॥ ( १६३५ )

वातातिसारशब्दाभ्यामिनिः प्रत्ययो भवति, तत्सन्नियोगेन च तयोः कुगागमो भवति। वातातिसारयोरुपतापत्वात् पूर्वेणैव सिद्धे प्रत्यये कुगर्थमेवेदं वचनम्। वातकी। अतिसारकी।

न्यासः

प्राण्यङ्गान्नेष्यत इति। कथं पुनरिष्यमाणोऽपि न भवति? चकारानुवृत्तेः। सिद्धे प्रत्यय इति। 'अत इनिठनौ' इत्यनेनैव। ठनादिबाधनार्थमिति। इनिरेव यथा स्यात्, ठनादिर्मा भूदित्येवमर्थं पुनर्वचनम्। आदिशब्देन मतुब् गृह्यते। इत उत्तरे योगा नियमार्था वेदितव्याः॥ १२८॥

वातातिसाराभ्यां कुक् च॥ वातातिसाराभ्यामिति। यद्यपि पञ्चमी, तथाप्यर्थाद् विभक्तिविपरिणामो भवति। आगमसम्बन्धे षष्ठी भावने विपरिणम्यते। अत एवाह—तत्सन्नियोगेन च तयोः कुगागम इति। अथ प्रत्ययस्यैवागमः कस्मान्न भवति? कुगागमवता प्रत्ययेनार्थस्यानभिधानात्। स्वरूपं न सिध्यतीति च।

पदमञ्जरी

न द्वन्द्वः; तस्यैव तद्विषयत्वासम्भवात्। प्राणिस्थार्थवाचिभ्य इति। इदं तु सर्वेषां ग्रहणम्। चित्रललाटिकावतीति। नियतद्रव्यविवक्षायां 'जातिरप्राणिनाम्' इत्येकवद्भावाभावाट्टापः श्रवणम्। सिद्धे प्रत्यय इति। 'अत इनिठनौ' इत्यनेन। ठनादिबाधनार्थमिति। आदिशब्देन मतुपो ग्रहणम्॥ १२८॥

वातातिसाराभ्यां कुक्च॥ वातातिसारयोरुपतापत्वादिति। अतिसारसाहचर्याद्वातस्यापि

भावबोधिनी

प्राणियों में स्थित अर्थों के वाचक हैं, उनसे मतुबर्थ में इनि प्रत्यय होता है। उदा० (क) द्वन्द्व—कटकवलयिनी [ कटक=कड़ा और वलय=कंगन वाली स्त्री ]। [ शंख और नूपुर वाली स्त्री। ] यहाँ द्वन्द्व करने के बाद मत्वर्थ में 'इनि'=इन् प्रत्यय और स्त्रीप्रत्यय—ङीप् करने पर रूप बनता है।] (ख) उपतापवाचक—कुष्ठी, किलासी। [ कुष्ठ रोग वाला, किलास=सफेद दाग जैसे चर्म रोग वाला।] (ग) गर्ह्य—ककुदावर्त्ती, काकतालुकी। [ काकुद में स्थित आवर्त रोग वाला। गले में कौवा निकलना रोग वाला। ]

प्राणी में स्थित से—इसका क्या प्रयोजन है? पुष्प फलवान् वृक्षः। [ वृक्ष प्राणी नहीं है। अतः 'इनि' न होकर मतुप् होता है। ]

* प्राणी के अङ्गवाचक से इष्ट नहीं है। * पाणिपादवती। [ हाथ पैर वाली। यहाँ 'इनि' न होकर मतुप् होता है। ]

["अत इनिठनौ" पा० सू० ५।२।११५ सूत्र से] "अतः"=आकारान्त से—इसकी अनुवृत्ति होती है। इस लिये यहाँ नहीं होता है—चित्रललाटिकावती। [ द्वन्द्व होने पर भी यह अकारान्त नहीं अपितु आकारान्त है। ]

'इनि' प्रत्यय तो [ अनुवृत्ति से ही ] सिद्ध था पुनः इस 'इनि' का विधान ठन् आदि [ अन्य मत्वर्थक प्रत्ययों ] का बाध करने के लिए है॥ १२८॥

वात और अतिसार शब्दों से 'इनि' प्रत्यय होता है और इसके सन्नियोग से इन शब्दों को 'कुक्' का

* पिशाचाच्चेति वक्तव्यम् * ( म० भा० ) । पिशाचकी वैश्रवणः ( म० भा० ) ।

* रोगे चायमिष्यते * । इह न भवति—वातवती गुहेति ।।

२१५१. वयसिपूरणात् ।। १३० ।। ( १८३६ )

इनिरनुवर्तते । पूरणप्रत्ययान्तात् प्रातिपदिकादिनिः प्रत्ययो भवति मत्वर्थे वयसि द्योत्ये । पञ्चमो मासोऽस्यास्ति संवत्सरो वा पञ्चमी उष्ट्रः । नवमी । दशमी ।

सिद्धे सति नियमार्थं वचनम्—इनिरेव भवति, ठन्न भवतीति ।

वयसीति किम् ? पञ्चमवान् ग्रामरागः ।।

२१५२. सुखादिभ्यश्च ।। १३१ ।। ( १८३७ )

**न्यासः**

**पिशाचाच्चेति वक्तव्यमिति ।** पिशाचशब्दादिनिप्रत्ययो भवतीत्येतदर्थरूपं व्याख्येयमित्यर्थः । तत्रेदं व्याख्यानम्—'बहुलं छन्दसि' इत्यतो बहुलग्रहणमनुवर्तते, तेन पिशाचशब्दादपि भविष्यति ।। १२९ ।।

**वयसि पूरणात् ।। वयसि दद्योत्य इति ।** कथं पुनर्वयो द्योत्यते, यदि पञ्चमादयः शब्दाः काले वर्त्तमानाः प्रत्ययमुत्पादयन्ति । अत एव तेषां काले वृत्तिं दर्शयितुमाह—**पञ्चमो मासोऽस्यास्तीति सिद्धे सतीत्यादि ।** पूरणप्रप्ययानामकारान्तत्वादिनिः सिद्ध एव, तस्मिन् सिद्धे पुनरिदं वचनं नियमार्थं ज्ञायत इति । **इनिरेव भवतीति ।** नियमस्य स्वरूपं दर्शयति ।। १३० ।।

**पदमञ्जरी**

व्याधेरेव ग्रहणम्, न वायोरिति भावः । **सिद्धे प्रत्यय इति ।** इनावेवेत्यर्थः । **रोगे चायमिष्यते इति** क्वचित्पठ्यते; तत्रोक्तो हेतुः ।। १२९ ।।

**वयसि पूरणात् ।। मासः संवत्सरो वेति ।** प्रकरणादिवशात्पञ्चमादिशब्दस्य काले वृत्तिः, ततश्च 'वयसि द्योत्ये' इति विशेषणं तत्रोपपन्नमिति भावः ।। १३० ।।

**भावबोधिनी**

आगम भी होता है । वात और अतिसार तो उपताप [ रोग ] होने के कारण पूर्ववर्ती सूत्र से ही प्रत्यय सिद्ध था इस स्थिति में 'कुक्' प्रत्यय करने के लिए ही यह वचन है । उदा० वातकी । अतिसारकी । [ वात रोग वाला । अतिसार=दस्त रोग वाला । ]

* पिशाच शब्द से भी [ इनि होता है— ] ऐसा कहना चाहिए । * पिशाचकी वैश्रवणः । [ पिशाच वाला ] ।

* इस सूत्र से होने वाला 'इनि' प्रत्यय रोग अर्थ में ही इष्ट है । * अतः यहाँ नहीं होता है—वातवती गुहा । [ गुहा हवा वाली=हवादार है । ] ।। १२९ ।।

'इनि' की अनुवृत्ति होती है । पूरण प्रत्ययान्त प्रातिपदिक से मत्वर्थ में वय=अवस्था द्योत्य रहने पर, 'इनि' प्रत्यय होता है । उदा० पञ्चमः मासः अस्य अस्ति सः पञ्चमी उष्ट्रः [ पांचवां महीना जिस ऊँट का हो गया है वह—'पञ्चमी' है । ] पञ्चमः संवत्सरः अस्य अस्ति स उष्ट्रः—पञ्चमी । [ पांचवा वर्ष जिसका हो गया है ऐसा ऊँट । यहाँ ऊँट की अवस्था=उम्र प्रतीत हो रही है । ] नवमी । [ नवमः मासः संवत्सरो वा अस्य अस्ति सः उष्ट्रः । नौ महीने वाला या नौवें वर्ष वाला ऊँट । ] दशमी । [ दशमः मासः संवत्सरो वा अस्य अस्ति सः । दशवें महीने वाला या दशवें वर्ष वाला ऊँट । ]

सामान्य रीति से सिद्ध रहते हुए यह सूत्र नियम करने के लिए है—'इनि' ही होता है, ठन् नहीं होता है ।

अवस्था=उम्र द्योत्य रहने पर—इसका क्या प्रयोजन है ? पञ्चमवान् ग्रामरागः । [ गावों का राग पञ्चम स्वर वाला है । यहाँ वय की प्रतीति नहीं होती है । अतः 'इनि' न होकर 'मतुप्' ही होता है । ] ।। १३० ।।

'सुख'—इत्येवमादिभ्यः प्रातिपदिकेभ्य इनिः प्रत्ययो नियम्यते मत्वर्थे। सुखी। दुःखी।

'माला क्षेपे' इति पठ्यते, व्रीह्यादिषु च मालाशब्दोऽस्ति। तदिह क्षेपे मतुब्बाधनार्थं वचनम्।

सुख। दुःख। तृप्र। कृच्छ्र। आस्र। अलीक। करुणा। कृपण। सोढ। प्रमीप। शील। हल। * माला क्षेपे * ( ग० सू० १३६ )। प्रणय। सुखादिः ॥

## २१५३. धर्मशीलवर्णान्ताच्च ॥ १३२ ॥ ( १६३८ )

अन्तशब्दः प्रत्येकमभिसम्बध्यते, धर्माद्यन्तात्प्रातिपदिकादिनिः प्रत्ययो नियम्यते। ब्राह्मणानां धर्मो ब्राह्मणधर्मः, सोऽस्यास्तीति ब्राह्मणधर्मी। ब्राह्मणशीली। ब्राह्मणवर्णी ॥

## २१५४. हस्ताज्जातौ ॥ १३३ ॥ ( १६३९ )

हस्तशब्दादिनिः प्रत्ययो नियम्यते मत्वर्थे, समुदायेन चेज्जातिरभिधीयते। हस्तोऽस्यास्तीति

### न्यासः

सुखादिभ्यश्च ॥ इनिप्रत्ययो नियम्यत इति। पूर्ववन्नियमो वेदितव्यः।

तदिहेत्यादि। यतो व्रीह्यादिषु मालाशब्दः पठ्यते, तस्माद् यदिह क्षेपे मालाशब्दस्य पुनर्वचनं तन्मतुपो बाधनार्थम्, न तु ठनः। सुखादिभ्य इति नोच्यत इति; अनेनैव निवर्त्तितत्वात्। मालाशब्दो हि शिखादिषु, तत्रान्तर्भाविनः क्षेपादन्यत्र निर्भवत्येव। शिखादित्वान्मतुप् च; मतुपस्तस्यान्यतरस्यांग्रहणेन समुच्चितत्वात्—माली, मालावानिति ॥ १३१ ॥

धर्मशीलवर्णान्ताच्च ॥ १३२ ॥ हस्ताज्जातौ ॥ हस्तेन हस्तमात्रं प्रतीयते, न तु जातिः।

### पदमञ्जरी

सुखादिभ्यश्च ॥ इनिः प्रत्ययो नियम्यते इति। पूर्वसूत्रे इनिरेव भवतीति नियमस्वरूपं दर्शितम्, इहापि तथैव नियमः। नन्वेवं यत एवकारस्ततोऽन्यत्रावधारणमिति सुखादय एव नियता भवन्ति, तत्किमुच्यते—'इनिः प्रत्ययो नियम्यते' इति ? अन्यनिवृत्तिविशिष्टं व्यवस्थापनमत्र नियम इत्यदोषः।

मतुब्बाधनार्थं वचनमिति। न तु ठन्बाधनार्थम्; 'शिखादिभ्य इनिर्वाच्यः' ( कात्या० वा० ५.२.११६ ) इत्यनेनैव ठनो निवर्तितत्वादिति भावः ॥ १३१ ॥

धर्मशीलवर्णान्ताच्च ॥ ब्राह्मणवर्णीति। ब्राह्मणानां वर्णः=जातिः, तद्वान् ब्राह्मणवर्णी ब्राह्मण एव ॥ १३२ ॥

हस्ताज्जातौ ॥ इनिः प्रत्ययो नियम्यते इति। मत्वर्थसम्भवमात्रेणात्र प्रकरणे नियमवाचोयुक्तिः।

### भावबोधिनी

'सुख' आदि प्रातिपदिकों से मतुबर्थ में 'इनि' प्रत्यय का नियम किया जाता है अर्थात् इन से 'इनि' ही होता है और दूसरा प्रत्यय नहीं। उदा० सुखी। दुःखी। [ सुखम् अस्य अस्ति, दुःखम् अस्य अस्ति—यह अर्थ है। ]

'क्षेप' अर्थ में 'माला' से इनि होता है' ऐसा पढ़ा जाता है और व्रीहि आदि में माला शब्द है। अतः क्षेप अर्थ में मतुप् का बाध करने के लिए वचन है।

[ इस गण में पठित शब्द हैं— ] सुख। दुःख। तृप्र। कृच्छ्र। आस्र। अलीक। करुणा। कृपण। सोढ। प्रमीप। शील। हल। * क्षेप अर्थ में माला। * प्रणय। ये सुखादि हैं ॥ १३१ ॥

'अन्त' शब्द का सम्बन्ध—धर्म, शील, वर्ण इन तीनों के साथ होता है। धर्म आदि जिसके अन्त में हैं ऐसे प्रातिपदिक से 'इनि' प्रत्यय का नियम किया जाता है अर्थात् इनसे मतुबर्थ में 'इनि' ही होता है। उदा० ब्राह्मणानां धर्मः=ब्राह्मणधर्मः, सः अस्य अस्ति—[ब्राह्मणों का धर्म, यह जिसका है वह-] इस अर्थ में—ब्राह्मणधर्मी। [ ब्राह्मणधर्म+इनि ] ब्राह्मणशीली। [ ब्राह्मणों का शील जिसका है। ] ब्राह्मणवर्णी। [ ब्राह्मणों का वर्ण जिसका है। ] ॥ १३२ ॥

**हस्ती, हस्तिनौ, हस्तिनः।**

**जाताविति किम् ? हस्तवान्पुरुषः ॥**

**२१५५. वर्णाद् ब्रह्मचारिणि ॥ १३४ ॥ ( १९४० )**

**वर्णशब्दादिनिः प्रत्ययो भवति मत्वर्थे, समुदायेन चेद् ब्रह्मचारी भण्यते। ब्रह्मचारीति त्रैवर्णिकोऽभिप्रेतः, स हि विद्याग्रहणार्थमुपनीतो ब्रह्म चरति, नियममासेवते इत्यर्थः। वर्णी, वर्णिनौ, वर्णिनः।**

**ब्रह्मचारिणीति किम् ? वर्णवान्।**

**ब्राह्मणादयस्त्रयो वर्णा वर्णिन उच्यन्ते ॥**

**न्यासः**

पुरुषशब्दप्रयोगात् पुरुषजातिर्गम्यते ॥ १३३ ॥

**वर्णाद् ब्रह्मचारिणि ॥ समुदायेन चेद् ब्रह्मचारी भण्यत इति।** एतेन समुदायोपाधित्वं ब्रह्मचारिणो दर्शयति। विद्याग्रहणार्थं यदोपनीयते ततः सेवितव्यो यो नियमविशेषस्तद् ब्रह्म, तच्चरति ब्रह्मचारी, आवश्यके णिनिः। तत्र नियमविशेषचरणे ब्राह्मणादीनामेव त्रयाणां वर्णानामधिकारः, न शूद्रस्येत्याह—**ब्रह्मचारीति त्रैवर्णिकोऽभिप्रेत इति।** त्रिषु वर्णेषु भवः, तत्रान्तर्भूतत्वात् त्रैवर्णिकः। किं पुनः कारणं स एवाभिप्रेत इत्याह—**स हीत्यादि** ॥ १३४ ॥

**पदमञ्जरी**

परमार्थतस्तु विधिरयम्, कथम् ? गजशब्दवज्जातिशब्दोऽयम्, नात्र मत्वर्थगन्धोऽस्ति। तथा च विहस्तेऽपि गजे हस्तीति भवति; जातिसद्भावात्। हस्तसम्बन्धविवक्षायां च हस्तिन्यपि मतुब्भवति—हस्तवान्, ( हस्ती; हस्तवान्पुरुष इतिवत्। एवमुत्तरेष्वपि योगेषु द्रष्टव्यम्। हस्तग्रहणं ) चोपलक्षणार्थं मन्यते, तेन दन्ती, विषाणी, केसरीत्यादि सिद्धं भवति ॥ १३३ ॥

**वर्णाद् ब्रह्मचारिणि ॥ ब्रह्मचारीति त्रैवर्णिकोऽभिमत[1] इति।** यद्यपि गुरुकुलवासिनि प्रथमाश्रमे ब्रह्मचारिशब्दः प्रसिद्धः, तथापीह लक्ष्यानुरोधात्त्रैवर्णिकमात्रमभिमतः, न त्वाश्रम इत्यर्थः, तस्य कादाचित्कं ब्रह्मचर्ययोगं दर्शयति—**स हीति।** ब्रह्म चरतीति ब्रह्मचारी, ब्रह्म=वेदः। इह तु तदध्ययनार्थो नियमविशेषोऽभिमत इत्याह—**नियममिति।** तत्र ब्रह्मचारीति 'व्रते' इति णिनिः। ब्रह्मचारिशब्दस्य मुख्यार्थपरित्यागेन त्रैवर्णिकमात्रपरत्वे कारणमाह—**ब्राह्मणादयस्त्रयो वर्णा इति** ॥१३४॥

**भावबोधिनी**

'हस्त' शब्द से मतुबर्थ में 'इनि' प्रत्यय का नियम किया जाता है, यदि समुदाय द्वारा जाति का अभिधान हो रहा हो तो। उदा०—हस्तः अस्य अस्ति—इस अर्थ में—हस्ती, हस्तिनौ, हस्तिन। [ हस्त=सूंड़ जिसकी है वह=हाथी जाति का अभिधान है। हस्त + इनि=इन्, भसंज्ञा, अलोप, सु आदि विभक्तिसम्बन्धी कार्य, एकवचन, द्विवचन और बहुवचन के रूप हैं। ]

जाति अर्थ हो—इसका क्या प्रयोजन है ? हस्तवान् - पुरुषः। [ हाथवाला आदमी। ]

**विमर्श**—जहाँ 'हस्ती' केवल इसीसे जाति अर्थ प्रतीत हो रहा है वहीं यह प्रत्यय होता है। प्रत्युदाहरण में 'पुरुषः' के योग से पुरुषत्व जाति प्रतीत होती है अतः वहाँ प्रत्यय नहीं होता है। हस्त का सम्बन्ध मात्र विवक्षित होने पर तो 'इनि' और 'मतुप्' दोनों होते हैं। पदमंजरीकार यहाँ 'हस्त' को उपलक्षण मान कर जातिवाची अनेक प्रसिद्ध शब्दों में इसी से 'इनि' मानते हैं—दन्ती, विषाणी, केसरी आदि ॥ १३३ ॥

'वर्ण' शब्द से मतुबर्थ में 'इनि' प्रत्यय होता है यदि समुदाय ( शब्द ) द्वारा ब्रह्मचारी अर्थ कहा जाता है तो। 'ब्रह्मचारी' इसके द्वारा त्रैवर्णिक ( ब्राह्मण, क्षत्रिय, वैश्य इन तीनों वर्णों वाला ) अभिप्रेत है क्योंकि वह विद्याग्रहण के लिए उपनीत होता हुआ ब्रह्म=वेद का चरण=अध्ययन करता है, नियम का परिपालन करता है, यह अर्थ है। उदा०—वर्णी, वर्णिनौ वर्णिनः। [ वर्ण + इनि=इन्, भसंज्ञा, अलोप तीनों वचनों के रूप हैं। ]

---

१. 'अभिप्रेतः' इति काशिका।

## २१५६. पुष्करादिभ्यो देशे ॥ १३५ ॥ ( १९४१ )

'पुष्कर'—इत्येवमादिभ्यः प्रातिपदिकेभ्य इनिः प्रत्ययो भवति समुदायेन चेद्देशोऽभिधीयते । पुष्करिणी । पद्मिनी ।

देश इति किम् ? पुष्करवान् हस्ती ।

❀ इनिप्रकरणे बलाद्बाहूरूपूर्वादुपसंख्यानम् ❀ ( म० भा० ५.२.१३५ वा० १ ) । बाहुबली । ऊरुबली ।

❀ सर्वादेश्चेति वक्तव्यम् ❀ ( वा० २ ) । सर्वधनी । सर्वबीजी । सर्वकेशी नटः ।

❀ अर्थाच्चासन्निहिते ❀ ( वा० ३ ) । अर्थी । असन्निहित इति किम् ? अर्थवान् ।

**न्यासः**

**पुष्करादिभ्यो देशे** ॥ इह कस्मान्न भवति—पुष्कराणि पद्मान्यस्मिन् देशे सन्तीति ? इतिकरणानुवृत्तेः ।

**अर्थाच्चासन्निहित इति** । असन्निहितग्रहणे तस्य चास्तित्वेन विरोधः । यदि ह्यसन्निहितोऽर्थः, न नाम विद्यते; यदि विद्यते, कथमसन्निहितः ? तस्माद् विशेषणोपादानादस्तीत्येतद् विशेषणमुत्सृज्यासन्निधानोपाधिकादर्थात् प्रत्ययो विधीयते । अभिधानशक्तिस्वाभाव्याच्च । **अर्थीति** । अभिलाषवानेबोच्यते । न सर्वोऽसन्निहितोऽर्थः प्रत्ययान्तेन तद्विमर्शादसन्निहितवान्, अतः प्रत्ययो वक्तव्यः ? न वक्तव्यः, कथं पुनरनुच्यमानो लभ्यते ? 'बहुलं

**पदमञ्जरी**

**पुष्करादिभ्यो देशे** ॥ **अर्थीति** । असन्निहितोऽर्थोऽस्येत्यर्थः । कालतश्चासन्निधिः, न देशतः । तत्र विरोधादस्तीति न सम्बध्यते, ततश्चाप्राप्त एवेनिर्विधीयते, तक्रकौण्डिन्यन्यायेन च सत्तोपाधिकादिनेरभावः । **अर्थवानिति** । सन्निहितार्थ उच्यते । **तदन्ताच्चेति** । 'ग्रहणवता प्रातिपदिकेन' ( व्या० परि० ८९ ) तदन्तविधि-प्रतिषेधादयमारम्भः । **धान्यार्थीति** । धान्यरूपोऽर्थोऽसन्निहितोऽस्येत्यर्थः, कर्मधारयादिनिः । नन्वर्थयतेर्णिनिनैतत्सिद्धम्—धान्यमर्थयते धान्यार्थी ? एवमपि णिनीति पूर्वपदप्रकृतिस्वरः प्राप्नोति । एवं तर्हीदं स्यात्—अर्थनमर्थः = प्रार्थना, सा यस्यास्ति सोऽर्थी, धान्यस्यार्थो धान्यार्थः = धान्यप्रार्थना, सा यस्यास्ति स धान्यार्थीति । एवं च कृत्वेदमपि सिद्धं भवति—अर्थिकः, प्रत्यर्थिक इति । 'अर्थाच्चासन्निहिते' इति तूच्यमाने इनेरेव विधानाट्ठन्

**भावबोधिनी**

ब्रह्मचारी अर्थ हो—इसका क्या फल है ? वर्णवान् । [ यहाँ सामान्य मतुबर्थ है । ]

[ब्रह्मचारी के मुख्य = प्रसिद्ध अर्थ को छोड़ने का कारण यह है-] ब्राह्मण आदि तीनों वर्ण 'वर्णी' कहे जाते हैं ॥१३४॥

पुष्कर—आदि प्रातिपदिकों से इनि प्रत्यय होता है यदि ( प्रकृति-प्रत्यय ) समुदाय द्वारा देश अर्थ कहा जा रहा है तो । उदा०—पुष्करिणी । पद्मिनी । [ पुष्कराणि सन्ति अस्याम्, पद्मानि सन्ति अस्याम्—इन विग्रहों में 'इनि = इन् प्रत्यय होता है ] ये शब्द तलैया या नदी रूपी स्थान के वाचक हैं । ]

देश अर्थ में ही होता है—इसका क्या फल है ? पुष्करवान् हस्ती । [ "पुष्करं करिहस्ताग्रे" अमरकोश० ३।३।१८६ के अनुसार हाथी की सूँड़ का अगला भाग 'पुष्कर' कहा जाता है । यहाँ देश अर्थ न होने से 'इनि' न होकर मतुप् होता है । ]

❀ इनि के प्रकरण में 'बाहु' या 'ऊरु' पूर्वपद वाले बल शब्द से कहना चाहिए । ❀ उदा०—बाहुबली । [बाहुबलं यस्य सः । भुजाओं के बल वाला] ऊरुबली । [ऊरुबलं यस्य सः । जंघाओं के बल वाला । इनि प्रत्यय हुआ है ।]

❀ 'सर्व' शब्द जिनके आदि में है उनसे भी इनि कहना चाहिए । ❀ उदा०—सर्वधनी । सर्वबीजी । सर्वकेशी नटः । [ सर्वधनम् अस्ति अस्य, सर्वबीजम् अस्ति अस्य, सर्वकेश अस्ति अस्य—ये विग्रह हैं । ]

❀ असन्निहित = समीप में न होना इस अर्थ में 'अर्थ' शब्द से इनि प्रत्यय होता है ❀ उदा०—अर्थी । [ अर्थः असन्निहितः अस्य—यहाँ इनि प्रत्यय होकर बनता है । जिसके पास धन = अर्थ नहीं हैं, याचक । ] असन्निहित अर्थ में—इसका क्या फल है ? अर्थवान् । [ जिसके पास धन है । यहाँ मतुप् ही होता है इनि नहीं होता है । ]

**❀ तदन्ताच्चेति वक्तव्यम् ❀ ( वा० ४ ) धान्यार्थी । हिरण्यार्थी ।**

**पुष्कर । पद्म । उत्पल । तमाल । कुमुद । नड । कपित्थ । बिस । मृणाल । कर्दम । शालूक । विगर्ह । करीष । शिरीष । यवास । प्रवास । हिरण्य[1] । पुष्करादिः ॥**

## २१५७. बलादिभ्यो मतुबन्यतरस्याम् ॥ १३६ ॥ ( १९४२ )

**बलादिभ्यः प्रातिपदिकेभ्यो मतुप्प्रत्ययो भवति । अन्यतरस्यांग्रहणेन प्रकृत इनिः समुच्चीयते । बलवान्, बली । उत्साहवान्, उत्साही ।**

**बल । उत्साह । उद्भाव । उद्वास । उद्वाम । शिखा । पूग । मूल । दंश । कुल । आयाम । व्यायाम । उपयाम । आरोह । अवरोह । परिणाह । युद्ध । बलादिः ॥**

**न्यासः**

छन्दसि' इत्यतो बहुलग्रहणेन यथा 'अष्ट्रामेखलाद्वयोभयरुजाहृदयादीनां दीर्घश्च' इत्येवमादिकं कार्यं सम्पाद्यते तथेदमपि ।

**तदन्ताच्चेत्यादि ।** असन्निहितमित्यनुवर्त्तते, असन्निहितोपाधिकादर्थादिनिप्रत्ययो भवतीत्येतदर्थरूपं व्याख्येयमित्यर्थः । व्याख्यानं तु कृतप्रायम् ॥ १३५ ॥

**बलादिभ्यो मतुबन्यतरस्याम् ॥** यद्यन्यतरस्यांग्रहणेन प्रत्ययो विकल्प्यते—बलादिभ्यो मतुब्विकल्पो भवतीति, ततो मतुपा मुक्ते यथाप्राप्तमिनिठनावपि स्याताम्, इनिरेव चेष्यते, स कथमिनिरेव लभ्यते, यद्यन्यतरस्यांग्रहणेनेनिः समुच्चीयते, न मतुबिति विकल्पेन ? इत्येवं चेतसि कृत्वाह—**अन्यतरस्यांग्रहणेनेत्यादि ।** ननु यदीनिठनौ द्वावपि स्याताम्, सूत्रारम्भोऽनर्थकः स्यात्; विनाप्यनेन प्रत्ययस्य सिद्धत्वात्, तस्मान्मतुपोऽपि विकल्पस्यानेन दोषः ? नैतदस्ति; आरम्भसामर्थ्यादिनिठनोरन्यतरो भवतीत्येषोऽर्थो लभ्यते, न त्विनिरेव ।

**पदमञ्जरी**

स्यात् । 'एकाक्षरात्कृतो जातेः' ( कात्या० वा० ३२०७ ) इति प्रतिषेधोऽनित्यः, तेन कार्यी कार्यिक इतिवद् इनिठनौ भविष्यतः, मतुबनभिधानान्न भविष्यति । न च धनवाचिनोऽर्थशब्दात्सन्निहितादपीनिठनोः प्रसङ्गः; अनभिधानात् । एवम् 'अर्थाच्चासन्निहितात्तदन्ताच्च' इति न वक्तव्यमिति स्थितम् ॥ १३५ ॥

**बलादिभ्यो मतुबन्यतरस्याम् ॥ अन्यतरस्यांग्रहणेनेत्यादि ।** पूर्ववत्समुच्चये तस्य वृत्तेः ? चकार एव तु न कृतः, किं कुर्मः ! यदि तु विकल्पार्थेनानेन प्रत्ययो विकल्प्येत, ततो मतुपा मुक्ते यथाप्राप्तमिनिठनौ द्वावपि स्याताम् । नन्वेवं सति सूत्रारम्भोऽनर्थकः स्यात्, विनाप्यनेन प्रत्ययत्रयस्य सिद्धत्वात्, तत इनिरेव भविष्यति ।

**भावबोधिनी**

❀ अर्थ शब्द जिनके अन्त में है उनसे भी कहना चाहिए । ❀ उदा०—धान्यार्थी । हिरण्यार्थी । [ धान्यार्थः अस्य अस्ति, हिरण्यार्थः अस्ति अस्य । यहाँ भी 'असन्निहित' का सम्बन्ध है । अतः धान्यरूप अर्थ और हिरण्यरूप अर्थ जिसके पास नहीं है ऐसा पुरुष—इस अर्थ में ही इनि होता है । ]

[ इस गण में पठित शब्द— ] पुष्कर । पद्म । उत्पल । तमाल । कुमुद । नड । कपित्थ । बिस । मृणाल । कर्दम । शालूक । विगर्ह । करीष । शिरीष । यवास । प्रवास । हिरण्य । ये पुष्करादि हैं ॥ १३५ ॥

बल आदि प्रातिपदिकों से मतुप् प्रत्यय होता है । 'अन्यतरस्याम्' के ग्रहण से यहाँ प्रकृत 'इनि' का समुच्चय होता है । [ अर्थात् मतुप् और इनि दोनों होते हैं । ] उदा०—बलवान्, बली । उत्साहवान्, उत्साही । [ बलम् अस्ति अस्य, उत्साहः अस्ति अस्य—इन विग्रहों में मतुप् और पक्ष में इनि प्रत्यय होते हैं । ]

[ इस गण में पठित शब्द— ] बल । उत्साह । उद्भाव । उद्वास । उद्वाम । शिखा । पूग । मूल । दंश ।

---

१. कैरव, कल्लोल, तरङ्ग, वयस—एते शब्दा अत्र गणे पुस्तकान्तरेऽधिकाः ।

## २१५८. संज्ञायां मन्माभ्याम् ॥ १३७ ॥ ( १९४३ )

मन्नन्तात्प्रातिपदिकान्मशब्दान्ताच्च इनिः प्रत्ययो भवति मत्वर्थे, समुदायेन चेत्संज्ञा गम्यते । प्रथिमिनी । दामिनी । मशब्दान्तात्—होमिनी । सोमिनी ।

संज्ञायामिति किम् ? सोमवान् । होमवान् ॥

## २१५९. कंशंभ्यां बभयुस्तितुतयसः ॥ १३८ ॥ ( १९४४ )

कम्, शमिति मकारान्तावुदकसुखयोर्वाचकौ; ताभ्यां ब, भ, युस्, ति, तु, त, यस्—इत्येते सप्त प्रत्यया भवन्ति मत्वर्थे । कम्बः, शम्बः । कम्भः, शम्भः । कंयुः, शंयुः । कन्तिः, शन्तिः । कन्तुः, शन्तुः । कन्तः, शन्तः ।

**न्यासः**

तस्मादिनिसमुच्चयार्थमेवान्यतरस्यांग्रहणं कर्त्तव्यम् ॥ १३७ ॥

**संज्ञायां मन्माभ्याम् ॥ प्रथिमिनी, दामिनीति** । प्रथिमिन्, दामिन्—इत्येताभ्यामिनिः, 'नस्तद्धिते' इति टिलोपः, 'ऋन्नेभ्यो ङीप्' इति ङीप् । अत्रापि संज्ञाग्रहणमितिकरणस्यैव प्रपञ्चः ॥ १३७ ॥

**कंशंभ्यां बभयुस्तितुतयसः ॥ उदकसुखयोर्वाचकाविति** । यथासंख्यं कमित्युदकस्य वाचकः, शमिति सुखस्य । शंयुरिति । 'मोऽनुस्वारः', तस्य 'वा पदान्तस्य' इति परसवर्णः, मस्यानुनासिको यकारः ।

**पदमञ्जरी**

कुतो नु खल्वेतद्—इनिरेव भविष्यति न पुनष्ठनेव स्यादिति ? तस्मात्समुच्चयः ॥ १३६ ॥

**संज्ञायां मन्माभ्याम् ॥ प्रथमिनी, दामिनीति** । 'अनिनस्मन्ग्रहणान्यर्थवता चानर्थकेन च' ( शाक० परि० ३ ) इति तदन्तविधिः, 'नस्तद्धिते' इति टिलोपः ॥ १३७ ॥

**कंशंभ्यां बभयुस्तितुतयसः ॥ कंशमिति मकारान्ताविति** । 'कशब्दः सुखवार्वायुब्रह्ममस्तकवाचकः' इत्यकारान्तः कशब्दो यद्यपि प्रसिद्धः, मकारान्तोऽपि क्वचिदस्तीति प्रदर्शनार्थम् 'मकारान्तौ' इत्युक्तम् । उदक-

**भावबोधिनी**

कुल । आयाम । व्यायाम । उपयाम । आरोह । अवरोह । परिणाह । युद्ध । ये बलादि हैं ॥ १३६ ॥

'मन्' शब्द जिसके अन्त में है और 'म' शब्द जिसके अन्त में है ऐसे प्रातिपदिक से मत्वर्थ में 'इनि' प्रत्यय होता है यदि [ प्रकृति+प्रत्यय ] समुदाय द्वारा संज्ञा अर्थ की प्रतीति होती है । उदा०—प्रथिमिनी । दामिनी । [ प्रथिमा अस्ति अस्याः, दामी अस्ति अस्याः—इन विग्रहों में 'इनि' प्रत्यय प्रथिमिन्+इनि = इन्, पुनः ङीप् होकर रूप बनता है । प्रथिमिनी = विस्तार वाली पृथिवी । दामिन्+इन्+ङीप्=दामिनी = बिजली । 'नस्तद्धिते' सूत्र से टि=इन् का लोप करने पर प्रत्यय का इन् मिलाने पर पुनः पूर्ववत् प्रथिमिन्, दामिन् ही बचता है । ] मशब्द जिसके अन्त में है उसका उदा०—होमिनी, सोमिनी । [ होम अस्ति अस्याः, सोम अस्ति अस्याः—इनमें इन् प्रत्यय, टिलोप । होम करने वाली, सोम याग करने वाली । ये भी किसी के नाम हैं । ]

संज्ञा अर्थ में ही—इसका क्या लाभ ? होमवान्, सोमवान् । [ इनसे संज्ञा की प्रतीति न होकर सामान्य अर्थ की प्रतीति में मतुप् ही होता है । ] ॥ १३७ ॥

'कम्' और 'शम्' ये मकारान्त शब्द जो उदक = जल और सुख अर्थ के वाचक हैं, इनसे मत्वर्थ में—ब, भ, युस्, ति, तु, त, यस्—ये सात प्रत्यय होते हैं । उदा०—कम्बः, शम्बः । कम्भः, शम्भः । कंयुः, शंयुः । कन्तिः, शन्ति । कन्तुः, शन्तुः । कन्तः, शन्तः । कंयः, शंयः । [ इन सभी में कम् = जलम् अस्ति अस्य, शम् = सुखम् अस्ति अस्य—इन विग्रहों में उक्त प्रत्यय होते हैं । ]

[ युस् और यस् में ] सकार अनुबन्ध [ "सिति च" पा. सू. १।४।१६ से ] पद संज्ञा करने से लिए है । इस कारण इनमें [ 'मोऽनुस्वारः' पा. सू. ८।३।८३ से ] अनुस्वार और [ 'वा पदान्तस्य' से वैकल्पिक ] परसवर्ण सिद्ध होते हैं ।

कंयः, शंयः।

सकारः पदसंज्ञार्थः, तेनानुस्वारपरसवर्णौ सिद्धौ भवतः। संज्ञायां हि असत्याम्-कम्यः, शम्य इति स्यात्॥

२१६०. तुन्दिबलिवटेर्भः ॥ १३९ ॥ ( १९४५ )

तुन्दि, बलि, वटि—इत्येतेभ्यो भः प्रत्ययो भवति मत्वर्थे। तुन्दिरिति वृद्धा नाभिरुच्यते, सास्यास्तीति तुन्दिभः, बलिभः, वटिभः।

बलिशब्दः पामादिषु पठ्यते, तेन बलिन इत्यपि भवति॥

२१६१. अहंशुभमोर्युस् ॥ १४० ॥ ( १९४६ )

'अहम्' इति शब्दान्तरमहङ्कारे वर्त्तते, 'शुभम्' इत्यव्ययं शुभपर्यायः; ताभ्यां युस्प्रत्ययो भवति

न्यासः

तेनानुस्वारपरसवर्णौ सिद्धौ भवत इति। तयोः पदाधिकारे विधानात्। यदि पुनः पदसंज्ञा न स्यात्, ततस्तस्यामसत्यां पदनिबन्धनयोरनुस्वारपरसवर्णयोरभावात्—कम्युः, शम्युरित्यनिष्टं रूपं सम्पद्यते॥ १३८॥

तुन्दिबलिवटेर्भः॥ तुन्दिशब्दात् तुन्दादिषु 'स्वाङ्गाद्विवृद्धौ' इति पाठादिलचोनिठनोर्मतुपि प्राप्ते, बलेः पामादिपाठान्ने मतुपि, वटेर्मतुप्येव भो विधीयते॥ १३९॥

अहंशुभमोर्युस्॥ अहमिति शब्दान्तरमिति। अस्मदः 'त्वाहौ सौ' इति, त्यदाद्यत्वे च कृते यच्छब्दरूपं सम्पद्यते, तस्मादन्य एवाहमव्युत्पन्नः शब्दः, न तु तदित्येवं शब्दान्यत्वं दर्शयित्वाऽर्थान्तरं दर्शयितुमाह—अहङ्कारे

पदमञ्जरी

सुखयोर्वाचकाविति। न यथासंख्यम्, किं तर्हि? यथासम्भवम्। कमित्युदकसुखयोर्वाचकम्, शमिति सुखस्य। 'अल्पाच्तरम्' इति सुखस्य पूर्वनिपातः प्राप्तः, न कृतः सूत्रकारेणैव; तत्र व्यभिचरितत्वात्। उदाहरणेष्वनुस्वार-परसवर्णौ, तत्र यकारवकारयोः सानुनासिकौ यकारवकारौ॥ १३८॥ १३९॥

अहंशुभयोर्युस्॥ अहमिति शब्दान्तरमेवेति। ननु नात्र कश्चिच्छब्दः प्रकृतो यदपेक्षं शब्दान्तरत्वं स्यात्? सत्यम्; 'त्वाहौ सौ' इत्यस्मदादेशोऽहंशब्दः प्रसिद्धिवशाद् बुद्धिस्थो निर्दिष्टप्रायः, तदपेक्षं शब्दान्तरत्वम्। अहङ्कारे वर्त्तते इति। अनेनार्थभेदमाह—'गर्वोऽभिमानोऽहङ्कारः' ( १-६-२१ ) इत्यमरः। अहंयुः, शुभं-

भावबोधिनी

[ अतः कंयः, कंय्यः, शंयः शंय्यः, कंयुः, कंय्युः, शंयुः, शंय्युः ये दो रूप बनते हैं। यदि पद संज्ञा न होती तो यकारादि मान कर भसंज्ञा होने से एक ही रूप हो पाता। अन्य उदा०—में अनुस्वार और परसवर्ण में कोई बाधा नहीं है। ] यदि पद संज्ञा नहीं होती तो [ अनुस्वार परसवर्ण न होने पर एक ही रूप होता— ] कम्यः, शम्यः। [ अतः इन दो प्रत्ययों के परे रहते भसंज्ञा की अपवाद पदसंज्ञा करने के लिए 'स्' अनुबन्ध आवश्यक है। ]॥ १३८॥

तुन्दि, बलि, वटि—इन शब्दों से मत्वर्थ में 'भ' प्रत्यय होता है। 'तुन्दि' यह बड़ी हुई नाभि ( तोंदी ) कही जाती है, वह है जिसकी वह—तुन्दिभः, [ बलिः अस्ति अस्य सः— ] बलिभः, [ वटिः अस्ति अस्य सः— ] वटिभः। [ बड़ी तोंदी वाला, झुर्रियों वाला, मोदकवाला—ये अर्थ हैं। ]

'बलि' शब्द पामादिगण में भी पठित है इस कारण [ "लोमादि-पामादिपिच्छादिभ्यः शनेलचः" पा. सू. ५।२।१०० से 'न' प्रत्यय होने से ] 'बलिनः' यह भी होता है॥ १३९॥

'अहम्' यह दूसरा शब्द अहंकार अर्थ में है और 'शुभम्' यह अव्यय शुभ का पर्याय है, इन दोनों से मतुबर्थ 'युस्' में प्रत्यय होता है। सकार अनुबन्ध [ "सिति च" सूत्र से ] पदसंज्ञा करने के लिए है। उदा०—अहंयुः = अहंकार-

मत्वर्थे । सकारः पदसंज्ञार्थः । अहंयुः । अहंकारवानित्यर्थः । शुभंयुः । कल्याणवानित्यर्थः ॥

॥ इति श्रीजयादित्यविरचितायां काशिकावृत्तौ पञ्चमस्याध्यायस्य द्वितीयः पादः ॥ ५.२ ॥

—:०:—

न्यासः

वर्त्तत इति । अहंयुः, शुभंयुरिति । पूर्ववदनुस्वारपरसवर्णौ ॥ १४० ॥

॥ इति बोधिसत्त्वदेशीयाचार्यश्रीजिनेन्द्रबुद्धिपादविरचितायां काशिकाविवरणपञ्जिकायां पञ्चमस्याध्यायस्य द्वितीय पादः ॥ ५.२ ॥

—:०:—

पदमञ्जरी

युरिति । पूर्ववदनुस्वारपरसवर्णौ । 'ऊर्णाया युस्' इत्यत्र ये 'छन्दसि' इति नानुवर्तयन्ति तेषामत्रैवोर्णाग्रहणं कर्त्तव्यम् ॥ १४० ॥

॥ इति श्रीहरदत्तमिश्रविरचितायां पदमञ्जर्यां पञ्चमस्याध्यायस्य द्वितीयः पादः ॥ ५-२ ॥

—:०:—

भावबोधिनी

वाला— यह अर्थ है । शुभंयुः । कल्याण वाला—यह अर्थ है । [ इन में पदसंज्ञा करने से 'म्' का अनुस्वार और वैकल्पिक परसवर्ण होने से 'अहंयुः, अहंय्युः, शुभंयुः शुभंय्युः दो रूप होते हैं । ] ॥ १४० ॥

॥ इस प्रकार श्री जयादित्य द्वारा विरचित काशिकावृत्ति में पञ्चम अध्याय का द्वितीय पाद समाप्त हुआ ॥

—:०:—

॥ इस प्रकार जयशङ्कर लाल-त्रिपाठि-विरचित 'भावबोधिनी' हिन्दी-व्याख्या में काशिकावृत्ति के पञ्चम अध्याय का द्वितीय पाद समाप्त हुआ ॥

—:०:—

# अथ पञ्चमाध्याये तृतीयः पादः

## २१६२. प्राग्दिशो विभक्तिः ॥ १ ॥ ( १९४७ )

**'दिक्शब्देभ्य सप्तमीपञ्चमीप्रथमाभ्यो दिग्देशकालेष्वस्तातिः'** (५.३.२७)। इति वक्ष्यति, प्रागेतस्माद्दिक्सं-शब्दनाद्यानित ऊर्ध्वमनुक्रमिष्यामो विभक्तिसंज्ञास्ते वेदितव्याः। वक्ष्यति—**'पञ्चम्यास्तसिल्'** ( ५.३.७ )। ततः। यतः। कुतः।

**न्यासः**

**प्राग्दिशो विभक्तिः ॥ विभक्तिसंज्ञास्ते वेदितव्या इति।** विभक्तिरित्येष शब्दः संज्ञा येषां ते तथोक्ताः। ननु च विभक्तिशब्दः सुप्तिङां संज्ञा, संज्ञा च प्रदेशवाक्येषूच्चारिता संज्ञिनं प्रत्याययतीति सुप्तिङामेव संज्ञात्वं प्राप्नोति, न विभक्तिशब्दस्य स्वाभिधेये गुणीभूतस्य ? नैष दोषः; एवं सति सुप्तिङां विभक्तिसंज्ञाविधानमनर्थकं स्यात्। यथा वृद्धिशब्दः स्वाभिधेये लौकिकेऽर्थे गुणीभूतोऽप्यादैच् प्रति संज्ञात्वमनुभवति, तथा विभक्तिशब्दोऽपि तसिलादीन् प्रति संज्ञात्वेन वेदितव्यः। अथ तत्रैव कस्मान्नोच्यते—'सुपो विभक्तिश्च प्राग्दिशश्च' इति, एवं सति पुनर्विभक्तिग्रहणं कर्त्तव्यं न भवति ? नैवं शक्यम्; एवं हि न्यासे सति 'कुत आरभ्य प्राग्दिशीयाः ?'—इति न ज्ञायते। किञ्च 'दिगादिभ्यो यत्', 'तेनैकदिक्' इति चानेकं शास्त्रे दिग्ग्रहणमित्यवधिरपि सन्दिह्येत। 'किंसर्वनामबहुभ्यः' इत्येवमादेश्च कार्यस्यावधिदर्शनार्थं पुनरिह 'प्राग्दिशः' इति वाच्यमेव स्यात्। तस्माद् यथान्यासमेव साधु। **ततः, यत इति।** 'अष्टन आ विभक्तौ' इत्यनुवर्त्तमाने 'त्यदादीनामः' इत्यत्वम्, 'न विभक्तौ तुस्माः' इति सकारस्येत्संज्ञाप्रतिषेधः, 'तद्धितश्चासर्वविभक्तिः' इत्यव्ययत्वाद् विभक्तेर्लुक्। **कुत इति।** 'कु तिहोः' इति किमः कुभावः।

**पदमञ्जरी**

**प्राग्दिशो विभक्तिः ॥ विभक्तिसंज्ञास्ते वेदितव्या इति।** विभक्तिरित्येष शब्दः संज्ञा येषां ते तथोक्ताः। ननु विभक्तिशब्दः पूर्वमेव सुप्तिङां संज्ञात्वेन विनियुक्तः, संज्ञा च प्रदेशेषु संज्ञिनं प्रत्याययति न स्वरूपम्, अतः सुप्तिङामेव संज्ञात्वं युक्तम्, न विभक्तिशब्दस्य ? सत्यम्; सुप्तिङस्तु संज्ञा भवन्तः प्रत्येकम्, समुदिता वा भवेयुः; न तावत्प्रत्येकम्, अनेकसंज्ञाकरणे प्रयोजनाभावात्; नापि समुदिताः, गौरवादनावृत्तेश्च। आवर्तिन्यो हि संज्ञा भवन्ति, न च समुदाय आवर्तते। अपर आह—"यथा 'किकिनौ लिट् च' इति लिड्वद्भावो विधीयते, तथात्रापि विभक्तिवद्भावो विधीयते" इति। सुप्तिङां तु विधानमत्र नाशङ्कनीयम्; पूर्वमेव विहितत्वात्। **त्यदादिविधय इति।** त्यदादीनां यानि कार्याणि त्यदादित्वप्रयुक्तानि स्वरूपप्रयुक्तानि वा ते त्यदादिविधयः। उपलक्षणं चैतत्,

**भावबोधिनी**

नत्वा साम्बं शिवं वाचं गणेशं गुरूंस्तथा।
पञ्चमस्य तृतीयाशं व्याख्याति 'जयशङ्करः' ॥

"दिक्शब्देभ्यः सप्तमी-पञ्चमी-प्रथमाभ्यः" ( पा. सू. ५।३।२७ ) यह सूत्र आगे कहा जायगा। इस 'दिक्' शब्द के कहने के पहले यहाँ से आगे जिन प्रत्ययों को कहेंगे उन्हें विभक्ति संज्ञावाला समझना चाहिये, अर्थात् उन सभी प्रत्ययों की भी विभक्ति संज्ञा होती है। [ अतः उनमें भी विभक्तित्व-प्रयुक्त कार्य होते हैं। ] कहा जायगा—"पञ्चम्यास्तसिल्" ( पा. सू. ५।३।७ ) [ पञ्चम्यन्त से तसिल् प्रत्यय होता है और इसकी विभक्ति संज्ञा होती है अतः ] 'ततः। यतः। कुतः। [ इनमें तत् और यत् शब्दों में' "त्यदादीनामः" ( पा. सू. ७।२।१०२ ) सूत्र से अत्व और 'अ' का पररूप होता है। 'किम्' शब्द का 'कु तिहोः' सूत्र से 'कु' आदेश होता है। ]

**तसिलादीनां विभक्तित्वे प्रयोजनम्—त्यदादिविधयः इदमो विभक्तिस्वरश्च। इह। 'ऊडिदम्' ( ६.१.१७६ ) इति विभक्त्युदात्तत्वं सिद्धं भवति।**

### न्यासः

**त्यदादिविधय इति।** त्यदादयोऽत्र विभक्तिनिबन्धना। **तत इति।** त्यदादिविधेरत्वस्योदाहरणम्। **इहेति। इदमो विभक्तिस्वरस्य।** इदमः सप्तम्यन्तात् 'इदमो हः' इति हप्रत्ययः, 'इदम इश्' इतीशादेशः। 'ऊडिदम्पदाद्यप्पुम्रैद्युभ्यः' इति इदमः परस्योदात्तत्वं विभक्तित्वे सति सिद्धं भवति। अत्र तु प्रत्ययस्वरेणैव सिद्धमाद्युदात्तत्वम्। तस्माच्चोदाहरणदिगियम् प्रदर्शिता। इदं त्वत्रोदाहरणं युक्तम्—**इत इति।** इदमस्तसिल्, पूर्ववदिश्। अत्र ह्यसति विभक्तित्वे लिति प्रत्ययात् पूर्वमाद्युदात्तत्वं स्यात्। तस्मिंस्तु 'ऊडिदम्' इत्यादिनेदमः परस्य तस आद्युदात्तत्वं सिद्धं भवति। ननु च सत्यपि विभक्तित्वे परत्वाल्लित्स्वरेण भवितव्यम्? नैष दोषः; 'लिति' इत्यत्र हि 'ऊडिदम्' इत्यादिकं सूत्रमनुवर्त्तिष्यते लित्स्वरबाधनार्थम्। नन्वेवमपि नैव विभक्तेरुदात्तत्वं सिध्यति? तत्र हि 'सावेकाचस्तृतीयादिर्विभक्तिः' इत्यतस्तृतीयादिग्रहणमनुवर्त्तते, न च तसिलादयस्तृतीयादिग्रहणेन गृह्यन्ते। तृतीयैकवचनमारभ्य आ पञ्चमाध्यायपरिसमाप्तेर्यावान् प्रत्ययो विभक्तिसंज्ञः सर्वोऽसौ तृतीयादिः।

### पदमञ्जरी

दानीमो मकारस्य 'न विभक्तौ तुस्माः' इतीत्संज्ञाप्रतिषेधोऽपि प्रयोजनम्। ततः, **यत इति।** 'त्यदादीनामः' इत्यत्वम्। अत्र सकारस्यानन्त्यत्वादेवेत्संज्ञाभावः। **कुत इति।** 'कुति होः' इति कुभावः। कदेति किमः कादेशः। क्वेत्यत्र 'क्वाति' इति क्वभावः। **इहेति।** 'इदमो हः', 'इदम इश्'। अत्र प्रत्ययस्वरेणैव सिद्धमुदात्तत्वम्। तस्मादित इत्येवोदाहरणं विभक्तिस्वरस्य; अन्यथा 'लिति' इति प्रत्ययात्पूर्वमुदात्तं स्यात्। ननु च 'मध्येऽपवादाः' इति न्यायाद् 'अनुदात्तौ सुप्पितौ' इत्यस्यैव विभक्तिस्वरोऽपवादः, न लित्स्वरस्य, लित्स्वर एव तु विभक्तिस्वरं परत्वाद्बाधेत? नैष दोषः; नात्राकृते लित्स्वरे विभक्तिस्वरः प्राप्नोति, किं कारणम्? 'अन्तोदात्तात्' इति वर्त्तते, तत्र निमित्तमेव लित्स्वरो विभक्तिस्वरस्य। यद्यपि 'ऊडिदम्' इत्यत्र 'सावेकाचः' इत्यतस्तृतीयादिग्रहणमनुवर्त्तते, तथाप्या पञ्चमाध्यायपरिसमाप्तेर्यावान्प्रत्ययो विभक्तिसंज्ञकः सर्वोऽसौ तृतीयादिरिति तसिलादयोऽपि तृतीयादिग्रहणेन गृह्यन्त एव।

### भावबोधिनी

तसिल् आदि प्रत्ययों की विभक्ति संज्ञा होने में प्रयोजन हैं—त्यदादि की विधियाँ और इदम् का विभक्तिस्वर। इह। [ इसमें "ऊडिदम्" ( पा. सू. ६।१।१७१ ) सूत्र से विभक्ति का उदात्तत्व सिद्ध होता है। उदा०—इह। [ "इदमो हः" ( पा. सू. ५।३।११ ) से 'ह' प्रत्यय, 'इदम इश्' ( पा. सू. ५।३।३ ) से इदम् का इश् आदेश, श् की इत्संज्ञा लोप करने पर 'इह' बनता है। यहाँ "ऊडिदम्" ( पा. सू. ६।१।१७१ ) से विभक्ति का उदात्तत्व होता है। ]

**विमर्श**—यहाँ का उपलब्ध काशिकापाठ कुछ भ्रष्ट प्रतीत होता है। काशिकाकार ने भाष्यक्रम बदल कर प्रयोजन प्रस्तुत किये हैं। भाष्य में "इदमो विभक्तिस्वरश्च"। इदमो विभक्तिस्वरश्च प्रयोजनम्। इतः, इह। इदमस्तृतीयादिर्विभक्तिरुदात्ता भवति इत्येष स्वरः सिद्धो भवति।

त्यदादिविधयश्च। त्यदादिविधयश्च प्रयोजनम्। यतः यत्र। कुतः कुत्र। 'विभक्तौ' इति त्यदादिविधयः सिद्धा भवन्ति।" ( म. भा. ५।३।१ )

इस भाष्योक्त पाठ से ऐसा भी प्रतीत होता है कि उपलब्ध काशिकापाठ में भी सम्पादकप्रमादवश कुछ छूट गया है। काशिका में प्रयोजन के रूप में केवल 'इह' शब्द दिया गया है। परन्तु पदमञ्जरी से ऐसा ज्ञात होता है कि काशिका में भाष्योक्त सभी ( 'यतः यत्र, कुतः, कुत्र' और 'इतः, इह' ) थे। अतः यहाँ सभी प्रयोजन समझ कर ही काशिकापाठ की संगति बैठानी चाहिए।

अतः परं स्वार्थिकाः प्रत्ययाः, तेषु समर्थाधिकारः प्रथमग्रहणं च प्रतियोग्यपेक्षत्वान्नोपयुज्यत इति द्वयमपि निवृत्तम्। वावचनं तु वर्त्तते एव, तेन विकल्पेन तसिलादयो भवन्ति—कुतः, कस्मात्, कुत्र, कस्मिन्निति ॥

**२१६३. किंसर्वनामबहुभ्योऽद्व्यादिभ्यः ॥ २ ॥ ( १९४८ )**

**'प्राग्दिशः' इत्येव। किमः सर्वनाम्नो बहुशब्दाच्च प्राग्दिशः प्रत्यया वेदितव्याः। सर्वनामत्वात्प्राप्ते**

**न्यासः**

**अतः परमित्यादि।** सामर्थ्यं हि नाम सम्बन्धार्थता, सा च प्रतियोगिनमपेक्षत एव येन सहैकार्थीभावो भवति तस्मिन् प्रतियोगिनि सति, नान्यथा। प्राथम्यमपि प्रतियोग्यपेक्षमेव। द्वितीयं हि प्रतियोगिनमपेक्ष्य प्रथममित्युच्यते। इत उत्तरं प्रत्ययाः प्रकृत्यर्थ एव भवन्तीति, न तद्विधौ द्वितीयस्य प्रतियोगिनः सम्भवः; तदभावात् सामर्थ्यप्राथम्ययोरपि नास्त्येव सम्भवः, तयोः प्रतियोग्यपेक्षत्वात्। यतश्चैतदेवम्, ततः **सामर्थ्याधिकारः प्रथमग्रहणञ्च नोपयुज्यत इति द्वयमपि निवृत्तम्।** यद्येवम्; वावचनस्यापि निवृत्तिः प्राप्नोति, एकयोगनिर्दिष्टत्वात्? इत्याह—**वावचनं तु वर्त्तत एवेति।** तस्य स्वरितत्वादिति भावः। **तेन विकल्पेनेत्यादि।** तेनोत्तरसूत्रे वाग्रहणानुवृत्तेः फलं दर्शयति ॥ १ ॥

**किंसर्वनामबहुभ्योऽद्व्यादिभ्यः ॥ कुत्रेति।** 'सप्तम्यास्त्रल्', पूर्ववत् कुभावः। **प्रकृतिपरिसंख्यानमिति।** प्रकृतिपरिगणनम्। **वैयाकरणपाश इति।** 'याप्ये पाशप्'। अयं चावधेः परो वक्ष्यत इत्यन्याभ्योऽपि प्रकृतिभ्यो

**पदमञ्जरी**

**अतः परमित्यादि।** एतत् 'समर्थानां प्रथमाद्वा' इत्यत्रैव व्याख्यातम्। **वावचनं त्वनुवर्त्तत एवेति।** तस्य पृथक्स्वरितत्वात् अथ 'सुपः, विभक्तिश्च' इत्यत्रैव 'प्राग्दिशश्च' इत्युच्येत? नैवं शक्यम्; एवं ह्युच्यमाने न ज्ञायते—कुत आरभ्य प्राग्दिशीया? इति। बह्वश्च दिक्शब्दाः—'दिगादिभ्यो यत्' इत्येवमादयः, तत्रश्चावधिरपि न निश्चितः स्यात्। 'किंसर्वनामबहुभ्यः' इत्यादेश्च कार्यस्य विषयनियमार्थं पुनरिह 'प्राग्दिशः' इति वाच्यमेव स्यात्। यदि पुनिरिहैव 'सुप्तिङौ च' इत्युच्येत? एवमपि 'तिङस्त्रीणि त्रीणि' इत्यत्र तिङ्ग्रहणम् सुप इति च तत्र वक्तव्यं पुरुषवचनसंज्ञार्थम्, तत्र नास्ति विशेषः ॥ १ ॥

**किंसर्वनामबहुभ्योऽद्व्यादिभ्यः ॥** अधिकारोऽयम्, परिभाषा वेति दर्शयति। **प्रत्ययो वेदितव्य इति**[1]। द्वाभ्याम्, द्वयोरित्यत्र तसिल्त्रलौ न भवतः।

**भावबोधिनी**

'इह' इस उदाहरण में तो प्रत्ययस्वर से ही उदात्तत्व सम्भव है। अतः 'इतः' यही मुख्य उदाहरण इदम् की विभक्तिस्वरत्वसिद्धि का समझना चाहिए। यह बात कैयट, न्यासकार और पदमञ्जरीकार सभी ने लिखी है।

[अनु०] इसके आगे स्वार्थिक प्रत्यय हैं, इनमें समर्थाधिकार और प्रथमग्रहण ["समर्थः पदविधिः, समर्थानां प्रथमाद्" इन सूत्रों] का उपयोग नहीं है क्योंकि इन दोनों में प्रतियोगी (दूसरे सम्बन्धी) की अपेक्षा होती है। [स्वार्थिक मानने पर प्रतियोगी की अपेक्षा नहीं रह जाती है। अतः इन दोनों अधिकारों का सम्बन्ध नहीं रहता है।] इस लिये इन दोनों की निवृत्ति हो जाती है। परन्तु 'वा' इस वचन की अनुवृत्ति तो होती ही है। इसलिए तसिल् आदि प्रत्यय विकल्प से होते हैं—कुतः, कस्मात्। कुत्र, कस्मिन्। [कस्मात् स्थानात् इस अर्थ में कस्मात् से तसिल् = तस् प्रत्यय, 'कु तिहोः' सूत्र से 'किम्' का 'कु' आदेश—कुतस्, स् का रुत्व विसर्ग, अव्ययसंज्ञा होने से विभक्ति का लोप। पक्ष में 'कस्मात्'। 'कस्मिन् स्थाने' इस अर्थ में 'सप्तम्यास्त्रल्' सूत्र से 'त्रल्' प्रत्यय किम् का कु आदेश—कुत्र।] ॥ १ ॥

'प्राग्दिशः' इसकी अनुवृत्ति होती है। किम्, सर्वनाम और बहुशब्द से वे सभी प्रत्यय होते हैं जो 'दिक्शब्देभ्यः (पा. सू. ५।३।२७) से पहले तक कहे गये हैं। सर्वनाम शब्दों के अन्तर्गत पठित होने से द्वि आदि का भी ग्रहण प्राप्त

१. 'प्रत्यया वेदितव्याः' इति काशिकापाठः।

**ग्रहणे द्व्यादिपर्युदासः क्रियते । कुतः, कुत्र । यतः, यत्र । ततः, तत्र । बहुतः । बहुत्र ।**

**अद्व्यादिभ्य इति किम् ? द्वाभ्याम्, द्वयोः । प्रकृतिपरिसंख्यानं किमर्थम् ? वृक्षात्, वृक्षे ।**

**प्राग्दिश इत्येव—वैयाकरणपाशः ।**

**सर्वनामत्वादेव सिद्धे किमो ग्रहणं द्व्यादिपर्युदासाद् ।**

**ॐ बहुग्रहणे संख्याग्रहणम् ॐ ( म० भा० ५.३.२ वा० १ ) । इह न भवति–बहोः सूपात्, बहौ सूपे इति ॥**

**न्यासः**

भवति । **सर्वनामत्वादेव सिद्ध इति** । सर्वनामत्वं किमः सर्वादिषु पाठात् । **किमो ग्रहणमित्यादि** । किंशब्दोऽयं द्व्यादिषु पठ्यत इति तस्य 'अद्व्यादिभ्यः' इति पर्युदासः क्रियते । तस्मात् सर्वनाम्नोऽपि स्वशब्देनोपादानम् । यद्येवं द्विशब्दात् पूर्वं किंशब्दः पठितव्यः, एवं हि तस्य पृथग्ग्रहणं न कर्त्तव्यमेव भवति ? सत्यमेतत्; न सूत्रकारस्येह गणपाठ इति नासावुपालम्भमर्हति । अपि च त्यदादीनां यद् यत् परं तत् तच्छिष्यत इति किमः सर्वैरेव त्यदादिभिः सह विवक्षायां शेष इष्यते—त्वञ्च कश्च कौ, भवांश्च कश्च कौ; स चैवं पाठे न सिध्यतीति यथान्यासमेवास्तु ।

**बहुग्रहणे संख्याग्रहणमिति** । कथमिह सर्वनामसंज्ञया सर्वादयः संज्ञिनो निर्दिश्यन्ते ? तस्मात् तैः सह निर्देशाद् बहुशब्दस्यापि बहुगणादिसूत्रेण यस्य संख्यासंज्ञा विहिता तस्यैव संज्ञिनो ग्रहणं विज्ञायते । **बहोः सूपादिति** । अत्र वैपुल्यवाची बहुशब्दः ॥ २ ॥

**पदमञ्जरी**

**प्रकृतिपरिसंख्यानम्** = प्रकृतिपरिगणनम् । **वैयाकरणपाश इति** । अस्तात्यादयो ग्रहणवद्भ्यो विधीयन्त इति प्रकृतिपरिसंख्यानस्य तत्रासम्भवाद्व्यवहितोऽपि पाशप् प्रत्युदाहृतः । **द्व्यादिपर्युदासादिति** । यदि पुनरयं द्व्यद्यादिभ्यः प्राक् किं पठ्येत, **नैव शक्यम्**; एकशेषे हि दोषः स्यात्, त्यदादीनां यद्यत्परं तत्तच्छिष्यते त्वं च कश्च कौ, भवांश्च कश्च कौ ।

**बहुग्रहणे संख्याग्रहणमिति** । कथमिह सर्वनामसंज्ञया संज्ञिनो निर्दिश्यन्ते ? तैः साहचर्याद् बहुशब्दस्यापि संज्ञिनो ग्रहणम्, यस्य 'बहुगणवतुडतिसंख्या' इति संख्यासंज्ञा विहिता, न च तत्र वैपुल्यवाचिनो ग्रहणमिति अत्रापि तस्य ग्रहणाभावः ॥ २ ॥

**भावबोधिनी**

होता इसलिए 'अद्व्यादिभ्यः' ऐसा पर्युदास ( निषेध ) किया जाता है । उदा०—कुतः, कुत्र । यतः, यत्र । ततः, तत्र । बहुतः, बहुत्र । [ किम् के उदा०–कुतः, कुत्र में तसिल् और त्रल् प्रत्यय हुए हैं । सर्वनाम के उदा०–यतः ततः में यत् और तत् से तसिल् प्रत्यय और 'त्यदादीनामः' से अन्त्य वर्ण का अ आदेश, 'अतो गुणे' से 'अ' का पररूप करने पर रूप बने हैं । इसी प्रकार—यत्र तत्र —में त्रल् प्रत्यय, अत्व आदेश, पररूप होने पर बने हैं । ] बहुतः, बहुत्र में तसिल् और त्रल् हुए हैं ।

द्व्यादि से नहीं—इस कथन का क्या लाभ है ? द्वाभ्याम्, द्वयोः । [ यहाँ पञ्चम्यन्त और सप्तम्यन्त से तसिल् और त्रल् नहीं होते हैं । ]

इन प्रकृतियों का परिसंख्यान ( परिगणन ) किस लिए है ? वृक्षात्, वृक्षे । [ यह परिगणित प्रकृतियों में नहीं आता है । अतः प्रत्यय नहीं होता है । ]

'दिक्शब्देभ्यः' ( पा. सू. ५।३।२७ ) इससे पहले के प्रत्यय ही प्रस्तुत सूत्र के लक्ष्य हैं । अतः वैयाकरणपाशः । [ कुत्सितः वैयाकरणः—इस विग्रह में पाशप् प्रत्यय होता है । यह सीमा के आगे के 'याप्ये पाशप्' (पा. सू. ५।३।४७) सूत्र से होता है । अतः बाधा नहीं है । ]

[ किम् शब्द के ] सर्वनाम होने से ही उसका ग्रहण सिद्ध था परन्तु 'अद्व्यादिभ्यः' ऐसा पर्युदास ( निषेध ) होने से उससे प्रत्यय नहीं हो पाता, इस कारण अलग से 'किम्' का ग्रहण है ।

ॐ बहु शब्द के ग्रहण में संख्याग्रहण अर्थात् संख्यावाचक बहु शब्द से—ऐसा कहना चाहिए । ॐ इस कारण यहाँ

**२१६४. इदम इश् ॥ ३ ॥ ( १९४९ )**

**'प्राग्दिशः' इत्येव। इदम इश् इत्ययमादेशो भवति प्राग्दिशीयेषु प्रत्ययेषु परतः। शकारः सर्वादेशार्थः। इह॥**

**२१६५. एतेतौ रथोः ॥ ४ ॥ ( १९५० )**

**रेफथकारादौ प्राग्दिशीये प्रत्यये परत इदम एतेतावादेशौ भवतः। इशोऽपवादः। रेफेऽकार उच्चारणार्थः। 'इदमो र्हिल्' ( ५ ३.१६ ), एतर्हि। 'इदमस्थमुः' ( ५.३.२४ ), इत्थम् ॥**

**न्यासः**

**इदम इश् ॥ शकारः सर्वादेशार्थ इति।** असति हि तस्मिन् 'अलोऽन्त्यस्य' स्यात्। ततश्चेद्रूपस्य हलिलोपे कृत आद्गुणे चैतः, एहेत्यनिष्टं रूपं स्यात्। चेदमस्त्यदाद्यत्वे कृतेऽतो गुणे पररूपत्वे, चेद्रूपलोपे चान्त्यस्याप्यादेश इतः, इहेति सिध्यत्येव? सिध्येद् यदि प्राक् त्यदाद्यत्वं लभ्येत; न तु तल्लभ्यम्, इत्वमेव हि तावदन्तरङ्गं स्यात्। इत्वं हि तसिलादिप्रत्ययमात्रमपेक्षत इत्यन्तरङ्गम्, त्यदाद्यत्वमङ्गसंज्ञां परस्य प्रत्ययस्य विभक्तित्वं चापेक्षत इति बहिरङ्गम्। तस्माच्छकारः कर्त्तव्यः ॥ ३ ॥

**एतेतौ रथोः ॥ रथोरिति** वर्णयोरिदं ग्रहणम्। तत्र 'यस्मिन् विधिस्तदादावल्ग्रहणे' इति रेफादौ थकारादौ च कार्यं विज्ञायत इत्याह—**रेफादावित्यादि।** रेफस्याकार उच्चारणार्थ इति कथं ज्ञायते? इदमः परस्य प्राग्दिशीयस्याकारवतो रेफस्याभावात् ॥ ४ ॥

**पदमञ्जरी**

**इदम इश् ॥ शकारः सर्वादेशार्थ इति।** अन्यथा विशेषविहितत्वात्त्यदाद्यत्वं बाधित्वा 'अलोऽन्त्यस्य' इति मकारस्येत्वे हलिलोपे च—एतः, एहेत्यनिष्टं रूपं स्यात् ॥ ३ ॥

**एतेतौ रथोः ॥ इशोऽपवाद इति।** भावे घञ्, इशो बाधनमेताभ्यां क्रियत इत्यर्थः। योगापेक्षं त्वेकवचनम्, अयं योग इशोऽपवाद इत्यर्थः। आदेशाभ्यां वा प्रत्येकमभिसम्बन्धादेकवचनम्, यथा 'भृशादिभ्यो भुव्यच्वेः' इति। इशोऽपवादाविति वा पठितव्यम्। **रेफेऽकार उच्चारणार्थ इति।** अकारवतो रेफस्य प्राग्दिशीयस्याभावात् ॥ ४ ॥

**भावबोधिनी**

नहीं होता है—बहोः सूपात्, बहौ सूपे। [ क्योंकि यहाँ 'बहु' यह विपुलता = अधिकता अर्थ में है संख्या अर्थ में नहीं—बहुत सूप = दाल से, बहुत सूप = दाल में। अतः तसिल् और त्रल् दोनों नहीं होते हैं। ] ॥ २ ॥

'प्राग्दिशः' इसकी अनुवृत्ति होती है। "दिक्शब्देभ्यः" इस सूत्र से पहले तक के प्रत्ययों के परे रहने पर इदम् का 'इश्' यह आदेश होता है। शकार अनुबन्ध [ "अनेकाल्शित् सर्वस्य" सूत्र से ] सम्पूर्ण इदम् के स्थान पर 'इश्' आदेश करने के लिए है। उदा०—इह। [ अस्मिन्—इस विग्रह में "इदमो हः" ( पा. सू. ५।३।११ ) से 'ह' प्रत्यय करने पर प्रस्तुत सूत्र से इश् आदेश, श् की इत्संज्ञा, लोप। ] ॥ ३ ॥

प्राग्दिशीय ( 'दिक्शब्देभ्यः' ५।३।२७ सूत्र से पहले वाले ) प्रत्यय जिनके आदि में रेफ या थकार है, उनके परे रहते 'इदम्' के क्रमशः 'एत' और 'इत्' आदेश होते हैं। ये इश् आदेश के अपवाद हैं। [ अपवादः—एकवचन की उपपत्ति भाव में घञ् प्रत्यय करके होती है—इशः बाधनमनेन क्रियते। ] रेफ में अकार उच्चारण की सुविधा के लिए है अर्थात् केवल व्यंजन ही इष्ट है। उदा०—'इदमो र्हिल्' [ पा. सू. ५।३।१६ से र्हिल् प्रत्यय—इदम् + र्हिल् = र्हि, इदम् का एत आदेश— ] एतर्हि। "इदमस्थमुः" [ पा. सू. ५।३।२४ से थमु = थम् प्रत्यय प्रकार अर्थ में होने पर प्रस्तुत सूत्र से इदम् का 'इत्' आदेश—इत्थम् = ] इत्थम् ॥ ४ ॥

२१६६. एतदोऽश् ॥ ५ ॥ ( १९५१ )

'प्राग्दिशः' इत्येव। एतदः प्राग्दिशीये परतोऽशित्ययमादेशो भवति। शकारः सर्वादेशार्थः। अतः। अत्र।

'एतदः' इति योगविभागः कर्त्तव्यः ( म० भा० )। एतदो रथोः परत एत, इत्-इत्येतावादेशौ भवतः— एतर्हि, इत्थम्। रेफादिः 'अनद्यतने र्हिलन्यतरस्याम्' (५.३.२१) इति विद्यत एव। थमुप्रत्ययः पुनरेतद उपसंख्येयः ॥

न्यासः

एतदोऽश् ॥ शकारः सर्वादेशार्थ इति। ननु चान्त्यस्य स भवन् यदि तावदकृते त्यदाद्यत्वे भवति ततो दकारस्य भवन्ननर्थकः प्रसज्येत, त्यदाद्यत्वेनापि हि तस्याकारो लभ्यत एव; अथ त्यदाद्यत्वे कृतेऽकारस्य स्थाने भवन्ननर्थक एव प्रसज्यते, न ह्यकारस्याकारवचने प्रयोजनमस्ति, कृतवांश्च; तत्र वचनादसत्यपि शकारे सर्वादेशो भविष्यति ? नैतदस्ति; अस्ति ह्यकारस्याकारवचने प्रयोजनम्। किम् ? अतः, अत्रेत्यत्र योऽन्यः प्राप्नोति स मा भूदिति। कः पुनरसौ ? लिति प्रत्ययात् पूर्वस्योदात्तः। तस्माच्छकारः कर्त्तव्यः।

थमुः पुनरुपसंख्येय इति। तस्याविद्यमानत्वात्। उपसंख्येय इति प्रतिपाद्य इत्यर्थः। तत्रेदं प्रतिपादनम्— एत एव थकारादावादेशवचनं ज्ञापयति—भवत्येतदस्थमुरिति। कुतो नु खल्वेतद् ? ज्ञापकात्। थमुर्भविष्यति, न पुनरयं एवासौ 'प्रकारवचने थाल्' इत्यविशेषविहितस्थकारादिस्तस्मिन्नेवादेशः स्यात् ? नैष दोषः; इदमस्थकारादिविशेष इष्यते। 'एतदः' इत्यत्रापि हीदम इत्यनुवर्तते, तच्च नादेशविधानार्थम्; आदेशस्य पूर्वमेव विहितत्वात्। तस्मात् प्रत्ययविशेषणं विज्ञायते। तत एतेन थकारादि विशेषयिष्यामः—इदम इत्येवं यो विहित इदंशब्देनैव यो विहितस्थकारादिरिति, थमुरेव चैवं विहितः, न थालिति युक्तमुक्तमादेशवचनं ज्ञापयति— भवत्येवैतदस्थमुरिति ॥ ५ ॥

पदमञ्जरी

एतदोऽश् ॥ शकारः सर्वादेशार्थ इति। अन्यथा 'अलोऽन्त्यस्य' इत्यन्त्यस्य स्यात्। ननु चान्त्यस्य त्यदाद्यत्वेनैव सिद्धमत्वम्, कृते तर्हि तस्मिन्नकारस्याकारः प्राप्नोति, अकारस्य अकारवचने प्रयोजनाभावात्सर्वादेशो भविष्यति ? अस्त्यन्यदकारस्याप्यकारवचने प्रयोजनम्, किम ? योऽन्यो विधिः प्राप्नोति स मा भूदिति। कः पुनरसौ ? 'लिति' इति स्वरः। यथा—'मो राजि समः क्वौ' इति मकारस्य मकारवचनमनुस्वारबाधनार्थम्।

योगविभाग इति। अशो बाधनार्थः। थमुप्रत्ययः पुनरिति। अन्यथा य एवासावविशेषविहितस्थकारादिः 'प्रकारवचने थाल्' इति तत्रैव स्यात्। स तर्ह्युपसंख्येयः ? नेत्याह, इदमा थकारादि विशेषयिष्यामः—इदमो यस्थकारादिस्तत्रेति, स च थमुरेव। ततश्चास्मादेव ज्ञापकात्थमुर्भविष्यति, तेन च थाल्बाध्यते।

भाष्ये तु 'एतदोऽन्' इति नकारान्त आदेश इति स्थितम्। स चानेकाल्त्वात्सर्वादेशः, ततः स्थानिवद्भावात्प्रातिपदिकत्वे सति नलोपः—अतः, अत्र ॥ ५ ॥

भावबोधिनी

'प्राग्दिशः' इसकी अनुवृत्ति होती है। प्राग्दिशीय ( "दिक्शब्देभ्यः" सूत्र से पहले तक के ) प्रत्यय परे रहते 'एतद्' का 'अश्' यह आदेश होता है। शकार अनुबन्ध [ 'अनेकाल्शित् सर्वस्य' सूत्र से ] सम्पूर्ण के स्थान पर आदेश करने के लिए है। उदा०—अतः। अत्र। [ अस्मात् इस पञ्चम्यन्त से स्वार्थ में तसिल् प्रत्यय इदम् + तसिल् = तस्, इदम् का अश् = अ आदेश—अतस्, स् का रुत्व विसर्ग—अतः। इदम् सतम्यन्त से त्रल् = त्र प्रत्यय इदम् का अश् आदेश—अत्र। ]

'एतदः' यह योगविभाग करना चाहिए। एतद् शब्द के एत और इत् आदेश होते हैं र और थ परे रहते—एतर्हि, इत्थम्। [ एतस्मिन् इस अर्थ में 'र्हिल्' प्रत्यय करने पर योगविभाग से सिद्ध नियम से 'एत' आदेश। ] 'अनद्यतने

## २१६७. सर्वस्य सोऽन्यतरस्यां दि ॥ ६ ॥ ( १९५२ )

**सर्वस्य 'स' इत्ययमादेशो भवति प्राग्दिशीये दकारादौ प्रत्यये परतोऽन्यतरस्याम् । सर्वदा । सदा । प्राग्दिशीय इत्येव—सर्वं ददातीति सर्वदा ब्राह्मणी ॥**

## २१६८. पञ्चम्यास्तसिल् ॥ ७ ॥ ( १९५३ )

**पञ्चम्यन्तेभ्यः किंसर्वनामबहुभ्यस्तसिल्प्रत्ययो भवति । कुतः । यतः । ततः । बहुतः ॥**

### न्यासः

**सर्वस्य सोऽन्यतरस्यां दि ॥** दीति दकारादियं सप्तमी । तत्र दकारमात्रस्य प्राग्दिशीयस्याभावाद् 'यस्मिन् विधिस्तदादावल्ग्रहणे' इत्यतो दकारादौ विधिर्ज्ञायत इत्याह—**प्राग्दिशीये दकारादावित्यादि । सर्वदा ब्राह्मणीति ।** 'आतोऽनुपसर्गे कः', ततष्टाप् ॥ ६ ॥

**पञ्चम्यास्तसिल् ॥ तसिल् प्रत्ययो भवतीति ।** आदेशा एवामी तसिलादयः पञ्चम्यादीनां स्थाने कस्मान्न क्रियन्ते, एवं हि विभक्तिसंज्ञा न कर्त्तव्या भवति ? अशक्या एत आदेशाः कर्तुम्; आदेशत्वे ह्येषामव्ययात् त्यपि—ततस्त्यः, यतस्त्य इत्यत्र 'सुपो धातुप्रातिपदिकयोः' इति लुक् । लभन्ते हि स्थानिवद्भावेन सुबादेशाः सुबाश्रयं कार्यम् । तत इति, 'अनुदात्तौ सुप्पितौ' इत्यनुदात्तः । कुत इति, 'घेर्ङिति' इति गुणः । एतर्हीति, 'सुपि च' इति दीर्घः । तत्रेति, 'बहुवचने झल्येत्' इत्येत्वम् । कुत्रेति, 'अच्च घेः' इत्यौत्त्वम् । ततः, तत्रेति, 'ङसिङ्योः

### पदमञ्जरी

**सर्वस्य सोऽन्यतरस्यां दि ॥** 'दि' इति दकारादियं सप्तमी, तत्र 'यस्मिन् विधिः' ( व्या० परि० १२७ ) इति तदादेर्ग्रहणं विज्ञायत इत्याह—**दकारादौ प्रत्यये परत इति ।**

**सर्वदा ब्राह्मणीति ।** किमर्थं स्त्रीलिङ्गोपन्यासः ? यो हि मन्यते—दीति दाशब्दादियं सप्तमी न तु दकारात्, तत्र 'क्त्वो ल्यप्' 'हलः श्नः' इत्यादिवदातो लोप इति, तं प्रति दाशब्दः प्रत्युदाहृतः । एवमपि लाक्षणिकत्वादत्र दाशब्दस्य न भविष्यति ? एवं तर्हि विजन्तमेतद् द्रष्टव्यम्, एवं च कृत्वा पुंल्लिङ्गमप्युदाहरणं भवत्येव ॥ ६ ॥

**पञ्चम्यास्तसिल् ॥ तसिलप्रत्ययो भवतीति ।** यदि पुनः 'पञ्चम्याः' 'सप्तम्याः' इति षष्ठ्याश्रयेण पञ्चम्यादीनां तसिलादय आदेशा विज्ञायेरन्, सुब्लुक्स्वरगुणदीर्घत्वैत्वौत्वस्मायादिविधिप्रतिषेधः । सुब्लुक्—'अव्ययात्त्यप्',

### भावबोधिनी

हिलन्यतरस्याम्' यह रेफादि प्रत्यय है ही । एतद् से थमु प्रत्यय का ही उपसंख्यान करना चाहिए । एतद् + थमु = थम्, इद् आदेश—इत्थम् । इस योगविभाग के कारण एतद् का अश् आदेश नहीं होता है । ] ॥ ५ ॥

प्राग्दिशीय ( "दिक्शब्देभ्यः" ५।३।२७ से पहले तक के ) दकारादि प्रत्यय परे रहते सर्व का 'स' आदेश विकल्प से होता है । उदा०—सर्वदा, सदा । [ सर्वस्मिन् काले—इस अर्थ में "सर्वैकान्यकियत्तदः काले दा" (पा. सू. ५।३।१५) सूत्र से 'दा' प्रत्यय करने पर प्रस्तुत सूत्र से विकल्प से सर्व का 'स' आदेश करने पर—(१) सदा और आदेश न होने पर (२) सर्वदा रूप बनते हैं । "तद्धिताश्चासर्वविभक्तिः" सूत्र से अव्यय संज्ञा होने से विभक्तिलुक् हो जाता है । ]

प्राग्दिशीय प्रत्यय परे ही यह आदेश होता है अतः यहाँ नहीं होता—सर्वं ददाति—इस अर्थ में—सर्वदा ब्राह्मणी । [ "आतोऽनुपसर्गे कः" से 'क' = अ प्रत्यय स्त्रीलिङ्ग में टाप् । यहाँ बाहरी प्रत्यय होने से 'स' आदेश नहीं होता है । ] ॥ ६ ॥

पञ्चम्यन्त किम्, सर्वनाम और बहु शब्दों से तसिल् प्रत्यय होता है । उदा०—कुतः । यतः । ततः । बहुतः । [ इनमें कस्मात्, यस्मात्, तस्मात्, बहोः—इन पञ्चम्यन्तों से स्वार्थिक तसिल् प्रत्यय होता है । विभक्तिसंज्ञा होने से त्यदादित्व-प्रयुक्त कार्य होने पर रूप बनते हैं । ]

## २१६९. तसेश्च ॥ ८ ॥ ( १९५५ )

**'प्रतियोगे पञ्चम्यास्तसिः' ( ५.४.४४ ), 'अपादाने चाहीयरुहोः' ( ५.४.४५ ) इति वक्ष्यति। तस्य तसेः किंसर्वनामबहुभ्यः परस्य तसिलादेशो भवति। कुत आगतः। यतः। ततः। बहुत आगतः।**

**तसेस्तसिल्वचनं स्वरार्थं विभक्त्यर्थं च ॥**

### न्यासः

स्मात्स्मिनौ' इति स्मात्स्मिनौ। तस्मान् नादेशा अमी क्रियन्ते। यद्येवम्, 'तसु उपक्षये' इत्यस्मात् तस्यन्नित्यत्र धातुरूपस्य पञ्चम्याः परस्य 'तसेश्च' इति तसिलादेशः प्राप्नोति ? नैष दोषः; स्वार्थिकविज्ञानान्न भविष्यति। स्वार्थिका ह्येते तसिलादयः, तन्मध्ये तसिलादेशो विधीयमानस्तथा विज्ञायते यथा स्वार्थे क्रियमाणःस्वार्थिकत्वं नातिक्रामति। 'अपादाने चाहीयरुहोः' इत्यनेन विहितस्तस्य स्वार्थिकस्य स्थाने भवंस्तसिलपि स्वार्थिक एव भवति। धातुस्तु प्रातिपदिकादर्थान्तरे वर्त्तत इति तदादेशो भवंस्तसिल् स्वार्थिको न भवति ॥ ७ ॥

**तसेश्च ॥ कुत आगत इति।** 'अपादाने चाहीयरुहोः' इति परत्वात् तसौ कृते तस्यानेन तसिल्। ननु च कृतेऽपि तसिलि तदेव रूपम्, तत् किमर्थमादिश्यते ? इत्याह—**तसेस्तसिल्वचनमित्यादि** ॥ ८ ॥

### पदमञ्जरी

ततस्त्यः, तत्रत्यः 'सुपो धातुप्रातिपदिकयोः' इति तसित्रलोर्लुक् प्राप्नोति। स्वरः—तदा, यदा, 'अनुदात्तौ सुप्पितौ' इत्यनुदात्तत्वं प्राप्नोति। गुणः—कुतः, 'घेर्ङिति' इति गुणः प्राप्नोति। दीर्घत्वम्—तर्हि, 'अतो दीर्घो यञि', 'सुपि च' इति दीर्घत्वं प्राप्नोति। एत्वम्—तेषु, तत्र, 'बहुवचने झल्येत्' इत्येवं प्राप्नोति। औत्वम्-कस्मिन्, कुत्र, 'औत्' 'अच्च घेः' इत्यौत्वं प्राप्नोति। स्मायादि—तस्मात्, तस्मिन्, तत्र, 'ङसिङ्योः स्मात्स्मिनौ' इति स्मात्स्मिनौ प्राप्नुतः। तस्मात् 'पञ्चम्याः सप्तम्या' इति पञ्चमी, तसिलादयश्च प्रत्ययाः' इति युक्तम्। अत एव 'इतराभ्यः' इति पञ्चमीनिर्देशः; इतरथा 'इतरासाम्' इति वक्तव्यं स्यात्। यदि तर्हि तसिलादयः प्रत्ययाः, नादेशाः, 'तसेश्च' इति तस्यतेर्धातोरपि पञ्चम्यन्तात्परस्य प्राप्नोति—तस्मात्तस्यति, यस्मात्तस्यति। आदेशपक्षे तु न दोषः; 'प्रतियोगे पञ्चम्यास्तसिः', 'अपादाने चाहीयरुहोः' इत्यत्राप्यादेशत्वात्पञ्चम्यादेशस्य तसेस्तसिलादेशविधानात् ? प्रत्ययपक्षेऽपि न दोषः; तसेरितीकारो विवक्षितः, तेन धातोर्न भविष्यति ॥ ७ ॥

**तसेश्च ॥ तस्य तसेरिति।** परत्वात्कृतस्य तसिलोऽवकाशः—कुतोऽवहीयते, कुतोऽवरोहतीति, तसेस्तु ग्रामत आगच्छतीत्यादिः, कुत आगच्छतीत्यादावुभयप्रसङ्गे परत्वात्तसिर्भवति, तस्यानेन तसिलादेशः। **तसेस्तसिल्वचनं स्वरार्थमिति।** लित्करणस्योक्तं प्रयोजनम्। **विभक्त्यर्थं चेति।** विभक्तिसंज्ञार्थं चेत्यर्थः। अन्यथा परत्वात्तसौ कृते तस्याप्राग्दिशीयत्वाद्विभक्तिसंज्ञाया अभावात्त्यदाद्यत्वं न स्यादिति रूपमेव न सिद्ध्येत् ॥ ८ ॥

### भावबोधिनी

**विमर्श**—'पञ्चम्यास्तसिल्', 'सप्तम्यास्त्रल्' इन सूत्रों में षष्ठी और पञ्चमी का सन्देह होता है। यदि षष्ठी मानी जाय तो पञ्चमी के स्थान पर तसिल् और सप्तमी के स्थान पर त्रल् आदेश प्राप्त होंगे। ऐसा होने पर अनेक अनुपपत्तियाँ होती हैं। अतः इनमें पञ्चमी विभक्ति ही माननी चाहिए, तथा तदन्तविधि मान कर पञ्चम्यन्त से स्वार्थ में तसिल् और सप्तम्यन्त से स्वार्थ में त्रल् प्रत्यय करने चाहिए। 'कृत्तद्धितसमासाश्च' सूत्र से प्रातिपदिकसंज्ञा और 'सुपो धातुप्रातिपदिकयोः सूत्र से पञ्चमी विभक्ति का लुक् कर देने पर मूल शब्द बच जाता है—किम् + तस्, इसके बाद किम् का 'कु' आदेश, कुतस्, स् का रुत्व विसर्ग। अव्यय हो जाने से विभक्ति का लुक् हो जाता है। यह प्रक्रिया सर्वत्र समझनी चाहिये ॥ ७ ॥

'प्रतियोगे पञ्चम्यास्तसिः' [ पा. सू. ५।४।४४ कर्मप्रवचनीय-संज्ञक प्रति के योग में जो पञ्चमी की जाती है उस पञ्चम्यन्त से 'तसि' प्रत्यय होता है। ] 'अपादाने चाहीयरुहोः' ( पा. सू. ५।४।४५ अपादान में जो पञ्चमी उस पञ्चम्यन्त से विकल्प से तसि प्रत्यय होता है। ) ये सूत्र आगे कहे जायेंगे। वह तसि किम्, सर्वनाम और बहु से परे

**२१७०. पर्यभिभ्यां च ॥ ९ ॥ ( १९५६ )**

**परि, अभि —इत्येताभ्यां तसिल् प्रत्ययो भवति ।**

**सर्वोभयार्थे वर्तमानाभ्यां प्रत्यय इष्यते । परितः । सर्वत इत्यर्थः । अभितः । उभयत इत्यर्थः ॥**

**२१७१. सप्तम्यास्त्रल् ॥ १० ॥ ( १९५७ )**

**किंसर्वनामबहुभ्यः सप्तम्यन्तेभ्यः त्रल् प्रत्ययो भवति । कुत्र । यत्र । तत्र । बहुत्र ॥**

**२१७२. इदमो हः ॥ ११ ॥ ( १९५८ )**

**इदमः सप्तम्यन्ताद्धः प्रत्ययो भवति । त्रलोऽपवादः । इह ॥**

**२१७३. किमोऽत् ॥ १२ ॥ ( १९५९ )**

**किमः सप्तम्यन्तादत्प्रत्ययो भवति । त्रलोऽपवादः । क्व भोक्ष्यसे । क्वाध्येष्यसे ।**

**न्यासः**

**पर्यभिभ्याञ्च ॥ सर्वोभयार्थे वर्त्तमानाभ्यामिष्यत इति ।** तेनेह न भवति—परिषिञ्चति, अभियातीति । अत्र चानभिधानं हेतुः । अथ वा—'सर्वस्य' इत्यादेः सूत्रादन्यतरस्यांग्रहणमनुवर्त्तते, सा च व्यवस्थितविभाषा । तेन सर्वोभयार्थ एव वर्त्तमानाभ्यां भवति, नान्यत्र ॥ ९ ॥ **सप्तम्यास्त्रल् ॥ १० ॥ इदमो हः ॥ ११ ॥**

**किमोऽत् ॥ क्वेति ।** 'क्वाति' इति किमः क्वादेशः । 'न विभक्तौ तुस्माः' इति प्रतिषेधस्य 'इदमस्थमुः'

**पदमञ्जरी**

**पर्यभिभ्यां च ॥ सर्वोभयार्थे वर्तमानाभ्यामिति ।** अत्र चाभिधानस्वाभाव्यं हेतुः, तेनेह न भवति-परिषिञ्चति, अभियातीति; उपर्यर्थे परिः, आभिमुख्येऽभिः । इह त्वोदनं परिषिञ्चतीति सर्वतोभावेऽपि वावचनानुवृत्तेः पक्षे तसिलभावः । **सर्वतः, उभयत इति ।** सप्तम्यन्ताभ्यामाद्यादित्वात्तसिः ॥ ९ ॥ १० ॥ ११ ॥

**किमोऽत् ॥** तकारस्य 'न विभक्तौ तुस्माः' इतीत्संज्ञाप्रतिषेधो न भवति; अनित्यत्वात् । अनित्यत्वं तु

**भावबोधिनी**

हो तो उसका तसिल् आदेश होता है । उदा०—कुतः आगतः । [ यहाँ कस्मात् इस अर्थ में तसि प्रत्यय करने के बाद प्रस्तुत सूत्र से तसि का तसिल् आदेश हो जाता है । इस आदेश की विभक्ति संज्ञा होने से 'कु तिहोः' तथा 'त्यदादीनामः' आदि सूत्रों की प्रवृत्ति संभव होती है । इसके अतिरिक्त लित् हो जाने से 'लिति च' ( पा. सू. ६।१।८७ ) से उदात्त होता है । यही लिख रहे हैं—]

तसि का तसिल् आदेश स्वर करने के लिए और विभक्तित्व के लिए है । [ अन्यथा तसि और तसिल् के रूप में कोई भेद नहीं है । ] ॥ ८ ॥

परि और अभि—इन शब्दों से तसिल् प्रत्यय होता है । सर्व और उभय अर्थों में वर्तमान ही इन शब्दों से प्रत्यय करना इष्ट है । उदा०—परितः । सभी ओर से—यह अर्थ है । अभितः । दोनों ओर—यह अर्थ है ॥ ९ ॥

सप्तम्यन्त किम्, सर्वनाम और बहु शब्दों से त्रल् प्रत्यय होता है । उदा०—कुत्र । यत्र । तत्र । बहुत्र । [ कस्मिन्—इस अर्थ में त्रल् प्रत्यय, प्रातिपदिकसंज्ञा, विभक्तिलुक् करने पर किम्+त्रल्=त्र, 'कु तिहोः' सूत्र से किम् का 'कु' आदेश । अव्यय हो जाने से विभक्ति का लुक् । यस्मिन्, तस्मिन्—इन अर्थों में त्रल् = त्र, प्रातिपदिक संज्ञा, विभक्तिलुक् के बाद त्यदाद्यत्व, पररूपत्व, अव्ययत्वात् विभक्तिलुक् । बहौ—इसमें भी पूर्ववत् प्रक्रिया है । ] ॥ १० ॥

सप्तम्यन्त इदम् शब्द से 'ह' प्रत्यय होता है । यह त्रल् का अपवाद है । उदा०—इह । [ अस्मिन्—इससे 'ह' प्रत्यय, प्रातिपदिकसंज्ञा, विभक्ति लुक् । 'इदम इश्' सूत्र से इदम् का इश् आदेश, श् की इत्संज्ञालोप अव्ययत्वात् विभक्तिलुक् । ] ॥ ११ ॥

सप्तम्यन्त किम् शब्द से अत् प्रत्यय होता है । यह त्रल् का अपवाद है । उदा०—क्व भोक्ष्यसे । क्व अध्येष्यसे ।

त्रलमपि केचिदिच्छन्ति—कुत्र। तत्कथम् ? उत्तरसूत्राद्वावचनं पुरस्तादपकृष्यते ॥

## २१७४. वा ह च च्छन्दसि ॥ १३ ॥ ( १९६१ )

किमः सप्तम्यन्ताद्वा हः प्रत्ययो भवति छन्दसि विषये। यथाप्राप्तं च। क्व। कुह ( ऋ० ८.७३.४ )। कुत्रचिदस्य सा दूरे क्व ब्राह्मणस्य चावकाः ॥

## २१७५. इतराभ्योऽपि दृश्यन्ते ॥ १४ ॥ ( १९६२ )

सप्तमीपञ्चम्यपेक्षमितरत्वम्। इतराभ्यो विभक्तिभ्यस्तसिलादयो दृश्यन्ते। दृशिग्रहणं प्रायिकविध्यर्थम्, तेन भवदादिभिर्योग एवैतद्विधानम्।

के पुनर्भवदादयः ? भवान्दीर्घायुरायुष्मान् देवानाम्प्रिय इति। स भवान् = ततो भवान्, तत्र भवान्। तं भवन्तम् = तत्र भवन्तम्, ततो भवन्तम्। तेन भवता = तत्र भवता, ततो भवता। तस्मै भवते = ततो भवते,

### न्यासः

इत्युकारेणानित्यत्वस्य ज्ञापितत्वादित्संज्ञा तकारस्य। दानीमस्तु प्रतिषेधान्नास्तीत्संज्ञा; प्रयोजनाभावाच्च ॥ १२ ॥

**वा ह च च्छन्दसि** ॥ १३ ॥ **इतराभ्योऽपि दृश्यन्ते** ॥ **पञ्चमीसप्तम्यपेक्षमितरत्वमिति**। तदनन्तरमितरशब्दस्य ज्ञातत्वात्। अथ दृशिग्रहणं किमर्थम्, यावता 'इतराभ्योऽपि' इत्येतावतैव सिद्धम् ? इत्याह—**दृशिग्रहणमित्यादि**। प्रायिको विधिर्यथा स्यादित्येवमर्थं दृशिग्रहणम्। तस्मिंस्तु सति शिष्टप्रयोगेऽनुगम्यमाने यत्र दृश्यते तत्र भवति, नान्यत्रेत्येषोऽर्थो लभ्यते। तेन प्रायिकत्वं विधेः सिध्यति। **तेनेत्यादि**। दृशिग्रहणे तु सति यत्रैवेतराभ्यः शिष्टप्रयोगो दृश्यते ताभ्य एव तसिलादिभिर्भवितव्यम्। भवदादियोग एवेतराभ्यो दृश्यन्ते, तेनेतरत्रैव

### पदमञ्जरी

'इदमस्थमुः' इति थम उकारान्मकारस्येत्संज्ञापरिहाणार्थाज्ज्ञायते। दानीमस्तु मकारस्य भवत्येव प्रतिषेधः। अनित्यत्वं हि ज्ञाप्यते, न पुनस्तद्धितेष्वस्याभावः।

**उत्तरसूत्रादिति**। 'किमोऽद्वा' इति सूत्रं पठितव्यम्। 'ह च छन्दसि' इत्यत्र चकारेण त्रतलोः समुच्चयादिष्टसिद्धिरिति तेषां भावः। **भाष्यवृत्तिकारस्तु** भाषायामेतन्नेच्छति ॥ १२ ॥ १३ ॥

**इतराभ्योऽपि दृश्यन्ते** ॥ **पञ्चमीसप्तम्यपेक्षमितरत्वमिति**। तयोरनन्तरनिर्दिष्टत्वात्। **प्रायिकविध्यर्थमिति**। प्रायिकोऽयं विधिर्यथा स्यादित्येवमर्थमित्यर्थः। तेन किं सिद्धं भवति ? इत्याह-**तेनेति**। **स भवान्, ततो**

### भावबोधिनी

[ कस्मिन्—इससे अत् = अ प्रत्यय, प्रातिपदिकत्वात् सुप्लुक् किम् + अ, 'क्वाति' सूत्र से किम् का क्व आदेश, भसंज्ञा 'यस्येति च' सूत्र से अलोप—क्व् + अ = क्व। अव्यय होने से विभक्तिलुक्। ]

कुछ विद्वान् त्रल् प्रत्यय भी चाहते हैं—कुत्र। तो यह कैसे होता है ? उत्तरवर्ती सूत्र से 'वा' वचन को इस सूत्र में अपकृष्ट कर लेते हैं। [ अतः 'किमोऽद् वा' यह विकल्प फलित होता है। ] ॥ १२ ॥

सप्तम्यन्त किम् शब्द से विकल्प से 'ह' प्रत्यय होता है वेदविषय में। और यथाप्राप्त प्रत्यय भी होते हैं। उदा०—क्व, कुह। [कस्मिन्—इससे 'ह' प्रत्यय, प्रातिपदिक होने से सप्तमीलुक्, 'कु तिहोः' सूत्र से 'कु' आदेश—कुह।] कुत्रचिदस्य सा दूरे क्व ब्राह्मणस्य चावकाः। [ इस प्रकार वेद में कुह, क्व और कुत्र—तीन रूप होते हैं। ] ॥ १३ ॥

सप्तमी और पञ्चमी की अपेक्षा—इतरत्व = भिन्नता है। इतर = सप्तमी और पञ्चमी से भिन्न विभक्तियों ( विभक्त्यन्तों ) से भी तसिलादि प्रत्यय देखे जाते हैं। दृश् धातु का ग्रहण प्रायिक विधि के लिए है, इस कारण भवत् आदि शब्दों के योग में ही यह विधान किया जाता है।

वे भवत् आदि शब्द कौन से हैं ? भवान्, दीर्घायुः, आयुष्मान्, देवानां प्रियः। उदा०—स भवान् = ततो भवान्, तत्र भवान्। [यहाँ प्रथमान्त से प्रत्यय है।] तं भवन्तम् = ततो भवन्तम्, तत्र भवन्तम्। [ यहाँ द्वितीयान्त से प्रत्यय हैं। ]

**तत्र भवते। तस्माद्भवतः = ततो भवतः, तत्र भवतः। तस्य भवतः = ततो भवतः, तत्र भवतः। तस्मिन् भवति = ततो भवति, तत्र भवति। एवं दीर्घायुः प्रभृतिष्वप्युदाहार्यम् ॥**

## २१७६. सर्वैकान्यकिंयत्तदः काले दा ॥ १५ ॥ ( १९६४ )

**'सप्तम्याः' इति वर्तते, न तु 'इतराभ्यः' इति। सर्वादिभ्यः प्रातिपदिकेभ्यो दा प्रत्ययो भवति। त्रलोऽपवादः। सर्वस्मिन् काले सर्वदा। एकदा। अन्यदा। कदा। तदा।**

**काल इति किम्? सर्वत्र देशे ॥**

## २१७७. इदमो र्हिल् ॥ १६ ॥ ( १९६५ )

'सप्तम्याः' इत्येव। **'काले' इति च। इदमः सप्तम्यन्तात्काले वर्तमानाद् र्हिल् प्रत्ययो भवति।**

**न्यासः**

तद्विधानम्। यदि ह्यन्येभ्योऽपि तसिलादयो भवन्ति, पूर्वं पञ्चमीसप्तमीभ्यां विधानमनर्थकम्? नैतदस्ति; नियोगतो हि ताभ्यामिष्यते, इतराभ्यो भवदादियोगे। एतच्च पूर्वस्मिन् विधावस्मिंश्च सत्युभयं लभ्यत इति कुत आनर्थक्यम्! ॥ १४ ॥

**सर्वैकान्यकियत्तदः काले दा ॥ सप्तम्या इत्यनुवर्त्तत इति।** तस्याः स्वरितत्वात्। **न त्वितराभ्य इति।** तद्विपर्ययात्। **त्रलादेरपवाद इति।** यथासम्भवम्। तत्र किम्शब्दात् 'किमोऽत्' इति प्राप्तस्यात्प्रत्ययस्यापवादः। केषाञ्चिन्मतेन त्रलोऽपि। तच्छब्दादपि 'तयोर्दार्हिलौ च च्छन्दसि' इति। शेषेभ्यस्तु त्रलः। **कदेति।** किमः कादेशः ॥ १५ ॥

**इदमो र्हिल् ॥ हस्यापवाद इति।** 'इदमो हः' इति प्राप्तस्य। **लकारः स्वरार्थ इति।** 'लिति' प्रत्ययात्

**पदमञ्जरी**

**भवानित्यादि। अयं भवानिह भवानित्यादि** हस्योदाहरणम्, **को भवान्, क्व भवानित्यादि** अतः। **दीर्घायुःप्रभृतिष्विति।** 'नित्यं समासे' इति सत्वं न भवति; उत्तरपदस्थत्वात्। 'इसुसोः सामर्थ्ये' इति विकल्पोऽपि न भवति; व्यपेक्षायास्तत्राश्रयणात् ॥ १४ ॥

**सर्वैकान्यकियत्तदः काले दा ॥ सप्तम्या इति वर्तत इति।** स्वरितत्वात्। **न त्वितराभ्य इति।** विपर्ययात् ॥ १५ ॥

**इदमो र्हिल् ॥ लकारः स्वरार्थ इति।** यथा हीत इत्यत्र 'ऊडिदम्' इत्यादिना स्वरो भवति, तथेह **न**

**भावबोधिनी**

तेन भवता = तत्र भवता, ततो भवता। [ यहाँ तृतीयान्त से प्रत्यय हैं। ] तस्मै भवते = ततो भवते, तत्र भवते। [ यहाँ चतुर्थ्यन्त से प्रत्यय हैं। ] तस्माद् भवतः = ततो भवतः, तत्र भवतः। [ यहाँ पञ्चम्यन्त से प्रत्यय हैं। ] तस्य भवतः = ततो भवतः, तत्र भवतः। [ यहाँ षष्ठ्यन्त से प्रत्यय हैं। ] तस्मिन् भवति = ततो भवति, तत्र भवति। [ यहाँ सप्तम्यन्त से प्रत्यय हैं। ] इसी प्रकार स दीर्घायुः = ततो दीर्घायुः, तत्र दीर्घायुः आदि में भी उदाहरण देने चाहिए ॥ १४ ॥

'सप्तम्याः' इसकी अनुवृत्ति होती है, न कि 'इतराभ्यः' इसकी। सर्व, एक, अन्य, किम्, यत्, तत्—इन प्रातिपदिकों से काल अर्थ में दा प्रत्यय होता है। यह त्रल् का अपवाद है। उदा०—सर्वस्मिन् काले—इस अर्थ में—सर्वदा। [ सर्वस्मिन्+दा, प्रातिपदिकत्वात् सुप्लुक्, सर्व दा, अव्यय होने से विभक्तिलोप। सभी समय में ] एकदा। [ एक समय में ] अन्यदा [ दूसरे समय में ]। कदा [ किसी समय कस्मिन्+दा, प्रातिपदिकत्वात् सुब्लुक् 'किमः कः' सूत्र से 'क' आदेश ] तदा। [ तस्मिन् + दा, प्रातिपदिकत्वात् विभक्तिलुक्, त्यदाद्यत्व, पररूपत्व ]।

काल में—इसका क्या फल है? सर्वत्र देशे। [ यहाँ देश अर्थ में प्रत्यय नहीं होता है। ] ॥ १५ ॥

'सप्तम्याः' ( सप्तम्यन्त से ) इसकी अनुवृत्ति होती है और 'काले' ( काल अर्थ में ) इसकी भी। काल अर्थ में

ह्स्यापवादः। लकारः स्वरार्थः। अस्मिन् काले एतर्हि। काले इत्येव—इह देशे ॥

२१७८. अधुना ॥ १७ ॥ ( १९६६ )

'अधुना' इति निपात्यते। इदमोऽश्भावो धुना च प्रत्ययः। अस्मिन् काले अधुना ॥

२१७९. दानीं च ॥ १८ ॥ ( १९६७ )

इदमः सप्तम्यन्तात्काले वर्त्तमानाद्दानीं प्रत्ययो भवति। अस्मिन् काले इदानीम् ॥

२१८०. तदो दा च ॥ १९ ॥ ( १९६८ )

तदः सप्तम्यन्तात्काले वर्त्तमानाद् दा प्रत्ययो भवति, चकाराद्दानीं च। तस्मिन्काले तदा, तदानीम्। तदो दावचनमनर्थकम्; विहितत्वात् ॥

**न्यासः**

पूर्वस्योदात्तत्वं यथा स्यात्। ननु च यथा 'इत' इत्यत्र –'ऊडिदम्' इत्यादिना विभक्तिस्वरो भवति, तथेहापि तेनैव भवितव्यम्? नैतदस्ति; तथा हि युक्तमित इत्यत्र यद् विभक्तिस्वरो भवतीति; तसिलो लित्त्वस्य परितः, अभित इत्यत्र चरितार्थत्वात्, अस्य तु हिलो लित्करणमकृतार्थम्। तद् यदि विभक्तिस्वरेण बाध्येत तस्यानर्थक्यं स्यात्। तस्माल्लित्स्वर एव भवति ॥ १६ ॥

**अधुना** ॥ १७ ॥ **दानीञ्च**। दानीञ्चेति योगविभाग उत्तरार्थः—'तदो दा च' इत्यत्र दानीमेव यथा स्यात्, पूर्वसूत्रविहितः प्रत्ययो मा भूदिति ॥ १८ ॥

**तदो दा च** ॥ **अनर्थकमिति**। वैचित्र्यार्थम्। अनस्याभावादनर्थकं वैचित्र्येण सार्थकमेव। **विहितत्वादिति**।

**पदमञ्जरी**

भवति; लित्त्वस्याचरितार्थत्वात्। तसिलस्तु लित्त्वमिदमोऽन्यत्र चरितार्थम् ॥ १६ ॥

**अधुना** ॥ **इदमोऽश्भावो धुना च प्रत्यय इति**। तत्र 'ऊडिदम्' इत्यादिना विभक्तिस्वरः, स च 'आदेः परस्य' इत्यादेर्भवति। **भाष्ये** त्वधुनाप्रत्यय आश्रितः, तत्रेदम इशो यस्येतिलोपः, निपातनाच्च मध्योदात्तत्वम् ॥ १७ ॥ १८ ॥

**तदो दा च** ॥ **दावचनमिति**। अपर आह—'अदाप्रत्ययोऽयं न दाप्रत्ययः' इति, तत्राद्युदात्तत्वं पक्षे भवति ॥ १९ ॥

**भावबोधिनी**

वर्तमान सप्तम्यन्त 'इदम्' शब्द से 'हिल्' प्रत्यय होता है। यह ( "इदमो हः" सूत्र से प्राप्त ) 'ह' प्रत्यय का अपवाद है। लकार [ प्रत्यय से पूर्व का उदात्त ] स्वर करने के लिये है। उदा०—अस्मिन् काले—इस अर्थ में—एतर्हि। [ अस्मिन् इससे हिल् = हि प्रत्यय 'एतेतौ रथोः' सूत्र से 'एत' आदेश—एतर्हि। ] काल अर्थ में ही होता है—इह देशे। [ यहाँ देश अर्थ होने से हिल् न होकर 'ह' प्रत्यय होता है। ] ॥ १६ ॥

'अधुना' यह निपातित होता है। 'इदम्' का 'अश्' होता है और 'धुना' प्रत्यय होता है। उदा०—अस्मिन् काले—इस अर्थ में—अधुना। [ अस्मिन् + धुना, अश् = अ आदेश ] ॥ १७ ॥

काल अर्थ में वर्तमान सप्तम्यन्त 'इदम्' शब्द से 'दानीम्' प्रत्यय होता है। उदा०—अस्मिन् काले—इस अर्थ में—इदानीम्। [ अस्मिन् + दानीम् 'इदम इश्' सूत्र से इश् आदेश—इदानीम् ] ॥ १८ ॥

काल अर्थ में वर्तमान सप्तम्यन्त 'तद्' शब्द से 'दा' प्रत्यय होता है, 'च' के कारण 'दानीम्' भी होता है। उदा०—तस्मिन् काले—इस अर्थ में (१) तदा (२) तदानीम्। [ तस्मिन् + दा, प्रातिपदिक संज्ञा, विभक्तिलोप, तद् + दा, 'त्यदादीनामः' सूत्र से अत्व, पररूप—तदा। दानीम् होने पर—तदानीम् ]।

'तद्' से स्वतन्त्र 'दा' प्रत्यय करना अनर्थक है क्योंकि [ सर्वनाम होने से सामान्य सूत्र "सर्वैकान्यकियत्तदः काले

**२१८१. तयोर्दार्हिलौ चच्छन्दसि ॥ २० ॥ ( ३४९९ )**

**'तयोः' इति प्रातिपदिकनिर्देशः। तयोरिदमः तदश्च यथासंख्यं दा-र्हिलौ प्रत्ययौ भवतश्छन्दसि विषये। चकाराद्यथाप्राप्तं च। इदावत्सरीयः ( काठ० सं० १३.१५ )। इदं तर्हि। इदानीम्। तदानीम्॥**

**२१८२. अनद्यतने र्हिलन्यतरस्याम् ॥ २१ ॥ ( १९६९ )**

**'छन्दसि' इति न स्वर्यते, सामान्येन विधानम्। किंसर्वनामबहुभ्यः सप्तम्यन्तेभ्योऽनद्यतने कालविशेषे वर्त्तमानेभ्यो र्हिल् प्रत्ययो भवत्यन्यतरस्याम्। कर्हि, कदा। यर्हि, यदा। तर्हि, तदा॥**

**२१८३. सद्यः परुत्परार्यैषमः परेद्यव्यद्य-पूर्वेद्युरन्येद्युरन्यतरेद्युरितरेद्यु-रपरेद्युरधरेद्युरुभयेद्युरुत्तरेद्युः ॥ २२ ॥ ( १९७० )**

**'सप्तम्या.' इति, 'काले' इति च वर्त्तते। सद्यःप्रभृतयः शब्दा निपात्यन्ते। प्रकृतिः, प्रत्ययः, आदेशः, कालविशेष इति सर्वमेतन्निपातनाल्लभ्यते।**

**❀ समानस्य सभावो निपात्यते द्यश्च प्रत्ययः ❀ ( म० भा० ५.३.२२ वा० १ ), अहन्यभिधेये**

**न्यासः**

'सर्वैकान्य' इत्यादिना ॥ १९ ॥

**तयोर्दार्हिलौ च च्छन्दसि ॥** इदा। 'इदम इश्'। तथा वर्णव्यत्ययेन दकारस्य धकारः। **इदानीं तदानीमिति**। दानीम्प्रत्ययस्योदाहरणम् ॥ २० ॥

**अनद्यतने र्हिलन्यतरस्याम् ॥** तसिलादिषु प्राप्तेषु र्हिलप्रत्ययो विधीयते। **कर्हीति**। 'किमः कः'। **कदा, यदा, तदेति**। 'सर्वैकान्यकिंयत्तदः काले दा' ॥ २१ ॥

**सद्यः परुत्परार्य्यैषमः परेद्यव्यद्य पूर्वेद्युरन्येद्युरन्यतरेद्युरितरेद्युरपरेद्युरधरेद्युरुभयेद्युरुत्तरेद्युः ॥ समानेऽहनि सद्य इति**। निमित्तनिमित्तिनोः समाने साधारणेऽहनि निपातनमेतत्। तद्यथा—सद्यः प्राणहरणं मर्मणि ताडनमिति।

**पदमञ्जरी**

**तयोर्दार्हिलौ चच्छन्दसि ॥** तयोरिति प्रातिपदिकनिर्देशः, व्यत्ययेन पञ्चम्याः स्थाने षष्ठी ॥ २० ॥ २१ ॥

**सद्यः परुत्परार्यैषमः परेद्यव्यद्य पूर्वेद्युरन्येद्युरन्यतरेद्युरितरेद्युरपरेद्युरधरेद्युरुभयेद्युरुत्तरेद्युः ॥ अहन्यभिधेय**

**भावबोधिनी**

दा'' ५।३।१५ से दा ] किया जा चुका है ॥ १९ ॥

'तयोः' यह प्रातिपदिकों का निर्देश हैं। तयोः=उन=इदम् और तद् शब्दों से क्रमशः 'दा' और 'र्हिल्' प्रत्यय वेदविषय में होते हैं। और 'च' के कारण यथाप्राप्त प्रत्यय भी होते हैं। उदा०—इदा वत्सरीयः। [ अस्मिन् काले इस अर्थ में इदम्+दा, इदम् का इश् आदेश—इदा। ] इदं तर्हि। [ तस्मिन् इस अर्थ में तस्मिन्+र्हिल् विभक्तिलोप, त्यदाद्यत्व, पररूप—तर्हि ] पक्ष में यथाप्राप्त प्रत्यय होने पर—इदानीम्, तदानीम् ॥ २० ॥

'छन्दसि' ( वेदविषय में ) इसमें स्वरितत्व नहीं है, अतः यह सामान्यविधान है। सप्तम्यन्त किम्, सर्वनाम और बहु शब्द जो अनद्यतन कालविशेष अर्थ में वर्तमान हैं, उसके वाचक हैं, उनसे र्हिल् प्रत्यय विकल्प से होता है। उदा०—कर्हि कदा। [ कस्मिन् काले – इस अर्थ में र्हिल् प्रत्यय, 'किमः कः' सूत्र से किम् का 'क' आदेश होता है। पक्ष में 'दा' होने पर भी 'क' आदेश होता है। ] यर्हि, यदा। [ यस्मिन् काले—इस अर्थ में र्हिल् प्रत्यय, त्यदाद्यत्व, पररूप करने पर—यर्हि। पक्ष में 'दा' होने पर—यदा। ] तर्हि, तदा। [ तस्मिन् काले—इस अर्थ में 'र्हिल्', त्यदाद्यत्व पररूप होने पर—तर्हि। पक्ष में 'दा' होने पर—तदा ] ॥ २१ ॥

'सप्तम्याः' ( सप्तम्यन्त से ) और 'काले' ( काल अर्थ में विद्यमान से ) इनकी अनुवृत्ति होती है। 'सद्यः' आदि शब्द निपातित होते हैं। प्रकृति, प्रत्यय, आदेश, कालविशेष—यह सब कुछ निपातन से प्राप्त होता है। उदा०—

( म० भा० )। समानेऽहनि सद्यः।

❀ पूर्वपूर्वतरयोः परभावो निपात्यते, उदारी च प्रत्ययौ, संवत्सरेऽभिधेये ( म० भा० वा० २ )। पूर्वस्मिन्संवत्सरे परुत्। पूर्वतरे संवत्सरे परारि ( म० भा० )।

❀ इदम इश्भावः, समसण् प्रत्ययो निपात्यते संवत्सरेऽभिधेये ( म० भा० वा० ३ )। अस्मिन्संवत्सरे ऐषमः ( म० भा० )।

❀ परस्मादेद्यविः प्रत्ययोऽहनि ❀ ( म० भा० वा० ४ )। परस्मिन्नहनि परेद्यवि।

❀ इदमोऽश्भावो द्यश्च ( म० भा० वा० ५ ) प्रत्ययोऽहनि ( म० भा० )। अस्मिन्नहनि अद्य।

❀ पूर्वान्यान्यतरेतरापराधरोभयोत्तरेभ्य एद्युस्-प्रत्ययो निपात्यतेऽहन्यभिधेये ( म० भा० वा० ६ )। पूर्वस्मिन्नहनि पूर्वेद्युः। अन्यस्मिन्नहनि अन्येद्युः। अन्यतरस्मिन्नहनि अन्यतरेद्युः। इतरस्मिन्नहनि इतरेद्युः। अपरस्मिन्नहनि अपरेद्युः। अधरस्मिन्नहनि अधरेद्युः। उभयोरह्नोः उभयेद्युः। उत्तरस्मिन्नहनि उत्तरेद्युः।

❀ द्युश्चोभयाद्वक्तव्यः ❀ ( म० भा० वा० ७ )। उभयद्युः॥

### न्यासः

यस्मिन्नेवाहनि मर्मणि ताडनं तस्मिन्नेवाहनि प्राणहरणमित्यर्थः।

**उदारी चेति**। उच्च आरिश्चेति उदारी।

**परस्मादेद्यवीति**। परशब्दादेद्यविप्रत्ययो भवत्यहन्यभिधेये॥ २२॥

### पदमञ्जरी

**इति**। सप्तम्यन्तस्याहन्शब्दस्यार्थ इत्यर्थः। तद्दर्शयति-**समानेऽह्नि सद्य इति**। एवं **संवत्सरेऽभिधेय** इत्यादिष्वपि द्रष्टव्यम्।

**उभयोरह्नोरुभयेद्युरिति** पाठः। प्रायेण तु **उभयस्मिन्नहनीति** पठ्यते, तत्रोभे अहनी अवयवौ यस्य समुदायस्य तदहर्द्वयमुभयमहरित्युक्तम्॥ २२॥

### भावबोधिनी

(१) सद्यः। अहन् ( दिन ) अभिधेय रहने पर समान का 'स' होता है और 'द्यस्' प्रत्यय होता है। समाने अहनि—इस अर्थ में सद्यः [ समान = स + द्यस्, स् का रुत्व विसर्ग। समान = उसी दिन में ]

संवत्सर अभिधेय रहने पर पूर्व और पूर्वतर का 'पर' आदेश निपातित होता है और क्रमशः 'उत्' तथा 'आरि' प्रत्यय होते हैं। उदा०—(२) पूर्वस्मिन् संवत्सरे—इस अर्थ में—परुत्। [ पूर्वस्मिन् + उत्, 'पर' आदेश, भसंज्ञा, अलोप—पर् + उत् = परुत्। ] (३) पूर्वतरे संवत्सरे—इस अर्थ में—परारि। [ पूर्वतरे + आरि, पूर्वतर का 'पर' आदेश पर + आरि = परारि ] (४) इदम् का इश् = इ आदेश और समसण् प्रत्यय निपातित होते हैं यदि संवत्सर अभिधेय हो। अस्मिन् संवत्सरे—इस अर्थ में—ऐषमः। [ अस्मिन् + समसण् = समस्, इदम् का इश् = इ आदेश, वृद्धि, षत्व—ऐषमस्, स् का रुत्व विसर्ग ] (५) अहन् अभिधेय रहने पर 'पर' शब्द से 'एद्यवि' प्रत्यय होता है। परस्मिन् अहनि—इस अर्थ में परेद्यवि। [ परस्मिन् + एद्यवि, प्राति० संज्ञा, विभक्तिलोप, भसंज्ञा, अलोप पर् + एद्यवि = परेद्यवि ] (६) अहन् अभिधेय रहने पर इदम् का 'अश्' होता है और 'द्य' प्रत्यय होता है। अस्मिन् अहनि—इस अर्थ में—अद्य। [ अस्मिन् + द्य, प्रातिपदिकसंज्ञा, विभक्तिलोप, इदम् का अश् आदेश = अद्य। ] ( ७–१४ ) पूर्व, अन्य, अन्यतर, इतर, अपर, अधर, उभय, उत्तर—इनसे 'एद्युस्' प्रत्यय निपातित होता है अहन् के अभिधेय रहने पर। (७) पूर्वस्मिन् अहनि – इस अर्थ में—पूर्वेद्युः। [ पूर्वस्मिन् + एद्युस् विभक्तिलोप, भसंज्ञा अलोप, पूर्व + एद्युस्, स् का रुत्वविसर्ग। ] (८) अन्यस्मिन् अहनि—इस अर्थ में अन्येद्युः। (९) अन्यतरस्मिन् अहनि—इस अर्थ में—अन्यतरेद्युः। (१०) इतरस्मिन् अहनि—इस अर्थ में —इतरेद्युः। (११) अपरस्मिन् अहनि—इस अर्थ में—अपरेद्युः। (१२) अधरस्मिन् अहनि—इस अर्थ में—अधरेद्युः। (१३) उभयोः अह्नोः—इस अर्थ में उभयेद्युः। (१४) उत्तरस्मिन् अहनि—इस अर्थ में—उत्तरेद्युः।

**२१८४. प्रकारवचने थाल् ॥ २३ ॥ ( १९७१ )**

**'किंसर्वनामबहुभ्योऽद्व्यादिभ्यः' ( ५.३.२ ) इति वर्त्तते। 'सप्तम्याः' इति, 'काले' इति च निवृत्तम्। सामान्यस्य भेदको विशेषः = प्रकारः। प्रकृत्यर्थविशेषणं चैतत्। प्रकारवृत्तिभ्यः किंसर्वनामबहुभ्यः स्वार्थे थाल् प्रत्ययो भवति। तेन प्रकारेण तथा। यथा। सर्वथा।**

**जातीयरोऽपीदृशमेव लक्षणम्, स तु स्वभावात्प्रकारवति वर्त्तते। थाल्पुनः प्रकारमात्रे॥**

**२१८५. इदमस्थमुः ॥ २४ ॥ ( १९७२ )**

**इदम्-शब्दात्प्रकारवचने थमुः प्रत्ययो भवति। थालोऽपवादः। अनेन प्रकारेण इत्थम्। उकारो मकारपरित्राणार्थः॥**

**न्यासः**

**प्रकारवचने थाल्॥ सामान्यस्य भेदको विशेषः प्रकार इति।** यथा ब्राह्मण इति सामान्यम्, तस्य विशेषा माठरादयः प्रकारा इति।

**ईदृशमेव लक्षणमिति।** तत् पुनः 'प्रकारवचने जातीयर्' इत्येतत्। **स तु स्वभावादित्यादिना** तुल्य-लक्षणविहितयोर्विशेषं दर्शयति। अत एव विषयभेदाद् विशेषविहितेनापि थाला सामान्यविहितो जातीयर्न

**पदमञ्जरी**

**प्रकारवचने थाल्॥ सामान्यस्य भेदको विशेषः प्रकार इति।** यथा ब्राह्मणसामान्यस्य माठरादयः। अनेनैतद्दर्शयति—यद्यपि सादृश्यमपि प्रकारः, यथा 'प्रकारे गुणवचनस्य' इत्यत्र वक्ष्यति—'प्रकारो भेदः सादृश्यं च, तदिह सादृश्यं प्रकारो गृह्यते' इति; तथापि नेह सादृश्यं गृह्यते, अनभिधानादिति। **तेन प्रकारेण तथेति।** प्रथमान्तात्तु न भवति—स प्रकारस्तथेति; अनभिधानादेवेति भावः।

किंसर्वनामबहुभ्यो विशेषविहितेन थाला सामान्यविहितस्य जातीयरो बाधप्रसङ्ग इत्याशङ्क्याऽऽह—**जातीयरोऽपीति।** सत्यं जातीयरोऽपीदृशमेव लक्षणं 'प्रकारवचने जातीयर्' इति, कथं तर्ह्यबाधः? अत आह—**स त्विति।** अर्थभेदाद् भेद इत्यर्थः। एवं च कृत्वा प्रकारमात्रे थालं विधाय तदन्तात्प्रकारवति जातीयरं प्रयुङ्क्ते-

**भावबोधिनी**

❀ उभय शब्द से 'द्युस्' प्रत्यय भी कहना चाहिए। ❀ उभयोः अह्नोः—इस अर्थ में—उभयद्युः।

[ सद्यः = उसी दिन, तत्काल। परुत् = पिछले वर्ष। परारि = पिछले से पिछले अर्थात् दो वर्ष पहले। ऐषमः = इस वर्ष। परेद्यवि = दूसरे दिन। अद्य = आज। पूर्वेद्युः = पहले दिन। अन्येद्युः = दूसरे दिन। अन्यतरेद्युः = किसी दूसरे दिन। उतरेद्युः = अन्य किसी दिन। अपरेद्युः = अन्य किसी दिन। अधरेद्युः = अन्य दिन। उभयेद्युः = दो दिनों में। उत्तरेद्युः = बाद के दिन। उभयद्युः = दो दिनों में। सर्वत्र सप्तम्यर्थ की प्रतीति होती है। ] ॥ २२ ॥

'किंसर्वनामबहुभ्योऽद्व्यादिभ्यः' ५।३।२ की अनुवृत्ति होती है। 'सप्तम्याः' और 'काले इनकी निवृत्ति हो जाती है। सामान्य का भेदक विशेष = प्रकार होता है। [ जैसे—ब्राह्मण यह सामान्य है। देवदत्त या कान्यकुब्ज यह प्रकार है। ] यह ( प्रकार ) प्रकृत्यर्थ में विशेषण होता है। प्रकारवाची किं, सर्वनाम और बहु—इन शब्दों से 'थाल्' प्रत्यय होता है। उदा०—तेन प्रकारेण—इस अर्थ में—तथा। येन प्रकारेण = यथा। सर्वप्रकारैः = सर्वथा। [ तेन प्रकारेण—इस अर्थ में थाल्, तेन + थाल्, प्रातिपदिकत्वात् विभक्तिलोप, त्यदाद्यत्व, पररूपत्व करने पर 'तथा' रूप बनता है। ]

जातीयर् प्रत्यय का भी यही लक्षण है। परन्तु वह स्वाभाविक रूप से प्रकारवान् = विशिष्ट अर्थ में प्रयुक्त होता है, 'थाल्' केवल विशेषण अर्थ में। [ यही थाल् और जातीयर् प्रत्ययों के अर्थों में भेद है। ] ॥ २३ ॥

प्रकारवचन में [ विद्यमान ] 'इदम्' शब्द से 'थमु' प्रत्यय होता है। यह थाल् का अपवाद है। उदा०—अनेन प्रकारेण—इस अर्थ में—इत्थम्। [ इदम् थमु, उकार की इत्संज्ञा लोप, 'एतेतौ रथोः' ५।३।४, इससे इदम् का 'इत्' आदेश

**२१८६. किमश्च ॥ २५ ॥ ( १९७३ )**

**किंशब्दात् प्रकारवचने थमुः प्रत्ययो भवति[1] । केन प्रकारेण कथम् । योगविभाग उत्तरार्थः ॥**

**२१८७. था हेतौ चच्छन्दसि ॥ २६ ॥ ( ३५०० )**

**किंशब्दाद्धेतौ वर्तमानात्था प्रत्ययो भवति, चकारात्प्रकारवचने छन्दसि विषये । हेतौ तावत्—'कथा ग्रामं न पृच्छसि' ( ऋ० १०.१४६.१ ) । केन हेतुना न पृच्छसीत्यर्थः । प्रकारवचने—कथा देवा आसन्पुराविदः ।**

**विभक्तिसंज्ञायाः पूर्णोऽवधिः ॥**

**२१८८. दिक्शब्देभ्यः सप्तमीपञ्चमीप्रथमाभ्यो दिग्देशकालेष्वस्तातिः ॥ २७ ॥ ( १९७४ )**

**दिशां शब्दाः दिक्शब्दाः, तेभ्यो दिक्शब्देभ्यो दिग्देशकालेषु वर्तमानेभ्यः सप्तमीपञ्चमीप्रथमान्तेभ्यो-**

**न्यासः**

बाध्यते । तेन किञ्जातीयः इत्यादि सिद्धं भवति ॥ २३ ॥ **इदमस्थमुः** ॥ २४ ॥

**किमश्च** ॥ **योगविभाग उत्तरार्थ इति** । '**था हेतौ च**' इति वक्ष्यति, स किम एव यथा स्यात्, इदमो मा भूदिति ॥ २५ ॥

**था हेतौ च च्छन्दसि** ॥ २६ ॥ **दिक्शब्देभ्यः सप्तमीपञ्चमीप्रथमाभ्यो दिग्देशकालेष्वस्तातिः** ॥ **दिग्देशकालेषु वर्त्तमानेभ्य इति** । कथं पुनर्ये दिशांशब्दास्ते देशे काले वर्त्तन्ते ? स्वभावात् । यथैव हि ते दिशि

**पदमञ्जरी**

तथाजातीयः, यथाजातीय इति ॥ २३ ॥ २४ ॥

**किमश्च** ॥ **योगविभाग** उत्तरत्र किम एवानुवृत्तिर्यथा स्यादिदमो मा भूदिति ॥ २५ ॥ २६ ॥

**दिक्शब्देभ्यः सप्तमीपञ्चमीप्रथमाभ्यो दिग्देशकालेष्वस्तातिः** ॥ दिशां शब्दाः दिक्शब्दाः, षष्ठीसमासः । **दिशां ये वाचकास्ते दिक्शब्दा इति**[2] । दिशां ये वाचकत्वेन दृष्टाः, त इह दिक्शब्दा विवक्षिता इति, न तु दिशम-

**भावबोधिनी**

इत् थम् ] उकार अनुबन्ध 'म्' का लोप रोकने के लिये है । [ यद्यपि प्रत्यय की विभक्ति संज्ञा हो जाने से ही 'न विभक्तौ तुस्माः' सूत्र से 'म्' की इत्संज्ञा वारित हो सकती है तथापि इस सूत्र की अनित्यता ज्ञापित करने के लिये 'उ' अनुबन्ध है । ] ॥ २४ ॥

प्रकारवचन अर्थ में विद्यमान किम् शब्द से 'थमु' प्रत्यय होता है । उदा०—केन प्रकारेण—इस अर्थ में—कथम् । [ किम् + थमु = थम्, 'किमः कः' ७।२।१०३ सूत्र से किम् का 'क' आदेश ] [ दोनों को एक सूत्र में न रख कर ] योगविभाग करना अग्रिम सूत्र में अनुवृत्ति के लिए है ॥ २५ ॥

हेतु अर्थ में वर्तमान किम् शब्द से 'था' प्रत्यय होता है और च के कारण प्रकारवचन में भी, वेदविषय में, अर्थात् वेद में दो अर्थों में था प्रत्यय होता है । उदा०—हेतु अर्थ में— कथा ग्रामं न पृच्छसि । केन हेतुना न पृच्छसि ( किस हेतु से गाँव नहीं पूछ रहे हो ?—) यह अर्थ है । [ किम् + था, 'क' आदेश ] प्रकारवचन में उदा०—कथा देवा आसन् पुराविदः । [ केन प्रकारेण—इस अर्थ में भी 'था' प्रत्यय, 'क' आदेश ]

यहाँ विभक्ति संज्ञा की सीमा समाप्त हो जाती है ॥ २६ ॥

दिशाओं के [ वाचक जो ] शब्द हैं वे दिक्शब्द हैं, दिशा, देश ( स्थान ) और काल अर्थों में वर्तमान, सप्तम्यन्त, पञ्चम्यन्त और प्रथमान्त उन दिक्शब्दों से स्वार्थ में 'अस्ताति' प्रत्यय होता है । यहाँ [ दिक्, देश, काल और सप्तमी,

१. 'थालोऽपवादः'—इत्यधिकं पुस्तकान्तरे ।

२. किन्तु काशिकायां नास्तीदं वाक्यम् ।

**ऽस्तातिः प्रत्ययो भवति स्वार्थे ।**

**यथासंख्यमत्र नेष्यते । पुरस्ताद्वसति, पुरस्तादागतः, पुरस्ताद्रमणीयम् । अधस्ताद् वसति अधस्तादागतः, अधस्ताद्रमणीयम् ।**

**दिक्शब्देभ्य इति किम् ? ऐन्द्रयां दिशि वसति । सप्तमीपञ्चमीप्रथमाभ्य इति किम् ? पूर्वं ग्रामं गतः ।**

**न्यासः**

स्वभावादेव वर्त्तन्ते, न हेत्वन्तरात्; तथा देशकालयोरपि । यद्येवम्, त्रिषु वर्तमानाः कथं दिशा व्यपदिश्यन्ते—दिक्शब्देभ्य इति ? कथं तर्हि व्यपदेष्टव्यम्, दिग्देशकालशब्देभ्य इति ? नैतदस्ति; एवं हि व्यपदेशस्यैतत् फलम् -ऐन्द्रयां दिशि निवसतीत्यत्र मा भूदिति । एतच्चान्यतमेनापि लभ्यत इत्यनेनैव व्यपदेशो युक्तः, येन व्यपदेशाल्लघु सूत्रं भवति । दिशा च व्यपदेशे लघु भवति, दिक्शब्दस्याल्पाच्तरत्वादिति दिशां तेन व्यपदेशः । एवमपि दिक्शब्दस्य दिशि वृत्तेः विशेषणमयुक्तम्, अवश्यं हि दिक्शब्दो दिशि वर्त्तते, तत्रैवं कर्त्तव्यम्—देशकालयोरिति ? नैतदस्ति; एवं ह्युच्यमाने सत्युपलक्षणमेव हि दिक्शब्दः स्यात्, प्रत्ययस्तु देशकालवृत्तिभ्य एव स्यात्, न दिग्वृत्तिभ्यः । दिग्ग्रहणे तु तेभ्योऽपि भवति ।

इह तिस्रो विभक्तयः, त्रयश्चार्था दिगादयः, तत्र साम्याद् यथासंख्येन भवितव्यम्—इति कस्यचिद् भ्रान्तिः स्यात्, अतस्तामपाकर्तुमाह—**यथासंख्यमत्र नेष्यत इति** । तत् कथमिहैकवचननिर्देशे कर्त्तव्ये वहुवचननिर्द्देशः ? प्रत्येकं दिगादिवृत्तेर्बहुलविभक्त्यन्तात् प्रत्ययः कर्त्तव्य इति सूचनार्थः । एवञ्चायं बहुलविभक्त्यन्तात् प्रत्ययः कृतो भवति, यदि दिग्वृत्तेरपि सप्तमीपञ्चमीप्रथमान्तादेव भवति—देशवृत्तेरपि, कालवृत्तेरपि । अथ वा—'था हैतौ च' इत्यतश्चकारोऽनुवर्तते, स च श्रुतिमेव समुच्चिनोति । तेन दिगादिवृत्तेः प्रत्येकं सप्तमीपञ्चमीप्रथमान्तात् प्रत्ययो भवति, न यथासंख्यम् । यथासंख्यं हि समुच्चयो विरुध्येत । अथ वा—'स्वरितत्वे सति यथासंख्यं भवति' इत्युक्तम्, न चेह यथासंख्यार्थं स्वरितत्वं प्रतिज्ञायते, तेन यथासंख्यं न भविष्यति ।

**पदमञ्जरी**

भिदधाना एवेत्यर्थः । **तेभ्य इति** । यद्यपि पूर्वादिशब्दा दिशि वर्तमानाष्टाबन्ताः, देशकालयोस्तु प्रकृत्यन्ता इति रूपभेदः, तथापि टापः स्वार्थिकत्वाद्वाचकरूपे भेदाभावात् त एव दिक्शब्दा देशकालयोर्वर्त्तन्त इति वाचोयुक्तेर्नास्ति विरोधः । ये त्वर्थभेदं मन्यन्ते, तेषां सादृश्यनिबन्धनस्तेभ्य इति व्यपदेशः । कथं पुनर्दिक्शब्दा देशकालयोर्वर्त्तन्ते ? स्वभावात् । पूर्वादयो हि दिशामिव देशकालयोरपि स्वभावादेव वाचकाः । कथं तर्हि त्रिषु वर्त्तमाना दिशैकया व्यपदिश्यन्ते-दिक्शब्देभ्य इति ? को दोषः; अन्वयेन ह्ययं व्यपदेशः न तु दिशामेव ये शब्दाः-इत्यवधारणेन ।

अथ देशकालयोरन्यतरेण कस्मान्न व्यपदिश्यन्ते ? शिंशपाचोद्यमेतत् । किं च, दिशां निर्द्देशे लाघवं भवति । दिक्शब्दस्योपलक्षणत्वात्पुनर्दिग्ग्रहणम्, अन्यथा देशकालवृत्तिभ्य एव स्यात्, न दिग्वृत्तिभ्यः । इह सप्तम्यादीनां विभक्तीनामार्थानां दिगादीनां च साम्यात्संख्यातानुदेशः स्यादिति ? तत्राह—**यथासंख्यमत्र नेष्यत इति** ।

**भावबोधिनी**

पञ्चमी, प्रथमा ] इनमें **यथासंख्य** इष्ट नहीं है । [ अतः शब्दों से सभी अर्थों में प्रत्यय होता है । ] उदा०—**पुरस्ताद् वसति, पुरस्ताद् आगतः, पुरस्ताद् रमणीयम्** । [ पूर्वस्मिन् पूर्वस्मात्, पूर्वम्—इन सप्तम्यन्त, पञ्चम्यन्त और प्रथमान्त से अस्ताति प्रत्यय करने पर प्रातिपदिकसंज्ञा, विभक्तिलोप करने पर 'अस्ताति च' ५।३।४० सूत्र से 'पूर्व' का 'पुर्' आदेश—पुर् + अस्तात् = पुरस्तात् । पूर्व में, पूर्व से, पूर्व—ये अर्थ में । ] अधस्ताद् वसति, अधस्ताद् आगतः, अधस्ताद् रमणीयम् । [ यहाँ सप्तम्यन्त, पञ्चम्यन्त, प्रथमान्त अधर शब्द से 'अस्ताति' प्रत्यय करने पर 'अस्ताति च' सूत्र से 'अधर' का अध् आदेश करने पर रूप बनता है । ]

दिक् शब्दों से—इसका क्या फल है ? ऐन्द्रयां दिशि वसति । [ 'ऐन्द्री' यह इन्द्रसम्बन्धी वस्तुमात्र का वाचक है, केवल दिशाविशेष का वाचक नहीं है । अतः इससे प्रत्यय नहीं होता है । ] सप्तम्यन्त, पञ्चम्यन्त और प्रथमान्त—इन्हीं

दिग्देशकालेष्विति किम् ? पूर्वस्मिन्गुरौ वसति ।

इकारस्तकारपरित्राणार्थः ॥

## २१८९. दक्षिणोत्तराभ्यामतसुच् ॥ २८ ॥ ( १९७८ )

दक्षिणोत्तराभ्यां दिग्देशकालेषु वर्तमानाभ्यां सप्तमीपञ्चमीप्रथमान्ताभ्यां स्वार्थेऽतसुच् प्रत्ययो भवति । अस्तातेरपवादः । दक्षिणाशब्दः काले न सम्भवतीति दिग्देशवृत्तिः परिगृह्यते । दक्षिणतो वसति, दक्षिणत

### न्यासः

**पुरस्तादधस्तादिति** । पूर्वाधरशब्दाभ्यामस्तातिः । 'अस्ताति च' इति वक्ष्यमाणेन यथासंख्यं पुर्, अध्— इत्येतौ पूर्वाधरशब्दयोरादेशौ ।

**ऐन्द्र्यां दिशि वसतीति** । ऐन्द्रीशब्दः सामान्येनेन्द्रसम्बन्धिवस्तुमात्रमाचष्टे, दिक्शब्दसन्निधौ तु दिशि वर्तते, तेन दिक्शब्द इति लोके न प्रसिद्ध इति न भवत्यतः प्रत्ययः । **पूर्वं ग्रामं गत इति** । पूर्वशब्दोऽत्र ग्रामस्य देशात्मकत्वाद् देशे वर्तते, न त्वत्र सप्तम्यादिविभक्त्यन्तः, किं तु द्वितीयान्तः । **पूर्वस्मिन् गुरौ वसतीति** । पूर्वशब्दोऽत्र दिगाद्युपलक्षिते गुरौ वर्त्तते, न दिगादिषु ॥ २७ ॥

**दक्षिणोत्तराभ्यामतसुच् ॥ अकारो विशेषणार्थ इति** । यद्यत्राकारो न क्रियते, तदा 'षष्ठी तसर्थप्रत्ययेन' इति सूत्रं कर्त्तव्यम्, एवञ्च सति तसिलोऽपि ग्रहणं स्यात् । ततश्च ततो हेतुनेत्यत्रापि तृतीयां बाधित्वा षष्ठी स्यात् । तस्मादकारो विशेषणार्थः कर्तव्यः । अथ यदा दक्षिणोत्तरशब्दौ दिशि वर्तेते, तदा टाप्श्रवणं मा

### पदमञ्जरी

अस्वरितत्वात् । **पुरस्ताद्, अधस्तादिति** । पूर्वाधरशब्दयो 'अस्ताति' इति पुर, अध्—इत्येतावादेशौ । **ऐन्द्र्यां दिशि वसतीति** । ऐन्द्रीशब्दोऽयम् इन्द्रसंबन्धिस्त्रीलिङ्गवस्तुमात्रमाह, दिक्शब्दसन्निधौ तु दिशि वर्त्तते इति न दिक्शब्दः । किञ्च, दिक्शब्देभ्य इत्येतस्मिन्नसति ये देशवाचिनः पञ्चालादयः, ये च कालवाचिनो मासादयः, तेभ्योऽपि प्रसङ्गः । अस्मिंस्तु सति दिक्शब्दाः एव ये देशकालयोर्वर्तन्ते तेभ्य एव भवति । **दिग्देशकालेष्विति किमिति** । 'दिक्शब्देभ्यः' इतिशब्दग्रहणाद्दिशि दृष्टः शब्दो दिक्शब्द इति व्युत्पत्त्या देशकालवृत्तिभ्योऽपि सिद्धः प्रत्ययः 'दिक्शब्दाञ्चूत्तरपद' इति पञ्चमीवदिति मत्वा प्रश्नः । **पूर्वस्मिन्गुराविति** । पूर्वशब्दोऽत्र दिगादिसम्बन्धाद्गुरौ वर्त्तते, न दिगादिषु ॥ २७ ॥

**दक्षिणोत्तराभ्यामतसुच्** ॥ किमर्थमतसुजुच्यते, न तसुजेवोच्येत, तत्रायमप्यर्थः–स्वरार्थश्चकारो न कर्त्तव्यो भवति, प्रत्ययस्वरेणैव सिद्धम्, का रूपसिद्धिः ? दक्षिणोत्तरशब्दावकारान्तौ । तदा तर्हि दिशि वर्त्तमानौ टाबन्तौ भवतस्तदा यस्येतिलोपेन टापो निवृत्तिर्यथा स्यादित्येवमर्थोऽकारः, सिद्धाऽत्र टापो निवृत्तिः, कथम् ? 'तसिलादिष्वाकृत्वसुचः' इति पुंवद्भावात् । ननु च समानायामाकृतौ भषितपुंस्कस्य तेन पुंवद्भावः, आकृत्यन्तरे चैतौ भाषितपुंस्कौ, कथम् ? दिशि वर्त्तमानाः पूर्वादयो निमित्तान्तरनिरपेक्षाः, देशकालयोस्तु व्यवस्थापेक्षाः । कथं

### भावबोधिनी

से होता है—इसका क्या फल है ? पूर्वं ग्रामं गतः । [ यहाँ द्वितीयान्त है । अतः प्रत्यय नहीं होता है । ] दिशा, देश और काल में—इनका क्या फल है ? पूर्वस्मिन् गुरौ वसति । [ यहाँ प्रस्तुत तीन अर्थों में कोई भी नहीं है । अतः प्रत्यय नहीं होता है । ]

[ अस्ताति में ] तकार का लोप रोकने के लिए इकार [ अनुबन्ध ] है ॥ २७ ॥

दिशा, देश और काल अर्थों में वर्तमान, सप्तम्यन्त, पञ्चम्यन्त, प्रथमान्त दक्षिणा और उत्तरा शब्दों से स्वार्थ में 'अतसुच् प्रत्यय होता है । यह अस्ताति का अपवाद है । दक्षिणा शब्द काल अर्थ में संभव नहीं है इसलिए दिशा और देश अर्थों वाला लिया जाता है । उदा०—दक्षिणतो वसति, दक्षिणत आगतः, दक्षिणतः रमणीयम् । [ दक्षिणस्याम्,

**आगतः, दक्षिणतो रमणीयम् । उत्तरतो वसति, उत्तरत आगतः, उत्तरतो रमणीयम् ।**

**अकारो विशेषणार्थः—'षष्ठ्यतसर्थप्रत्ययेन' ( २.३.३० ) इति ।**

## २१९०. विभाषा परावराभ्याम् ॥ २९ ॥ ( १९७९ )

**परावरशब्दाभ्यां विभाषाऽतसुच्प्रत्ययो भवति अस्तातेरर्थे । परतो वसति, परत आगतः, परतो रमणीयम् । परस्ताद्वसति, परस्तादागतः, परस्ताद्रमणीयम् । अवरतो वसति, अवरत आगतः, अवरतो रमणीयम् । अवरताद्वसति, अवरतादागतः, अवरताद्रमणीयम् ॥**

### न्यासः

भूदित्येवमर्थोऽकारः कस्मान्न भवति ? 'सर्वनाम्नो वृत्तिमात्रे पुंवद्भावः' इति पुंवद्वचनेनैव टापो निर्वर्त्तितत्वात् । ननु चासत्यकारे प्रत्ययस्वरेण सिद्धत्वाच् चकारोऽपि नैव कर्तव्यः, तत्र 'एकानुबन्धकग्रहणे तु न द्व्यनुबन्धकस्य' इति तसिलो ग्रहणं न भविष्यति ? एवमपि 'प्रतियोगे पञ्चम्यास्तसिः', 'तेनैकदिक्', 'तसिश्च' इत्यन्यतरग्रहणं स्यात् । तस्माद् विशेषणार्थश्चकारः कर्तव्यः ॥ २८ ॥ **विभाषा परावराभ्याम् ॥ २९ ॥**

### पदमञ्जरी

तर्हि दिशि वर्तमानानां सर्वनामसंज्ञा भवति, यावता व्यवस्थायामित्युच्यते ? अत्राहुः—यद्यपि दिशि वर्तमानानां व्यवस्था न प्रवृत्तिनिमित्तम्, वस्तुतस्तु व्यवस्था विद्यते इति भवत्येव संज्ञा । व्यवस्थायामिति हि विषयी निर्दिश्यते, न तु प्रवृत्तिनिमित्तम् । तथा चोत्तराः कुरव इत्यत्र निरूढत्वाद्व्यवहारस्य प्रयोक्तृभिरनपेक्ष्यमाणाया अपि वस्तुतो व्यवस्थायाः सद्भावात्सर्वनामसंज्ञाप्रसङ्गेऽसंज्ञायामिति प्रतिषेधः कृत इति । तदेवमाकृतिभेदात्तसिलादिष्वति पुंवद्भावो न सिद्ध्यति । एवं तर्हि 'सर्वनाम्नो वृत्तिमात्रे पुंवद्भावः' ( कात्या० वा० १३७६ ) इति पुंवद्भावो भविष्यति, यथा दक्षिणोत्तरपूर्वाणामित्यत्र, तस्मान्नार्थोऽकारकरणेन ? इत्यत आह—**अकारो विशेषणार्थ इति ।** 'षष्ठी तसर्थप्रत्येन' इत्युच्यमाने ततो ग्रामादागत इति तसिलापि योगे षष्ठी स्यात् ? 'उपपदविभक्तेः कारकविभक्तिर्बलीयसी' ( व्या० परि० ६९ ) इह तर्हि ततो ग्रामादन्य इत्यन्यादियोगे या पञ्चमी, तां बाधित्वा षष्ठी स्यात् ? 'निरनुबन्धकग्रहणे न सानुबन्धकस्य' ( व्या० परि० ५३ ) इत्येवं तसिलादियोगे न भविष्यति । यस्तर्हि निरनुबन्धकः 'प्रतियोगे पञ्चम्यास्तसिः' 'तेनैकदिक्', 'तसिश्च', तत्र मा भूत्—अर्जुनतः प्रत्यभिमन्युः, सुदामतो विद्युदिति ॥ २८ ॥ २९ ॥

### भावबोधिनी

दक्षिणस्याः, दक्षिणा—इन सप्तम्यन्त, पञ्चम्यन्त और प्रथमान्त दक्षिण शब्द से अतसुच् = अतस् करने के बाद भसंज्ञा आलोप, स् का रुत्वविसर्ग करने पर रूप बनता है । ] उत्तरतः वसति, उत्तरतः आगतः, उत्तरतः रमणीयम् । [ उत्तरस्याम्, उत्तरस्याः, उत्तरा—इनसे अतसुच् = अतस्, भसंज्ञा, आलोप । ]

अकार विशेषणार्थ है—'षष्ठ्यतसर्थप्रत्ययेन ।' [ इस सूत्र में अतस् से इसी का ग्रहण हो, यदि 'तसर्थ' रखें तो तसिल् का भी ग्रहण होने लगेगा । अतः 'अ' आवश्यक है । ] ॥ २८ ॥

पर और अवर शब्दों से अस्ताति के अर्थ में [ = सप्तम्यन्त, पञ्चम्यन्त और प्रथमान्त दिग्देशकालवृत्ति पर और अवर शब्दों से ] विकल्प से अतसुच् प्रत्यय होता है । उदा० —परतो वसति, परत आगतः, परतः रमणीयम् । [ परस्मिन्, परस्मात्, परम्—इनसे अस्ताति के अर्थ में अतसुच् = अतस् प्रत्यय करने पर भसंज्ञा, अलोप, स् का रुत्वविसर्ग । ] [ अतसुच् न होने पर अस्ताति भी होता है— ] परस्ताद् वसति, परस्ताद् आगतः, परस्ताद् रमणीयम् । [ इसी प्रकार अवरस्मिन्, अवरस्मात्, अवरम्—इनसे भी अतसुच् और पक्ष में अस्ताति होने पर ] अवरतः वसति, अवरत आगतः अवरतः रमणीयम् । अवरस्ताद् वसति, अवरस्ताद् आगतः, अवरस्ताद् रमणीयम् । [ इनमें भी भसंज्ञा, अलोप होता है । ] ॥ २९ ॥

**२१९१. अञ्चेर्लुक् ॥ ३० ॥ ( १९८० )**

**अञ्चत्यन्तेभ्यो दिक्शब्देभ्य उत्तरस्यास्तातिप्रत्ययस्य लुग् भवति । प्राच्यां दिशि वसति । 'लुक्तद्धितलुकि' ( १.२ ४९ ) इति स्त्रीप्रत्ययोऽपि निवर्तते । प्राग्वसति, प्रागागतः, प्राग्रमणीयम्, प्रत्यग्वसतिः[1], प्रत्यगागतः, प्रत्यग्रमणीयम्[1] ॥**

**२१९२. उपर्युपरिष्टात् ॥ ३१ ॥ ( १९८१ )**

**उपरि, उपरिष्टात्—इत्येतौ शब्दौ निपात्येते अस्तातेरर्थे । ऊर्ध्वं स्योपभावो रिल्-रिष्टातिलौ च प्रत्ययौ निपात्येते । उर्ध्वायां दिशि वसति उपरि वसति, उपर्यागतः, उपरि रमणीयम् । उपरिष्टाद् वसति, उपरिष्टादागतः, उपरिष्टाद्रमणीयम् ॥**

**२१९३. पश्चात् ॥ ३२ ॥ ( १९८२ )**

**'पश्चात्' इत्ययं शब्दो निपात्यतेऽस्तातेरर्थे । अपरस्य पश्चभाव आतिश्च प्रत्ययः ( म० भा० ) ।**

**न्यासः**

**अञ्चेर्लुक् ॥** दिग्शब्दादित्यधिकारात्केवलस्य चाञ्चतेरदिक्शब्दत्वाद् 'अञ्चेः' इत्यञ्चूत्तरपदस्य निर्देशोऽयं विज्ञायते, अत एवाह—**अञ्चत्यन्तेभ्य इति । दिक्शब्देभ्य इति । प्राग् वसतीति ।** प्रपूर्वादञ्चतेः 'ऋत्विक्' इत्यादिना सूत्रेण क्विन्, 'अञ्चतेश्चोपसंख्यानम्' इति ङीप्, 'अचः' इत्यल्लोपः, 'चौ' इति दीर्घः - प्राची इति स्थिते, अस्तातिः, तस्य लुक्, 'क्विन्प्रत्ययस्य कुः' इति कुत्वम् । **प्रत्यगिति ।** प्रतीचीशब्दात् प्रत्ययः, स तु पूर्ववदुपपाद्यः ॥ ३० ॥

**उपर्युपरिष्टात् ॥ रिल्रिष्टातिलौ च प्रत्ययौ निपात्येते इति ।** अस्तातेरपवादौ ॥ ३१ ॥

**पश्चात् ॥ अतिश्च प्रत्यय इति ।** अयमप्यस्तातेरपवादः । **दक्षिणपश्चादुत्तरपश्चादिति ।** दक्षिणापरस्यां

**पदमञ्जरी**

**अञ्चेर्लुक् ॥ अञ्चत्यन्तेभ्य इति ।** केवलेभ्यः, लिङ्गविशिष्टेभ्यश्च । **स्त्रीप्रत्ययोऽपि निवर्त्तत इति ।** एवं चाकारलोपः, 'चौ' इति दीर्घत्वं च नास्तीति, **प्रागित्यत्र** सवर्णदीर्घत्वम्, **प्रत्यगित्यत्र** यणादेशः ॥ ३० ॥ ३१ ॥

**पश्चात् ॥ अपरस्य पश्चभाव इति ।** केवलस्य लिङ्गविशिष्टस्य च । **दिक्पूर्वपदस्य चेति ।** दिग्वचनः

**भावबोधिनी**

[ सप्तमी, पञ्चमी प्रथमा जिनके अन्त में ऐसे ] अञ्चत्यन्त ( अञ्चु धातु जिनके अन्त में है उन ) दिक्शब्दोंके बाद आने वाले 'अस्ताति' प्रत्यय का लुक् हो जाता है । उदा०—प्राच्यां दिशि वर्तते—इस अर्थ में [ अस्ताति प्रत्यय करके उसका लुक् कर देने पर ] ''लुक् तद्धितलुकि'' सूत्र से स्त्रीप्रत्यय का भी लुक् हो जाता है । [ अतः मूल प्रातिपदिक बचता है— ] प्राग् वसति, प्राग् आगतः, प्राग् रमणीयम् । [ प्रतीच्यां दिशि वर्तते— इस अर्थ में अस्ताति के लोप के बाद स्त्रीप्रत्यय का भी लुक् कर देने पर प्रति + अच्, यण् प्रत्यच्, कुत्व ] प्रत्यग् वसति, प्रत्यग् आगतः, प्रत्यग् रमणीयम् ॥ ३० ॥

अस्ताति के अर्थ में 'उपरि' और 'उपरिष्टात्' ये दोनों निपातित होते हैं । ऊर्ध्व शब्द का 'उप' आदेश और रिल् तथा रिष्टातिल् प्रत्यय निपातित होते हैं । उदा० —ऊर्ध्वायां दिशि वसति । [ उर्ध्वायाः दिशः आगतः, ऊर्ध्वा दिग्— इन अर्थों में ] उपरि वसति, उपरि आगतः, उपरि रमणीयम्, उपरिष्टाद् वसति, उपरिष्टाद् आगतः, उपरिष्टाद् रमणीयम् । [ ऊर्ध्व का उप आदेश और रिल् = रि प्रत्यय करने पर 'उपरि' । रिष्टातिल् = रिष्टात् प्रत्यय करने पर 'उपरिष्टात्' बनता है । यहाँ सप्तमी, पञ्चमी तथा प्रथमा इन तीनों के अर्थों की प्रतीति होती है । ] ॥ ३१ ॥

'पश्चात्' यह शब्द अस्ताति के अर्थ में निपातित होता है । अपर का 'पश्च' आदेश और 'आति' प्रत्यय होता

---

१-१. मुद्रितपुस्तकेऽयं पाठो नास्ति ।

**अपरस्यां दिशि वसति पश्चाद्दिशि वसति, पश्चादागतः, पश्चाद्रमणीयम् ।**

**❀ दिक्पूर्वपदस्यापरस्य पश्चभावो वक्तव्यः, आतिश्च प्रत्ययः ❀ ( म० भा० वा० १, २ ) । दक्षिणपश्चात् । उत्तरपश्चात् ।**

**❀ अर्धोत्तरपदस्य दिक्पूर्वपदस्य पश्चभावो वक्तव्यः ❀ ( म० भा० वा० ३ ) । दक्षिणपश्चार्धः ।**

**❀ विनापि पूर्वपदेन पश्चभावो वक्तव्यः ❀ ( म० भा० वा० ४ ) । पश्चार्धः । उत्तर पश्चार्धः ॥**

## २१९४. पश्च पश्चा चच्छन्दसि ॥ ३३ ॥ ( ३५०१ )

**पश्च-पश्चाशब्दौ निपात्येते छन्दसि विषये अस्तातेरर्थे । चकारात् पश्चादित्यपि भवति । अपरस्य पश्चभावोऽकाराकारौ च प्रत्ययौ निपात्येते । परो व्याप्तो जायते पश्च सिंहः, पश्चा सिंहः, पश्चात्सिंहः ॥**

### न्यासः

दिशि वसतीति दक्षिणपश्चात् एवमुत्तरपश्चात् ।

**अर्धोत्तरपदस्य चेति** । अपरस्येति सम्बध्यते ।

**विनापि पूर्वपदेन पश्चभावो वक्तव्य** इति । अपरस्यार्द्धोत्तरपदस्येति प्रकृतेन सम्बन्धनीयम् । अत्र सर्वत्र वक्तव्यशब्दो व्याख्याने वर्त्तते । तत्रेदं व्याख्यानम्-उत्तरसूत्रात् सिंहावलोकितेन चकरोऽत्रावतिष्ठते, स चानुक्तसमुच्चयार्थः । तेन दिक्पूर्वपदस्यापरशब्दस्य पश्चभावः इत्येवमादिकं कार्यं सिद्धं भवति ॥ ३२ ॥

**पश्च पश्चा चच्छन्दसि** ॥ ३३ ॥

### पदमञ्जरी

पूर्वपदं यस्य तथोक्तः । **दक्षिणपश्चादिति** । दक्षिणास्या अपरस्याश्च दिशो यदन्तरालमिति 'दिङ्नामान्यन्तराले' इति वहुव्रीहिः, दक्षिणापरा, तस्यां वसतीत्यातिप्रत्ययः अपरस्य च पश्चभावः । **अर्धोत्तरपदस्य चेति** । अपरस्य चेत्येव । **विनापि पूर्वपदेनेति** । अपरस्य, अर्धोत्तरपदस्येति सम्बन्धः ॥ ३२ ॥ ३३ ॥

### भावबोधिनी

है । उदा०—अपरस्यां दिशि वसति । [ अपरस्या दिशः आगतः, अपरा दिक्—इन अर्थों में ] पश्चाद् दिशि वसति, पश्चाद् आगतः, पश्चाद् रमणीयम् । [ अपर का पश्च आदेश आति = आत् प्रत्यय—पश्च + आत् । यहाँ भी सप्तमी, पञ्चमी और प्रथमा—इन तीनों अर्थों की प्रतीति होती है । ]

❀ जिसके पूर्व में दिक् शब्द है उस अपर का भी पश्च आदेश और आति प्रत्यय कहना चाहिए । ❀ उदा०—दक्षिणपश्चात् । [ दक्षिणापरस्यां दिशि वसति, दक्षिणापरस्या दिश आगतः, दक्षिणापरा दिक्—इन अर्थों में दक्षिणापश्चात् । इसमें भी अपर का पश्च आदेश और आति प्रत्यय होता है । ] उत्तरपश्चात् । [ उत्तरापरस्यां दिशि वसति—इस अर्थ में भी पश्च आदेश और आति प्रत्यय होता है । यहाँ दोनों दिशाओं का अन्तराल प्रतीत होता है । ]

❀ अर्ध जिसका उत्तरपद है और दिक् पूर्व में है ऐसे 'अपर' का भी 'पश्च' आदेश कहना चाहिए । ❀ उदा०—दक्षिणपश्चार्धः । उत्तरपश्चार्ध । [ दक्षिणपरा के बाद अर्ध शब्द का समास करने पर अपर का पश्च आदेश, सन्धिकार्य करने पर रूप बनता है । ]

❀ पूर्व पद के विना भी अपर का पश्च आदेश कहना चाहिए । ❀ पश्चार्धः । [ यहाँ अपर का 'पश्च' आदेश होता है । अर्ध के साथ समास होता है । ] ॥ ३२ ॥

वेदविषय में अस्ताति के अर्थ में 'पश्च' और 'पश्चात्' शब्द निपातित होते हैं । 'च' के कारण 'पश्चा' भी बनता है । अपर का पश्च आदेश और 'अ' 'आ' ये प्रत्यय निपातित होते हैं । उदा०—'परो व्याप्तो जायते पश्च सिंहः, पश्चा सिंहः, पश्चात् सिंहः । [ अपर का पश्च करके 'अ' प्रत्यय भ संज्ञा, अलोप—पश्च । आ प्रत्यय में—पश्चा । आति = आत् में—पश्चात् । ] ॥ ३३ ॥

## २१९५. उत्तराधरदक्षिणादातिः ॥ ३४ ॥ ( १८९३ )

**उत्तराधरदक्षिणशब्देभ्य आतिः प्रत्ययो भवति अस्तातेरर्थे। उत्तरस्यां दिशि वसति उत्तराद्वसति, उत्तरादागतः, उत्तराद्रमणीयम्। अधराद्वसति, अधरादागतः, अधराद्रमणीयम्। दक्षिणाद्वसति, दक्षिणादागतः, दक्षिणाद्रमणीयम् ॥**

## २१९६. एनबन्यतरस्यामदूरेऽपञ्चम्याः ॥ ३५ ॥ ( ११९६ )

**उत्तराधरदक्षिणशब्देभ्य एनप् प्रत्ययो भवत्यन्यतरस्यामस्तातेरर्थे। अदूरे चेदवधिमानवधेर्भवति। विभक्तित्रये प्रकृते 'अपञ्चम्याः' इति पञ्चमी पर्युदस्यते। तेनायं सप्तमीप्रथमान्ताद्विज्ञायते प्रत्ययः। उत्तरेण वसति, उत्तराद्वसति, उत्तरतो वसति। उत्तरेण रमणीयम्, उत्तराद्रमणीयम्, उत्तरतो रमणीयम्। अधरेण वसति,**

### न्यासः

**उत्तराधरदक्षिणादातिः ॥** उत्तरदक्षिणाभ्याम् 'दक्षिणोत्तराभ्यामतसुच्' 'एनबन्यतरस्यामदूरेऽपञ्चम्याः', 'दक्षिणादाच्' 'आहि च दूरे' 'उत्तराच्च' इत्येभिर्योगैरतसुजादिषु प्राप्तेष्वधरादप्यस्यस्तातावातिर्विधीयते तस्यास्तातिर्बाध्यत एव। अतसुजादयस्तु वचनात्पक्षे भवन्त्येव। अत्र च यद्यप्युत्तरादीनां सप्तम्यादीनां च विभक्तीनां दिगादीनां चोपाधीनां त्रित्वम्, तथापि यथासंख्यं न भवति। कुतः? तदर्थस्य स्वरित्वस्याप्रतिज्ञानात्। लघ्वक्षरस्याधरशब्दस्यापूर्वनिपाताल्लक्षणव्यभिचारचिह्नाद्वाऽस्य लक्षणान्तरनिरपेक्षतां दर्शयन् यथासंख्यलक्षणमिह नापेक्ष्यत इति सूचयति। तेन विभक्तिभिस्तावद् यथासंख्यं न भवति। उपाधिभिस्तु दक्षिणशब्दस्य काले वृत्त्यसम्भवाच्च ॥ ३४ ॥

**एनबन्यतरस्यामदूरेऽपञ्चम्याः ॥ अदूरे चेदवधिमानवधेर्भवतीति।** कथं पुनरेवं विशेषो लभ्यते, यावता सूत्रेऽवधिशब्दो न श्रूयते, नाप्यवधिमान्? दिक्शब्दानामवध्यपेक्षा प्रवृत्तिर्भवति। अवधिमानप्यवधिमपेक्ष्य

### पदमञ्जरी

**उत्तराधरदक्षिणादातिः ॥ आतिप्रत्ययो भवतीति।** दक्षिणोत्तराभ्यामतसुजपि भवति, अधरशब्दादस्तातिरपि; 'अस्ताति च' इत्यधरशब्दस्याधादेशविधानाल्लिङ्गात्। अत्र चोत्तरादीनां सप्तम्यादीनां च साम्ये सत्यपि पूर्ववद्यथासंख्याभावः। अस्तादिस्तूत्तरादीनां न सम्भवति, दक्षिणशब्दस्य काले वृत्त्यसम्भवात् ॥ ३४ ॥

**एनबन्यतरस्यामदूरेऽपञ्चम्याः ॥ अदूरे चेत्यादि।** यद्यप्यवधिरवधिमान् वा सूत्रे न श्रूयते, तथापि दिक्शब्दानामवध्यपेक्षा प्रवृत्तिर्भवति। अवधिश्चावधिमन्तमपेक्षते इति सामर्थ्यादेव विशेषो लभ्यते। तत्र देशकालयोरवध्यपेक्षायां न विवादः, दिशि तु विवदन्ते।

### भावबोधिनी

अस्ताति के अर्थ में [ सप्तमी, पञ्चमी प्रथमा के अर्थ में ] उत्तर, अधर और दक्षिण शब्दों से आति प्रत्यय होता है। उदा०—उत्तरस्यां दिशि वसति [ उत्तरस्या दिश आगतः, उत्तरा दिग् रमणीया—इन अर्थों में ] उत्तराद् वसति, उत्तराद् आगतः। उत्तरा रमणीयम्। [ उत्तरा शब्द से आति = आत् प्रत्यय। इसी प्रकार अधरस्यां दिशि, अधरस्याः दिशः, अधरा दिक्—इन अर्थों में ] अधराद् वसति, अधराद् आगतः, अधराद् रमणीयम्। [ दक्षिणस्यां दिशि, दक्षिणस्या दिशः, दक्षिणा दिक्—इन अर्थों में ] दक्षिणाद् वसति, दक्षिणाद् आगतः, दक्षिणा रमणीयम्। [ दक्षिणा + आति = आत्, भसंज्ञा, आलोप। ] ॥ ३४ ॥

उत्तर, अधर और दक्षिण शब्दों से अस्ताति के अर्थ में विकल्प से 'एनप्' प्रत्यय होता है यदि अवधिमान् अवधि से अदूर = समीप होता है। [ सप्तमी, पञ्चमी और प्रथमा इन ] तीन विभक्तियों का प्रसङ्ग रहने पर 'अपञ्चम्याः'

अधराद्वसति, अधस्ताद्वसति। अधरेण रमणीयम्, अधराद्रमणीयम्, अधस्ताद्रमणीयम्। दक्षिणेन वसति, दक्षिणाद्वसति, दक्षिणतो वसति। दक्षिणेन रमणीयम्, दक्षिणाद्रमणीयम्, दक्षिणतो रमणीयम्।

अदूर इति किम्? उत्तराद्वसति। अपञ्चम्या इति किम्? उत्तरादागतः।

❀ 'अपञ्चम्या इति प्रागसेः' ❀ ( म० भा० ५.३.३५ वा० १ )। असिप्रत्ययस्तु पञ्चम्यन्तादपि भवति।

केचिदिहोत्तरादिग्रहणं नानुवर्तयन्ति। दिक्शब्दमात्रात्प्रत्ययं मन्यन्ते—पूर्वेण ग्रामम्, अपरेण ग्रामम्॥

**न्यासः**

भवतीति सामर्थ्यादनुक्तोऽप्येष विशेषो लभ्यत इति। **अधस्ताद् वसतीति**। 'अस्ताति च' इति वक्ष्यमाणेनास्तातौ परतोऽधरशब्दस्यादेशः।

**प्रागसेरिति**। 'असि पुरधवश्चैषाम्' इति वक्ष्यमाणः। केचिद् दिक्शब्दमात्रात् प्रत्ययं मन्यन्त इति तेषां मतेन पूर्वेण वसतीत्याद्यपि भवति। यदि दिक्शब्दमात्रात् प्रत्ययो भवतीत्यञ्चत्यन्तादपि स्यात्? भवतु, 'अञ्चेर्लुक्' इति लुग् भविष्यति? नैतदस्ति; 'मध्येऽपवादाः पूर्वान् विधीन् बाधन्ते' इत्यस्तातेरेवात्रानेन लुक नान्यस्य। एवं तर्ह्यन्यतरस्यामिति व्यवस्थितविभाषेयम्। तेनाञ्चत्यन्तान्न भविष्यति।

पकारः 'एनपा द्वितीया' इति विशेषणार्थः, स्वार्थश्च॥ ३५॥

**पदमञ्जरी**

**प्रागसेरिति**। 'असिपुरधवश्चैषाम्' इत्यस्मात्। **दिक्शब्दमात्रादिति**। तेन पूर्वेण वसतीत्याद्यपि भवति। अञ्चत्यन्तात्तु न भवति; व्यवस्थितविभाषाविज्ञानात्। अस्तु वा तदन्तादपि, 'अञ्चेर्लुक्' इत्यनुवृत्तेर्लुग्भविष्यति।

पकारः स्वरार्थ इति। 'एनपा द्वितीया' इति विशेषणार्थस्तु न भवति। अस्त्वेनेनेति, 'अतसर्थप्रत्ययेन' इत्यनुवृत्तेः 'द्वितीयाटौस्वेनः, इत्यस्यात्र ग्रहणं न भविष्यति॥ ३५॥

**भावबोधिनी**

इससे केवल पञ्चमी का पर्युदास ( निषेध ) होता है। इस कारण यह प्रत्यय सप्तम्यन्त और प्रथमान्त से होना ज्ञात होता है। उदा०—उत्तरेण वसति। [ उत्तरस्याम् दिशि अदूरे वसति—इस अर्थ में उत्तरा + एनप् भसंज्ञा, आलोप, णत्व—उत्तरेण। पक्ष में पूर्ववर्ती सूत्र से आति = आत् प्रत्यय होने पर ] उत्तराद् वसति। [ पक्ष में 'दक्षिणोत्तराभ्याम-तसुच्' ५।३।२८ से अतस् होने पर ] उत्तरतः दसति। [ प्रथमान्त से भी एनप्, आति और अतसुच् होते हैं—] उत्तरेण रमणीयम्। उत्तराद् रमणीयम्, उत्तरतो रमणीयम्। अधरेण वसति। [ अधर + एनप् ] अधराद् वसति। [ अधर + आति ]। अधस्ताद् वसति। [ अधर + अस्ताति, 'अस्ताति च' सूत्र से अधर का 'अध्' आदेश करने पर 'अधस्ताद्' बनता है।] दक्षिणेन वसति। [ दक्षिणा + एनप्। ] दक्षिणात् वसति। [ दक्षिणा + आति। ] दक्षिणतः वसति। [ दक्षिणा + अतसुच्। यहाँ सप्तम्यन्त से प्रत्यय है। आगे प्रथमान्त से प्रत्यय के उदा०—हैं—] दक्षिणेन रमणीयम्, दक्षिणाद् रमणीयम्, दक्षिणतः रमणीयम्।

अदूर अर्थ में ही—इसका क्या फल है? उत्तराद् वसति। [ यहाँ अदूर अर्थ न होने से एनप् न होकर केवल 'आति' होता है। ] अपञ्चम्याः = पञ्चम्यन्त से नहीं—इसका क्या फल है? उत्तराद् आगतः। [ यहाँ भी एनप् न होकर केवल 'आति' प्रत्यय होता है। ] ❀ अपञ्चम्याः = पञ्चम्यन्त से भिन्न से—यह असि ( "असि पुरधवश्चैषाम्" ( ५।३।३९ ) इस सूत्र से पहले तक होता है। ❀ असि प्रत्यय तो पञ्चम्यन्त से भी होता ही है।

कुछ विद्वान् इस सूत्र में उत्तर, अधर, दक्षिण की अनुवृत्ति नहीं करते हैं। वे इस प्रत्यय का विधान दिग्वाचकमात्र से मानते हैं—पूर्वेण ग्रामम्, अपरेण ग्रामम्। [ यहाँ अदूर अर्थ में एनप् प्रत्यय होने पर रूप बनते हैं। ]॥ ३५॥

## २१९७. दक्षिणादाच् ॥ ३६ ॥ ( १९८५ )

'अदूर' इति न स्वर्यते। 'अपञ्चम्याः' इति वर्तते। दक्षिणशब्दादाच्प्रत्ययो भवति अस्तातेरर्थे। दक्षिणा वसति। दक्षिणा रमणीयम्। अपञ्चम्या इत्येव—दक्षिणत आगतः।

चकारो विशेषणार्थः, 'अन्चूत्तरपदाजाहियुक्ते' ( २.३.२९ ) इति ॥

## २१९८. आहि च दूरे ॥ ३७ ॥ ( १९८६ )

दक्षिणशब्दादाहिः प्रत्ययो भवति अस्तातेरर्थे, चकारादाच्, दूरे चेदवधिमानवधेर्भवति। दक्षिणाहि वसति, दक्षिणा वसति। दक्षिणाहि रमणीयम्, दक्षिणा रमणीयम्।

दूर इति किम्? दक्षिणतो वसति।
अपञ्चम्या इत्येव—दक्षिणत आगतः ॥

### न्यासः

**दक्षिणादाच् ॥ चकारो विशेषणार्थः इति।** असति हि तस्मिन् पश्चाशब्द आकारान्तो निपातित इति तेनापि योगे पञ्चमी स्यात्। स्वरार्थस्तु चकारो नोपद्यते; प्रत्ययस्वरेणैव सिद्धत्वात् ॥ ३६ ॥ **आहि च दूरे** ॥३७॥

### पदमञ्जरी

**दक्षिणादाच् ॥ चकारो विशेषणार्थ इति।** अन्यथा वाक्यस्मरणयोर्य अकारोऽननुबन्धकस्तेनापि योगे पञ्चमी स्यात्। अथाप्यन्चूरत्तरपदेनाहिना च साहचर्यादतसर्थस्याकारस्य ग्रहणं स्यात्, तथापि पश्चाशब्द आकारान्तो निपातित इति तेनापि योगे पञ्चमी स्यात्। छान्दसः पश्चाशब्दः, दृष्टानुविधिश्छन्दसि भवति? असन्देहार्थं तर्हि, 'अन्चूत्तरपदाहियुक्ते' इति ह्युच्यमाने आकारप्रश्लेषो व्याख्यातव्यः स्यात्। 'अन्चूत्तर-पदाह्यायुक्ते' इति सूत्रं करिष्यते, तस्माद्दक्षिणासीत्यत्र 'स्वरितो वानुदात्तेऽपदादौ' इति विधिर्मा भूदिति चकारस्य प्रयोजनं वाच्यम् ॥ ३६ ॥

**आहि च दूरे ॥ चकारादाच्चेति।** अन्यथा दूरे विवक्षिते विशेषविहित आहिरेव स्यात् ॥ ३७ ॥

### भावबोधिनी

'अदूरे' इसकी अनुवृत्ति नहीं होती है। 'अपञ्चम्याः' ( अपञ्चम्यन्त से ) इसकी अनुवृत्ति होती है। अस्ताति के अर्थ में दक्षिणा शब्द से आच् प्रत्यय होता है। उदा० —दक्षिणा वसति। [ यहाँ सप्तम्यन्त से आच् प्रत्यय है। ] दक्षिणा रमणीयम्। [ यहाँ प्रथमान्त से प्रत्यय है।

अपञ्चम्यन्त से ही होता है अतः—दक्षिणतः आगतः। [ यहाँ आच् न होकर अतसुच् ही होता है। ]

चकार विशेषण के लिए है—"अन्चूत्तरपदाजाहियुक्ते" ( पा. सू. ) में आच् का ग्रहण कराने के लिए है। [ यह चकार अन्तोदात्त करने के लिए नहीं माना जा सकता क्योंकि यहाँ अन्तोदात्त तो 'प्रत्ययाः' इस सामान्य सूत्र से ही है। अतः विशेषणार्थ ही मानना चाहिए। ] ॥ ३६ ॥

अस्ताति के अर्थ में दक्षिण शब्द से 'आहि' प्रत्यय होता है, च के कारण 'आच्' भी होता है यदि अवधिमान् अवधि से दूर हो तो। उदा०—दक्षिणाहि वसति, दक्षिणा वसति। [ इसमें 'आहि' प्रत्यय और पक्ष में 'आच्' प्रत्यय है। ये सप्तम्यन्त से हैं। प्रथमान्त से प्रत्यय के उदा०— ] दक्षिणाहि रमणीयम्, दक्षिणा रमणीयम्।

दूर अर्थ में—इसका क्या फल है? दक्षिणतः वसति। [ यहाँ दूर अर्थ न होने से सामान्य अतसुच् प्रत्यय ही होता है। ]

अपञ्चम्यन्त से—इसका क्या फल है? दक्षिणतः आगतः। [ यहाँ पञ्चम्यन्त का अर्थ होने से प्रस्तुत प्रत्यय न होकर अतसुच् ही होता है। ] ॥ ३७ ॥

**२१९९. उत्तराच्च ॥ ३८ ॥ ( १८८७ )**

**उत्तरशब्दादाजाही प्रत्ययौ भवतः अस्तातेरर्थे, दूरे चेदवधिमानवधेर्भवति । उत्तरा वसति, उत्तराहि वसति । उत्तरा रमणीयम्, उत्तराहि रमणीयम् ।**

**दूर इत्येव—उत्तरेण प्रयाति ।**

**अपञ्चम्या इत्येव—उत्तरादगतः ॥**

**२२००. पूर्वाधरावराणामसि पुरधवश्चैषाम् ॥ ३९ ॥ ( १९७५ )**

**'अपञ्चम्याः' इति निवृत्तम् । तिसृणां विभक्तिनामिह ग्रहणम् । पूर्वाधरावराणामसिः प्रत्ययो भवति अस्तातेरर्थे । तत्सन्नियोगेन चैषां यथासंख्यं पुर्, अध्, अव्—इत्येते आदेशा भवन्ति । असीत्यविभक्तिको निर्देशः । पुरो वसति, पुर आगतः, पुरो रमणीयम् । अधोवसति, अध आगतः, अधो रमणीयम् । अवो वसति, अव आगतः, अवो रमणीयम् ॥**

**न्यासः**

**उत्तराच्च ॥** आजाही प्रत्ययौ भवत इति । ननु चानन्तर्यादाहिरेव प्राप्नोति ? न चकारोऽत्र क्रियते, स हि व्यवहितमप्याचं समुच्चिनोति । तेनाऽऽजपि भविष्यतीति ॥ ३८ ॥

**पूर्वाधरावराणामसि पुरधवश्चैषाम् ॥** पूर्वादस्तातौ प्राप्तेऽस्तातावपरादपि विभाषातसुचीदमारभ्यते । अथ 'एषाम्' इति किमर्थमिदमुच्यते, यावता येयं पूर्वादिषु षष्ठी सैव प्रत्ययं विधाय स्थाने षष्ठी विज्ञायते, सम्बन्धभेदाच्च षष्ठ्यर्थभेदः ? सत्यमेतत्; तथापि सुखप्रतिपत्त्यर्थमेषामित्युक्तम् ॥ ३९ ॥

**पदमञ्जरी**

**उत्तराच्च ॥ आजाही प्रत्ययौ भवत इति ।** यद्यप्याहिरनन्तरः, तथापि चकारेण व्यवहितस्यापि आचः समुच्चय इति भावः ॥ ३८ ॥

**पूर्वाधरावाराणामसि पुरधश्वचैषाम् ॥** आनन्तर्ययोगे षष्ठी । असीत्यविभक्तिको निर्देशः । **एषामिति** वचनं विस्पष्टार्थम् । सन्निधानाद्धि पूर्वादय एव स्थानिनः शक्या विज्ञातुम् ॥ ३९ ॥

**भावबोधिनी**

उत्तर शब्द से भी 'आच्' तथा 'आहि' प्रत्यय होते हैं, अस्ताति के अर्थ में यदि अवधिमान् अवधि से दूर होता है । उदा०—उत्तरा ग्रामम्, उत्तराहि ग्रामम् । [ यहाँ सप्तम्यन्त से प्रत्यय हैं । ] उत्तरा रमणीयम्, उत्तराहि रमणीयम् । [ यहाँ प्रथमान्त से प्रत्यय हैं । ]

दूर अर्थ में ही [ होता है अतः यहाँ नहीं होता है— ] उत्तरेण प्रयाति ।

अपञ्चम्यन्त से ही [ होता है अतः यहाँ नहीं होता है— ] उत्तराद् आगतः । [यहाँ आति प्रत्यय है ।] ॥३८॥

'अपञ्चम्याः' इसकी निवृत्ति हो जाती है । यहाँ [ सप्तमी, पञ्चमी, प्रथमा—इन ] तीनों विभक्तियों का ग्रहण है । पूर्व, अधर, अवर —इन शब्दों से अस्ताति के अर्थ में 'असि' प्रत्यय होता है । और इस प्रत्यय के सन्नियोग से इन तीनों के क्रमशः (१) पुर, (२) अध् (३) अव्—ये आदेश होते हैं । 'असि' यह अविभक्तिक निर्देश है । [ अतः लक्ष्यानुसार विभक्ति कल्पित की जाती है । ] उदा०—[ पूर्वस्यां दिशि वसति—इस अर्थ में ] पुरः वसति । [ पूर्वस्याः दिश आगतः—इस अर्थ में— ] पुर आगतः । [ पूर्वा दिक् इस अर्थ में ] पुरः रमणीयम् [ पूर्व + असि=अस्, पूर्व का पुर् आदेश, स् का रुत्व विसर्ग । ] अधः वसति, अधः आगतः, अधः रमणीयम् । [ यहाँ भी अवर + अस्' अध् आदेश, स का रुत्व, विसर्ग । ] अवः अवसति, अवः आगतः अवः रमणीयम् । [ यहाँ भी अवरस्यां दिशि आदि की प्रतीति होती है । अवर + अस्, अव् आदेश स् का रुत्व, विसर्ग ] ॥ ३९ ॥

**हन्त ते धानकाः। हन्त ते तिलकाः। एहकि। अद्धकि। अनुकम्पमानो दानेनाराधयति।**

**पूर्वेण प्रत्यासन्नानुकम्पासम्बन्धाद् अनुकम्प्यमानादेव प्रत्ययो विहितः; सम्प्रति व्यवहितादपि यथा स्यादिति वचनम् ॥**

## २२३९. बह्वचो मनुष्यनाम्नष्ठज्वा ॥ ७८ ॥ ( २०३३ )

**'अनुकम्पायाम्' (५.३.७६) इति, 'नीतौ च तद्युक्तात्' (५.३.७७) इति च वर्त्तते। बह्वचः प्रातिपदिकान्मनुष्यनामधेयाद्वा ठच्प्रत्ययो भवति अनुकम्पायां गम्यमानायां नीतौ च, देविकः। देवदत्तकः। यज्ञिकः, यज्ञदत्तकः।**

**बह्वच इति किम् ? दत्तकः। गुप्तकः। मनुष्यनाम्न इति किम् ? मद्रबाहुकः। भद्रबाहुकः ॥**

**न्यासः**

न सम्भवतं इति सामदानादिकैव नीतिर्गृह्यते। **एहकीति**। इण आङ्पूर्वाल्लोण्मध्यमपुरुषैकवचनस्य 'सेर्ह्यपिच्च' इति हिरादेशः। ननु पूर्वेणैवात्रापि प्रत्ययः सिद्धः, अत्राप्यनुकम्पा गम्यत एव, तत् किमर्थम् ? इत्याह— **पूर्वेणैवेत्यादि**। प्रत्यासन्नोऽनुकम्पासम्बन्धो यस्यानुकम्प्यमानस्य स तथोक्तः। प्रत्यासन्नत्वं तु सम्बन्धस्यानुकम्प्यमानं प्रति; तदाश्रयत्वादनुकम्पायां विधियमानः प्रत्यासत्तेर्यस्यानुकम्पया प्रत्यासन्नः सम्बन्धस्ततः एव युक्तो विधातुमिति पूर्वेणानुकम्प्यमानादेव प्रत्ययो विहितः, न तु व्यवहितात् पुनर्धानादेः। अतः सम्प्रति ततोऽपि यथा स्यादित्येवमर्थमिदम्। **व्यवहितादिति**। विप्रकृष्टादित्यर्थः। विप्रकृष्टत्वमतदाश्रयत्वादनुकम्पायाः। न हि तस्यां धानादिराश्रयः, किं तर्हि ? अनुकम्प्यमानो देवदत्तादिः ॥ ७७ ॥

**बह्वचो मनुष्यनाम्नष्ठज्वा ॥ देविक इति। यज्ञिक इति।** 'ठाजादावूर्ध्वं द्वितीयादचः' इति दत्तशब्दस्य लोपे कृते 'यस्येति च' इत्यकारलोपः।

**पदमञ्जरी**

असम्भवेऽपि नीतिस्वरूपप्रदर्शनपरं द्रष्टव्यम्। **एहकीति**। आङ्पूर्वादिणो लोट् सिपो हिः। **पूर्वेणेत्यादि**। अनुकम्पायां हि विधीयमानः प्रत्ययः प्रत्यासत्तेरनुकम्प्यमानादेव युक्तो विधातुम्, तस्य हि अनुकम्पासम्बन्धः प्रत्यासन्नस्तद्विषयत्वादनुकम्पायाः। तेन व्यवहितान्नीत्युपायाद्धानादेर्न स्याद्; अतद्विषयत्वादनुकम्पायाः। **धाना-शब्दः** स्त्रीलिङ्गः, ततः के विहिते 'केऽणः' इति ह्रस्वत्वे च स्वार्थिकानां प्रकृतिवल्लिङ्गं भवतीति ( जै० परि० ९५ ) कप्रत्ययान्त्वादापि कृते 'प्रत्ययस्थात्' इतीत्वेन भवितव्यम्। प्रायेण तु हन्त ते धानका पठ्यते, तत्र लिङ्गातिवृत्तिर्द्रष्टव्या ॥ ७७ ॥

**बह्वचो मनुष्यनाम्नष्ठज्वा ॥** प्रकरणमपेक्ष्यते न त्वनन्तरमित्याह—**अनुकम्पायां नीतौ च तद्युक्तादिति वर्तत इति। मद्रबाहुक इति**। नाम ग्रहणस्येदं प्रत्युदाहरणम्। यौगिकोऽयम्-मद्रौ बाहू यस्येति। मनुष्यग्रहणस्य

**भावबोधिनी**

लिए तिल हों। जब किसी निर्धन को देख कर दया उत्पन्न हो जाती है और उसे धानादि दिया जाता है, उस समय ऐसा प्रयोग होता है। ] एहकि। ( एहि—से अकच् है। अद्धकि। अद्धि से अकच् है। इनमें आना और खाना क्रियाओं का अनुकम्पितत्व प्रतीत होता है। ] अनुकम्पा करने वाला [ देवदत्त आदि ] दान से किसी को आराधित ( सन्तुष्ट ) करता है।

पूर्ववर्ती सूत्रद्वारा तो प्रत्यासन्न अनुकम्पा के सम्बन्ध से अनुकम्पित होने वाले से ही प्रत्यय किया जाता है, इस समय (इस सूत्र से) तो व्यवहित अनुकम्पावाले से भी प्रत्यय जिस प्रकार किया जा सके, उसके लिए यह वचन है ॥७७॥

'अनुकम्पायाम्' और 'नीतौ च तद्युक्तात्' इनकी अनुवृत्ति होती है। बहुत अचोंवाले नामवाची प्रातिपदिक से 'ठच्' प्रत्यय विकल्प से होता है, अनुकम्पा और नीति को प्रतीति होने पर। उदा०—अनुकम्पितः देवदत्तः—इस विग्रह

## २२४०. घनिलचौ च ॥ ७९ ॥ ( २०३४ )

'अनुकम्पायाम्' इत्यादि सर्वमनुवर्तते। पूर्वेण ठचि विकल्पेन प्राप्ते वचनम्। **बह्वचो मनुष्यनाम्नो घन्, इलच्—इत्येतौ प्रत्ययौ भवतः। चकाराद्यथाप्राप्तं च। देवियः, देविलः, देविकः, देवदत्तकः। यज्ञियः, यज्ञिलः, यज्ञिकः, यज्ञदत्तकः ॥**

## २२४१. प्राचामुपादेरडज्वुचौ च ॥ ८० ॥ ( २०३६ )

पूर्ववत् सर्वमनुवर्तते। उपशब्द आदिर्यस्य तस्मादुपादेः प्रातिपदिकाद् **बह्वचो मनुष्यनाम्नः—अडच्,**

**न्यासः**

प्रत्युदाहरणे सर्वत्र क एव वेदितव्यः। **मद्रबाहुक इति**। मद्रौ बाहू यस्य स मद्रबाहुः। नेदं मनुष्यनाम, किं तर्हि? विशेषणम्।

मनुष्यग्रहणं किमर्थम्? देवहस्तको हस्तीत्यत्र मा भूत्। नामग्रहणं किमर्थम्? मृगकः, मत्स्यक इत्यत्र मा भूत् ॥ ७८ ॥

**घनिलचौ च ॥ देविय इति**। घन्, पूर्ववल्लोपः। **देविल इति**। इलच्। **देविक इति** ठन्। **देवदत्तक इति**। कः ॥ ७९ ॥

**प्राचामुपादेरडज्वुचौ च ॥** उपड इत्यादौ उपेन्द्रदत्तशब्दात् प्रत्ययः। विकल्पार्थं प्राग्ग्रहणं कस्मान्न

**पदमञ्जरी**

तु स्तम्बेरमादिः प्रत्युदाहरणम्। अपर आह—मद्रबाहुरिति चतुष्पाज्जातिविशेषो मनुष्यग्रहणस्य प्रत्युदाहरणम्, नामग्रहणस्य त्वौपगवादिः प्रत्युदाहरणमिति ॥ ७८ ॥

**घनिलचौ च ॥ चकाराद्यथाप्राप्तं चेति**। ननु च ठच् पूर्वेण विहितः, वावचनात् कोऽपि, कात्र चकारेणाभ्यनुज्ञा? इति चिन्त्यम्। योगविभागोऽपि चिन्त्यप्रयोजनः ॥ ७९ ॥ ८० ॥

**भावबोधिनी**

में (१) देविकः। देवदत्तकः ( अनुकम्पितः यज्ञदत्तः—इस विग्रह में ) यज्ञिकः। यज्ञदत्तकः। [ देवदत्त + ठच् "ठाजादावूर्ध्वं द्वितीयादचः ( ५।३।८३ ) इस सूत्र से 'दत्त' शब्द का लोप करने पर 'ठ' का 'इक' भसंज्ञा, अलोप—देविकः। ठच् न होने पर पक्ष में 'क' प्रत्यय देवदत्तकः। इसी प्रकार यज्ञदत्त + ठच् में भी 'दत्त' का लोप करने के बाद ठ=इक, अलोप—यज्ञिकः। पक्ष में क—यज्ञदत्तकः। ]

बहुत अचों वाले से—इसका क्या फल है? दत्तकः। गुप्तकः [ यहाँ दो दो अच् ही हैं। अतः यह ठच् न होकर केवल 'क' होता है ] मनुष्य के नामवाचक से इसका क्या फल है? मद्रबाहुकः। भद्रबाहुकः। [ मद्रबाहु, भद्रबाहु—ये देशवाचक हैं, मनुष्यवाचक नहीं। अतः यह प्रत्य नहीं होता है ] ॥ ७८ ॥

'अनुकम्पायाम्' इत्यादि सबकी अनुवृत्ति होती है। पूर्ववर्त्ती सूत्र द्वारा विकल्प से ठच् की प्राप्ति रहने पर यह सूत्र है। बहुत अचों वाले मनुष्य-नामवाचक से 'घन्' और 'इलच्' ये दो प्रत्यय होते हैं। 'च' के कारण यथाप्राप्त प्रत्यय होते भी होते हैं। उदा० अनुकम्पितः देवदत्तः—इस अर्थ में—देवियः, देविलः, देविकः देवदत्तकः। अनुकम्पितः यज्ञदत्तः—इस अर्थ में—यज्ञियः, यज्ञिलः, यज्ञिकः यज्ञदत्तकः। [ देवदत्त + घ = इय, 'ठाजादावूर्ध्वं द्वितीयादचः' ५।३।८३ इस सूत्र से 'दत्त' का लोप करने पर भसंज्ञा, अलोप करने पर ( १ ) देवियः। ( २ ) इलच् करने पर देविलः। ( ३ ) पक्ष में ठच् = इक करने देविकः और ( ४ ) 'क' करने पर देवदत्तकः। इसी प्रकार यज्ञदत्त के भी रूप समझने चाहिए ] ॥ ७९ ॥

पूर्व के समान सबको अनुवृत्ति होती है। उपशब्द है आदि जिसका उस उपादि बह्वच् ( बहुत अचों वाले ) मनुष्यनामवाचक प्रातिपदिक से 'अडच्' और वुच् प्रत्यय होते हैं। 'च' के कारण 'घन्' और 'इलच्' भी होते हैं,

वुच्-प्रत्ययौ भवतः। चकाराद् घनिलचौ प्रत्ययौ भवतः, ठच्च वा। उपडः, उपकः, उपियः, उपिलः, उपिकः, उपेन्द्रदत्तकः।

प्राचांग्रहणं पूजार्थम्। 'वा' इत्येव हि वर्तते॥

## २२४२. जातिनाम्नः कन्॥ ८१॥ ( २०३७ )

'बह्वचः' इति नानुवर्तते। सामान्येन विधानम्। जातिशब्दो यो मनुष्यनामधेयो व्याघ्र, सिंह—इत्येवमादिः, तस्मादनुकम्पायां नीतौ च कन्प्रत्ययो भवति। व्याघ्रकः। सिंहकः। शरभकः।

वावचनानुवृत्तेर्यथादर्शनम्[1] अन्योऽपि भवति—व्याघ्रिलः, सिंहिलः।

नामग्रहणं स्वरूपनिवृत्त्यर्थम्॥

### न्यासः

भवति? इत्याह—**वेत्येव हीत्यादि**। अत्र हि वेत्यनुवर्त्तते, तस्माद् तेनैव विकल्पस्य सम्पादितत्वात् तदर्थं प्राग्ग्रहणं नोपपद्यते॥ ८०॥

**जातिनाम्नः कन्॥ नामग्रहणमित्यादि**। असति हि नामग्रहणे जातिस्वरूपग्रहणं स्यात्। अतः स्वरूपग्रहणं मा भूदित्येवमर्थं जातिग्रहणम्॥ ८१॥

### पदमञ्जरी

**जातिनाम्नः कन्**॥ ये शब्दा जात्यन्तरे प्रसिद्धा मनुष्येषु नामत्वेन विनियुक्तास्त इहोदाहरणम्। जातेरेव नाम, जातिर्वा नाम = जातिनाम। **व्याघ्रिय इति**। अनेकार्थत्वान्निपातानामनुवृत्तस्य वाशब्दस्य समुच्चयार्थत्वाद् घनिलचौ भवतः। ये तु विकल्पार्थमेव वाशब्दं मन्यन्ते 'ते कं प्रत्युदाहरन्ति—व्याघ्रकाः सिंहका इति। स्वरे विशेषः। घनिलचोस्तु शरभिल इत्याद्युदाहरणम्॥ ८१॥

### भावबोधिनी

विकल्प से ठच् भी होता है। उदा० अनुकम्पितः उपेन्द्रदत्तः इस अर्थ में—उपडः, उपकः उपियः, उपिलः, उपिकः और उपेन्द्रदत्तकः—ये रूप होते हैं। [ उपेन्द्रदत्त + अडच्=अड, दत्त का लोप, भसंज्ञा अलोप— ( १ ) उपडः। वुच् = अक करने पर ( २ ) उपकः। घन=इय करने पर ( ३ ) उपियः।। इलच् करने पर ( ४ ) उपिलः। ठच्= इक करने पर ( ५ ) उपिकः। 'क' करने पर दत्त का लोप न होने से ( ६ ) उपेन्द्रदत्तकः। ]

'प्राचाम्' इसका ग्रहण पूजा के लिए है, क्योंकि 'वा ( विकल्प )—इसकी अनुवृत्ति होती ही है॥ ८०॥

'बह्वचः' इसकी अनुवृत्ति नहीं होती है। सामान्यरूप से विधान है। जातिशब्द जो मनुष्यनामवाची है जैसे कि सिंह, 'व्याघ्र' आदि, इनसे अनुकम्पा और नीति गम्यमान रहने पर 'कन्' प्रत्यय होता है। उदा० व्याघ्रकः। सिंहकः। शरभकः। [ अनुकम्पितः सिंहः = सिंहनामधेयः पुरुषः = सिंह इस नाम वाला अनुकम्पित पुरुष—इस अर्थ में 'कन्' प्रत्यय होता है। इसी प्रकार अन्य शब्दों से भी तत्तत् पशुओं के नाम वाले मनुष्यवाची शब्दों से प्रत्यय समझना चाहिए। ]

'वा' ( विकल्प ) वचन की अनुवृति के कारण यथादर्शन ( जैसा दिखाई देता है वैसे ही ) अन्य प्रत्यय भी होते हैं—व्याघ्रिलः। सिंहिलः। ( व्याघ्र + इलच्, सिंह + इलच् )

'नाम' का उल्लेख स्वरूप की निवृत्ति के लिए किया गया है॥ ८१॥

---

१. यथासम्भवम्' —इत्यपि पाठा०।

## २२४३. अजिनान्तस्योत्तरपदलोपश्च ॥ ८२ ॥ ( २०३९ )

**'कन्' इत्यनुवर्तते, 'मनुष्यनाम्नः' इति च। अजिनशब्दान्तात् प्रातिपदिकान्मनुष्यनाम्नोऽनुकम्पायां कन्प्रत्ययो भवति, तस्य चोत्तरपदलोपः। व्याघ्राजिनो नाम कश्चिन्मनुष्यः, सोऽनुकम्पितः व्याघ्रकः। सिंहकः ॥**

## २२४४. ठाजादावूर्ध्वं द्वितीयादचः ॥ ८३ ॥ ( २०३५ )

**'लोप' इत्यनुवर्तते। अस्मिन्प्रकरणे यष्ठोऽजादिश्च प्रत्ययस्तस्मिन् परतः प्रकृतेर्द्वितीयादच ऊर्ध्वं यच्छब्दरूपं तस्य लोपो भवति। ऊर्ध्वग्रहणं सर्वलोपार्थम्। अनुकम्पितो देवदत्तः देविकः, देवियः, देविलः। यज्ञिकः, यज्ञियः. यज्ञिलः। उपडः, उपकः, उपियः. उपिलः, उपिकः।**

### न्यासः

**अजिनान्तस्योत्तरपदलोपश्च ॥ व्याघ्राजिनो नाम कश्चिदिति।** व्याघ्रस्याजिनं व्याघ्राजिनम्, व्याघ्राजिनमिवाजिनं यस्येति व्याघ्राजिनः। 'सप्तम्युपमानपूर्वस्य बहुव्रीहिरुत्तरपदलोपश्च' इति बहुव्रीहावुत्तरपदलोपे कृते व्याघ्राजिन इत्येष शब्दः सम्पद्यते। अथाजिनलोपश्चेत्येवं कस्मान्नोक्तम्, किमुत्तरपदग्रहणेन? नैवं शक्यम्; व्याघ्रमहाजिनो नाम कश्चित्, सोऽनुकम्पितः—व्याघ्रक इत्यत्राजिनशब्दस्य लोप उच्यमाने महच्छब्दस्य निवृत्तिर्न स्यात्। उत्तरपदस्य तु लोपे विधीयमाने भवति। तस्माद् यथान्यासमेवास्तु। महदजिनं महाजिनम्, व्याघ्रस्य महाजिनमिव महाजिनमस्येति पूर्ववदुत्तरपदलोपी बहुव्रीहिः, ततः कन् ॥ ८२ ॥

**ठाजादावूर्ध्वं द्वितीयादचः ॥ अस्मिन् प्रकरण इत्यादि।** अनेनास्मिन् प्रकरणे यौ विहितौ ठाजादी तत्र लोपो भवति, यौ तु प्रकरणान्तरे तत्र न भवतीति दर्शयति। एतच्चैतत्प्रकरणविहितयोष्ठाजाद्योरिहानुवृत्तेर्लभ्यते। अथोर्ध्वग्रहणं किमर्थम्, यावता 'द्वितीयादचः' इति पञ्चमी, तस्मादन्तरेणाप्यूर्ध्वग्रहणम्, 'तस्मादित्युत्तरस्य'

### पदमञ्जरी

**अजिनान्तस्योत्तरपदलोपश्च ॥ व्याघ्राजिनो नाम कश्चिदिति।** व्याघ्रस्येवाजिनमस्येति कृत्वा। 'अजिनलोपश्च' इत्युच्यमाने महदजिनं महाजिनम्, व्याघ्रस्येव महाजिनमस्य व्याघ्रमहाजिनः, सोऽनुकम्पित व्याघ्रक इत्यत्र महच्छब्दस्य लोपो न स्यात्, तस्मादुत्तरपदग्रहणम्। लोपश्चायं सर्वापहारी, उत्तरपदग्रहणात् ॥८२॥

**ठाजादावूर्ध्वं द्वितीयादचः ॥** 'ठाजादौ' इति समाहारद्वन्द्वे सौत्रः पुंल्लिङ्गनिर्देशः। आदिग्रहणं चिन्त्यप्रयोजनम्, 'यस्मिन्विधिस्तदादौ' ( व्या० परि० १२७ ) इत्येव सिद्धम्। **अस्मिन्प्रकरण इति।** प्रत्यासत्त्या तयोरेव बुद्धौ सन्निधानादिति भावः। ऊर्ध्वमिति प्रथमान्तस्याध्याहारेणान्वय इत्याह—**ऊर्ध्वं यच्छब्दरूपं तस्येति।** द्वितीयादिति पञ्चम्या षष्ठी प्रकल्प्यते, प्रथमा तु निर्देशार्थैव। 'सुपां सु' इति वा षष्ठीस्थाने प्रथमा

### भावबोधिनी

'कन्' इसकी और 'मनुष्यनाम्नः' इसकी अनुवृत्ति होती है। अजिन जिसके अन्त में है ऐसे मनुष्य नामवाचक प्रातिपदिक से अनुकम्पा गम्यमान होनेपर 'कन्' प्रत्यय होता है। और उसके उत्तरपद का लोप होता है। उदा०—व्याघ्राजिनो नाम कश्चित् मनुष्यः, सः अनुकम्पितः—इस अर्थ में—व्याघ्रकः। सिंहकः। [ अनुकम्पितः व्याघ्राजिनः—इससे 'कन्' प्रत्यय उत्तरपद=अजिन का लोप 'व्याघ्रकः' आदि बनते हैं ] ॥ ८२ ॥

'लोप' इसकी अनुवृत्ति होती है। इस प्रकरण में जो 'ठ' और अजादि प्रत्यय [ कहे गये ] हैं उनके परे रहते द्वितीय अच् के बाद जो शब्दरूप है उसका लोप होता है। 'ऊर्ध्व' का ग्रहण सबके लोप के लिये हैं। उदा०—अनुकम्पितः देवदत्तः—[ इस अर्थ में ठच्=इक प्रत्यय, दत्त का लोप, भसंज्ञा अलोप करने पर ] (१) देविकः। (२) देवियः। [ देवदत्त+घन्=इय ] (३) देविलः। [ देवदत्त+इलच्। इसी प्रकार अनुकम्पितः यज्ञदत्तः—इस अर्थ में ] यज्ञिकः, यज्ञियः, यज्ञिलः। [ अनुकम्पितः उपेन्द्रदत्तः इस अर्थ में—] उपडः, उपकः उपिकः, उपियः, उपिलः।

❀ ठग्रहणमुको द्वितीयत्वे कविधानार्थम् ❀ ( म० भा० ५.३.८३ वा० १ )। अजादिलक्षणे हि माथितिकादिवत्प्रसङ्गः। वायुदत्तः, वायुकः। पितृदत्तः, पितृकः।

❀ चतुर्थादच ऊर्ध्वस्य लोपो वक्तव्यः ❀ ( म० भा० )। अनुकम्पितो बृहस्पतिदत्तः बृहस्पतिकः, बृहस्पतियः, बृहस्पतिलः।

**न्यासः**

इत्यूर्ध्वं यच्छब्दरूपं तस्यैव लोपो भविष्यति ? इत्यत आह—**ऊर्ध्वग्रहणमित्यादि**। असत्यूर्ध्वग्रहणे 'आदेः परस्य' इति द्वितीयादचो यः परस्तस्यादेर्लोपः स्यात्, तस्मिंस्तु सति सर्वं निवर्तते। अतः सर्वस्य लोपो यथा स्यादित्येवमर्थमूर्ध्वग्रहणम्।

अथ ठग्रहणं किमर्थम्, यावता ठस्येकादेशे कृतेऽजादावित्येव सिद्धम् ? इत्यत आह—**ठग्रहणमित्यादि**। उको द्वितीयत्वे सत्यकृत एवेकादेशे ठावस्थायामेव द्वितीयादूर्ध्वस्य लोपे कृते 'इसुसुक्तान्तात् कः' इति कविधिर्यथा स्यादित्येवमर्थं ठग्रहणम्। तत्रैतत् स्यात् चोद्यम्—इकादेशे कृतेऽजादिलक्षणे च द्वितीयादूर्ध्वस्य लोपे स्थानिवद्भावाट्ठग्रहणेन ग्रहणात् कादेशो भविष्यति ? इत्याह—**अजादिलक्षणे हीत्यादि**। इहादेशविधौ तत्र ठग्रहणं वर्णग्रहणं स्यात्, सङ्घातग्रहणं वा; तत्र वर्णग्रहणेऽल्विधित्वात् स्थानिवद्भावो नोपपद्यते। सङ्घातग्रहणे

**पदमञ्जरी**

भवतीति। ऊर्ध्वग्रहणमनर्थकम्, 'तस्मादित्युत्तरस्य' इत्यूर्ध्वस्यैव भविष्यति ? तत्राह—**ऊर्ध्वग्रहणं सर्वलोपार्थमिति**। अन्यथा 'आदेः परस्य' इति द्वितीयादचो यः परस्तस्यादेरेव लोपः स्याद्, ऊर्ध्वग्रहणसामर्थ्यात्तु सर्वमेवोर्ध्वं लुप्यते।

ठग्रहणमनर्थकम्, इकादेशे कृतेऽजादावित्येव सिद्धम् ? अत आह—**ठग्रहणमिति**। अकृत एवैकादेशे ठावस्थायामेव लोपो यथा स्याद् इत्येवमर्थं तावट्ठग्रहणम्। किमेवं सिद्धं भवति ? उको द्वितीयत्वे सति परस्यांशस्य लोपे कृते 'इसुसुक्तान्तात्कः' इति कादेशः सिद्धो भवति, तत्रैतत्स्याद्—इकादेशे कृतेऽजादिलक्षण एव लोपोऽस्तु, इकादेशस्य स्थानिवद्भावाट्ठग्रहणेन ग्रहणादुकः परत्वेन कादेशो भविष्यति ? तत्राऽऽह—**अजादिलक्षणे हीति**। ठजादिषु यदि वर्णमात्रं प्रत्ययः, अकारस्तूच्चारणार्थः, ततष्ठस्य क इत्यत्रापि वर्णस्यैव ठस्य स्थानित्वम्,

**भावबोधिनी**

'ठ' का ग्रहण उक् से परे द्वितीय होने पर 'क' का विधान करने के लिए है, क्योंकि अजादिलक्षण होने पर माथितिक आदि के समान प्रसङ्ग होने लगेगा। उदा०—वायुदत्तः—वायुकः। पितृदत्तः—पितृकः।

**विमर्श**—'ठ' का 'इक' आदेश करने पर अजादि हो जाता है अतः 'अजादावूर्ध्वं द्वितोयादचः' इतना ही सूत्र करना चाहिये था 'ठ' के ग्रहण की क्या उपयोगिता ? इस प्रश्न का समाधान यह है कि जहाँ उक् से परे ठ होता है वहाँ 'ठ' का इक न होकर 'इसुसुक्तान्तात् कः' सूत्र से 'क' आदेश हो जाने से अजादि नहीं मिलता है, वहाँ भी लोप करने के लिए 'ठ' का ग्रहण है। अतः अनुकम्पितः वायुदत्तः—इस में ठच् करने के बाद 'दत्त' का लोप कर देने पर 'ठ' के इकादेश का अपवाद 'क' आदेश होता है—वायुकः। यदि ऐसा नहीं किया जाता तो 'मथितं पण्यम् अस्य—इस अर्थ में 'ठ' प्रत्यय करने पर 'यस्येति च' से अकार का लोप कर देने पर भी 'त्' के कारण 'ठ' का अव्यवधान नहीं होने से 'क' आदेश नहीं होता है। उसी प्रकार यहाँ भी 'वायुकः' आदि नहीं बन पाते। जब 'ठ' का ग्रहण किया गया तब उसको मान कर भी दत्त आदि का लोप हो जाने से उक् से परे 'ठ' का 'क' आदेश हो जाता है। विशेष व्याख्यान न्यास में देखें। काशिकाकार ने भाष्योक्त वार्तिकों का रूप बदल कर लिखा है—

[ अनु० ] ❀ चतुर्थ अच् के बाद का भी लोप कहना चाहिए। ❀ उदा०—अनुकम्पितः बृहस्पतिदत्तः—इस अर्थ में (१) बृहस्पतिकः। (२) बृहस्पतियः। (३) बृहस्पतिलः। [ ठच्, घन्, इलच् करने के बाद 'दत्त' का लोप हो जाने पर रूप बनते हैं। ]

**❀ अनजादौ विभाषा लोपो वक्तव्यः ❀ ( म० भा० ) । देवदत्तकः, देवकः । यज्ञदत्तकः, यज्ञकः ।**

**❀ लोपः पूर्वपदस्य च ठाजादावनजादौ च वक्तव्यः ❀ (म० भा०) । दत्तिकः, दत्तिलः, दत्तियः, दत्तकः ।**

**❀ विनाऽपि प्रत्ययेन पूर्वोत्तरपदयोर्विभाषा लोपो वक्तव्यः ❀ (म० भा०) । देवदत्तो दत्तः, देव इति वा ।**

**❀ उवर्णाल्ल इलस्य च ❀ ( म० भा० ) । भानुदत्तो भानुलः । वसुदत्तो वसुलः ।**

**चतुर्थादनजादौ च लोपः पूर्वपदस्य च ।**
**अप्रत्यये तथैवेष्ट उवर्णाल्ल इलस्य च ।। ( म० भा० पूर्वाचार्यकारिका )**

**❀ द्वितीयादचो लोपे सन्ध्यक्षरद्वितीयत्वे तदादेर्लोपवचनम् ❀ ( मा० भा० ५.३.८३ वा० ३) । लहोडः, लहिकः । कहोडः, कहिकः ।**

**न्यासः**

यद्यप्युपपद्यते, तथापि 'सन्निपातलक्षणो विधिरनिमित्तं तद्विघातस्य' इत्यजादित्वसन्निपातकृतमुकः ठप्रत्ययेनानन्तर्य्यमिति तदजादित्वविघातं न कुर्यात् । ततश्च यथा—मथितं पण्यमस्य माथितिक इत्यत्र यस्येति लोपे सत्यपि तकारेण ठस्यानन्तर्य्येकादेशो न भवति, तथा वायुदत्तो वायुक इति न स्यात् । तस्मादुको द्वितीयत्वे कविधानार्थं ठग्रहणम् ।

**उवर्णाल्ल इति** । तस्य च लोप इत्यर्थः । स चादेरेव भवति, न सर्वस्य । अथ वा—ल इत्यादेश एवायं सर्वेलस्य विधीयते । स चानेकाल्त्वात्सर्वस्यैव भवति ।

**द्वितीयादच इति** । द्वितीयलोपे कर्त्तव्ये सन्ध्यक्षरस्य द्वितीयत्वं भवति यदा, तदादेः शब्दरूपस्य लोपो भवतीति वक्तव्यम् । सन्ध्यक्षरादूर्ध्वस्य लोपेऽपि प्राप्ते सन्ध्यक्षरस्यैकाक्षरपूर्वपदानामित्यादि द्वितीयादच ऊर्ध्वस्य लोपः उक्तः, तदपवादः ।

**पदमञ्जरी**

ततश्चाल्विधित्वात्स्थानिवद्भावो नोपपद्यते, सङ्घातस्य तु प्रत्ययत्वे तत्रापि सङ्घातस्य ग्रहणम् । तत्र यद्यप्युपपद्यते स्थानिवद्भावः, तथापि सन्निपातपरिभाषया कादेशो न स्यादेव । अजादेः प्रत्ययस्य प्रकृत्या यदानन्तर्यं तत्कृतं ह्युकः प्रत्ययेनानन्तर्यं तत्कथं तस्याजादित्वं विहन्यात् ? अत एव मथितं पण्यमस्य माथितिक इत्यत्र यस्येतिलोपे कृते सत्यपि तकारेण प्रत्ययस्यानन्तर्यं कादेशो न भवति । तस्माट्ठग्रहणं कर्त्तव्यम् । किञ्च—यदा चित्रभानुप्रभृतिभ्यष्ठज्विधीयते, तदेकादेशाभावादजादिलक्षणो लोपो न स्यादिति तदर्थमपि ठग्रहणम् ।

**चतुर्थादच इति** । इदं संग्रहश्लोके नास्ति, क्वाचित्कं चैतत् ।

**अनजादौ विभाषा लोपो वक्तव्य इति** । द्वितीयादच ऊर्ध्वस्येत्येव ।

**लोपः पूर्वपदस्य चेति** । श्लोकवार्तिकम्, तस्योपस्कारः—**ठाजादावनजादौ च वक्तव्य इति** । तत्र ठजादौ पूर्वोत्तरयोरन्यतरस्य नित्यं लोपः, अनजादौ विकल्पः ।

**उवर्णाल्ल इति** । लोपस्य 'ल' इति पूर्वाचार्यसंज्ञा, तत्र 'आदेः परस्य' इतीकारलोपः ।

**तदादेरिति** । सन्ध्यक्षरात्परस्य लोपे प्राप्ते तत आरभ्य लोपार्थं वचनम् ।

**भावबोधिनी**

❀ अनजादि परे रहते भी लोप कहना चाहिए । ❀ उदा०—देवदत्तकः—देवकः । [ क प्रत्यय परे भी दत्त का लोप होता है । ] यज्ञदत्तकः—यज्ञकः । [ यहाँ भी 'क' परे रहते 'दत्त' का लोप होता है । ]

❀ ठ, अजादि और अनजादि प्रत्यय परे रहते पूर्वपद का भी लोप कहना चाहिए । ❀ उदा०—दत्तिकः दत्तिलः, दत्तियः, दत्तकः । [ अनुकम्पितः देवदत्तः—इस अर्थ में 'देव' इस पूर्वपद का लोप होता है । तब दत्त से प्रत्यययोग किया जाता है । ] ❀ प्रत्यय के बिना भी पूर्वपद और उत्तरपद का लोप कहना चाहिए । ❀ उदा०—देवदत्तः, दत्तः, देवः । [ यहाँ भी अनुकम्पितः देवदत्तः—यह अर्थ है । ]

**❀ एकाक्षरपूर्वपदानामुत्तरपदलोपो वक्तव्यः ❀ ( म० भा० ५.३.८४ वा० ७ )। वागाशीः वाचिकः। स्रुचिकः। त्वचिकः।**

**कथं षडंगुलिदत्तः षडिक इति ? ❀ षषष्ठाजादिवचनात्सिद्धम् ❀ ( म० भा० ५.३.८४ वा० ८ ) ।।**

**न्यासः**

**एकाक्षरेति**। अक्षरशब्दश्चायमच्यपि वर्तते। एकाक्षरमेकाच् पूर्वपदं येषां ते, तेषामुत्तरपदलोपो वक्तव्यः। **वागाशीरिति**। वाच्याशीरस्येति कृत्वा वैयधिकरण्ये बहुव्रीहिः। अनुकम्पितो वागाशीरिति विगृह्य ठचि कृते द्वितीयादच ऊर्ध्वस्य लोप स्यात्। तस्मिन् सति वाच्+आ+इक इति स्थिते यस्येति लोपे कृते तस्य 'अचः परस्मिन् पूर्वविधौ' इति स्थानिवद्भावात्पदसंज्ञा न स्यात्। तस्मात् तस्यान्तर्वर्त्तिनीं विभक्तिमाश्रित्य पदसंज्ञा, 'चोः कुः' इति कुत्वम्—वागिक इति स्यात्। आशीःशब्दस्य तस्य परलोपे कृते तस्यानजादेशत्वात् स्थानिवद्भावो नास्तीति भसंज्ञा भवत्येव, ततस्तया पदसंज्ञायां निषिद्धायां पदनिबन्धनकुत्वादि न भवतीति वाचिक इति सिध्यति।

**पदमञ्जरी**

**एकाक्षरपूर्वपदानामिति**। अक्षरशब्दोऽयमचि वर्त्तते, व्यञ्जनसहिते केवले वा। द्वितीयादच ऊर्ध्वस्य लोपे प्राप्ते तेन सह लोपार्थं वचनम्। **वागाशीरिति**। वाचि आशीर्यस्य स वागाशीः। **वाचिक इति**। अत्र यदि द्वितीयादच ऊर्ध्वस्य लोपः स्यात्तदा 'अकृतव्यूहाः पाणिनीयाः' ( व्या० परि० ८४ ) इति परिभाषया कुत्वजश्त्वयोर्निवृत्तौ वाच्+आ+इक इति स्थिते आकारस्य यस्येतिलोपेन निवृत्तावपि तस्य स्थानिवद्भावादाकारान्तस्य भसंज्ञायां त्वन्तर्वर्त्तिनीं विभक्तिमाश्रित्य पदसंज्ञा, सा चकारान्तस्येति भिन्नावधिकत्वाद्भसंज्ञया पदसंज्ञा न बाध्येत, ततश्च कुत्वजश्त्वयोः कृतयोः—वागिक इति स्यात्। उत्तरपदलोपे तु तस्यानजादेशत्वात् स्थानिवत्त्वाभावात्तुल्यावधिकया भसंज्ञया पदसंज्ञायास्तद्धिताश्रयायास्तावदपवादत्वाद्बाधः। या त्वन्तर्वर्त्तिनीं विभक्तिमाश्रित्य सुबन्तं पदमिति पदसंज्ञा, तस्या अपि एकसंज्ञाधिकारात्परत्वाच्च बाध इति सिद्धमिष्टम्।

**भावबोधिनी**

❀ उवर्णान्त से परे इल का ल=लोप कहना चाहिए। ❀ उदा०—मानुदत्तकः,—इससे मानुलः। वसुदत्तकः—इससे वसुलः। [ इनमें इलच्=इल के इ का लोप कर देने पर केवल 'ल' शेष बचता है। ]

[ भाष्योक्त श्लोक वार्त्तिक का आशय—]

(१) चतुर्थ अच् से परे का लोप कहना चाहिए। (२) अनजादि परे भी लोप कहना चाहिए। (३) पूर्वपद का भी लोप कहना चाहिए। (४) प्रत्यय परे न रहने पर भी लोप कहना चाहिए। (५) उवर्णान्त से परे 'इल' के इ का लोप कहना चाहिए।

❀ द्वितीय अच् से परे लोप की कर्तव्यता में सन्ध्यक्षर जब द्वितीय हो तो उसके आदि भाग ( अक्षर ) का लोप कहना चाहिए। ❀ उदा०—अनुकम्पितः लहोडः—इस अर्थ में लहिकः। अनुकम्पितः कहोडः—इस अर्थ में कहिकः। [ लहोड और कहोड—इनमें सन्ध्यक्षर के साथ लोप होने से लह्, कह् शेष बचते हैं। उनमें इक जोड़ दिया जाता है। ]

❀ एक अक्षर जिनका पूर्वपद है उनके उत्तरपद का लोप कहना चाहिए। ❀ उदा०—अनुकम्पितः वागाशीः—इस अर्थ में [ ठच्=इक, आशीः का लोप। वाचि आशीः यस्य सः—यह अर्थ है। ] वाचिकः। स्रुचिकः। त्वचिकः। [ इनमें भी आशीः आदि का लोप समझना चाहिए। ]

षडङ्गुलिदत्तः—यह षडिकः कैसे होता है ? 'षष् से ठ अनजादि वचन के कारण सिद्ध होता है।

**विमर्श**—यहाँ षडङ्गुलिदत्त+ठच् में अङ्गुलिदत्त का लोप कर देने पर भसंज्ञा होने से पद संज्ञा का बाध हो जाने से षष् का जश्त्व न होने से षड् नहीं बन सकता ? यहाँ डकार से आगे वाले 'ङ्गुलिदत्त' का ही लोपहोता

## २२४५. शेवलसुपरिविशालवरुणार्यमादीनां तृतीयात् ।। ८४ ।। ( २०३८ )

शेवलादीनां मनुष्यनाम्नां ठाजादौ प्रत्यये परतः तृतीयादच ऊर्ध्वस्य लोपो भवति । पूर्वस्यायमपवादः । अनुकम्पितः शेवलदत्तः शेवलिकः, शेवलियः, शेवलिलः । सुपरिकः, सुपरियः, सुपरिलः । विशालिकः, विशालियः, विशालिलः । वरुणिकः, वरुणियः, वरुणिलः । अर्यमिकः, अर्यमियः, अर्यमिलः ।

**न्यासः**

**कथमित्यादि** । यद्येकाक्षरपूर्वपदानामुत्तरपदस्य लोप उच्यते, षडिक इति न सिध्यति । अत्राप्युत्तरलोपे कृते भसंज्ञायामुपजातायां पदसंज्ञायां बाधितायाम् 'झलां जशोऽन्ते' इति षषः षकारस्य जश्त्वे कृते षडिक इति न सिध्यति ॥ ८३ ॥

**शेवलसुपरिविशालवरुणार्यमादीनां तृतीयात्** ॥ **स चाकृतसन्धीनामिति** । यद्यस्वरसन्धौ लोपो भवत्येवं सिध्यति, नान्यथा । तस्मादकृस्वरसन्धीनामेव शेवलादीनां लोपो भवतीति वक्तव्यम् ॥ ८४ ॥

**पदमञ्जरी**

**कथमिति** । अत्राप्युत्तरपदलोपे कृते भसंज्ञया पदसंज्ञाया बाधितत्वाज्जश्त्वं न स्यादिति प्रश्नः । **षष इति** । सौत्र एवात्र लोप इष्यते, न त्वौपसंख्यानिक इत्यर्थः ।

संग्रहश्लोकतृतीयपादे तथाशब्दानन्तरं वाशब्दः पाठ्यः, न त्वेवशब्दः, । स च पूर्वत्रापि यथेष्टं सम्बन्धनीयः, इष्टं च पूर्वमेव दर्शितम् । अत्र चोदयति—संज्ञाशब्दस्यैकदेशे लुप्ते कथं संज्ञिनोऽवगमः, न हि देव इति वा दत्त इति वा संज्ञा कृता, किं तर्हि, देवदत्त इति ?

अत्राहुरेकदेशेन　　समुदायोऽनुमीयते !
विषाणेनेव गौः, सोऽनुमितोऽर्थस्य वाचकः ॥ इति ।

ननु चोच्चार्यमाण एव शब्दोऽर्थं प्रत्याययति, न प्रतीयमानः ? नेत्याह; स्मृत्यनुमिता श्रुतिः किं नार्थं प्रत्याययति ? प्रत्याहारेषु वा मध्यवर्त्तिनो वर्णाः किं सवर्णान्न प्रत्याययन्ति ? किञ्च—

अशक्तिजैरपभ्रंशैः साधवः स्मारिता यथा ।
शब्दाः प्रत्याययन्त्यर्थं तथात्रापि भविष्यति ॥

समुदाये संज्ञात्वेन विनियुज्यमानेऽवयवानामपि संज्ञात्वमनुनिष्पद्यते । किमर्थं तर्हि लोपो विधीयते ? पदानामेव संज्ञैकदेशभूतानां साधुत्वं यथा स्याद्, वर्णानां मा भूदिति । उक्तं च—

तुल्यायामनुनिष्पत्तौ दे-य-सो[1] इत्यसाधवः ।
न ह्यन्वाख्यायके शास्त्रे दत्तादिवदनुस्मृतिः[2] ॥ (वा० प० २.३६६) इति । ८३ ॥

**शेवलसुपरिविशालवरुणार्यमादीनां तृतीयात्** ॥ **शेवलादीनामित्यादि** । योऽयं शेवलादीनां तृतीयादच ऊर्ध्वस्य लोप उच्यते, सोऽकृतसन्धीनामेव वक्तव्यः । सन्धीयतेऽनेनेति संहिताकार्यमुच्यते ॥ ८४ ॥ ८५ ॥

**भावबोधिनी**

है, अ का लोप 'यस्येति च' से होता है इसका स्थानिवद्भाव करके इक को मान कर भसंज्ञा लोप होने पर भी जो पदत्व अकारान्त में था वह अलोप के बाद भी रहता ही है अतः षकारान्त में भी पदत्व अतिदिष्ट करके जश्त्व में बाधा नहीं है । भाष्य में यह विचार इस सूत्र में नहीं है अग्रिम सूत्र में है ॥ ८३ ॥

शेवल, सुपरि, विशाल, वरुण, अर्यमा—ये शब्द जिनके आदि में हैं ऐसे मनुष्यनाम-वाचक शब्दों के द्वितीय अच् के ऊर्ध्वभाग का लोप ठ और अजादि प्रत्यय परे रहते होता है । यह पूर्व सूत्र का अपवाद है । उदा०—अनुकम्पितः शेवलदत्तः—इस अर्थ में—शेवलिकः, शेवलियः, शेवलिलः । [ शेवलदत्त + ठच्, घन्, इलच् प्रत्ययों के परे रहते दत्त का लोप हो जाता है । ] अनुकम्पितः सुपर्याशीर्दत्तः—इस अर्थ में सुपरिकः सुपरियः, सुपरिलः । [ यहाँ भी तीनों

---

१. 'ज्येद्राघा' इति क्वचित् मुद्रितः पाठः ।　　२. 'दत्तादिवत् स्मृतिः ।' इति क्वचित् मुद्रितः पाठः ।

॥ शेवलादीनां तृतीयादचो लोपः स चाकृतसन्धीनामिति वक्तव्यम् ॥ (?)। शेवलेन्द्रदत्तः, सुपर्याशीर्दत्तः—शेवलिकः, सुपरिक इति यथा स्यात्; शेवलयिकः, सुपर्यिक इति मा भूत् ॥

## २२४६. अल्पे ॥ ८५ ॥ ( २०४० )

परिमाणापचये अल्पशब्दः, प्रकृतिविशेषणं चैतत्। अल्पत्वविशिष्टेऽर्थे वर्तमानात्प्रातिपदिकाद्यथाविहितं प्रत्ययो भवति। अल्पं तैलं तैलकम्। घृतकम्। सर्वकम्। विश्वकम्। उच्चकैः। नीचकैः। पचतकि। जल्पतकि ॥

## २२४७. ह्रस्वे ॥ ८६ ॥ ( २०४१ )

ह्रस्वत्वविशिष्टेऽर्थे वर्तमानात् प्रातिपदिकाद् यथाविहितं प्रत्ययो भवति। दीर्घप्रतियोगी ह्रस्वः। ह्रस्वो वृक्षो वृक्षकः। प्लक्षकः। स्तम्भकः ॥

### न्यासः

अल्पे ॥ ८५ ॥ ह्रस्वे ॥ दीर्घप्रतियोगी ह्रस्व इति। स पुनर्यमपेक्ष्य दीर्घो भवति स वेदितव्यः। ननु च दीर्घत्वापचये सति ह्रस्वो भवति, यत्र दीर्घत्वापचयस्तत्राल्पतास्तीति पूर्वेणैव सिद्धम्? न सिध्यति; न ह्ययं नियोगः—यत्र दीर्घस्यापचयस्तत्राल्पत्वेन भवितव्यमिति, तथा हि—सत्यप्यपचये महत्त्वगुणयुक्तं यद्वस्तु तदमहदेव भवति, न चाल्पम् ॥ ८६ ॥

### पदमञ्जरी

ह्रस्वे ॥ यद्यपि वंशादिष्वल्पत्वह्रस्वत्वयोः समावेशो दृष्टः, तथापि घृतादिषु द्रवद्रव्येषु न कश्चिदाह—ह्रस्वं घृतम्, ह्रस्वं तैलमिति; तथा विस्तीर्णेष्वायामहीनेषु ह्रस्वः पट इत्युच्यते, न कश्चिदाह—अल्पः पट इति; तस्मादुभयनिर्देशः—'अल्पे' 'ह्रस्वे' इति ॥ ८६ ॥ ८७ ॥ ८८ ॥

### भावबोधिनी

प्रत्ययों के परे रहते 'दत्त' का लोप है।] [ अनुकम्पितः विशालदत्तः—इस अर्थ में ] विशालिकः, विशालियः, विशालिलः। [ अनुकम्पितः वरुणदत्तः—इस अर्थ में ] वरुणिकः, वरुणियः वरुणिलः। [ अनुकम्पितः अर्यमदत्तः—इस अर्थ में— ] अर्यमिकः, अर्यमियः, अर्यमिलः। ]

॥ शेवलादि के तृतीय अच् से परे का जो लोप कहा गया है वह संहिताकार्य के पहले वालों का ही कहना चाहिए। उदा० शेवलेन्द्रदत्तः सुपर्याशीर्दत्तः—इनमें [ इन्द्रदत्त और आशीर्दत्त—इतने का लोप होता है। सन्धि करने के पहले ही लोप हो जाता है। अतः केवल पूर्वपद के साथ प्रत्यय जोड़ा जाता है। ] यह इसीलिये किया गया है कि शेवलयिकः, सुपर्यिक ऐसे अनिष्ट रूप न होने लग जांय। [ यह वचन न होने पर तृतीय अच् तो सन्धिकार्य के बाद 'ए' और 'आ' होते हैं उनके बाद का लोप होने पर अनिष्ट रूप संभव हैं। ] ॥ ८४ ॥

परिमाण का अपचय=कम होना—अर्थ में 'अल्प' शब्द प्रयुक्त होता है। और यह प्रकृति का विशेषण होता है। अल्पत्वविशिष्ट अर्थ में वर्तमान प्रातिपदिक से यथाविहित प्रत्यय होते हैं। उदा०—अल्पं तैलम्—इस अर्थ में तैलकम् [ थोड़ा तेल ]। घृतकम् [ अल्पं घृतम्। ] सर्वकम्। विश्वकम्। उच्चकैः। नीचकैः। पचतकि। जल्पतकि। [ इनमें अकच् प्रत्यय होता है। ] ॥ ८५ ॥

ह्रस्वत्वविशिष्ट अर्थ में वर्तमान प्रातिपदिक से यथाविहित प्रत्यय होते हैं। दीर्घ का प्रतियोगी ( उल्टा ) ह्रस्व ( छोटा ) है। उदा०—ह्रस्वो वृक्षः—इस अर्थ में ह्रस्वकः। प्लक्षकः। स्तम्भकः ॥ ८६ ॥

२२४८. संज्ञायां कन् ॥ ८७ ॥ ( २०४२ )

'ह्रस्वे' इत्येव। ह्रस्वत्वहेतुका या संज्ञा तस्यां गम्यमानायां कन् प्रत्ययो भवति। पूर्वस्यायमपवादः। वंशकः। वेणुकः। दण्डकः॥

२२४९. कुटीशमीशुण्डाभ्यो रः ॥ ८८ ॥ ( २०४३ )

'ह्रस्वे' इत्येव। संज्ञाग्रहणं नानुवर्तते, सामान्येन विधानम्। कुटी-शमी-शुण्डाभ्यो ह्रस्वार्थे द्योत्ये रः प्रत्ययो भवति। कस्यापवादः। ह्रस्वा कुटी कुटीरः। शमीरः। शुण्डारः।

स्वार्थिकत्वेऽपि पुंल्लिङ्गता; लोकाश्रयत्वाल्लिङ्गस्य ( व्या० परि० ७४ )॥

२२५०. कुत्वा डुपच् ॥ ८९ ॥ ( २०४४ )

'ह्रस्वे' इत्येव। कुतूशब्दाद्ध्रस्वत्वे द्योत्ये डुपच्प्रत्ययो भवति। कस्यापवादः। ह्रस्वा कूतूः कुतुपम् = चर्ममयं स्नेहभाजनमुच्यते। कुतूरित्यावपनस्याख्या॥

२२५१. कासूगोणीभ्यां ष्टरच् ॥ ९० ॥ ( २०४५ )

'ह्रस्वे' इत्येव। कासू-गोणीशब्दाभ्यां ह्रस्वत्वे द्योत्ये ष्टरच्प्रत्ययो भवति। कस्यापवादः। षकारो

न्यासः

संज्ञायां कन् ॥ ८७॥ कुटीशमीशुण्डाभ्यो रः॥ कुटीरः। शमीर इति। स्वार्थिकाः प्रकृतितो लिङ्गवचनान्यनुवर्त्तन्त इति प्रकृतिगतेनैव स्त्रीलिङ्गेन भवितव्यम्, न पुल्लिङ्गेन? इत्यत आह—स्वार्थिकत्वेऽपीत्यादि॥ ८८॥

कुत्वा डुपच्॥ ८९॥ कासूगोणीभ्यां ष्टरच्॥ ९०॥

पदमञ्जरी

कुत्वा डुपच्॥ कुतूरित्यावपनस्याख्येति। यद्यप्यावपनमात्रस्याख्या, तथापि डुपच्प्रत्ययान्तस्वभावादुक्तम्

भावबोधिनी

'ह्रस्वे' इसकी अनुवृत्ति होती है। ह्रस्वत्व-हेतुक जो संज्ञा उसकी प्रतीति रहने पर 'कन्' प्रत्यय होता है। यह पूर्वसूत्र का अपवाद है अर्थात् केवल कन् होता है। उदा०—वंशकः। वेणुकः। दण्डकः [ ये विशेष प्रकार के बांसों के नाम हैं। ]॥ ८७॥

'ह्रस्वे' इसकी अनुवृत्ति होती है। संज्ञाग्रहण इसकी अनुवृत्ति नहीं होती है, यह सामान्य रूप से विधान है। ह्रस्व अर्थ द्योत्य रहने पर कुटी, शमी और शुण्डा—शब्दों से 'र' प्रत्यय होता है। यह 'क' प्रत्यय का अपवाद है। उदा०—ह्रस्वा कुटी—इसी अर्थ में कुटीरः ( छोटी कुटिया )। ( ह्रस्वा शमी—इसमें ) शमीरः। ( छोटा शमी का वृक्ष )। ( ह्रस्वा शुण्डा—इस अर्थ में ) शुण्डारः ( छोटी सूंड़ )।

ये प्रत्यय स्वार्थिक हैं तथापि पुंल्लिङ्ग रूप होता है क्योंकि लिङ्ग लोकव्यवहार पर आश्रित है॥ ८८॥

ह्रस्वे इसकी अनुवृत्ति होती है। ह्रस्वत्व द्योत्य रहने पर 'कुतू' शब्द से 'डुपच् प्रत्यय होता है। यह 'क' का अपवाद है। उदा०—ह्रस्वा कुतूः—इस अर्थ में कुतुपम् = चमड़े का बना हुआ तेल रखने के पात्र = कुप्पी को 'कुतू' कहा जाता है। कुतू–यह आवपन की आख्या = नाम है॥ ८९॥

'ह्रस्वे' इसकी अनुवृत्ति होती है। ह्रस्वत्व द्योत्य रहने पर कासू और गोणी शब्दों से ष्टरच् प्रत्यय होता है। यह 'क' प्रत्यय का अपवाद है। षकार ङीष् के लिए है। उदा० ह्रस्वा कासूः—इस अर्थ में कासूतरी। ( ह्रस्वा गोणी–इस अर्थ में ) गोणीतरी। कासू यह 'शक्ति' एक अस्त्रविशेष को कहते हैं। [ गोणी = आधी बोरी को कहते हैं। ]॥ ९०॥

**ङीषर्थः । ह्रस्वा कासूः कासूतरी । गोणीतरी । कासूरिति शक्तिः, आयुधविशेष उच्यते ॥**

## २२९२. वत्सोक्षाश्वर्षभेभ्यश्च तनुत्वे ॥ ९१ ॥ ( २०४६ )

**'ह्रस्वे' इति निवृत्तम् । वत्स, उक्षन्, अश्व, ऋषभ–इत्येतेभ्यस्तनुत्वे द्योत्ये ष्टरच्प्रत्ययो भवति । यस्य गुणस्य हि भावाद् द्रव्ये शब्दनिवेशः, तस्य तनुत्वे प्रत्ययः ( म० भा० ) । वत्सतरः । उक्षतरः । अश्वतरः । ऋषभतरः ।**

**प्रथमवया वत्सः, तस्य तनुत्वं द्वितीयवयसः प्राप्तिः । तरुण उक्षा, तस्य तनुत्वं तृतीयवयःप्राप्तिः । अश्वेनाश्वायामुत्पन्नोऽश्वः, तस्य तनुत्वमन्यपितृकता । अनड्वानृषभः, तस्य तनुत्वं भारोद्वहने मन्दशक्तिता ॥**

### न्यासः

**वत्सोक्षाश्वर्षभेभ्यश्च तनुत्वे** ॥ यदि तनुत्वे वत्सादिशब्देभ्यः प्रत्ययो विधीयते, ये शरीरे कृशा वत्सादयस्तत्राप्यविशेषणे प्रत्ययः प्रसज्येत, विशेषानुपादानात् ? इत्यत आह—**यस्य गुणस्येत्यादि** । गुणो विशेषणम्, विशेष्यं द्रव्यम् । वत्सादिशब्दानां प्रवृत्तिनिमित्तं वयोविशेषादि । यस्मिन् सति वत्सादयः शब्दा द्रव्ये विशेष्ये निविशन्ते=प्रवर्त्तन्ते, तस्यैव वत्सादिशब्दस्य प्रवृत्तिनिमित्तस्य तनुत्वे प्रत्ययो भवति, न तनुत्वमात्रे; तत् पुनः प्रत्यासत्तेः । वत्सादिभ्यः प्रकृतिभ्यः प्रत्यये विधीयमाने अन्यत् प्रवृत्तिनिमित्तं न प्रत्यासन्नम्, ततस्तस्यैव तनुत्वे युक्तं प्रत्ययेन भवितव्यम् ।

**तस्य तनुत्वं द्वितीयवयसः प्राप्तिरिति** । तृतीयवयःप्राप्तिकाले द्वितीयस्य वयसः । **उक्षशब्दस्य** प्रवृत्तिनिमित्तस्य निश्चितं तनुत्वमवशिष्यते । **तस्य तनुत्वमन्यपितृकतेति** । गर्दभपितृकतेत्यर्थः । तर्हि गर्दभादश्वायामुत्पन्नोऽश्वतर इत्युच्यते । **तस्य तनुत्वं भारोद्वहने मन्दशक्तितेति** । भारोद्वहनं प्रति यः समर्थो न स्यात् स ऋषभतर इत्युच्यते । यदा तु तस्य भारोद्वहने सामर्थ्यं मन्दं भवति=हीयते, तदा तनुत्वं भवति ॥ ९१ ॥

### पदमञ्जरी

—चर्ममयं स्नेहभाजनमुच्यत इति ॥ ८९ ॥ ९० ॥

**वत्सोक्षाश्वर्षभेभ्यश्च तनुत्वे** ॥ 'तनुत्वे' इति सामान्याभिधानात्कार्श्येऽपि प्रत्ययप्रसङ्गः, तत्राह—**यस्य हि गुणस्येति** । एतच्च प्रत्यासत्तेर्लभ्यते । प्रत्यासन्नं हि शब्दस्य प्रवृत्तिनिमित्तम् । **प्रथमवया वत्स इति** । प्रथमं वयो वत्सशब्दस्य प्रवृत्तिनिमित्तमित्यर्थः । **तस्येति** । गुणभूतमपि वयोऽत्र परामृश्यते, तस्य प्रथमस्य वयस इत्यर्थः । **द्वितीयवयःप्राप्तिरिति** । द्वितीयं हि वयः प्राप्नुवतो वत्सस्य प्रथमं वयोऽल्पशेषं भवति । **तरुण इति** । द्वितीयवया इत्यर्थः । तस्य तनुत्वमित्यादि पूर्ववत् । **अन्यपितृकतेति** । गर्दभपितृकतेत्यर्थः । गर्दभेन त्वश्वायामुत्पादितोऽश्वतर उच्यते । **अनड्वानिति** । अनसो वोढेत्यर्थः, अनसि वहेः क्विप्, डश्चानसः ॥ ९१ ॥

### भावबोधिनी

'ह्रस्वे' इसकी निवृत्ति हो जाती है । वत्स, उक्षन्, अश्व, ऋषभ–इन शब्दों से तनुत्व=स्थितिविशेष द्योत्य रहने पर 'ष्टरच्' प्रत्यय होता है । जिस गुण के होने से द्रव्य अर्थ में शब्द का प्रयोग होता है, उस गुण का तनुत्व द्योत्य रहने पर प्रत्यय होता है । उद० वत्सतरः । उक्षतरः । अश्वतरः । ऋषभतरः ।

प्रथम वय वाला ( गाय का बछड़ा ) वत्स है, उसका तनुत्व=द्वितीय वय=अवस्था ( यौवन ) की प्राप्ति है । तरुण उक्षा=बैल, उसकी तृतीय अवस्था प्राप्त करना तनुत्व है, अर्थात् युवावस्था छोड़कर प्रौढ़ अवस्था को प्राप्त कर लेने वाला । घोड़े से घोड़ी में उत्पन्न अश्व है, उसकी न्यूनता है अन्यपितृक होना अर्थात् गधे से घोड़ी में उत्पन्न–अश्वतर ( खच्चर ) कहा जाता है । अनड्वान्=साँड़, बैल ऋषभ है, उसका तनुत्व=बोझा ढोने में मन्दशक्ति होना है । ( जो बैल बोझा ढोने में कमजोर पड़ने लगे उसे ऋषभतर कहा जाता है । ) ॥ ९१ ॥

## २२५३. किंयत्तदो निर्द्धारणे द्वयोरेकस्य डतरच् ॥ ९२ ॥ ( २०४७ )

किं, यत् तत्—इत्येतेभ्यः प्रातिपदिकेभ्यो द्वयोरेकस्य निर्द्धारणे डतरच् प्रत्ययो भवति। निर्धार्यमाण-वाचिभ्यः स्वार्थे प्रत्ययः। जात्या, क्रियया, गुणेन, संज्ञया वा समुदायादेकदेशस्य पृथक्करणं निर्धारणम्। कतरो भवतोः कठः ? कतरो भवतोः कारकः ? कतरो भवतोः पटुः ? कतरो भवतोर्देवदत्तः ? यतरो भवतोः कारकः। यतरो भवतोः पटुः। यतरो भवतोर्देवदत्तः, ततर आगच्छतु।

महाविभाषयाऽत्र प्रत्ययो विकल्प्यते। को भवतोर्देवदत्तः, स आगच्छतु।

**न्यासः**

**किंयत्तदो निर्धारणे द्वयोरेकस्य डतरच्**॥ निर्धार्यमाणेभ्यः प्रत्यय इति **निर्धार्यमाणवाचिभ्य इति**। एतत् कुतो लभ्यते ? तत एवोत्पन्ने प्रत्यये निर्धारणस्य गम्यमानत्वात्।

**महाविभाषेत्यादि**। 'समर्थानां प्रथमात्' इत्यनुवृत्ता।

**निर्धारण इति**। विषये प्रत्ययो यथा स्यात्। **द्वयोरिति समुदायान् निर्धारणविभक्तिरिति**। षष्ठी, सप्तमी वा। सा पुनस्तस्य 'यतश्च निर्धारणम्' इत्यनेन। **एकस्येति निर्धार्यमाणनिर्देश** इत्येकस्मिन्निर्धार्यमाणे यथा

**पदमञ्जरी**

**किंयत्तदोर्निर्द्धारणे द्वयोरेकस्य डतरच्**॥ द्वयोरेकस्य निर्द्धारणे डतरज्भवतीत्युच्यते, तत्रेहापि प्राप्नोति —कयोरन्यतरो देवदत्तः, ययोरन्यतरः, तयोरन्यतर इति; किमादीनां समुदायवचित्वेऽपि निर्द्धारणस्य गम्यमानत्वात् ? अत आह—**निर्द्धार्यमाणवाचिभ्य इति**। एतच्चाभिधानस्वभावाल्लभ्यते। **क्रियया गुणेन संज्ञया वेति**। जात्या वेत्यपि द्रष्टव्यम्; कतरो भवतोः कठः इत्यादेरपि सम्भवात्[1]।

**समुदायान्निर्द्धारणविभक्तिरिति**। सा पुनः षष्ठी न सप्तमी; वा बहूनामिति दर्शनात्। **एकस्येतीति**। **निर्द्धार्यमाणनिर्देश इति**। ननु च द्वयोरेकस्यैव निर्द्धारणं सम्भवति, नार्थ एतेन ? नैतदस्ति; 'एकस्य'

**भावबोधिनी**

किम्, यत्, तत्—इन प्रातिपदिकों से दो में एक के निर्धारण में 'डतरच् प्रत्यय होता है। निर्धार्यमाण के वाचक शब्द से स्वार्थ में प्रत्यय होता है। जाति, गुण, क्रिया अथवा संज्ञा=नाम के द्वारा एक देश=अवयव का पृथक्करण= अलग करना निर्धारण है। उदा० कतरो भवतोः कठः ? ( आप दोनों में कौन कठ शाखा वाला है ? किम्+डतर= अतर, टि का लोप क्+अतर=कतरः। यहाँ पारिभाषिक जाति के कारण निर्धारण है। ) कतरो भवतोः कारकः ? ( आप दोनों में कौन कारक=करने वाला है। यहाँ क्रिया के कारण निर्धारण है। ) कतरो भवतोः पटुः ? ( आप दोनों में कौन पटु है। यहाँ पटुत्व गुण के कारण निर्धारण है। ) कतरो भवतोः देवदत्तः ? ( आप दोनों में कौन देवदत्त है। ) यहाँ संज्ञा=नाम के कारण निर्धारण है। ) यतरो भवतोः कठः ( आप दोनों में जो कठ है )। यतरो भवतोः कारकः। ( आप दोनों में जो कारक=करने वाला है। ) यतरो भवतोः पटुः। ( आप दोनों में जो पटु है। ) यतरो भवतो देवदत्तः, ततर आगच्छतु। [ आप दोनों में जो देवदत्त हो, वह आए। यहाँ यत्+डतर=अतर, तत्+डतर= अतर टि=अतर का लोप कर देने पर यतरः, ततरः रूप बनते हैं। ]

महाविभाषा के कारण यहाँ प्रत्ययों का विकल्प होता है। अतः 'को भवतोः देवदत्तः, स आगच्छतु—इसमें प्रत्यय नहीं भी होता है।

---

१. पद्यमिदम् इत्थं पठनीयम्—जात्या चेत्यपि द्रष्टव्यं कतरो भवतोः कठः।
कतरश्चात्र कालाप इत्यादेरपि सम्भवात्॥ इति।

**'निर्धारणे' इति विषयसप्तमीनिर्देशः। 'द्वयोः' इति समुदायान्निर्धारणविभक्तिः। 'एकस्य' इति निर्देशो निर्धार्यमाणनिर्देशः॥**

## २२५४. वा बहूनां जातिपरिप्रश्ने डतमच्॥ ९३॥ ( २०४८ )

**'कियत्तदः' इति वर्तते, 'निर्धारणे', 'एकस्य' इति च। 'बहूनाम्' इति निर्धारणे षष्ठी। बहूनां मध्ये एकस्य निर्धारणे गम्यमाने जातिपरिप्रश्नविषयेभ्यः किमादिभ्यो वा डतमच् प्रत्ययो भवति। कतमो भवतां कठः? यतमो भवतां कठः, ततम आगच्छतु।**

**वावचनमकजर्थम्—यको भवतां कठः, सक आगच्छतु।**

**महाविभाषा च प्रत्ययविकल्पार्थाऽनुवर्तत एव—को भवतां कठः। यो भवतां कठः, स आगच्छतु।**

**न्यासः**

स्यात्। ननु च समुदायादेकदेशस्य पृथक्करणं निर्धारणम्, द्वयोरित्यवयवसमुदायो निर्दिष्टो यत एकदेशो निर्धारयितव्यः, स चैकदेशे निर्धारयितव्ये एक एव सम्भवति; अतोऽन्तरेणाप्येकग्रहणमेकस्यैव निर्धारणं भविष्यतीति निष्फलमेकग्रहणम्? नैतदेवम्; असति हि तस्मिन् द्वयोरिति कर्मणि षष्ठी विज्ञायते, द्वौ चेन्निर्धार्येते कुतश्चिदिति, ततश्चेहापि प्रत्ययः स्याद्—अस्मिन् ग्रामे कौ देवदत्तयज्ञदत्ताविति। तस्मादेकग्रहणं कर्त्तव्यम्॥ ९२॥

**वा बहूनां जातिपरिप्रश्ने डतमच्॥ जातिपरिप्रश्नविषयेभ्य इति।** जातिपरिप्रश्नो यथासम्भवं विषयो येषां ते **तथोक्ताः। कतमो भवतां कठ इति।** 'गोत्रञ्च चरणैः सह' इति तस्य जातित्वम्। सा च कठजातिः किंशब्देन परिपृच्छ्यते। किंशब्दोऽत्र जातिपरिप्रश्नविषयो भवति। **यतमो भवतां कठस्ततम आगच्छत्विति।** यत्तच्छब्दाविह जातिविषयावेव, न परिप्रश्नविषयौ; असम्भवात्, न हि ताभ्यां परिप्रश्नः क्रियते, किं तर्हि? किंशब्देन। अत एव वक्ष्यति—**'परिप्रश्नग्रहणं किम एव विशेषणम्, न यत्तदोः; असम्भवात्' इति। वावचन-**

**पदमञ्जरी**

इत्यनुच्यमाने द्वयोरिति कर्मणि षष्ठी विज्ञायेत, ततश्चास्मिन् ग्रामे कौ देवदत्तयज्ञदत्तावित्यत्रापि प्राप्नोति। तस्मादेकग्रहणम्॥ ९२॥

**वा बहूनां जातिपरिप्रश्ने डतमच्॥ जातिपरिप्रश्नविषयेभ्य इति॥** जातिपरिप्रश्नौ यथासम्भवं विषयौ येषां ते तथोक्ताः। सूत्रे पुनः समाहारद्वन्द्वः। सन्निधानाच्च परिप्रश्नोऽपि जातेरेव विज्ञायते, यथा—'गुणो यङ्लुकोः' इत्यत्र यङ् च यङ्लुक्चेति। एवं च कृत्वा जातिपरिप्रश्नग्रहणं किम एव विशेषणम्। 'जातिग्रहणं तु सर्वैरपि सम्बध्यते' इति वक्ष्यमाणमुपपद्यते। षष्ठीसमासे तु गुणभूतस्य जातिग्रहणस्य निष्कृष्य सम्बन्धोऽनुपपन्नः स्यात्।

**भावबोधिनी**

'निर्धारणे' यह विषय-सप्तमी का निर्देश है। 'द्वयोः' यह समुदाय से निर्धारण-विभक्ति है। 'एकस्य' यह निर्देश= निर्धार्यमाणका निर्देश है।॥ ९२॥

'कियत्तदः' इसकी 'निर्धारणे' और 'एकस्य' इनकी अनुवृत्ति होती है। 'बहूनाम्' यहाँ निर्धारण अर्थ में षष्ठी है। बहुतों के मध्य में एक का निर्धारण गम्यमान रहने पर जातिपरिप्रश्नविषयक ( जिनकी जाति के विषय में प्रश्न किये जा रहे हैं-ऐसे ) 'किम् यत् तत्' इन शब्दों से विकल्प से डतमच् प्रत्यय होता है। उदा० कतमो भवतां कठः? [ आप लोगों में कौन कठशाखाध्यायी है? किम्+डतम=अतम, टिलोप—कतम। ] भवतां यतमः कठः। [ आप लोगों में जो कठ है। यत्+डतमच्=अतम टि लोप ]। ततम आगच्छतु। [ वह आये। तत्+डतमच्=अतम, टिलोप ]।

'वा' का कथन ( पक्ष में ) अकच् करने के लिये है।—यकः कठः, सकः आगच्छतु। [ यत्+अकच्, तत्+अकच्। यह अकच् टि के पहले होने से उक्त रूप बनते हैं। जो कठ है, वह आये ]

प्रत्ययविकल्प के लिए महाविभाषा की अनुवृत्ति होती ही है [ अतः प्रत्यय के अभाव पक्ष में वाक्य भी होता है- ] को भवतां कठः। यो भवतां कठः स आगच्छतु।

**जातिपरिप्रश्न इति किम् ? को भवतां देवदत्तः ।**

**परिप्रश्नग्रहणं च किम एव विशेषणम्, न यत्तदोः; असम्भवात् । जातिग्रहणं तु सर्वैः सम्बध्यते ।**

**किमोऽस्मिन्विषये डतरमपीच्छन्ति केचित्—कतरो भवतां कठः, कतरो भवतां कालाप इति । तत्र 'कतरकतमौ जातिपरिप्रश्ने' ( २.१.६३ ) इति वचनात्सिद्धम् ॥**

## २२५५. एकाच्च प्राचाम् ॥ ९४ ॥ ( २०४९ )

**एकशब्दात्प्राचामाचार्याणां मतेन डतरच्, डतमच्—इत्येतौ प्रत्ययौ भवतः स्वस्मिन्विषये । चकारो डतरचोऽनुकर्षणार्थः । द्वयोर्निर्द्धारणे डतरच् । बहूनां निर्द्धारणे डतमच् । 'जातिपरिप्रश्ने' इति नानुवर्तते,**

**न्यासः**

**मकजर्थमिति** । पक्षेऽकजपि यथा स्याद् । यद्येवम्, वाक्यं न सिध्यति, यदा हि डतमज् न भवत्यकचैव भवितव्यम् ? इत्यत आह—**महाविभाषेत्यादि** । अत्र च महाविभाषा प्रत्ययविकल्पार्थानुवर्त्तते, तया प्रत्यये विकल्पिते पक्षे वाक्यमपि भविष्यति । **जातिग्रहणं तु सर्वैः सम्बध्यत इति** । जातिः सर्वत्रैव भवति, तत्र जात्यादिना किंशब्दे विशेष्यमाणे सामर्थ्यादेव तस्य परिप्रश्नविषयत्वं लभ्यते ? नैतदस्ति; स हि क्षेपेऽपि वर्त्तते । तत्रासति परिप्रश्नग्रहणे यदा जातौ क्षेपे वर्त्तते, तदा प्रत्ययः स्यात् ॥ ९३ ॥

**एकाच्च प्राचाम् ॥ स्वस्मिन् विषय इति** । आत्मीये विषये । तत्र द्वयोरेकस्य निर्धारणं डतरचो विषयः, बहूनामेकस्य निर्धारण डतमचः । चकारोऽनुकर्षणार्थः । असति हि तस्मिन् 'अनन्तरस्य विधिर्वा भवति प्रतिषेधो

**पदमञ्जरी**

परिप्रश्नग्रहणं क्षेपनिवृत्त्यर्थम् ।

**वावचनमकजर्थमिति** । कथं तर्हि वाक्यस्य सिद्धिः ? तत्राह—**महाविभाषेत्यादि** ।

**किमोऽस्मिन्विषय इति** । द्वयोरेकस्य निर्द्धारण उक्तौ बहूनामेकस्य निर्द्धारणे न स्यादिति वचनम् । कथं पुनरिष्यमाणोऽपि लभ्यते ? तत्राऽऽह—**तत्रेत्यादि** । ननु कतरो भवतोः कठ इति द्वयोरेकस्य निर्द्धारणेऽपि जातिपरिप्रश्नस्य सम्भवान्नानेन वचनेन बहूनामेकस्य निर्द्धारणे डतरच् शक्यो ज्ञापयितुम् ? एवं तर्हि—'समासविधौ कतरकतमौ जातिपरिप्रश्ने साधू भवतः' इत्यपि व्याख्येयमिति मन्यते । अजातिपरिप्रश्नेऽपि किमो डतमज् भवति—कतमो भवतोर्देवदत्त इति, कथम् ? कतरकतमावित्यत्र जातिपरिप्रश्नग्रहणात् । यदि हि कतमशब्दो जातिपरिप्रश्नादन्यत्र न स्यात्, ततस्तत्साहचर्यात्कतरशब्दोऽपि तदर्थ एव ग्रहीष्यत इत्यनर्थकं तत्स्यात् ॥ ९३ ॥

**एकाच्च प्राचाम् ॥ डतरज्डतमजित्येताविति** । कथं पुनर्व्यवहितस्य डतरचोऽनुवृत्तिः ? इत्याह—**चकार इति** । डतमचस्त्वनन्तरत्वादेवानुवृत्तिरिति भावः । 'स्वस्मिन्विषये' इति यदुक्तं तदेव विवृणोति—**द्वयोर्निर्धारण**

**भावबोधिनी**

जाति-विषयक प्रश्न होने पर – इसका क्या फल है ? को भवतां देवदत्तः ? [ आप में देवदत्त कौन है ? इसमें व्यक्ति-विषयक प्रश्न है ] कठ में पारिभाषिक जातित्व है । ]

परिप्रश्न-ग्रहण किम् का ही विशेषण है, यत् और तत् का नहीं, क्योंकि सम्भव नहीं है । परन्तु जातिग्रहण का सम्बन्ध सभी के साथ है ।

इस विषय में 'किम्' से डतर प्रत्यय भी कुछ लोग चाहते है— कतरो भवतां कठः ? कतरो भवतां कालापः ?' [ किम् + डतर = कतर ] यह तो "कतरकतमौ जातिपरिप्रश्ने" इसी वचन से सिद्ध है ॥ ९३ ॥

प्राचीन आचार्यों के मत में एक शब्द से डतरच् और डतमच् ये प्रत्यय अपने-अपने विषय में होते है अर्थात् दो में से एक के निर्धारण में 'डतरच्' और 'डतमच्' प्रत्यय होते हैं । दो में एक के निर्धारण में डतरच् और बहुतों के मध्य

सामान्येन विधानम् । एकतरो भवतोर्देवदत्तः । एकतमो भवतां देवदत्तः ।

प्राचांग्रहणं पूजार्थम्; विकल्पोऽनुवर्तते एव ॥

## २२५६. अवक्षेपणे कन् ॥ ९५ ॥ ( २०५० )

अवक्षिप्यते येन तदवक्षेपणम् । तस्मिन्वर्तमानात्प्रातिपदिकात्कन् प्रत्ययो भवति । व्याकरणकेन नाम त्वं गर्वितः । याज्ञिक्यकेन नाम त्वं गर्वितः ।

परस्य कुत्सार्थं यदुपादीयते तदिहोदाहरणम् । यत्पुनः स्वयमेव कुत्सितम्, तत्र 'कुत्सिते' ( ५.३.७४ ) इत्यनेन कन्प्रत्ययो भवति—देवदत्तकः. यज्ञदत्तक ( म० भा० ) इति ।

प्रागिवीयस्य पूर्णोऽवधिः ॥

### न्यासः

वा' इति डतमजेव स्यात्; द्वयोर्निर्धारणे द्वयोरेकस्य डतरजित्यनुवृत्तेः, बहूनां निर्धारणे डतमजित्यनुवृत्तेः ।

विकल्पार्थं प्राग्ग्रहणं कस्मान्न भवति ? इत्याह—**विकल्पोऽनुवर्त्तत एवेति** । विकल्प इत्युक्तम् । अनन्तर-सूत्राद्वेत्यनुवर्त्तत एवेति विकल्प इत्युक्तम्, तेनैव प्रत्ययविकल्पः सिद्धः । तस्मात् पूजार्थमेव प्राग्ग्रहणम्, न विकल्पार्थम् ॥ ९४ ॥

**अवक्षेपणे कन्** ॥ **व्याकरणकेनेत्यादि** । कथं पुनर्व्याकरणमवक्षेपणम्, तस्याध्ययनं शास्त्रविहितम्, वेदाङ्गत्वात् ? सत्यमेतत्; तथापि यत्राश्रये तदवक्षेपणमुपसंहरति, तं प्रति तस्यावक्षेपणत्वमुपपद्यते; दोषहेतुत्वात् । **परस्येत्यादिना** 'कुत्सिते' इत्यवक्षेपणे कन्नित्यस्य विभागं दर्शयति ॥ ९५ ॥

### पदमञ्जरी

**इति** । एतच्च द्वयोरेकस्य डतरज, बहूनां डतमजित्यनुवृत्तेर्वाक्यभेदेन च सम्बन्धाल्लभ्यते ॥ ९४ ॥

**अवक्षेपणे कन्** । अवक्षेपः=निन्दा । **व्याकरणकेनेति** । यद्यपि व्याकरणं स्वतोवक्षेपणं न भवति, प्रत्युत वेदाङ्गत्वात्प्रशंसनम्; तथापि यस्य तदवलेपमावहति तस्यावक्षेपणं भवत्येव । **याज्ञिक्यकेन नामेति** । याज्ञिकानामाम्नायो याज्ञिक्यम्=कल्पसूत्रादि । **परस्येत्यादिना** कुत्सित इत्यस्यास्य च कनो विषयविभागं दर्शयति ॥ ९५ ॥

### भावबोधिनी

में एक के निर्धारण में डतमच् प्रत्यय होते हैं । चकार डतरच् के अनुकर्षणार्थ है । 'जातिपरिप्रश्ने' इसकी अनुवृत्ति नहीं होती है, सामान्य रूप से विधान है । उदा०—एकतरो भवतोः देवदत्तः । ( आप दोनों में से एक देवदत्त है । ) एकतमो भवतो देवदत्तः । [ आप सब में एक देवदत्त है । ]

प्राचाम्—इसका ग्रहण पूजा के लिए है क्योंकि विकल्प की अनुवृत्ति होती है ॥ ९४ ॥

अवक्षेप=निन्दा जिसके द्वारा की जाती है वह अवक्षेपण है । उस अवक्षेपण अर्थ में वर्तमान प्रातिपदिक से 'कन्' प्रत्यय होता है । उदा०—व्याकरणकेन नाम त्वं गर्वितः । याज्ञिक्येन नाम त्वं गर्वितः । [ व्याकरण के ज्ञान के कारण तू घमण्डयुक्त है, याज्ञिक होने से तू घमण्डयुक्त है । वास्तव में व्याकरणज्ञान की प्रशंसा होती है । परन्तु जब किसी को उस ज्ञान का दर्प होने लगता है, तब यह प्रयोग किया जाता है । ]

दूसरे की कुत्सा के लिए जिसका उपादान किया जाता है वह यहाँ पर उदाहरण है किन्तु जो स्वतः कुत्सित है वहाँ तो 'कुत्सिते' इसी सूत्र से कन् होता है । जैसे—देवदत्तकः, यज्ञदत्तकः ।

'इव' से पहले के प्रत्ययों की अवधि पूरी हो गई ॥ ९५ ॥

## २२५७. इवे प्रतिकृतौ ॥ ९६ ॥ ( २०५१ )

'कन्' इत्यनुवर्तते । इवार्थे यत्प्रातिपदिकं वर्तते तस्मात्कन्प्रत्ययो भवति । इवार्थः सादृश्यम्, तस्य विशेषणं प्रतिकृतिग्रहणम् । प्रतिकृतिः=प्रतिरूपकम्, प्रतिच्छन्दकम् । अश्व इवायमश्वप्रतिकृतिः अश्वकः । उष्ट्रकः । गर्दभकः ।

प्रतिकृताविति किम् ? गौरिव गवयः ॥

## २२५८. संज्ञायां च ॥ ९७ ॥ ( २०५२ )

'इव' इत्यनुवर्तते, 'कन्' इति च । इवार्थे गम्यमाने कन्प्रत्ययो भवति, समुदायेन चेत् संज्ञा गम्यते । अप्रतिकृत्यर्थ आरम्भः । अश्वसदृशस्य संज्ञा अश्वकः । उष्ट्रकः । गर्दभकः ॥

### न्यासः

इवे प्रतिकृतौ ॥ तद्विशेषणं प्रतिकृतिग्रहणमिति । प्रतिकृतिविषयं यत्र सादृश्यं तत्र प्रयोगो यथा स्यात् । गौरिव गवय इत्यत्रास्ति सादृश्यम्, न तु प्रतिकृतिविषयम्; न हि गौर्गवयप्रतिकृतिः । काष्ठादिमयं हि यत् प्रतिच्छन्दकं तत् प्रतिकृतिरुच्यते ॥ ९६ ॥ संज्ञायाञ्च ॥ ९७ ॥

### पदमञ्जरी

इवे प्रतिकृतौ ॥ इवार्थः सादृश्यमिति । कन् प्रत्ययस्तु स्वभावात्सदृशे भवति, न सादृश्यमात्रे; यथा—प्रकारेऽपि विहितो जातीयर्-प्रत्ययस्तद्वति भवति । तद्विशेषणं [1]प्रतिकृतिग्रहणमिति । प्रतिकृतिविषयं यत्सादृश्यं तत्र प्रत्ययो यथा स्यात्, कोऽर्थः ? प्रतिकृतिस्वरूपं यत्सदृशं तत्रेत्यर्थः । अश्व इवायमश्वप्रतिकृतिरिति । अश्वप्रतिकृतिरूपोऽश्वसदृशोऽयं पदार्थ इत्यर्थः । अश्वक इति ।

केचिदाहुः—'अश्वशब्दोऽश्व एव वर्तते, कन्प्रत्ययस्तु प्रतिकृतिरूपे सदृश इति स्वार्थिकोऽयं न भवति' इति । अपर आह—'सादृश्यनिबन्धनादभेदोपचाराद् गौर्वाहीक इतिवद् अश्वशब्द एव प्रतिकृतौ वर्त्तते, प्रत्ययस्तु तस्यैवोपचारस्य द्योतकः' इति ।

गौरिव गवय इति । गवयो गोर्न प्रतिकृतिः, तृणचर्मकाष्ठादिनिर्मितं हि प्रतिच्छन्दकम्=प्रतिकृतिः, न चैवं गवयः ॥ ९६ ॥ ९७ ॥

### भावबोधिनी

'कन्' इसकी अनुवृत्ति होती है । जो प्रातिपदिक 'इव' के अर्थ में विद्यमान है उससे 'कन्' प्रत्यय होता है । इव का अर्थ सादृश्य है, उसके विशेषण प्रतिकृति का ग्रहण है । प्रतिकृति=प्रतिरूपक, प्रतिछन्दक । उदा०—अश्व इव अयम्—अश्व प्रतिकृतिः इस अर्थ में अश्वकः । उष्ट्रकः । गर्दभकः ।

प्रतिकृति अर्थ में—इसका क्या फल है ? गौरिव गवयः । [ गो के सदृश गवय है—यहाँ प्रतिकृति नहीं है अतः प्रत्यय नहीं होता है । ] ॥ ९६ ॥

'इव' और 'कन्' इनकी अनुवृत्ति होती है । इव का अर्थ गम्यमान रहने पर 'कन्' प्रत्यय होता है । यदि समुदाय से संज्ञा की प्रतीति हो रही हो तो । प्रतिकृति से भिन्न के लिए यह सूत्र है । उदा०—अश्वसदृशस्य संज्ञा—इस अर्थ में—अश्वकः । [ उष्ट्रसदृशस्य संज्ञा— ] उष्ट्रकः । [ गर्दभसदृशस्य संज्ञा—इस अर्थ में— ] गर्दभकः । [ यदि कोई वस्तुविशेष अश्व के सदृश होती हुई उसीके नाम से प्रसिद्ध हो जाती है तब यह प्रत्यय होता है । ] ॥ ९७ ॥

---

१. 'तस्य विशेषणम्'—इति काशिकापाठः ।

## २२५९. लुम्मनुष्ये ॥ ९८ ॥ ( २०५३ )

**'संज्ञायाम्' इत्येव । संज्ञायां विहितस्य कनो मनुष्येऽभिधेये लुब् भवति । चञ्चेव मनुष्यः चञ्चा । दासी । खरकुटी ( म० भा० ) ।**

**मनुष्य इति किम् ? अश्वकः । उष्ट्रकः । गर्दभकः ।**

**देवपथादेराकृतिगणत्वात्तस्यैवायं प्रपञ्चो वेदितव्यः ॥**

## २२६०. जीविकार्थे चापण्ये ॥ ९९ ॥ ( २०५४ )

**जीविकार्थं यदपण्यं तस्मिन्नभिधेये कनो लुब् भवति । विक्रीयते यत्तत् = पण्यम् । वासुदेवः । शिवः । स्कन्दः । विष्णुः । आदित्यः ।**

**देवलकादीनां जीविकार्था देवप्रतिकृतय उच्यन्ते ।**

**अपण्य इति किम् ? हस्तिकान्विक्रीणीते । अश्वकान् । रथकान् ।**

**देवपथादेरेवायं प्रपञ्चः ॥**

### न्यासः

**लुम्मनुष्ये ॥ चञ्चेति** । तृणपुरुष उच्यते । सादृश्याच्च मनुष्यश्चञ्चा । 'लुपि युक्तवद् व्यक्तिवचने' इति प्रकृतिगतमेव लिङ्गं भवति । ननु च 'मनुष्यलुपि प्रतिषेधः' इति वचनाद् युक्तवद्भावो न प्राप्नोति ? नैतदस्ति; विशेषणानां प्रतिषेधः, न लुबन्तस्य ॥ ९८ ॥ **जीविकार्थे चापण्ये** ॥ ९९ ॥

### पदमञ्जरी

**लुम्मनुष्ये** ॥ चञ्चा = तृणपुरुषः, तत्सदृशो मनुष्यश्चञ्चा । लुपि युक्तवद्भावः । 'मनुष्यलुपि प्रतिषेधः' इत्येतत्तु विशेषणविषयम् ॥ ९८ ॥

**जीविकार्थे चापण्ये ॥ वासुदेवः, शिव इत्यादि** । याः प्रतिमाः प्रतिगृह्य गृहाद् गृहं भिक्षमाणा अटन्ति ता एवमुच्यन्ते, ता हि जीविकार्था भवन्ति ।

### भावबोधिनी

'संज्ञायाम्' इसकी अनुवृत्ति होती है । संज्ञा अर्थ में विहित कन् का लुप् होता है यदि मनुष्य अर्थ वाच्य हो तो । उदा०—चञ्चा इव मनुष्यः—चञ्चा । [ खेतों में पक्षियों आदि से सुरक्षा करने के लिए घास आदि के द्वारा मनुष्य का पुतला खड़ा कर दिया जाता है, उसे 'चञ्चा' कहा जाता है । वह जिस प्रकार आंधी आदि सहन नहीं कर पाता है उसी प्रकार जो पुरुष किसी प्रकार के आघातादि को नहीं सहन कर सकता उसे भी 'चञ्चा' कहा जाता है । यहाँ सादृश्य अर्थ में 'कन्' करके उसका लोप कर दिया जाता है । ] दासी । खरकुटी । [ दासी इव मनुष्य; खरकुटी इव मनुष्यः—यह विग्रह करके कन् प्रत्यय करके उसका लुप् किया जाता है । ]

मनुष्य अर्थ में—इसका क्या फल है ? अश्वकः । उष्ट्रकः । गर्दभकः । [ यहाँ मनुष्य से भिन्न सदृश पदार्थ की प्रतीति होने से लुप् नहीं होता है । ]

देवपथादिगण आकृतिगण है । अतः उसी का यह प्रपञ्च समझना चाहिए अर्थात् उसी से लुप् करना चाहिए ॥९८॥

जीविका के लिए ही है किन्तु अपण्य = बेचने योग्य नहीं है, वह यदि अभिधेय हो तो कन् का लुप् होता है । पण्यते = विक्रीयते यत् तत् पण्यम्, जो बेचा जाता है वह पण्य है, [ उससे भिन्न अपण्य है ] उदा०—वासुदेवः । शिवः । स्कन्दः । विष्णुः । आदित्यः ।

जीविकोपार्जन के लिए देवलक आदि की देवप्रतिकृतियाँ यहाँ कही जाती हैं ।

अपण्य—इसका क्या लाभ है ? हस्तिकान् विक्रीणीते । अश्वकान् विक्रीणीते । रथकान् विक्रीणीते । [ इनमें लुप् नहीं होता है क्योंकि बेचना अर्थ है । ]

२२६१. देवपथादिभ्यश्च ॥ १०० ॥ ( २०५५ )

'इवे प्रतिकृतौ' ( ५.३.९६ ) संज्ञायां च ( ५.३.९७ ) विहितस्य कनो देवपथादिभ्य उत्तरस्य लुब् भवति । आदिशब्दः प्रकारे । आकृतिगणश्चायम् । देवपथः । हंसपथः ।

अर्चासु पूजनार्थासु चित्रकर्मध्वजेषु च ।
इवे प्रतिकृतौ लोपः कनो देवपथादिषु ॥

अर्चासु तावत्—शिवः, विष्णुः । चित्रकर्मणि—अर्जुनः, दुर्योधनः । ध्वजेषु—कपिः, गरुडः, सिंहः ।

देवपथ । हंसपथ । वारिपथ । जलपथ । राजपथ । शतपथ । सिंहगति । उष्ट्रग्रीवा । चामरज्जु । रज्जु । हस्त । इन्द्र । दण्ड । पुष्प । मत्स्य[1] । देवपथादिः ॥

२२६२. वस्तेर्ढञ् ॥ १०१ ॥ ( २०५६ )

'इव' इत्यनुवर्तते । इतः प्रभृति प्रत्ययाः सामान्येन भवन्ति, प्रतिकृतौ च, अप्रतिकृतौ च । वस्ति-

न्यासः

देवपथादिभ्यश्च ॥ देवपथ इति । देवानां पन्था इति षष्ठीसमासः । 'ऋक्पूः' इत्यादिनाकारः समासान्तः, कन्, तस्य लुप् ॥ १०० ॥

वस्तेर्ढञ् ॥ इतः प्रभृतीत्यादि । तत्र प्रतिकृतौ 'इवे प्रतिकृतौ' इति कनि प्राप्ते, इतः प्रभृति प्रत्यया भवन्ति । अप्रतिकृतौ त्वसंज्ञायाम् । वाक्येनैवाभिधाने प्राप्ते । संज्ञायां तु प्रतिकृतावप्रतिकृतौ च ढञेव । वस्तिः=

पदमञ्जरी

देवलका अपि त एव भिक्षवोऽभिप्रेताः । यास्त्वायतनेष्वभ्युदयनिःश्रेयसार्थं प्रतिष्ठाप्यन्ते पूज्यन्ते च तासु 'अर्चासु पूजार्थासु' इति वक्ष्यमाणेन लुग् भवति ॥

देवपथादिभ्यश्च ॥ आदिशब्दः प्रकारे इति । तेन किं सिद्धं भवति ? इत्याह—आकृतिगणोऽयमिति ।

भावबोधिनी

यह भी देवपथादि का ही प्रपञ्च है अर्थात् उसी से लुप् करना चाहिये ।

विमर्श—कुछ लोग भिक्षा आदि के लिए देवताओं की मूर्तियाँ लेकर दूसरों के दरवाजों पर घूम घूम कर मांगते हैं । उसी से जीविका निर्वाह करते हैं । उनकी मूर्तियाँ बेची नहीं जाती है अपितु उनके माध्यम से जीविका चलाई जाती है । ऐसे स्थल पर प्रत्यय का लुप् होता है । ] ॥ ९९ ॥

इव के अर्थ=प्रतिकृति और संज्ञा में विहित कन् यदि देवपथादि से उत्तरवर्ती है तो उसका लुप् हो जाता है । आदिशब्द प्रकार अर्थ में है । और यह आकृतिगण है । उदा०—देवपथः । हंसपथः । [ यहाँ प्रतिकृति अर्थ में विहित कन् का लुप् हो जाता है । ]

पूजन के लिये जो प्रतिमायें मन्दिरों आदि में है, चित्रकर्म और ध्वजाओं में हैं, उन देवपथादिगणपठितों से इवार्थ और प्रतिकृति गम्यमान रहने पर कन् का लुप् होता है । [ चूँकि मन्दिर आदि में जो देवप्रतिमायें होती हैं उनमें देवता के सादृश्य की प्रतीति न होकर अभेद की ही प्रतीति होती है । अतः उनसे प्रत्यय की प्राप्ति नहीं है, लोप की आवश्यकता नहीं है । ]

अर्चा=प्रतिमाओं में लोप के उदा०—शिवः, विष्णुः । चित्रकर्म में—अर्जुनः, दुर्योधनः । ध्वजों में—कपिः । गरुडः । सिंहः । [ देवपथादिगण में पठित शब्द— ] देवपथ । हंसपथ । वारिपथ । जलपथ । राजपथ । शतपथ । सिंहगति । उष्ट्रगीवा । चामरज्जु । रज्जु । हस्त । इन्द्र । दण्ड । पुष्प । मत्स्य । ये देवपथादि हैं ॥ १०० ॥

'इव' इसकी अनुवृत्ति होती है । यहाँ से लेकर प्रत्यय सामान्य रूप से होते हैं, प्रतिकृत्ति अर्थ में और अप्रतिकृत्ति अर्थ में । 'इव' अर्थ द्योत्य रहने पर 'वस्ति' शब्द से 'ढञ्' प्रत्यय होता है । उदा० वस्तिः इव—इस अर्थ में वास्तेयः

१. अत्र—रथपथ, शङ्कुपथ, सिंहपथ—इत्येते शब्दा अधिकाः पुस्तकान्तरे ।

शब्दादिवार्थे द्योत्ये ढञ्प्रत्ययो भवति । वस्तिरिव वास्तेयः । वास्तेयी ॥

२२६३. शिलाया ढः ॥ १०२ ॥ ( २०५७ )

शिलाशब्दादिवार्थे ढः प्रत्ययो भवति । शिलेव शिलेयं दधि ।

केचिदत्र ढञमपीच्छन्ति, तदर्थं योगविभागः कर्त्तव्यः । 'शिलायाः', ढञ्प्रत्ययो भवति—शैलेयम् । ततः 'ढः'—शिलेयम् ॥

२२६४. शाखादिभ्यो यत्[1] ॥ १०३ ॥ ( २०५८ )

'शाखा' इत्येवमादिभ्यः प्रातिपदिकेभ्यो यत्प्रत्ययो भवति इवार्थे । शाखेव शाख्यः । मुख्यः । जघन्यः । शाखा । मुख । जघन । शृङ्ग । मेघ । चरण । स्कन्ध । शिरस । उरस् । अग्र । शरण । शाखादिः ।

२२६५. द्रव्यं च भव्ये ॥ १०४ ॥ ( २०५९ )

द्रव्यशब्दो निपात्यते भव्येऽभिधेये । द्रुशब्दादिवार्थे यत्प्रत्ययो निपात्यते । द्रव्यम्=भव्यः, आत्मवान्; अभिप्रेतानामर्थानां पात्रभूत उच्यते । द्रव्योऽयं राजपुत्रः । द्रव्योऽयं माणवकः ॥

२२६६. कुशाग्राच्छः ॥ १०५ ॥ ( २०६० )

कुशाग्रशब्दादिवार्थे छः प्रत्ययो भवति । कुशाग्रमिव सूक्ष्मत्वात् कुशाग्रीया बुद्धिः । कुशाग्रीयं वस्त्रम् ॥

न्यासः

दृतिविकारः । वास्तेयीति । 'टिड्ढाणञ्' इति ङीप् ॥ १०१ ॥ शिलाया ढः ॥ १०२ ॥ शाखादिभ्योयत् ॥ १०३ ॥ द्रव्यञ्च भव्ये ॥ १०४ ॥ कुशाग्राच्छः ॥ १०५ ॥

पदमञ्जरी

अर्चासु=प्रतिमासु पूजनार्थासु गृहेष्वायतनेषु वा याः पूज्यन्ते तासु, चित्रकर्मध्वजाभ्यां तद्गताः प्रतिकृतयो लक्ष्यन्ते ॥ ९९ ॥ १००–१०५ ॥

भावबोधिनी

वास्तेयी । [ वास्ति+ढञ्=एय, इलोप, आदिवृद्धि । नाभि के नीचे के भाग को आच्छादित करने वाले वस्त्र के समान । स्त्रीलिङ्ग साड़ी आदि के लिए 'वास्तेयी' में ङीप् होता है ॥ १०१ ॥

शिला शब्द से इव अर्थ में 'ढ' प्रत्यय होता है । उदा०-शिला इव-शिलेयम् दधि । ( शिला+ढ=एय, आलोप । जो दही खूब कड़ा हो, शिला के समान प्रतीत हो रहा हो, उसे 'शिलेयम् कहते हैं ) ।

कुछ लोग इसमें ढञ् प्रत्यय भी चाहते हैं, उनके लिए योग-विभाग करना चाहिये—'शिलायाः'=शिला शब्द से ढञ् प्रत्यय होता है—शैलेयम् । इसके बाद 'ढः'=शिला शब्द से 'ढ' प्रत्यय भी होता है—शिलेयम् । [ इस प्रकार दो रूप होते हैं । ] ॥ १०२ ॥

शाखा आदि प्रातिपदिकों से 'इव' के अर्थ में यत् प्रत्यय होता है । उदा० —शाखा इव-इस अर्थ में शाख्यः । ( शाखा+य, भसंज्ञा आलोप ) मुख्यः । [ मुखमिव इसमें ] [ जघनम् इव—इस अर्थ में ] जघन्यः ।

[ शाखादिगण में पठित शब्द– ] शाखा । मुख । जघन । शृङ्ग । मेघ । चरण । स्कन्ध । शिरस् । उरस् । अग्र । ये शाखादि हैं ॥ १०३ ॥

भव्य अर्थ अभिधेय रहने पर द्रव्य शब्द निपाति होता है । द्रुशब्द से इवार्थ में यत् प्रत्यय निपातित होता है । द्रव्य = भव्य, आत्मवान्, अभिप्रेत अर्थों का पात्रभूत कहा जाता है । उदा०–द्रव्यः अयं राजपुत्रः । द्रव्यः अयं माणवकः । ( यह राजपुत्र गुणों का पात्र है । यह माणवक गुणों का पात्र है ) ॥ १०४ ॥

कुशाग्र शब्द से इवार्थ में 'छ' प्रत्यय होता है । उदा० सूक्ष्म होने के कारण कुशाग्र के समान बुद्धि=कुशाग्रीया बुद्धि । ( कुशाग्र+छ ईय, टाप् ) कुशाग्रीयम् वस्त्रम् । ( कुश की नोक के समान सूक्ष्म पतला वस्त्र—कुशाग्रीयम् ) ॥ १०५ ॥

---

१. 'य' इति ५।१।२ सूत्रभाष्यसम्मतः पाठः ।

## २२६७. समासाच्च तद्विषयात् ॥ १०६ ॥ ( २०६१ )

**तदित्यनेन प्रकृत इवार्थो निर्दिश्यते। इवार्थविषयात्समासादपरस्मिन्निवार्थे एव छः प्रत्ययो भवति। काकतालीयम्। अजाकृपाणीयम्। अन्धकवर्त्तकीयम्।**

**अतर्कितोपनतं चित्रीकरणमुच्यते। तत्कथम्? काकस्यागमनं यादृच्छिकम्, तालस्य पतनं च, तेन तालेन पतता काकस्य वधः कृतः; एवमेव देवदत्तस्य तत्रागमनम्, दस्यूनां चोपनिपातः, तैश्च तस्य वधः कृतः। तत्र यो देवदत्तस्य दस्यूनां च समागमः, स काकतालसमागमसदृश इत्येक उपमार्थः। अतश्च देवदत्तस्य वधः, स काकतालवधसदृश इति द्वितीय उपमार्थः। तत्र प्रथमे समासः, द्वितीये प्रत्ययः।**

**समासश्चायमस्मादेव ज्ञापकात्। न ह्यस्यापरं लक्षणमस्ति।**

### न्यासः

**समासाच्च तद्विषयात्।** **इवार्थविषयात् समासादिति।** इवशब्दस्यार्थ इवार्थः = सादृश्यं विषयो, यस्य स तथोक्तः। यदि इवार्थविषयात् समासाच्छो विधीयते, शस्त्रीश्यामा, पुरुषव्याघ्र इत्यत्रापि प्राप्नोति? नैष दोषः; न ह्यत्र समास इवार्थे वर्त्तते, किं तर्हि? पूर्वपदमुत्तरपदं वा—शस्त्रीव श्यामा, पुरुषोऽयं व्याघ्र इवेति। अथाप्येकदेशस्येवार्थे वर्त्तमानत्वात् समासोऽपीवार्थ उच्यते, तथापि समासेनैवोक्तत्वान्न भविष्यति, यस्तु समासः स क इवार्थे वर्त्तते? समासार्थादपर इवार्थो यत्रास्ति तत्रायं प्रत्यय उक्तः। **परस्मिन्निवार्थ एवेति।** 'इव' इत्यधिकारात्।

**अतर्कितोपनतमिति।** अबुद्धिपूर्वमुपस्थितमित्यर्थः। **चित्रीकरणमिति।** विस्मयकरणमित्यर्थः। **तत् कथमिति।** केन प्रकारेणातर्कितोपनतं चित्रीकरणमिति?—इममर्थं पृच्छति—**तत्कथमित्यादि।**

### पदमञ्जरी

**समासाच्च तद्विषयात्॥ तदित्यनेन प्रकृत इवार्थो निर्दिश्यते इति।** छप्रत्ययस्तु प्रधानतया प्रकृतोऽपि न परामृश्यते, अनेनैव तस्य विधानात्, समासस्य तद्विषयत्वानुपपत्तेः। **अपरस्मिन्निवार्थ एवेति।** एवकारः पौनर्वचनिकः। शस्त्रीश्यामादौ त्वेक इवार्थः समासेऽन्तर्भूत इति छो न भवति। **अजाकृपाणीयमिति।** अजाया गच्छन्त्याः कृपाणेनाधःपतता यथा वधस्तत्सदृशमित्यर्थः। **अन्धकवर्त्तकीयमिति।** वर्त्तिका = शकुनिविशेषः, तस्या अन्धहस्ते पतनं ग्रहणं च यादृच्छिकं तादृगित्यर्थः।

### भावबोधिनी

तद् इससे प्रकृत = प्रस्तुत इवार्थ का निर्देश है। इवार्थ-विषयक समास जिसमें हुआ है उससे दूसरे 'इव' के अर्थ में 'छ' प्रत्यय होता है। [ जहाँ पहले इवार्थ = सादृश्य में समास किया जा चुका है उसी में दूसरे इवार्थ = सादृश्य की प्रतीति कराने के लिए 'छ' प्रत्यय होता है। इस कारण दो बार सादृश्य की प्रतीति होती है। ] उदा०—काकतालीयम्। अजाकृपाणीयम्। अन्धकवर्त्तीयम्।

अचानक हो जाने वाला विस्मय कराने वाला कहा जाता है। वह कैसे होता है? काक का आगमन यादृच्छिक ( अचानक अपनी इच्छा से ) है और ताड़ के फल का गिरना भी अचानक है, उस गिरते हुए ताड़ के फल द्वारा कौवा का वध कर दिया गया, इसी प्रकार वहाँ ( स्थानविशेष पर ) देवदत्त का आना और डाकुओं का भी आ धमकना, उन डाकुओं ने उस देवदत्त का वध कर डाला। वहाँ जो देवदत्त और डाकुओं का एक साथ आना है वह कौवा और ताड़ के फल के गिरने के समान ( एक काल में होने वाला ) है—यह एक उपमा का अर्थ है। और इसलिए देवदत्त का वध काकतालवध के सदृश है—यह दूसरी उपमा का अर्थ है। इनमें प्रथम ( सादृश्य ) अर्थ में समास होता है और दूसरे अर्थ में 'छ' प्रत्यय होता है।

इस विधान के कारण ही समास होता है क्योंकि इसमें दूसरा कोई सूत्र समासविधायक नहीं है।

'सुप्सुपा' इति वा समासः। स चैवंविषय एव॥

## २२६८. शर्करादिभ्योऽण् ॥ १०७ ॥ ( २०६२ )

'शर्करा'—इत्येवमादिभ्यः प्रातिपदिकेभ्य इवार्थेऽण्प्रत्ययो भवति। शर्करेव शार्करम्। कापालिकम्।

शर्करा। कपालिका। पिष्टिक[1]। पुण्डरीक। शतपत्र। गोलोमन्। गोपुच्छ। नरालि। नकुला। सिकता। शर्करादिः॥

### न्यासः

**समासश्चायमित्यादि।** यदेतदिवार्थविषयात् समासात् प्रत्ययविधानम्, अत एव ज्ञापकादवसीयते—समासो भवति। कथं पुनरेतज्ज्ञापकमिति? आह—**न ह्यस्येत्यादि।** इवार्थविषयस्य समाससामान्यस्य लक्षणं नास्तीति। तस्माद् यदेतत् ततः प्रत्ययविधानम्, एतदेव तद्भावस्य ज्ञापकमुपपद्यते।

अथ वा—किं पुनः कारणं ज्ञापकेन समास-सद्भावः प्रतिपाद्यते इति? आह—**न ह्यस्येत्यादि। स चैवंविषय एवेति।** इवार्थविषय एवेत्यर्थः॥ १०६॥

**शर्करादिभ्योऽण्** ॥ १०७ ॥ **अङ्गुल्यादिभ्यष्ठक्** ॥ १०८ ॥ **एकशालायाष्ठजन्यतरस्याम्** ॥ **अन्यत-**

### पदमञ्जरी

**अतर्कितोपपन्नमिति।** अचिन्तितोपपन्नम्, यादृच्छिकमित्यर्थः। चित्रीकरणम् = विस्मयकरणम्। **कथमिति।** सामान्येनायमर्थः कथमुच्यत इत्यर्थः।

**समासश्चायमित्यादि।** किं पुनः कारणं ज्ञापकात्समाससद्भावः प्रतिपाद्यते? इत्यत आह—**न ह्यस्येति। स च एवंविषय एवेति।** छप्रत्ययविषय एवेत्यर्थः। अनन्यत्र भावो विषयार्थः, तेन स्वातन्त्र्यमुपाध्यन्तरयोगोः,

### भावबोधिनी

अथवा 'सुप् सुपा' सूत्र से समास होता है। और वह समास इसी प्रकार के विषयों में होता है।

**विमर्शः**—काकतालीयं देवदत्तस्य हननम्—आदि उदाहरणों में प्रस्तुत सूत्र प्रवृत्त होता है। किसी समय कोई एक कौवा अचानक किसी ताड़ के पेड़ के नीचे पहुँचा, उसी समय एक फल उस पर गिर पड़ा और उससे कौवा की मृत्यु हो गई। इसी प्रकार किसी समय देवदत्त अचानक निर्जन वन में पहुँचा उसी समय दस्यु आ गये। उन्होंने उसे मार डाला। इसी आशय को प्रकट करने के लिए प्रस्तुत सूत्र से 'छ' प्रत्यय होता है।

इस में दो सादृश्यों की प्रतीति होती है (१) समासगत, (२) तद्धित-प्रत्ययार्थगत। इसे इस प्रकार समझना चाहिए—काकागमनमिव तालपतनमिव—इस विग्रह में समास होता है। 'काक' शब्द काकागमनसदृश देवदत्तागमन में लाक्षणिक है और 'ताल' शब्द तालपतनसदृश चोरागमन में लाक्षणिक है। अतः—काकागमनसदृशं देवदत्तागमनम्, तालपतनसदृशं चोरागमनम्—यह बोध 'काकतालम्' से होता है। यद्यपि इस में मिलित काकतालशब्दों का एक में अन्वय नहीं होता है अतः द्वन्द्व नहीं हो सकता है तथापि इस तद्धित प्रत्यय-विधान के बल से ऐसा भी समास 'सुप् सुपा' सूत्र से हो जाता है। इस प्रकार—काकतालसमागमसदृशः दस्यु-देवदत्तयोः समागमः—यह समासार्थ होता है। इस प्रकार के 'काकताल' शब्द से इवार्थ दूसरे सादृश्य में 'छ' प्रत्यय होता है। यहाँ देवदत्तचोरसमागम होने पर तालपतनकृतकाक-मरणसदृश देवदत्त का चोरकृत वध—यह सादृश्य 'छ' प्रत्यय से प्रतीत होता है। अतः दो बार सादृश्य की प्रतीति कराने के लिए सादृश्य में समास और सादृश्य में ही तद्धित प्रत्यय करना आवश्यक है॥ १०६॥

शर्करा आदि प्रातिपदिकों से इव के अर्थ में 'अण्' प्रत्यय होता है। उदा०—शर्करा इव—शार्करम्। [शर्करा + अण् = अ, आदिवृद्धि, भसंज्ञा, आलोप] कापालिकम्। [कपालिका इव—यहाँ भी उसी प्रकार प्रत्यय होता है।]

[इस गण में पठित शब्द—] शर्करा। कपालिका। पिष्टक। पुण्डरीक। शतपत्र। गोलोमन्। गोपुच्छ। नरालि। नकुला। सिकता। ये शर्करादि हैं॥ १०७॥

१. 'कनिष्ठिक' इति, 'कपिष्टिक' इति च पाठा०।

२२६९. अङ्गुल्यादिभ्यष्ठक् ॥ १०८ ॥ ( २०६३ )

अङ्गुल्यादिभ्य इवार्थे ठक् प्रत्ययो भवति । अङ्गुलीवाङ्गुलिकः । भारुजिकः ।

अङ्गुलि । भरुज । बभ्रु । वल्गु । मण्डर । मण्डल । शष्कुल । कपि । उदश्वित् । गोणी । उरस् । शिखा । कुलिश । अङ्गुल्यादिः ॥

२२७०. एकशालायाष्ठजन्यतरस्याम् ॥ १०९ ॥ ( २०६४ )

एकशालाशब्दादिवार्थेऽन्यतरस्यां ठच्प्रत्ययो भवति । अन्यतरस्यांग्रहणेनानन्तरष्ठक् प्राप्यते । एकशालेव एकशालिकः, ऐकशालिकः ॥

२२७१. कर्कलोहितादीकक् ॥ ११० ॥ ( २०६५ )

कर्कलोहितशब्दाभ्यामिवार्थे ईकक् प्रत्ययो भवति । कर्कः = शुक्लोऽश्वः, तेन सदृशः कार्कीकः । लौहितीकः स्फटिकः । स्वयमलोहितोऽप्युपाश्रयवशात्तथा प्रतीयते ॥

२२७२. प्रत्नपूर्वविश्वेमात्थाल् छन्दसि ॥ १११ ॥ ( ३५०२ )

प्रत्न, पूर्व, विश्व, इम—इत्येतेभ्य इवार्थे थाल् प्रत्ययो भवति छन्दसि विषये । 'तं प्रत्नथा पूर्वथा

**न्यासः**

स्यांग्रहणेनेत्यादि । पूर्वसूत्रेण विहितत्वाट् ठगेवानन्तरः । अन्यतरस्यांग्रहणं समुच्चयार्थम् । अतस्तेन, अनन्तरस्य विधिर्वा भवति प्रतिषेधो वा' इति स एव प्राप्यते ॥ १०९ ॥ कर्कलोहितादीकक् ॥ ११० ॥ प्रत्नपूर्वविश्वेमात्थाल

**पदमञ्जरी**

विग्रहश्च न भवति ॥ १०६ ॥ १०७ ॥ १०८ ॥

एकशालायाष्ठजन्यतरस्याम् ॥ अनेकार्थत्वान्निपातानामन्यतरस्यांग्रहणमिह समुच्चयार्थम्, न विकल्पार्थमित्याह— अन्यतरस्यांग्रहणेनेत्यादि ॥ १०९ ॥

कर्कलोहितादीकक् ॥ स्वयमलोहित इत्यादि । उपाश्रयः = उपादानभूतो लाक्षादिः ॥ ११० ॥

प्रत्नपूर्वविश्वेमात्थाल् छन्दसि ॥ इम शब्द इदमा समानार्थः प्रकृत्यन्तरम् ॥ १११ ॥

**भावबोधिनी**

अङ्गुली आदि शब्दों से इवार्थ में ठक् प्रत्यय होता है । उदा०—अङ्गुली इव—इस विग्रह में—आङ्गुलिकः । [ अङ्गुली + ठक् = इक, आदिवृद्धि, भसंज्ञा, ईलोप ] भारुजिकः ।

[ इस गण में पठित शब्द— ] अङ्गुलि । भरुज । बभ्रु । वल्गु । मण्डर । मण्डल । शष्कुल । कपि । उदश्वित् । गोणी । उरस् । शिखा । कुलिश । ये अङ्गुल्यादि हैं ॥ १०८ ॥

इवार्थ में 'एकशाला' शब्द से विकल्प से ठच् प्रत्यय होता है । अन्यतरस्याम् ( विकल्प ) के ग्रहण से अव्यवहित पूर्ववर्ती ठक् प्रत्यय प्राप्त होता है । उदा०—एकशाला इव—इस अर्थ में—एकशालिकः, ऐकशालिकः । [ ठच् और ठक् में आदिवृद्धि न होना और होना के अतिरिक्त स्वर का भी भेद होता है । ] ॥ १०९ ॥

कर्क और लोहित—शब्दों से इव के अर्थ में ईकक् प्रत्यय होता है । कर्क = श्वेत अश्व । इसके सदृश—कार्कीकः । [ कर्क + ईकक्, आदिवृद्धि, भसंज्ञा, अलोप । सफेद घोड़े के समान जो दूसरा पशु है वह 'कार्कीक' है । ] लौहितीकः स्फटिकः । स्वतः लोहितवर्ण का न होता हुआ भी समीपवर्त्ती आश्रयभूत ( अन्य पदार्थ के संसर्ग ) से वैसा प्रतीत होता है ॥ ११० ॥

प्रत्न, पूर्व, विश्व, इम—इन शब्दों से इव के अर्थ में वेदविषय में 'थाल्' प्रत्यय होता है । उदा०—तं प्रत्नथा,

विश्वथेमथा' ( ऋ० ५.४४.१ ) ॥

## २२७३. पूगाञ्ञ्योऽग्रामणीपूर्वात् ॥ ११२ ॥ ( २०६६ )

'इवार्थे' इति निवृत्तम् । नानाजातीया अनियतवृत्तयोऽर्थकामप्रधानाः सङ्घाः=पूगाः, पूगवाचिनः प्रातिपदिकादग्रामणीपूर्वात्स्वार्थेञ्यः प्रत्ययो भवति । लौहध्वज्यः, लौहध्वज्यौ, लौहध्वजाः । शैब्यः, शैब्यौ, शिबयः । चातक्यः, चातक्यौ, चातकाः ।

अग्रामणीपूर्वादिति किम् ? देवदत्तो ग्रामणीरेषां त इमे देवदत्तकाः । यज्ञदत्तकाः ॥

## २२७४. व्रातच्फञोरस्त्रियाम् ॥ ११३ ॥ ( ११०० )

**न्यासः**

**छन्दसि** ॥ **इमथेति** । इमेतीदमा समानार्थं प्रकृत्यन्तरमस्ति, तत इदं प्रत्ययविधानम् ॥ १११ ॥

**पूगाञ्ञ्योऽग्रामणीपूर्वात्** ॥ **पूर्वादिति** । पूर्वशब्दोऽवयववाची । ग्रामणीः पूर्वो यस्य तत् ग्रामणीपूर्वम् । प्रतिषेधेन च स्वरूपग्रहणं भवतीति विज्ञायते । पूगशब्देन स्वरूपे गृह्यमाणे ग्रामणीपूर्वतः प्राप्तिरेव नास्ति; ग्रहणवता प्रातिपदिकेन तदन्तविधेः प्रतिषेधात् । **लोहध्वजा इति** । 'ञ्यादयस्तद्राजाः' इति तद्राजसंज्ञा, तेन 'तद्राजस्य बहुषु' इत्यादिना लुक् ।

**देवदत्तका इति** । 'स एषां ग्रामणीः' इति कन् । अत्र देवदत्तशब्दः पूर्वंग्रामणीरवयव इति न प्रत्ययः ॥ ११२ ॥

**व्रातच्फञोरस्त्रियाम्** ॥ **व्रातवाचिभ्य इति** । अथ स्वरूपस्यैव ग्रहणं कस्मान्न भवति ? च्फञोरल्पाच्तरस्य

**पदमञ्जरी**

**पूगाञ् ञ्योऽग्रामणीपूर्वात्** ॥ **पूगवाचिन इति** । स्वरूपग्रहणं तु न भवति; 'अग्रामणीपूर्वात्' इति वचनात् । पूर्वशब्दो ह्यवयववचनः, न च पूगशब्दस्य ग्रामणीवचनो देवदत्तादिशब्दः पूर्वावयव उपपद्यते । **लोहध्वजा इति** । 'ञ्यादयस्तद्राजाः' इति तद्राजसंज्ञा, 'तद्राजस्य बहुषु' इति लुक् ।

**देवदत्तका इति** । 'स एषां ग्रामणीः' इति कन्, अत्र देवदत्तशब्दो ग्रामणीवचनः पूर्वोऽवयवः, समुदायः पूगवचनः ॥ ११२ ॥

**व्रातच्फञोरस्त्रियाम्** ॥ उत्सेधजीवित्वं व्रातस्य पूगाद्विशेषः । **कौञ्जायनीति** । 'गोत्रे कुञ्जादिभ्यश्च्फञ्',

**भावबोधिनी**

पूर्वथा विश्वथेमथा । [ यहाँ सभी चारों से थाल् प्रत्यय हुआ है । ] ॥ १११ ॥

'इवार्थे' इसकी निवृत्ति हो जाती है । नाना प्रकार के, अनियतजीविका चलाने वाले, अर्थ और काम को ही प्रधान मानने वाले संघ = पूग हैं, ऐसे पूगवाचक, अग्रामणीपूर्वक ( जिनके पूर्व में ग्रामणी शब्द नहीं है ) प्रातिपदिक से स्वार्थ में ञ्य प्रत्यय होता है । उदा०—लौहध्वज्यः, लौहध्वज्यौ, लौहध्वजाः [ लोहध्वज + ञ्य = य, आदिवृद्धि । शैब्यः, शैब्यौ, शिबयः । चातक्यः, चातक्यौ, चातकाः । [ यहाँ व्यक्ति को प्रधान मानते हुए समूह की प्रतीति होती है । अतः लोहध्वज, शिबि, चातक ये जिस समूह में प्रधान हैं वह समूह = पूग भी इन्हीं के नाम से पुकारा जाता है । अतः ञ्य प्रत्यय होता है । 'ञ्यादयस्तद्राजाः' ( ५।३।११९ ) सूत्र से इसकी तद्राज संज्ञा होने के कारण 'तद्राजस्य बहुषु तेनैवास्त्रियाम्' ( पा० सू० २।४।६२ ) से ञ्य का लुक् बहुवचन में हो जाता है । अतः बहुवचन में मूल प्रकृति का ही रूप रहता है । विशेष व्याख्या ( ५।३।११९ ) सूत्र में देखें । ]

ग्रामणी पूर्व में न हो—इसका क्या फल है ? देवदत्तो ग्रामणीः एषां ते इमे देवदत्तकाः । [ यहाँ 'ञ्य' न होकर 'कन्' होता है । ] यज्ञदत्तकाः ॥ ११२ ॥

नाना प्रकार के, अनियत जीविका वाले, उत्सेधजीवी ( शारीरिक श्रम से जीविका चलाने वाले ) संघ = व्रात

नानाजातीया अनियतवृत्तय उत्सेधजीविनः सङ्घाः=व्राताः। व्रातवाचिभ्यः प्रातिपदिकेभ्यश्च स्वार्थे ञ्यः प्रत्ययो भवत्यस्त्रियाम्। कापोतपाक्यः, कापोतपाक्यौ, कपोतपाकाः। व्रैहिमत्यः, व्रैहिमत्यौ, व्रीहिमताः। च्फञः खल्वपि कौञ्जायन्यः—कौञ्जायन्यौ, कौञ्जायनाः। ब्राध्नायन्यः, ब्राध्नायन्यौ, ब्राध्नायनाः।

अस्त्रियामिति किम्? कपोतपाकी। व्रीहिमती। कौञ्जायनी। ब्राध्नायनी॥

२२७९. आयुधजीविसङ्घाञ्ञ्यड् वाहीकेष्वब्राह्मणराजन्यात्॥ ११४॥ (२०९७)

आयुधजीविनां सङ्घः आयुधजीविसङ्घः, स वाहीकैर्विशेष्यते। वाहीकेषु य आयुधजीविसङ्घः, तद्वाचिनः प्रातिपदिकाद् ब्राह्मणराजन्यवर्जितात्स्वार्थे ञ्यट् प्रत्ययो भवति।

**न्यासः**

परनिपातात्, स हि लक्षणान्तरानपेक्षतामाचष्टे। तेन 'स्वं रूपं शब्दस्य' इत्येतदपीह नापेक्ष्यत इति न भवति स्वरूपग्रहणम्। **कौञ्जायन्य इति**। 'गोत्रे कुञ्जादिभ्यश्च्फञ्'। **कौञ्जायनीति**। 'जातेरस्त्रीविषयात्' इति ङीष्। जातित्वं तु 'गोत्रञ्च चरणैः सह' इति॥ ११३॥

**आयुधजीविसङ्घाञ्ञ्यड् वाहीकेष्वब्राह्मणराजन्यात्**॥ **वाहीकेष्विति**। निर्धारणे सप्तमी। **वाहीकेषु मध्ये य आयुधजीविसङ्घ इति**। निर्धारणञ्च समानजातीयस्यैव भवतीत्यायुधजीविसङ्घोऽपि वाहीक एव विज्ञायते। अथ वा—देशवाचिनो वाहीकशब्दादधिकरण एवैषा सप्तमी, वाहीकदेशविशेष आयुधजीविसङ्घो वसतीति।

**ब्राह्मणे तद्विशेषग्रहणम्**। अथ स्वरूपग्रहणं कस्मान्न भवति? अत एव प्रतिषेधात्। यदि स्वरूपग्रहणं स्याद्, ब्राह्मणप्रतिषेधोऽनर्थकः स्यात्। प्राप्तिपूर्वको हि प्रतिषेधो भवति। ब्राह्मणशब्द आयुधजीविसङ्घो वाहीकेषु न विषय इति किं ब्राह्मणप्रतिषेधेन? ब्राह्मणविशेषवाचिनस्तु ये गोपालप्रभृतयः शब्दास्तद्वाच्या आयुधजीविसङ्घा वाहीकेषु भवन्ति; तत्र यदि प्रतिषेधो न क्रियेत, तदा तेभ्योऽपि स्यात्। अतस्तन्निवृत्त्यर्थोऽर्थवान्

**पदमञ्जरी**

'गोत्रं च चरणैः सह' (म० भा०) इति जातित्वान्ङीष्॥ ११३॥

**आयुधजीविसङ्घाञ्ञ्यड् वाहीकेष्वब्राह्मणराजन्यात्**॥ यदा वाहीकशब्दः पुरुषेषु वर्त्तते, तदा 'वाहीकेषु' इति निर्द्धारणे सप्तमी, यदा तु देशे तदाऽधिकरणे।

**भावबोधिनी**

हैं। व्रातवाचक और च्फञ्प्रत्ययान्त प्रातिपदिकों से स्वार्थ में 'ञ्य' प्रत्यय होता है किन्तु स्त्री अर्थ में नहीं होता है। उदा०—कापोतपाक्यः, कापोतपाक्यौ, कपोतपाकाः। (कपोतपाक+ञ्य=य, आदिवृद्धि, बहुवचन में पूर्ववत् तद्राज-संज्ञा करके प्रत्यय का लुक्।) व्रैहिमत्यः, व्रैहिमत्यौ, व्रीहिमताः। [व्रीहिमत्+ञ्य] च्फञ् प्रत्ययान्त से भी उदा०—कौञ्जायन्यः, कौञ्जायन्यौ, कौञ्जायनाः। [कुञ्ज+च्फञ्=फ=आयन, आदिवृद्धि, बहुवचन में ञ्य का लुक् होने पर भी पूर्वप्रत्ययकृत वृद्धि रहती है।] ब्राध्नायन्यः ब्राध्नायन्यौ, ब्राध्नायनाः।

स्त्रीलिङ्ग में नहीं—इसका क्या फल हैं? कपोतपाकी। व्रीहिमती। कौञ्जायनी। ब्राध्नायनी। [इनमें प्रत्यय नहीं होता है।]॥ ११३॥

आयुध से जीविका चलाने वालों का संघ=समूह=आयुधजीविसङ्घ है, यह बाह्रीक से विशेषित होता है। बाह्रीक लोगों में जो आयुधजीवियों का सङ्घ है उसके वाचक प्रातिपदिक से, ब्राह्मण और राजन्य को छोड़कर, स्वार्थ में ञ्यट् प्रत्यय होता है।

ब्राह्मण में उसके विशेषभेद का और राजन्य में तो स्वरूप का ही ग्रहण होता है। टकार ङीप् के लिए है। इस कारण 'अस्त्रियाम्' की अनुवृत्ति नहीं होती है। [अन्यथा ङीप् के लिए टित् करना व्यर्थ हो जायगा।]

**ब्राह्मणे तद्विशेषग्रहणम् । राजन्ये तु स्वरूपग्रहणमेव । टकारो ङीबर्थः, तेन 'अस्त्रियाम्' इति नानुवर्तते ।**
**कौण्डीबृस्यः, कौण्डीबृस्यौ, कौण्डीबृसाः । क्षौद्रक्यः, क्षौद्रक्यौ, क्षुद्रकाः । मालव्यः, मालव्यौ, मालवाः । स्त्रियाम्—कौण्डीबृसी । क्षौद्रकी । मालवी ।**

**आयुधजीविग्रहणं किम् ? मल्लाः, शयण्डाः । सङ्घग्रहणं किम् ? सम्राट् । वाहीकेष्विति किम् ? शाबराः, पुलिन्दाः । अब्राह्मणराजन्यादिति किम् ? गोपालका ब्राह्मणाः, शालङ्कायना राजन्याः ॥**

## २२७६. वृकाट्टेण्यण् ॥ ११५ ॥ ( २०६८ )

'आयुधजीविसङ्घात्' इति वर्तते । **वृकशब्दादायुधजीविनः स्वार्थे टेण्यण् प्रत्ययो भवति । टकारो ङीबर्थः । णकारो वृद्ध्यर्थः । वार्केण्यः, वार्केण्यौ, वृकाः ।**

**आयुधजीविसङ्घविशेषणम्—जातिशब्दान्मा भूत् :—**

**न्यासः**

विशेषग्रहणे प्रतिषेधो भवति । तस्माद्—**ब्राह्मणे तद्विशेषग्रहणम्, राजन्ये तु स्वरूपग्रहणमेवेति** । तद्वाच्यस्यायुधजीविसङ्घस्य वाहीकेषु सत्त्वात्, 'स्वं रूपं शब्दस्याशब्दसंज्ञा' इति वचनाच्च । **तेनेत्यादि** । यस्माद् ङीबर्थोऽत्र टकारः कृतस्तेन 'अस्त्रियाम्' इति नानुवर्त्तते । तदनुवृत्तौ ञ्यट्प्रत्ययान्तं स्त्रियां न भवतीति ङीबर्थं टित्करणमनर्थकं स्यात् । तस्मादस्त्रियामिति निवृत्तम्, अतः स्त्रियामपि भवति । **कौण्डीबृसी । क्षौद्रकीति** । 'हलस्तद्धितस्य' इति यकारलोपः ॥ ११४ ॥

**वृकाट् टेण्यण्** ॥ यदि वाहीकेषु वृकशब्दस्य वाच्य आयुधजीविसङ्घो भवति, ततो ञ्यटि प्राप्तेऽन्यत्राप्राप्त एव कस्मिंश्चित् प्रत्ययविधानं वेदितव्यम् । **वृकाविवेति** । वृकशब्दोऽत्र जातिवचनः ॥ ११५ ॥

**पदमञ्जरी**

**ब्राह्मणे तद्विशेषग्रहणमिति** । स्वरूपग्रहणं तु न भवति; ब्राह्मणशब्दवाच्यस्यायुधजीविसङ्घस्य वाहीकेष्वभावात् । **राजन्ये तु स्वरूपग्रहणमिति** । तद्वाच्यस्यैव भावात् । **तेनास्त्रियामिति नानुवर्त्तत इति** । तेन स्त्रियामपि—कौण्डीबृसी, क्षौद्रकी, मालवीति भवति । 'हलस्तद्धितस्य' इति यलोपः ॥ ११४ ॥ ११५ ॥

**भावबोधिनी**

कौण्डीबृस्यः, कौण्डीबृस्यौ, कौण्डीबृसाः । [ कौण्डीबृस जिस समूह का प्रधान है—इसके लिए ञ्यट् होता है । ] क्षौद्रक्यः, क्षौद्रक्यौ, क्षुद्रकाः । [ क्षुद्रक जिसका प्रधान है वह समूह । ] मालव्यः, मालव्यौ, मालवाः । [ मालव जिस समूह का प्रधान है । ] स्त्रीलिङ्ग में ङीप् होने से—कौण्डीबृसी । क्षौद्रकी । मालवी । [ कौण्डीबृस्य + ङीप् = ई, भसंज्ञा, अलोप, 'हलस्तद्धितस्य' से य् का लोप । ]

आयुध से जीविका चलाने वाले—इसके ग्रहण का क्या लाभ ? मल्लाः, शयण्डाः । [ ये शारीरिक बल से जीविका चलाने वाले हैं । अतः प्रत्यय नहीं होता है । ] सङ्घ के ग्रहण का क्या फल ? सम्राट् । [ यह एक व्यक्ति का प्रतिपादक है अतः प्रत्यय नहीं होता है । ] वाहीकों में—इसका क्या फल है ? शबराः, पुलिन्दाः । [ ये वाहीक नहीं हैं । अतः प्रत्यय नहीं होता है । ] ब्राह्मण और राजन्य को छोड़ कर—इसका क्या फल है ? गोपालका ब्राह्मणाः, शालङ्कायनाः राजन्याः । [ यहाँ ब्राह्मण और राजन्य ही हैं अतः प्रत्यय नहीं होता है । ] ॥ ११४ ॥

'आयुधजीविसङ्घात्' ( = आयुध से जीविका चलाने वालों के समूह के वाचक से ) इसकी अनुवृत्ति होती है । आयुधजीविवाचक वृक शब्द से स्वार्थ में 'टेण्यण्' प्रत्यय होता है । टकार ङीप् के लिए है । णकार वृद्धि के लिए है । उदा०—वार्केण्यः, वार्केण्यौ, वृकाः । [ वृक + टेण्यण् = एण्य, आदि वृद्धि । बहुवचन में प्रत्यय का लुक् होने से मूलशब्द का ही रूप बचता है । ]

आयुधजीविसंघ को विशेषण बनाया गया है जिससे जातिवाचक से न होने लग जाय । जैसे—

**'कामक्रोधौ मनुष्याणां खादितारौ वृकाविव'** ॥

## २२७७. दामन्यादित्रिगर्तषष्ठाच्छः ॥ ११६ ॥ ( २०६९ )

**'आयुधजीविसङ्घात्' इति वर्तते । दामन्यादिभ्यः प्रातिपदिकेभ्यस्त्रिगर्तषष्ठेभ्यश्चायुधजीविसङ्घवाचिभ्यः स्वार्थे छः प्रत्ययो भवति । येषामायुधजीविनां सङ्घानां षडन्तर्वर्गाः, तत्र च त्रिगर्तः षष्ठः; त्रिगर्तः षष्ठो येषां ते त्रिगर्तषष्ठा इत्युच्यन्ते । तेषु चेयं स्मृतिः—**

**आहुस्त्रिगर्तषष्ठाँस्तु　कौण्डोपरथदाण्डकी ।**
**कौष्टकिर्ज्जालमानिश्च ब्राह्मगुप्तोऽथ जानकिः ॥ इति ।**

**दामन्यादिभ्यस्तावत्—दामनीयः, दामनीयौ, दामनयः । औलपीयः, औलपीयौ, उलपयः । त्रिगर्तषष्ठेभ्यः खल्वपि—कौण्डोपरथीयः, कौण्डोपरथीयौ, कौण्डोपरथाः । दाण्डकीयः, दाण्डकीयौ, दाण्डकयः । क्रौष्टकीयः । जालमानीयः । ब्रह्मगुप्तीयः । जानकीयः ।**

### न्यासः

**दामन्यादित्रिगर्त्तषष्ठाच्छः ॥ तेषु चेयं स्मृतिरिति ।** त्रिगर्त्तषष्ठाः स्मर्य्यन्ते ज्ञायन्तेऽनयेति स्मृतिः । सा पुनः—**आहुस्त्रिगर्त्तषष्ठानिति** । अयमेवाप्तप्रणीतश्लोकः । एषु च त्रिगर्तषष्ठेषु प्रथमपञ्चमौ शिवाद्यणन्तौ, शेषास्त्विञन्ताः । केचिदतद्धितान्तमेव पञ्चमं पठन्ति । तेषां ब्रह्मगुप्तशब्दादेव च्छो भवति ॥ ११६ ॥

### पदमञ्जरी

**दामन्यादित्रिगर्तषष्ठाच्छः** ॥ 'दामन्यादित्रिगर्तषष्ठात्' इति समाहारद्वन्द्वः, दामन्यादेरायुधजीविसङ्घात्त्रिगर्तषष्ठाच्चायुधजीविसङ्घादित्यन्वयः त्रिगर्तषष्ठादित्यस्यार्थमाह—**येषामिति** । **अन्तर्वर्गाः**=अन्तर्गणाः । ते पुनः के ? इत्याह—**तेषु चेयं स्मृतिरिति** । त्रिगर्त्तषष्ठाः स्मर्यन्ते=ज्ञाप्यन्तेऽनयेति स्मृतिः ।

**सा पुनः—आहुस्त्रिगर्तषष्ठानित्यादिः** श्लोकः । अत्र जानकयस्त्रिगर्त्तवर्गाः, तेषु च त्रिगर्त्तषष्ठेषु, प्रथमपञ्चमौ शिवाद्यणन्तौ, शेषास्तु इञन्ताः । केचित्तु-अतद्धितान्तमेव पञ्चमं ब्रह्मगुप्तशब्दं पठन्ति ॥ ११६ ॥

### भावबोधिनी

"मनुष्यों के काम और क्रोध वृकों=भेड़ियों के समान खा जाने वाले होते हैं ।" [ यहाँ वृक शब्द जातिवाचक—पशुविशेष का प्रतिपादक हैं । अतः प्रत्यय नहीं होता है । ] ॥ ११५ ॥

"आयुधजीविसंघात्" इसकी अनुवृत्ति होती है । आयुधजीविसंघवाचक दामन्यादि प्रातिपदिकों से और त्रिगर्तषष्ठ शब्दों से स्वार्थ में 'छ' प्रत्यय होता है । जिन आयुधजीविओं के समूह के छः अन्तर्वर्ग हैं और उनमें षष्ठ ( छठा ) त्रिगर्त है—त्रिगर्त है षष्ठ जिनका वे त्रिगर्तषष्ठ ऐसे कहे जाते हैं । इनके विषय में यह वचन है—

कौण्डोपरथ, दाण्डकि, क्रौष्टकि, जालमानि ब्राह्मगुप्त और जानकि ( जालकि )—इन्हें त्रिगर्तषष्ठ कहते हैं । [ इनमें कौण्डोपरथ और ब्राह्मगुप्त शिवादिगणीय होने से अण् प्रत्ययान्त हैं और शेष इञ् प्रत्ययान्त है । कहीं-कहीं 'ब्रह्मगुप्त' यह अप्रत्ययान्त पाठ है । सिद्धान्तकौमुदी में 'जानकि' के स्थान पर 'जालकि' पाठ है । इनमें आयुधीविसंघवाचक से स्वार्थ में 'छ' प्रत्यय होता है । ]

उदा०—दामन्यादि से 'छ' प्रत्यय—दामनीयः, दामनीयौ, दामनयः । [ बहुवचन में प्रत्ययलुक् होने से मूल शब्द से ही रूप बना है । ] औलपीयः, औलपीयौ, औलपयः । [ यहाँ भी बहुवचन में प्रत्यय का लुक् है । ] त्रिगर्त्तषष्ठ शब्दों से भी प्रत्यय के उदा०—कौण्डोपरथीयः, कौण्डोपरथीयौ, कौण्डोपरथयः । दाण्डकीयः, दाण्डकीयौ, दाण्डकयः । क्रौष्टकीयः । जालमानीयः । ब्राह्मगुप्तीयः । जानकीयः ( जालकीयः ) । [ इन सभी में तत्तद् नामवाले के आधार पर उनके समूह को मानकर 'छ' प्रत्यय होता है । बहुवचन में प्रत्यय का लुक् हो जाने से मूल शब्द का ही रूप रहता है । ]

**दामनी । औलपि । आकिदन्ती । काकरन्ति । काकदन्ति । शत्रुन्तपि । सार्वसेनि । बिन्दु । मौञ्जायन । उलभ । सावित्रीपुत्र[1] । दामन्यादिः ॥**

**२२७८. पर्श्वादियौधेयादिभ्यामणञौ ॥ ११७ ॥ ( २०७० )**

**'आयुधजीविसङ्घात्' इत्येव । पर्श्वादिभ्यो यौधेयादिभ्यश्च प्रातिपदिकेभ्य आयुधजीविसङ्घवाचिभ्यः स्वार्थेऽणञौ प्रत्ययौ भवतः । पार्शवः, पार्शवौ, पर्शवः । आसुरः, आसुरौ, असुराः । यौधेयः । शौक्रेयः ।**

**पर्शु । असुर । रक्षस् । बाल्हीक । वयस् । मरुत् । दशार्ह । पिशाच । विशाल । अशनि । कार्षापण । सत्वत् । वसु । पर्श्वादिः ।**

**यौधेय । कौशेय । क्रोशेय । शौक्रेय । शौभ्रेय । धार्तेय । वार्तेय । जाबालेय । त्रिगर्त । भरत । उसीनर । यौधेयादिः ॥**

**न्यासः**

**पर्श्वादियौधेयादिभ्यामणञौ ॥** किमर्थं पुनरिह यौधेयादयः पठ्यन्ते, यावता लुक्प्रतिषेधार्थं चतुर्थे यौधेयादयः समाम्नाता एव, त एव चेह गृह्यन्ते ? सत्यमेतत्; विचित्रा हि गणानां कृतिर्गणकारस्येति पुनः पठिताः। पर्श्वादिषु सत्वच्छब्दो पठ्यते । स च सत्वच्छब्दप्रकृतिर्मतुप्प्रत्ययान्तो वेदितव्यः ॥ ११७ ॥

**पदमञ्जरी**

**पार्श्वादियौधेयादिभ्योऽणञौ ॥ पार्शव इत्यादि ।** पर्शू, रक्षस्, असुर—इत्येते जनपदशब्दाः, तत्राकारान्ताद्बहुष्वपत्येषु 'जनपदशब्दात्क्षत्त्रियादञ्' इत्यञ्, इतराभ्याम् 'द्व्यच्मगध' इत्यादिनाण्, तद्राजत्वाल्लुक्, पुनः सङ्घविवक्षायामनेनाण् । **यौधेय इति ।** युधेतेऽसौ, युधेरिगुपधलक्षणः कः—युधा, तस्य अपत्यम् 'द्व्यचः' इति ढक्, तदन्वात्सङ्घरूपविवक्षायामनेनाञ्—यौधेय इत्याद्युदात्तं भवति । तथा यौधेयस्याङ्को लक्षणं वा यौधेय इति—सङ्घाङ्कलक्षणेष्वञ्लक्षणोऽण् भवति । एतेन यौधेयादिषु ये ढगन्तास्ते सर्वे व्याख्याताः । यौधेयादीनामस्मिन्प्रदेशे न पाठः, पठिता हि ते चतुर्थे—'न प्राच्यभार्गादियौधेयादिभ्यः' इत्यत्र ॥ ११७ ॥

**भावबोधिनी**

[ दामन्यादिगणपठित शब्द— ] दामनी । औलपि । आकिदन्ती । काकरन्ति । काकदन्ति । शत्रुन्तपि । सार्वसेनि । बिन्दु । मौञ्जायन । उलभ । सावित्रीपुत्र । ये दामन्यादि हैं ॥ ११६ ॥

'आयुधजीविसङ्घात्' ( आयुधजीवियों के संघवाचक से ) इसकी अनुवृत्ति होती है । आयुधजीवियों के संघ के वाचक पर्श्वादि और यौधेयादि प्रातिपदिकों से स्वार्थ में [ यथासंख्य रूप से ] अण् और अञ् प्रत्यय होते हैं । उदा०— पार्शवः, पार्शवौ, पर्शवः । आसुरः, आसुरौ, असुराः । [ पर्शु + अण्, आदिवृद्धि, उकार का गुण, अवादेश । बहुवचन में प्रत्यय का लुक् । ] यौधेयः । शौक्रेयः । [ यौधेय + अञ् = अ, भसंज्ञा, अलोप अण् और अञ् में स्वर का भेद होता है । अण् में अन्तोदात्त और अञ् में आद्युदात्त होता है । ]

[पर्श्वादिगण—] पर्शु ( पर्शू ) । असुर । रक्षस् । बाल्हीक । वयस् । मरुत् । दशार्ह । पिशाच । विशाल । अशनि । कार्षापण । सत्त्वत् । वसु । ये पर्श्वादि हैं ।

[ यौधेयादिगण— ] यौधेय । कौशेय । क्रौशेय । शौक्रेय । शौभ्रेय । धार्त्तेय । वार्त्तेय । जाबालेय । त्रिगर्त्त । भरत । उशीनर । ये यौधेयादि हैं ॥ ११७ ॥

---

१. 'अच्युतन्ति । कोकतन्ती । सुलभ ! देववापि । औतकी । अपच्युतकी । कर्की । पिण्ड'—इत्येतेऽत्र गणेऽधिकाः पुस्तकान्तरे ।

**२२७९. अभिजिद्विदभृच्छालावच्छिखावच्छमीवदूर्णावच्छ्रुमदणो यञ् ॥ ११८ ॥ (२०७१)**

**'आयुधजीविसङ्घात्' इति निवृत्तम् । अभिजिदादिभ्योऽणन्तेभ्यः प्रातिपदिकेभ्यः स्वार्थे यञ् प्रत्ययो भवति । अभिजितोऽपत्यमित्यण्, तदन्ताद्यञ् । आभिजित्यः, आभिजित्यौ, आभिजिताः । वैदभृत्यः, वैदभृत्यौ, वैदभृताः । शालावत्यः, शालावत्यौ, शालावताः । शैखावत्यः । शामीवत्यः । और्णावत्यः । श्रौमत्यः ।**

**❀ गोत्रप्रत्ययस्यात्राणो ग्रहणमिष्यते ❀ ( म० भा० ५.३.११८ वा० १ ) । आभिजितो मुहूर्तः, आभिजितः स्थालीपाक इत्यत्र न भवति ॥**

**२२८०. ञ्यादयस्तद्राजाः ॥ ११९ ॥ ( २०७२ )**

**'पूगाञ्ञ्योऽग्रामणीपूर्वात्' ( ५.३.११२ ) इत्यतः प्रभृति ये प्रत्ययाः ते तद्राजसंज्ञा भवन्ति । तथा चैवोदाहृतम् ।**

**न्यासः**

**अभिजिद्विदभृच्छालावच्छिखावच्छमीवदूर्णावच्छ्रुमदणो यञ् ॥ अभिजितोऽपत्यमित्यणिति ।** 'प्राग्दीव्यतोऽण्' इत्यौत्सर्गिकः । एवमुत्तरत्रापि ।

**गोत्रप्रत्ययस्याणो ग्रहणमिष्यत इति ।** तत् कथं जातिनाम्न इत्यनुवर्त्तते ? तेनाणन्तं यज्जातिनाम तदेव ग्रहीष्यते । यश्च गोत्रेऽण् विहितस्तदन्तमेव जातिनाम भवति; 'गोत्रञ्च चरणैः सह' इति जातित्वात् । **आभिजितो मुहूर्त्तः, आभिजितः स्थालीपाक इति ।** एकत्र 'नक्षत्रेण युक्तः कालः' इत्यण्, अपरत्र 'सास्य देवता' इति ॥ ११८ ॥

**पदमञ्जरी**

**अभिजिद्विदभृच्छालावच्छिखावच्छमीवदूर्णावच्छ्रुमदणो यञ् ॥** अभिजयतीत्यभिजित्, वेत्तीति विदः, इगुपधलक्षणः कः, तान्बिभर्त्तीति विदभृत् अन्ये मत्वन्ताः । **अभिजिदादिभ्योऽणन्तेभ्य इति ।** सूत्रेऽभिजिदादय एवाणिति विशेषणसमासः । अभिजिदादिप्रकृतश्चाणन्ता अभिजिदादयः उच्यन्ते । **गोत्रप्रत्ययस्येति ।** अपत्यप्रत्यय-स्येत्यर्थः । **आभिजितो मुहूर्त्त इति ।** 'नक्षत्रेण युक्तः' इत्यण् उत्तरस्य–'सास्य देवता' इति । इहाभिजित्यस्यायम्

**भावबोधिनी**

'आयुधजीविसङ्घात्' इसकी अनुवृत्ति नहीं है । अभिजित् आदि अणन्त प्रातिपदिकों से स्वार्थ में यञ् प्रत्यय होता है । अभिजित् का अपत्य—इस अर्थ में अण्, इस अणन्त से यञ् प्रत्यय होता है । उदा०—आभिजित्यः । आभिजित्यौ, आभिजिताः । [ अभिजित्+अण्, आदिवृद्धि—आभिजित + यञ्, भसंज्ञा, अलोप । बहुवचन में यञ् का लुक् हो जाता है । ] वैदभृत्यः वैदभृत्यौ, वैदभृताः । [ विदभृत् + अण्, आदिवृद्धि, यञ् करने पर पूर्ववत् लोपादि होते हैं । ] शालावत्यः, शालावत्यौ, शालावताः । [ शालावत् + अण्, पुनः, यञ् ] शिखावत्यः । [ शिखावत् + अण्, पुनः, यञ् ] और्णावत्यः । [ ऊर्णावत् + अण्, यञ् । ] श्रौमत्यः । [श्रुमत्+अण्, आदिवृद्धि, यञ् । सभी के बहुवचन में यञ् का लुक् हो जाता है ।]

❀ इसमें गोत्रार्थ में विहित अण् का ग्रहण इष्ट है । ❀ अतः 'आभिजितः मुहूर्त्तः, आभिजितः स्थालीपाकः—इनमें यञ् नहीं होता है । [ क्योंकि 'आभिजितः मुहूर्त्तः' में 'नक्षत्रेण युक्तः कालः' सूत्र से और 'आभिजितः स्थालीपाकः' यहाँ 'साऽस्य देवता' सूत्र से अण् हुआ है । ] ॥ ११८ ॥

'पूगाञ्ञ्योऽग्रामणीपूर्वात्' ( पा० सू० ५।१।११२ ) इस सूत्र से लेकर आगे जिन प्रत्ययों का विधान उन है प्रत्ययों की 'तद्राज' संज्ञा होती है । जैसा कि ऊपर के उदाहरणों में दिखाया जा चुका है ।

तद्राजप्रदेशाः—'तद्राजस्य बहुषु' ( २.४.६२ ) इत्येवमादयः ॥

॥ इति श्रीजयादित्यविरचितायां काशिकावृत्तौ पञ्चमस्याध्यायस्य तृतीयः पादः ॥

——:०:——

**न्यासः**

ञ्यादयस्तद्राजाः ॥ ११९ ॥

॥ इति बोधिसत्त्वदेशीयाचार्यश्रीजिनेन्द्रबुद्धिपादविरचितायां काशिकाविवरणपञ्जिकायां पञ्चमस्याध्यायस्य तृतीयः पादः ॥

——:०:——

**पदमञ्जरी**

आभिजितक इति 'गोत्रचरणाद्वुञ्' भवति, 'आपत्यस्य' इति यलोपः। गोत्रप्रत्ययान्ताद्धचयमिष्यते। तेन स्वार्थिकत्वादयमपि यञ् गोत्रप्रत्यय एव भवति ॥ ११८ ॥ ११९ ॥

॥ इति श्रीहरदत्तमिश्रविरचितायां पदमञ्जर्यां पञ्चमस्याध्यायस्य तृतीयः पादः ॥

——:०:——

**भावबोधिनी**

तद्राजसंज्ञा के प्रदेशस्थल—'तद्राजस्य बहुषु तेनैवास्त्रियाम्।' ( पा० सू० २।६२ ) आदि सूत्र हैं। [ इससे बहुवचन में तद्राजसंज्ञक प्रत्यय का लुक् हो जाता है। अतः एकवचन और द्विवचन में तो 'ञ्य' आदि तद्राजसंज्ञक प्रत्यय रहते हैं परन्तु बहुवचन में उनका लुक् हो जाता है। अतः केवल मूल प्रातिपदिक का ही रूप बनता है। ] ॥११९॥

इस प्रकार श्री जयादित्य द्वारा विरचित काशिकावृत्ति में पंचम अध्याय का तृतीय पाद समाप्त हुआ।

——:०:——

॥ इस प्रकार जयशङ्कर-लालत्रिपाठि-विरचित 'भावबोधिनी' हिन्दी-व्याख्या में काशिकावृत्ति के पञ्चम अध्याय का तृतीय पाद समाप्त हुआ ॥

●

# अथ पञ्चमाध्याये चतुर्थः पादः

## २२८१. पादशतस्य संख्यादेर्वीप्सायां वुन्लोपश्च ॥ १ ॥ ( २०७३ )

पादशतान्तस्य संख्यादेः प्रातिपदिकस्य वीप्सायां द्योत्यायां वुन् प्रत्ययो भवति । तत्सन्नियोगेन चान्तस्य लोपो भवति ।

यस्येति ( ६.४.१४८ ) लोपेनैव सिद्धे पुनर्वचनमनैमित्तिकार्थम् । यस्येतिलोपः परनिमित्तकः, तस्य स्थानिवद्भावात् 'पादः पत्' ( ६.४.१३० ) इति पद्भावो न स्यात् । अस्य त्वनैमित्तिकत्वान्न स्थानिवत्त्वम् ।

द्वौ द्वौ पादौ ददाति द्विपदिकां ददाति । द्वे द्वे शते ददाति, द्विशतिकां ददाति । 'तद्धितार्थ' ( २.१.५१ ) इति समासः, ततः प्रत्ययः ।

स्वभावाच्च वुन्प्रत्ययान्तं स्त्रियामेव वर्तते ।

### न्यासः

**पादशतस्य संख्यादेर्वीप्सायां वुन्लोपश्च** ॥ प्रातिपदिकादिति वर्तते, तस्य विशेषणं पादशतस्य ग्रहणम्, विशेषणेन तदन्तविधिर्भवतीत्याह—**पादशतान्तस्येति** । आदिशब्दोऽवयववचनः । न च संख्याशब्दः पादशत-शब्दयोरवयव उपपद्यते; पृथग्भावादनारम्भकत्वात् । न हि पृथग्भूतमनारम्भकं शब्दान्तरस्यावयवो युज्यते, यथा— घटशब्दः पटशब्दस्य । विपरीते तु युज्यते, यथा —पटस्य समुदायात्मनः तन्त्वादिकारणं समदेशमवयव-माहुः । तस्मात् 'संख्यादेः' इत्येतदपि प्रातिपदिकस्य विज्ञायते, न पादशतशब्दयोरित्याह—**संख्यादेरित्यादि** । आनन्तर्य्यलक्षणा चेयं षष्ठी, यथा—'गापोष्टक्' इति गापोष्टक्प्रत्ययो भवतोत्यनन्तरमिति शेषः । **तत्सन्नियोगेन चेति** । चकारस्य सन्नियोगार्थत्वात् । **अन्तस्येति** । अलोऽन्त्यरिभाषया ।

### पदमञ्जरी

**पादशतस्य संख्यादेर्वीप्सायां वुन्लोपश्च** ॥ आदिशब्दोऽयमवयववाची, न तु व्यवस्थावाची; 'संख्यायाः' इति पञ्चमीनिर्देशेनैव सिद्धेः । न च संख्यावचनः शब्दः पादशतशब्दयोरवयव उपपद्यते; अनारम्भकत्वात् । तस्मात्संख्यादेरिति वचनादिह 'ग्रहणवता प्रातिपदिकेन तदन्तविधिर्विज्ञायत' ( व्या० परि० ८९ ) इत्याह—**पादशतान्तस्येति** । आनन्तर्यलक्षणा चेयं षष्ठी वुन्विधौ, लोपविधौ तु स्थानषष्ठी । **तत्संनियोगेन चेति** । चकारस्य संनियोगार्थकत्वात् ।

### भावबोधिनी

सारदां शारदां स्मृत्वा नत्वा साम्बं शिवं गुरुम् ।
पञ्चमस्य तुरीयांशं व्याख्याति 'जयशङ्करः' ॥

पाद शब्द और शत शब्द जिसके अन्त में हैं और संख्यावाचक शब्द जिसके आदि में हैं ऐसे प्रातिपदिक की वीप्सा ( व्याप्त करने की इच्छा ) द्योत्य रहने पर [ उस प्रातिपदिक से ] 'वुन्' प्रत्यय होता है। और इसके सन्नियोग से अन्तिम वर्ण का लोप होता है।

यद्यपि 'यस्येति च' इसी सूत्र से अन्त्यलोप सिद्ध था तथापि पुनः इस लोप का विधान करना इसको अनैमित्तिक बनाने के लिए है। 'यस्येति च' सूत्र से होने वाले लोप में परवर्ती निमित्त की अपेक्षा होती है, अतः उस लुप्त का स्थानि-

**पादशतस्येति किम् ?** द्वौ द्वौ माषौ ददाति। **संख्यादेरिति किम् ?** पादं पादं ददाति। **वीप्सायामिति किम् ?** द्वौ पादौ ददाति। द्वे शते ददाति।

**❀ पादशतग्रहणमनर्थकम्; अन्यत्रापि दर्शनात् ❀** ( म० भा० ५.४.१ वा० १ )। **द्विमोदकिकां ददाति, त्रिमोदकिकां ददाति॥**

**न्यासः**

**पुनरित्यादि।** निमत्ते भवो नैमित्तिकः, अध्यात्मादित्वाट्ठञ् न नैमित्तिकोऽनैमित्तिकः। लोपः स्यादित्येवमर्थं पुनर्लोपवचनम्। वुनापि सह लोपो विधीयमानः परनिमित्तं नापेक्षत इत्यनैमित्तिको भवति। **यस्येतिलोपः परनिमित्तक इति।** ईति तद्धिते च परस्मिन्निमित्ते विधानात् तस्य स्थानिवद्भावात्, 'अचः परस्मिन् पूर्वविधौ' इति लोपस्य स्थानिवद्भावेन पाच्छब्दरूपस्य विहितत्वात्। अनच्को हि पाच्छब्दः स्थान्युपात्तः, तस्य चानच्कत्वं स्थानिवद्भावे सति हीयते। अस्य त्वनैमित्तिकत्वान्न स्थानिवद्भाव इति पद्भावो भवतीति भावः।

**द्वौ द्वौ पादाविति।** वीप्सायां द्विर्वचनं भवति॥ १॥

**पदमञ्जरी**

**अनैमित्तिकत्वार्थमिति।** निमित्ते भवो नैमित्तिकः, अध्यात्मादिः। **यस्येतिलोपः परनिमित्तक इति।** ईति तद्धिते च परतो लोपविधानात्। **पद्भावो न स्यादिति।** पच्छब्दो हि तत्र स्थान्युपात्तः, स्थानिवत्त्वे च सति पादशब्दान्तमङ्गं भसंज्ञं भवति, न पाच्छब्दान्तमिति पादायेत्यादिवदत्रापि पद्भावो न स्यात्। **अस्य त्वनैमित्तिकत्वादिति।** न ह्यत्र वुन्निमित्तम्; सहविधानात्।

**द्विपदिकामिति।** तद्धितेन द्योतितत्वाद्वीप्सायां द्विर्वचनं न भवति। **तद्धितार्थ इति समास इति।** प्रकृत्युपाधिरपि वीप्सा वुना द्योत्यत इति तद्धितार्थो भवति।

**द्वौ पादौ ददातीति।** उत्तरसूत्रेवक्ष्यति—'दानं व्यवसर्गः' इति, 'अवीप्सार्थोऽयमारम्भः' इति च, तस्माद्भवितव्यमत्र वुना। क्रियान्तरं प्रत्युदाहर्त्तव्यम् – द्वौ पादौ लभत इत्यादि।

अपर आह—दण्डितो व्यवसृजतीति प्रयोग एवोत्तरोऽविधिरिति। यद्वा—परस्वत्वापादनं दानम् = व्यवसर्गः, इह तु समर्पणमात्रे ददातिर्वर्त्तते; यथा—रजकस्य वस्त्रं ददातीति।

**अन्यत्रापि दर्शनादिति।** द्वौ द्वौ माषौ ददातीत्यादौ त्वनभिधानादतिप्रसङ्गाभावः॥ १॥

**भावबोधिनी**

वद्भाव हो जाने से 'पादः पत्' ( पा. सू. ६।४।१३० ) सूत्र से पाद का पद् आदेश नहीं हो सकता। परन्तु प्रस्तुत सूत्र द्वारा किया जाने वाला लोप अनैमित्तिक है अतः उसका स्थानिवद्भाव नहीं होता है। [ पाद का पद् आदेश हो जाता है। ]

उदा०—द्वौ द्वौ पादौ ददाति—इस विग्रह में—द्विपदिकां ददाति। द्वे द्वे शते ददाति—इस विग्रह में—द्विशतिकां ददाति। इनमें पहले 'तद्धितार्थोत्तरपद-समाहारे च' ( पा. सू. २।१।५० ) से समास ( प्रातिपदिकसंज्ञा, विभक्तिलोप ) के बाद प्रत्यय होता है। और स्वभावतः वुन्-प्रत्ययान्त स्त्रीलिङ्ग में ही रहता है। [ अतः टाप् होता है। समास के बाद 'द्विपाद+वुन्=वु 'युवोरनाकौ' सूत्र से 'वु' का 'अक' आदेश, पाद के 'अ' का लोप 'पादः पत्' ६।४।१३० से पद् आदेश द्विपद्+अक, टाप्=आ, 'प्रत्ययस्थात् कात्' ( पा. सू. ७।३।४४ ) से 'अ' का 'इ' करने पर 'द्विपदिका'। द्वितीया एकवचन का रूप है—द्विपदिकाम्। पाद शब्द कार्षापण के चौथाई भाग=पाई के लिये है। दो दो पाइयाँ देता है। द्विशतिकां ददाति—दो दो सौ देता है। ]

पाद और शत का—इसका क्या प्रयोजन है ? द्वौ द्वौ माषौ ददाति—यहाँ प्रत्ययादि नहीं होता है। संख्या जिसके आदि में है उससे --इसका क्या लाभ है ? पादं पादं ददाति-- यहाँ नहीं होता है। [ क्योंकि संख्यावाचक आदि

## २२८२. दण्डव्यवसर्गयोश्च ॥ २ ॥ ( २०७४ )

**दमनम् = दण्डः, दानम् = व्यवसर्गः । दण्डव्यवसर्गयोर्गम्यमानयोः पादशतान्तस्य प्रातिपदिकस्य संख्यादेर्वुन् प्रत्ययो भवति, अन्तलोपश्च । अवीप्सार्थोऽयमारम्भः । द्वौ पादौ दण्डितः द्विपदिकां दण्डितः । द्वौ पादौ व्यवसृजति द्विपदिकां व्यवसृजति । द्विशतिकां दण्डितः । त्रिशतिकाम् । द्विशतिकां व्यवसृजति । त्रिशतिकाम् ॥**

### न्यासः

**दण्डव्यवसर्गयोश्च** ॥ **दमनं दण्ड इति** । ननु दण्डशब्दोऽयं यष्ट्यादावपि वर्त्तते ? सत्यम्; तथापीह दमने वर्त्तमानस्य ग्रहणं युक्तम्, दमनस्यैव प्रत्ययान्तेन गम्यमानत्वात् । **दानं व्यवसर्ग इति** । यद्येवम्, तत् पूर्वयोग उदाहृतं दत्तं तदा चोपपद्यते यद्ययं योगोऽधिकविधानार्थो भवति, न त्वपवादः, तस्मान्नार्थोऽनेन योगेन ? इत्यत आह—**अवीप्सार्थ इत्यादि** । तेन दानमात्रेऽनेन वुन् । दानवीप्सायां पूर्वयोगेन पुनर्भवत्येव ॥ २ ॥

### पदमञ्जरी

**दण्डव्यवसर्गयोश्च** ॥ **दण्डनं दण्ड इति** । 'दमु उपशमने' (धा० पा० १२०३) इत्यस्माद्भावे 'ञमन्ताड्डः' ( द० उ० ५.७ ) दण्डतेर्वा चुरादिण्यन्तादेरच् । यद्यपि दण्डशब्दः करणसाधनो यष्टावपि वर्त्तते, तथापि तस्य ग्रहणं न भवति; धात्वर्थेन व्यवसर्गेण साहचर्यात् । अत्राप्युदाहरणे 'तद्धितार्थ' इति समासः स्त्रीलिङ्गस्तद्धितार्थः । उक्तं च—'स्वभावाच्च वुन्प्रत्ययः स्त्रियां वर्त्तते इति । प्रकृत्यर्थ एव वा तद्धितार्थः स्वार्थिकत्वाद् वुनः । **अवीप्सार्थोऽयमारम्भ इति** । कथं तर्हि दाने वीप्सायां वुन्पूर्वसूत्र उदाहृतः, यावता नाप्राप्ते वीप्साया वुन्यारभ्यमाणोऽवीप्सावुनेतयोरर्थयोस्तस्य बाधकः प्राप्नोति, यथा 'मतिबुद्धिपूजार्थेभ्यश्च' इति 'वर्त्तमाने क्तः'—भूतक्तस्य, यथा च 'अवृद्धादपि' इत्यपिशब्दः क्रियते ? इहापि तर्हि चकारः क्रियते, तेनाधिकविधिरयमबाधकः । एवमपि परत्वादनेनैव दाने वीप्सायां वुन्युक्तः ? सत्यम्; अविशेषात्तु पूर्वत्रोदाहृतः । यद्वा—दानस्य पदान्तरवाच्यत्वादेष वुन्बहिरङ्गः, वीप्सायास्तु तद्धितद्योत्यत्वात्पूर्वो वुन्नन्तरङ्गः ॥ २ ॥

### भावबोधिनी

में नहीं है । ] वीप्सा में—इसका क्या फल है ? द्वौ पादौ ददाति । द्वे शते ददाति । [ यहाँ वीप्सा न होने से द्वित्व नहीं होता है । अतः प्रत्यय भी नहीं होता है । ]

ॐ प्रस्तुत सूत्र में पाद और शत का ग्रहण व्यर्थ है क्योंकि इनसे भिन्न में भी प्रत्यय देखा जाता है । ॐ जैसे—द्विमोदकिकां ददाति, त्रिमोदकिकां ददाति । [ द्वौ द्वौ मोदकौ ददाति, त्रीन् त्रीन् मोदकान् ददाति—इनमें भी प्रत्यय तथा लोपादि होते हैं । ] ॥ १ ॥

दमन = दण्ड, दान = व्यवसर्ग । दण्ड देना और दान देना अर्थ प्रतीयमान रहने पर पादशब्दान्त और शतशब्दान्त तथा संख्यादि ( संख्या जिसके आदि में है ऐसे ) प्रातिपदिक से वुन् प्रत्यय और अन्त्य वर्ण का लोप होता है । यह सूत्र वीप्सा से भिन्न स्थल के लिए बनाया गया है । उदा०—द्वौ पादौ दण्डितः—इस विग्रह में 'द्विपदिकां दण्डितः' यह बनता है । [ द्वौ पादौ दण्डितः—इस अर्थ में समास करने के बाद वुन् = अक प्रत्यय, पाद का पद् आदेश, टाप्, इत्व करने पर रूप बना है । दो पाईयाँ दण्ड दिया गया । ] द्वौ पादौ व्यवसृजति = ददाति—[ इस विग्रह में रूप बना है ] द्विपदिकां व्यवसृजति । [ दो पाइयाँ देता है । ] द्विशतिकां दण्डितः । [ दो सौ दण्ड दिया गया । ] त्रिशतिकां दण्डितः—तीन सौ दण्ड दिया गया । द्विशतिकां व्यवसृजति, त्रिशतिकां व्यवसृजति । [ दो सौ दान देता है । तीन सौ दान देता है । ] ॥ २ ॥

## २२८३. स्थूलादिभ्यः प्रकारवचने कन् ॥ ३ ॥ ( २०७९ )

**स्थूलादिभ्यः प्रकारवचने द्योत्ये कन् प्रत्ययो भवति। जातीयरः (५.३.६९) अपवादः। प्रकारः = विशेषः। स्थूलप्रकारः स्थूलकः। अणुकः। माषकः।**

**❀ कन्प्रकरणे चञ्चद्-बृहतोरुपसंख्यानम् ❀ ( म० मा० ५.४.३ वा० १ ) चञ्चत्प्रकारः चञ्चत्कः। बृहत्कः।**

**'चञ्चबृहयोः' इति केचित्पठन्ति, तेषाम्—चञ्चकः, बृहक इति उदाहरणं द्रष्टव्यम्।**

**न्यासः**

**स्थूलादिभ्यः प्रकारवचने कन्॥ जातीयरोऽपवाद इति।** एतेन यथा प्रकारवचने विधीयमानो जातीयर् प्रकारवति न प्रकारमात्रे, तथायमपीति दर्शयति; अन्यथा हि जातीयरोऽयं विषयभेदादपवादो नोपपद्यते। अथ किमर्थं 'प्रकारवचने जातीयर्' इत्यस्यैवानन्तरं स्थूलादिभ्यः कन् न विधीयते ? किं कृतं भवति ? कन् प्रकारवचनं न वक्तव्यं भवति ? नैवं शक्यम्; स्थूलादीनां हि प्रकारस्याज्ञातादीनां च युगपद्विवक्षायां परत्वात् के कृते कन्न स्यात्; शब्दान्तरत्वात्। अथापि स्यात् ? एवमपि स्थूलक इत्याद्युदात्तत्वं स्यात्, इह तु कनो विधाने परत्वात् कनि कृते ततः क इत्यन्तोदात्तत्वं सिद्धं भवति।

**चञ्चद्बृहतोरित्यादि।** स्थूलादिषु चञ्चद्बृहतोरपाठात् तन्न प्राप्नोति, तस्मादुपसंख्यानं प्रतिपादनं कर्त्तव्यम्। तत्रेदं प्रतिपादनम्—पूर्वसूत्रादिह चकारोऽनुवर्त्तते, स चानुक्तसमुच्चयार्थः। तेन चञ्चद्बृहतोरपि भविष्यतीति।

**पदमञ्जरी**

**स्थूलादिभ्यः प्रकारवचने कन्॥ प्रकारवचने द्योत्य इति।** प्रकारवचने कन् द्योत्य इत्यर्थः। यथौदनं पचतीत्यत्रैवार्थे ओदनपाकं पचतीति। यद्वा—प्रकार उच्यते स्थूलादिभिरिति द्योतनायेत्यर्थः। प्रकारवाचिभ्यः कन् भवति, तदेव प्रकारवचनत्वं द्योतयितुमिति यावत्। **जातीयरोऽपवाद इति।** तेनायमपि तद्वदेव प्रकारवति भवति, न प्रकारमात्र इत्युक्तं भवति। प्रकारः = भेदः, सादृश्यं च, उभयत्रापि यथाभिधानं कन् भवति। वृत्तौ तु प्रकारो भेद इत्युपलक्षणम्।

**चञ्चद्बृहतोरिति।** एतावपि स्थूलादिषु पठितव्यावित्युक्तं भवति। **चञ्चत्क इति।** चञ्चतिश्चलन-कर्मा चञ्चत्प्रकारश्चञ्चन्नेवं कश्चिद्विशेष उच्यते। तथा बृहद्विशेषो बृहत्कः। अपर आह—सादृश्येऽत्र कन्, अचञ्चन्नपि यश्चञ्चन्निव लक्ष्यते स्पन्दमानप्रभावत्त्वाच्चञ्चत्को मणिः, अबृहन्नपि यः प्रभूतप्रभया बृहन्निव लक्ष्यते स बृहत्क इति। **चञ्चक इति।** चञ्चा = तृणमयः पुरुषः, तत्सदृशश्चञ्चकः 'केऽणः' इति ह्रस्वः।

**भावबोधिनी**

स्थूल आदि प्रातिपदिकों से प्रकार अर्थ द्योत्य रहने पर कन् प्रत्यय होता है। यह जातीयर् प्रत्यय का अपवाद है। प्रकार = विशेष। उदा०—स्थूलप्रकारः—इस अर्थ में स्थूलकः। अणुप्रकारः—इसमें अणुकः। माषप्रकारः—इसमें माषकः।

[ प्रकार का अर्थ भेद और सादृश्य है। अतः लक्ष्य के अनुसार अर्थ कर लेना चाहिए। स्थूलकः—स्थूल के समान बलवान्। अणुकः—अणुनामक व्रीहिविशेष के समान छोटा। माषकः—माष के समान मोटा आदि ]।

❀ कन् के प्रकरण में चञ्चत् और बृहत् से कन् का प्रतिपादन करना चाहिए। ❀ उदा०—चञ्चत्प्रकारः—इसमें 'चञ्चत्कः'। बृहत्प्रकारः—इसमें बृहत्कः। [ चञ्च् धातु चलना अर्थ में है। अचञ्चन् अपि य. चञ्चन् इव दृश्यते—इस अर्थ में कन् होने पर चञ्चत्कः। जैसे—स्पन्दमान स्वच्छ जल के मध्य में स्थित मणि न चलता हुआ भी चलता हुआ सा दिखाई देता है। अबृहन् अपि बृहन् इव दृश्यते—इसमें कन् होता है। अथवा 'बृहद्' यह सामवेद का विशेष भाग है। उसके समान कोई दूसरा वेदविशेष का भाग 'बृहत्कः' होता है। ]

**स्थूल । अणु । माष । इषु । ❀ कृष्ण तिलेषु ❀ ( ग० सू० १३७ ) । यव व्रीहिषु ( ग० सू० १३८ ) । ❀ पाद्यकालावदाताः सुरायाम् ❀ ( ग० सू० १३९ ) । ❀ गोमूत्र आच्छादने ❀ ( ग० सू० १४० ) । ❀सुराया अहौ ❀ ( ग० सू० १४१ ) । ❀ जीर्ण शालिषु ❀ ( ग० सू० १४२ ) । ❀ पत्रमूले समस्तव्यस्ते ❀ ( ग० सू० १४३ ) । कुमारीपुत्र । कुमार । श्वशुर । मणि । इति स्थूलादिः ॥**

**न्यासः**

[1]**स्थूलाणुमाषेष्विति** । केचिदेताश्चतस्रः प्रकृतय इति वर्णयन्ति । स्थूलकः । अणुकः । माषकः । इषुकः । अपरे तु स्थूलाणुशब्दौ प्रकृती, माषेष्वित्ययं तूपाधिनिर्देश इत्याहुः । अन्ये त्वानन्तर्य्यादणुशब्दस्यैव माषग्रहणं विशेषणमाचक्षते । आद्यमेव दर्शनं न्याय्यम्, तथा हि—स्थूलकादयः पटादिष्वपि दृश्यन्ते । स्थूलकः, अणुकः पट इति । [2]**कृष्णात्तिलेष्विति** । कृष्ण इति प्रकृतिः, तिलेष्विति तद्विशेषणम् । कृष्णकास्तिलाः । **यव व्रीहिष्विति** । यव इति प्रकृतिः, व्रीहिष्विति तद्विशेषणम् । यवको व्रीहिः । **पाद्यकालावदाताः सुरायामिति** । केचिद् वर्णयन्ति—पाद्यादीनां त्रयाणामपि सुरायां ग्रहणं विशेषणमिति पाद्यिका, कालिका, अवदातिका सुरेति । अपरे पुनरानन्तर्य्यादवदातशब्दस्य सुराग्रहणं विशेषणं पाद्यकालयोर्न विशेषणवं भवतीत्याहुः । **गोमूत्रादाच्छादन इति** । गोमूत्रशब्दः प्रकृतिः, आच्छादन इति तद्विशेषणम् । गोमूत्रप्रकारकमाच्छादनं गोमूत्रकम् । **सुराहाविति** । सुरेति प्रकृतिः, अहाविति विशेषणम् । सुरावर्णोऽहिरिति सुरकः । **जीर्णशालिष्विति** । जीर्ण इति प्रकृतिः, शालिष्विति विशेणम् । जीर्णप्रकाराः शालयो जीर्णका इति । **पत्रमूले समस्तव्यस्ते** इति । पत्रमूले इत्येते शब्दरूपे समस्तव्यस्ते प्रत्ययमुत्पादयतः—पत्रमूलकम् । पत्रकम् । मूलकम् ॥ ३ ॥

**पदमञ्जरी**

[1]**स्थूलाणुमाषेष्विति** । स्थूल, अणु, माष, इषु—इति चतस्रः प्रकृतयः । **कृष्णतिलेष्विति** । कृष्णप्रकारास्तिलाः कृष्णकाः । यवकाः यवसदृशाः । **पाद्यकालावदाताः सुरायामिति** । पाद्यिका, कालिका, अवदातिका, सुराविशेषा एते । गोमूत्रकम् = गोमूत्रप्रकारं गोमूत्रवर्णमाच्छादनम् । यद्वा—विन्यासविशेषो गोमूत्रम्, तत्सदृशं तु गोमूत्रकम् । यत्र तु शुक्लकृष्णादिवर्णविन्यासः सुरावर्णोऽहिः सुरकः, पूर्ववद् ह्रस्वः । जीर्णप्रकाराः जीर्णकल्पाः शालयो जीर्णकाः ।

जातीयरोऽनन्तरमेवायं कन् विधेयः, एवं हि पुनः 'प्रकारवचने' इति न वक्तव्यं भवति । इह तु करणेऽज्ञातः स्थूलप्रकार इति प्रकारस्याज्ञातादीनां च युगपद्विवक्षायां परत्वादनेन कनि कृते पुनः प्रसङ्गविज्ञानादज्ञातादिद्योतनाय पुनः को भवति । तत्र तु करणे परत्वात्के कृते कन्न स्यात्; शब्दान्तरत्वात् । सत्यपि वा कनि स्थूलकक इत्याद्युदात्तं स्यात् ॥ ३ ॥

**भावबोधिनी**

कुछ लोग 'चञ्च और बृह' ऐसा ( तकाररहित ) पाठ मानते हैं । उनके अनुसार—चञ्चकः, बृहकः—ये उदाहरण समझने चाहिए । [ खेतों में तृणादि से बनाई गई पुरुषाकृति को चञ्चा कहते हैं । उसीके समान जो कोई पुरुषादि है उसे 'चञ्चकः' कहा जाता है । कन् करने पर 'केऽणः' सूत्र से ह्रस्व होता है । ]

[ स्थूलादिगण में पठित शब्द—] स्थूल । अणु । माष । इषु । ❀ तिल अर्थ में कृष्ण । ❀ ❀ व्रीहि अर्थ में यव । ❀ पाद्य, काल और अवदात—ये सुरा-विशेष अर्थ में । ❀ ❀ आच्छादन में गोमूत्र । ❀ सुरा अर्थ में अहि ❀ शाली अर्थ में जीर्ण ❀ ❀ पत्र और मूल समस्त तथा व्यस्त ❀ । कुमारीपुत्र । कुमार । श्वसुर । मणि । ये स्थूलादि हैं ।

**विमर्श**—इस गण में पठित अनेक शब्दों में अर्थविशेष में ही कन् प्रत्यय होता है । जैसे—कृष्णकाः तिलाः—काले तिल । यवकाः व्रीहयः = यवसदृश व्रीहि । पाद्यिका, कालिका, अवदातिका—सुराविशेष । गोमूत्रकम्—गोमूत्र के वर्ण का आच्छादन । सुरावर्ण का अहि = सर्प—सुरकः । जीर्णप्रकाराः शालयः—इसमें जीर्णकाः । पत्रमूलकम् । पत्रकम् । मूलकम् ॥ ३ ॥

१. १. मूले विगृहीतः पाठः । २. न्यासे सविभक्तिकः काशिकायां निर्विभक्तिः पाठः ।

## २२८४. अनत्यन्तगतौ क्तात् ॥ ४ ॥ ( २०७६ )

**अत्यन्तगतिः=अशेषसम्बन्धः, तदभावोऽनत्यन्तगतिः। अनत्यन्तगतौ गम्यमानायां क्तान्तात्कन्प्रत्ययो भवति। भिन्नकः। छिन्नकः।**

**अनत्यन्तगताविति किम्? भिन्नम्। छिन्नम् ॥**

## २२८५. न सामिवचने ॥ ५ ॥ ( २०७७ )

**सामिवचने उपपदे क्तान्तात्कन्प्रत्ययो न भवति। सामिकृतम्। सामिभुक्तम्।**

**वचनग्रहणं पर्यायार्थम्। अर्धकृतम्। नेमकृतम्।**

**❀ सामिवचने प्रतिषेधानर्थक्यम्; प्रकृत्याभिहितत्वात् ❀** ( म० भा० ५.४.५ वा० १ )। **एवं तर्हि**

### न्यासः

**अनत्यन्तगतौ क्तात् ॥ अशेषसम्बन्ध इति।** अशेषस्य स्वेन सम्बन्धिना भेदनादीनां व्याप्तिरित्यर्थः। **भिन्नकमिति।** न तु यस्याशेषस्य भेदेन सम्बन्धः, अपि त्वेकदेशस्य तद्भिन्नकमित्युच्यते। भिन्नमित्यत्राशेष-सम्बन्ध एव गम्यते। यद्यशेषं भिदिक्रियाव्याप्तं घटादि तद् भिन्नमित्यभिधीयते ॥ ४ ॥

**न सामिवचने ॥ सामिवचन इति।** साम्युच्यते येन तत् सामिवचनम्। **सामिकृतमिति।** बहुव्रीहिः, विशेषणसमासो वा। **प्रकृत्याभिहितत्वादिति।** प्रतिषेधानर्थक्ये हेतुः। अनत्यन्तगतिं गमयितुं कन् विधीयते।

### पदमञ्जरी

**अनत्यन्यगतौ क्तात् ॥ अशेषसम्बन्ध इति।** क्तप्रकृतिवाच्यया क्रियया साधनस्य व्याप्तिरित्यर्थः। **भिन्नकमिति।** ईषद्भिन्नमित्यर्थः।

**भिन्नमिति।** यदशेषं भिदिक्रियया व्याप्तं घटादि तदभिधीयते। इहानत्यन्तगतेः प्रकर्षस्य च युगपद्विव-क्षायां पूर्वविप्रतिषेधेन पूर्वमातिशायिक इष्यते, तदन्तात्कन्वक्तव्यः, अक्तान्तत्वाद्धि न प्राप्नोति—भिन्नतरकं छिन्नतरकमिति। आह च 'अनत्यन्तगतौ क्तान्तात्तमबादयः पूर्वविप्रतिषिद्धं, तदन्ताच्च स्वार्थे कन्वचनम्' ( म० भा० ५.४.४ वा० १, २ ) इति। स्वार्थः पुनरनत्यन्तगतियुक्त एव, न शुद्धः। तथा हि सति अनत्यन्त-गतिर्द्योतिता न स्यात् ॥ ४ ॥

**न सामिवचने ॥** साम्यर्थ उच्यतेऽनेन तत्सामिवचम्। **सामिवचने उपपदे इति।** उपोच्चारितं पदमुपपदम्, तच्च समासावयवभूतं सत्केवलं गृह्यते। **सामिकृतमिति।** 'सामि' इति समासः। **अर्द्धकृतं नेमकृतमिति।** विशेषणसमासः, बहुव्रीहिर्वा।

**प्रकृत्यभिहितत्वादिति।** का पुनरत्र प्रकृतिरभिप्रेता? न तावत्समासः, अक्तान्तत्वात्, न हि सामिकृतादयः क्तान्ताः; प्रत्ययग्रहणे तदादिनियमात्। न च कृद्ग्रहणपरिभाषया क्तान्तत्वम्; साम्यादीनामगतित्वाद्, अकार-

### भावबोधिनी

अत्यन्तगति=अशेष सम्बन्ध निरन्तर सम्बन्ध, इसका अभाव=निरन्तर सम्बन्ध न होना—अनत्यन्त गति है। अनत्यन्त गति गम्यमान रहने पर 'क्त' प्रत्ययान्त शब्द से 'कन्' प्रत्यय होता है। उदा० छिन्नकः। भिन्नकः। ( बीच में टूटा हुआ। बीच में कटा हुआ )।

अनत्यन्तगति में—इसका क्या फल है? छिन्नम्। भिन्नम्। [ यहाँ नहीं होता है क्योंकि इनमें पूरा टूटा और कटा अर्थ प्रतीत होता है। ] ॥ ४ ॥

सामिवचक = अर्धवाचक उपपद रहने पर 'क्त' प्रत्ययान्त से 'कन्' नहीं होता है। उदा० सामिकृतम्, सामि-भुक्तम्। [ इनमें प्रत्यय नहीं होता है। ] वचन—इसका ग्रहण पर्यायवाची का ग्रहण कराने के लिए है। अतः—अर्ध-कृतम्, नेमकृतम्—इनमें भी होता है।

**नैवायमनत्यन्तगतौ विहितस्य कनः प्रतिषेधः, किं तर्हि ? स्वार्थिकस्य ।**

**केन पुनः स्वार्थिकः कन्विहितः ? एतदेव ज्ञापकमनुमास्यते—भवति स्वार्थे कन्निति । तत्र यदेतदुच्यते—'एवं हि सूत्रमभिन्नतरकं भवति', 'एतर्हि**[1] **बहुतरकं व्याप्यते' इत्येवमादि, तदुपपन्नं भवति**[1] **॥**

## २२८६. बृहत्या आच्छादने ॥ ६ ॥ ( २०७८ )

**कन्ननुवर्त्तते, न प्रतिषेधः । बृहतीशब्दादाच्छादने वर्त्तमानात् स्वार्थे कन्प्रत्ययो भवति । बृहतिका ।**

### न्यासः

सा च सामिशब्देनैव गमितेति कनः प्राप्तिरेव नास्ति । अतोऽनर्थकः प्रतिषेधः । स्वार्थमात्रेणैव कनो विधायकं लक्षणमस्तीति मन्यमान आह—**केन पुनरित्यादि** । यदेतत् प्रतिषेधवचनम्, एतदेव ज्ञापयति—भवति स्वार्थे कन् इति, अन्यथा प्रतिषेधवचनमनर्थकं स्यात् । अर्धकृतम् । नेमिकृतम् ॥ ५ ॥

**बृहत्या आच्छादने** ॥ **कन्ननुवर्त्तत इति** । स्वरितत्वात् । **न प्रतिषेध इति** । विपर्ययात् । **बृहतिकेति** ।

### पदमञ्जरी

कत्वाच्च । अथ यदत्र क्तान्तं सा प्रकृतिः ? तदपि न; न हि समासे एकार्थीभूतस्य पृथक् प्रकृतित्वमुपपद्यते । अथ वाक्यगतः कृतादिशब्दः प्रकृति ? एवमपि प्रकृत्यभिहितत्वादित्यनुपपन्नम् । एवं तु वक्तव्यम्–उपपदेनाभिहितत्वादिति ? अत्राहुः–वाक्यगतात्कृतादिशब्दात्, समासावयवाद्वा प्रसङ्ग शङ्क्यते । यत्तूक्तम्–प्रकृत्यभिहितत्वादित्यनुपन्नमुपपदेनाभिहितत्वादिति वक्तव्यमिति ? सत्यम्, शब्दान्तरोपलक्षणं प्रकृतिग्रहणम्, प्रकृतिर्वा भवतु, उपपदं वा, कन्व्यतिरिक्तेन शब्दान्तरेणाभिहित्वाद् द्योत्याभावात्कनः प्रसङ्गो नास्तीत्यर्थः । यदप्युक्तम्—समास एकार्थीभूतस्य पृथक्प्रकृतित्वासम्भव इति ? तदपि न, प्रकृत्यर्थस्य प्रत्ययार्थेनैकार्थीभावे सति प्रकृतित्वम् । न चार्थान्तरेणैकार्थीभूतस्य प्रत्ययार्थेनैकार्थीभावः सम्भवतीति किल प्रकृतित्वासम्भवः स्यात् । न चात्र प्रत्ययस्य द्योत्यं वाच्यं वाऽर्थान्तरमस्ति, येन सहैकार्थीभावः प्रार्थ्येत । तस्मादुपपन्नमेकार्थीभूतस्यापि प्रकृतित्वम् । अत **एव वृत्तौ समास उदाहृतः** ।

**केन पुनरिति** । स्वार्थमात्रे कन्विधेः प्रत्यक्षेणादर्शनात्प्रश्नः **अनुमास्यत** इत्युत्तरम् । **यदेतदुच्यत इति** । भाष्यकारैः उच्यत इति, प्रयुज्यत इति, इत्यर्थः, भाष्यकारप्रयोग उपपन्नो भवतीति यावत् । साक्षिस्थानीयश्च भाष्यकारप्रयोगः, न पुनरन्यत्र स्वार्थे कन् न भवतीति ॥ ५ ॥

**बृहत्या आच्छादने** ॥ बृहतिका = प्रावारः ॥ ६ ॥

### भावबोधिनी

सामिवचने यह प्रतिषेध अनर्थक है । क्योंकि प्रकृति से कहा जा चुका है । [ अतः अनत्यन्तगति को प्रकट करने के लिए प्रत्यय की आवश्यकता ही नहीं है । तब प्रतिषेध व्यर्थ है । ] यह अनत्यन्तगति में विहित कन् का प्रतिषेध नहीं है । तो फिर किसका ? स्वार्थिक कन् का ।

किस सूत्र से स्वार्थिक कन् किया जाता है ? इसी सूत्र को ज्ञापक अनुमित कर लिया जायगा, मान लिया जायगा—स्वार्थ में कन् होता है । अतः भाष्यकार के ये प्रयोग—''एवं हि सूत्रम् 'अभिन्नतरकम्' भवति ।' एतर्हि बहुतरकं व्याप्यते' हैं, ये सब उपपन्न होते हैं । अर्थात् 'अभिन्नतरकम्' बहुतरकम् में कन् स्वार्थिक होता है ॥ ५ ॥

'कन्' की अनुवृत्ति होती है, प्रतिषेध की नहीं । आच्छादन = ढकना अर्थ में वर्तमान 'बृहती' शब्द से स्वार्थ में 'कन्' प्रत्यय होता है । उदा०—बृहतिका [ बृहती + कन्, टाप् = आ, 'केऽणः' सूत्र से ह्रस्व । स्त्रियों की ओढ़ने वाली चूनर । ]

---

१–१. एतर्हि बहुतरकं व्याकरणमधीतमित्येवमाद्युपपन्नं भवति' इति पाठा० ।

आच्छादने इति किम् ? बृहती छन्दः ॥

२२८७. अषडक्षाशितङ्ग्वलङ्कर्मालम्पुरुषाध्युत्तरपदात्खः ॥ ७ ॥ ( २०७९ )

अषडक्ष, आशितङ्गु, अलङ्कर्म, अलम्पुरुष—इत्येतेभ्योऽध्युत्तरपदाच्च स्वार्थे खः प्रत्ययो भवति। अविद्यमानानि षडक्षीण्यस्येति बहुव्रीहिः, 'बहुव्रीहौ सक्थ्यक्ष्णोः' ( ५.४.११३ ) इति षच्, ततः खप्रत्ययः। अषडक्षीणो मन्त्रः। यो द्वाभ्यामेव क्रियते न बहुभिः। आशिता गावोऽस्मिन्नरण्ये आशितङ्गवीनमरण्यम्। निपातनात्पूर्वपदस्य मुमागमः।

अलङ्कर्मन्, अलम्पुरुष इति 'पर्यादयो ग्लानाद्यर्थे चतुर्थ्या' ( वा ९३ ) इति समासः। अलङ्कर्मणे अलङ्कर्मीणः। अलम्पुरुषाय अलम्पुरुषीणः।

अध्युत्तरपदस्तत्पुरुषः। अधिशब्दः शौण्डादिषु पठ्यते। राजाधीनः। नित्यश्चायं प्रत्ययः; उत्तरत्र विभाषाग्रहणात्।

### न्यासः

'केऽणः' इति ह्रस्वः ॥ ६ ॥

**'अषडक्षाशितङ्ग्वलङ्कर्मालम्पुरुषाध्युत्तरपदात् खः ॥ अविद्यमानानि षडक्षीण्यस्मिनिति बहुव्रीहिरिति।** ततः 'बहुव्रीहौ सक्थ्यक्ष्णोः' इति षच्।

राजशब्दात् सप्तमी। राजन्यधीति विगृह्य 'सप्तमी शौण्डैः' इति समासः।

**तमबादय इति।** 'अतिशायने तमबिष्ठनौ' इत्येवमादयः। **प्राक् कन इति।** 'युवाल्पयोः कन्यन्तरस्याम्'

### पदमञ्जरी

**अषडक्षाशितङ्ग्वलङ्कर्मालम्पुरुषाध्युत्तरपदात्खः ॥ अविद्यमानानि षडक्षीणि यस्मिन्निति बहुव्रीहिरिति।** अक्षिशब्दोऽत्र श्रोत्रेन्द्रिये वर्तते 'बहुव्रीहौ सक्थ्यक्ष्णोः' इति षच्। मन्त्र=मन्त्रणम्, यद् द्वाभ्यामेव क्रियत इति, त्रिभिस्तु क्रियमाणः षडक्षो भवति, चतुःप्रभृतिभिस्तु क्रियमाणस्य यद्यप्यष्टाक्षत्वादि सम्भवति तथाप्यवर्जनीयरूपेण षडक्षत्वमपि भवति। तस्माद् द्वाभ्यामेव क्रियमाणो ऽषडक्षीणो भवति। **आशिता इति।** अश्नोतेराङ्पूर्वादाशितः कर्तेति ज्ञापकात्कर्त्तरि क्तः। यद्वा—ण्यन्तात्कर्मणि। **आशितङ्गवीनमरण्यमिति।** प्रभूतयवसमित्यर्थः।

**अलङ्कर्मीणः।** कर्मणे पर्याप्तः। **अलम्पुरुषीणः।** प्रतिमल्लादिः।

**अधिशब्दः शौण्डादिषु पठ्यत इति।** यत्र 'अधिरीश्वरे' इत्यधेः कर्मप्रवचनीयत्वाद् 'यस्य चेश्वरवचनम्'

### भावबोधिनी

आच्छादन अर्थ में ही—इसका क्या फल है ? बृहती छन्दः। [ यहाँ छन्द है अतः प्रत्ययः नहीं होता। ] ॥ ६ ॥

अषडक्ष, आशितङ्गु, अलङ्कर्म, अलम्पुरुष—इन शब्दों से और अधि जिसका उत्तर पद है उससे स्वार्थ में 'ख' प्रत्यय होता है। अविद्यमान हैं छः आँखें जिसकी—इस अर्थ में बहुव्रीहि समास करने पर 'बहुव्रीहौ सक्थ्यक्ष्णोः' सूत्र से 'षच्' प्रत्यय करने पर—अषडक्ष बनता है तब यह 'ख' प्रत्यय होता है—अषडक्षीणो मन्त्रः। जो मन्त्र = गुप्त वार्ता केवल दो व्यक्तियों द्वारा ही की जाती है, बहुतों द्वारा नहीं ( उसके लिये यह प्रयोग है )। खिलाई गई हैं गायें जिस अरण्य में वह 'आशितङ्गवीनम्' अरण्य है। [ आशिता गावः अस्मिन्—इस अर्थ में बहुव्रीहि करने पर—'आशितगु' बनाने के बाद ] निपातन से पूर्वपद को मुम् का आगम होता है [ आशित + मुम्=म् + गो + ख = ईन, ओ का अव्, म् का अनुस्वार और परसवर्ण करने पर—आशितङ्गवीनम् बनता है ! ]

अलङ्कर्मन्, अलम्पुरुषः—इनमें 'पर्यादयो ग्लानाद्यर्थे चतुर्थ्या' इस वचन से समास होता है। उदा०—अलङ्कर्मणे—इस अर्थ में—अलङ्कर्मीणः। अलम्पुरुषाय—इस में अलम्पुरुषीणः [ ख=ईन, णत्व ]।

अधि जिसका उत्तरपद है, ऐसा तत्पुरुष। अधि शब्द शौण्डादिगण में पठित है। उदा०—राजाधीनः।

अन्येपि स्वार्थिका नित्याः प्रत्ययाः स्मर्यन्ते—तमबादयः ( ५.३.५५ ) प्राक्कनः ( ५.३.६४ ), ञ्यादयः ( ५.३.११२ ) प्राग्वुनः ( ५.४.१ ), आमादय ( ५.४.११ ) प्राङ् मयटः ( ५.४.२१ ), बृहतीजात्यन्ताः ( ५.४.९ ) समासान्ताश्चेति ( ५.४.६ ) ॥

२२८८. विभाषाञ्चेरदिक्स्त्रियाम् ॥ ८ ॥ ( २०८० )

अञ्चत्यन्तात्प्रातिपदिकाददिक्स्त्रियां वर्त्तमानात्स्वार्थे विभाषा खः प्रत्ययो भवति । प्राक्, प्राचीनम् ।

**न्यासः**

इत्ययम् । **ञ्यादय इति** । 'पूगाञ् ञ्योऽग्रामणीपूर्वात्' इत्यादयः । **प्राग्वुन इति** । 'पादशतस्य' इत्यादिसूत्रेण विहितत्वात् । **आमादय इति** । 'किमेत्तिङव्ययघात्' इत्येवमादयः । **प्राङ् मयट इति** । 'तत्प्रकृतवचने मयट्' इत्यतः । **बृहत्तीजात्यन्तेति** । 'बृहत्या आच्छादने' इत्येतत् सूत्रं कनमुपलक्षयति । जात्यन्तशब्देनापि 'जात्यन्ताच्छ बन्धुनि' इत्येतत् । बहुवचननिर्देशोऽषडक्षादिसूत्रविहितस्य परिग्रहार्थः ॥ ७ ॥

**विभाषाञ्चेरदिक् स्त्रियाम्** ॥ ८ ॥

**पदमञ्जरी**

इति सप्तम्यन्ता राजादयोऽधिना समस्यन्ते । वाक्यमपि भवति—राजन्यधि राजाधीनमिति । यथा—अधि ब्रह्मदत्ते पञ्चाला इति, अधिशब्दश्च वृत्तिविषये ईशितव्ये वर्त्तते । अपर आह—अधिकरणे एषा सप्तमी, वृत्तिविषये च ससाधनक्रियावचनोऽधिः न तु वाक्य इत्यस्वपदेन विग्रहः, राजन्यधिकृतं राजाधीनम्, राजायत्तमित्यर्थ इति । **उत्तरसूत्रे विभाषाग्रहणादिति** । 'द्वयोर्विभाषयोर्मध्ये नित्या विधय' ( कालाप० पारि० ७८ ) इति न्यायात् ।

**तमबादय इति** । 'अतिशायने तमबिष्ठनौ' इत्यादयः । **प्राक्कन इति** । 'अवक्षेपणे कन्' इत्यस्मात् शुक्ल इत्युक्ते सामान्यशब्दत्वात्प्रकर्षस्यानवगमात्तत्तदुपाधिद्योतनायावश्यं प्रयोज्यास्तमबादय इति नित्याः । अतिशयेन शुक्ल इत्यादिकं तु वाक्यं भवत्येव, पदान्तरद्योत्यत्वादतिशयस्य । **ञ्यादय इति** । 'पूगाञ्ञ्योऽग्रामणीपूर्वात्' इत्यादयः । **प्राग्वुन इति** । पादशतादिसूत्रविहितात्, तस्य तु पुरा विग्रहो दर्शित एव । **आमादय इति** । 'किमेत्तिङव्ययघादामु' इत्यादयः, 'तत्प्रकृतवचने मयट्' इत्यतः प्रागित्यर्थः । **बृहतीजात्यन्ता इति** । बृहतीशब्देन 'बृहत्या आच्छादने' इति विहितः कनुपलक्ष्यते । जात्यन्तशब्देनापि 'जात्यन्ताच्छ बधुनि' इति विहितश्छः । बहुवचननिर्देशादेतरसूत्रविहितस्य खस्य पाशबादीनां च ग्रहणम् । यो हि वैयाकरणपाशादिशब्देभ्योऽर्थः प्रतीयते, नासौ जातुचित् वैयाकरणादिसामान्यशब्देभ्यः प्रतीयत इति तेऽपि तमबादिवन्नित्या एव । **समासान्तश्चेति** । 'समासान्ताः' इत्यधिकृत्य विहिताः ॥ ७ ॥

**विभाषाञ्चेरदिक्स्त्रियाम्** ॥ दिक् चासौ स्त्री चेति दिक्स्त्री, तत्र प्रतिषेधः, न तु दिशि स्त्रियां च, स्त्रीलिङ्गैकवचननिर्देशात् । उदाहरणेषु 'अचः' इत्यकारलोपे कृते 'चौ' इति दीर्घः । **उदीचीनमित्यत्र** तूद

**भावबोधिनी**

[ राजनि अधि—यहाँ "सप्तमी शौण्डैः" सूत्र से समास करने के बाद राजाधि बनाकर ख = ईन प्रत्यय होता है । ] यह प्रत्यय नित्य है क्योंकि अग्रिम सूत्र में विभाषा का ग्रहण है ।

और दूसरे भी स्वार्थिक प्रत्यय नित्य माने जाते हैं—कन् से पूर्ववर्ती तमप् आदि, वुन् से पूर्ववर्ती ञ्य आदि, मयट् से पूर्ववर्ती आम् आदि, 'बृहत्या आच्छादने' से 'विहित कन्' 'जात्यन्ताच्छ बन्धुनि' से विहित 'छ' और समासान्त प्रत्यय । [ ये सभी नित्य होते हैं । इनसे रहित प्रयोग नहीं किया जाता है । ] ॥ ७ ॥

अञ्चति जिसके अन्त में है, जो दिग्वाचक स्त्रीलिङ्ग नहीं है, ऐसे प्रातिपदिक से स्वार्थ में 'ख' प्रत्यय विकल्प से होता हैं । उदा०—प्राक्, प्राचीनम् । अर्वाक्, अर्वाचीनम् । [ प्राञ्च् + ख = ईन, न् = न् लोप, अर्वाञ्च् + ख = ईन, न् = न् लोप ] ।

अर्वाक्, अर्वाचीनम् ।

अदिक्स्त्रियामिति किम् ? प्राची दिक् । प्रतीची दिक् । दिग्ग्रहणं किम् ? प्राचीना ब्राह्मणी । अवाचीना शिखा । स्त्रीग्रहणं किम् ? प्राचीनं दिग्रमणीयम् । उदीचीनं दिग्रमणीयम् ॥

२२८९. जात्यन्ताच्छ बन्धुनि ॥ ९ ॥ ( २०८१ )

जात्यन्तात्प्रातिपदिकाद् बन्धुनि वर्त्तमानात्स्वार्थे छः प्रत्ययो भवति । बध्यतेऽस्मिञ्जातिरिति बन्धुशब्देन द्रव्यमुच्यते । येन ब्राह्मणत्वादिजातिर्व्यज्यते तद् बन्धु = द्रव्यमुच्यते । ब्राह्मणजातीयः, क्षत्त्रियजातीयः, वैश्यजातीयः—इति ब्राह्मणादिरेवोच्यते ।

बन्धुनीति किम् ? ब्राह्मणजातिः शोभना ॥

**न्यासः**

जात्यन्ताच्छ बन्धुनि ॥ ९ ॥

**पदमञ्जरी**

'उद ईत्' इतीत्वम् ।

**दिग्ग्रहणं किमिति** । अञ्चत्यन्तः स्त्रियां वर्तमानो दिश्येव वर्तत इति प्रश्नः । **प्राचीना ब्राह्मणीति** । क्रियानिमित्तको देशकालनिमित्तको वा ब्राह्मण्यां स्त्रियां वर्त्तते, न दिशीति प्रतिषेधाभावः । **स्त्रीग्रहणं किमिति** । दिग्वृत्तिरञ्चत्यन्तः स्त्रीलिङ्ग एवेति मन्यते । **प्राचीनं दिग्रमणीयमिति** । प्राचीनशब्दाद्दिग्वाचिनः प्रथमासमर्थाद् दिक्शब्देभ्य इत्युत्पन्नस्यास्तातेः 'अञ्चेर्लुक्' इति लुक्, ङीपोऽपि 'लुक् तद्धितलुकि' इति लुक्, ततः 'तद्धितश्चासर्वविभक्तिः' इत्यव्ययत्वात्स्त्रीलिङ्गाभावः । खे तु कृते स्वभावादेव नपुंसकत्वम् ॥ ८ ॥

**जात्यन्ताच्छ बन्धुनि** ॥ **बध्यतेऽस्मिन्निति बन्धु इति** । 'शृस्वृस्निहित्रप्यसिवसिहनिक्लिदिबन्धिमनिभ्यश्च' ( द० उ० १.९५ ) इत्यधिकरणे उप्रत्ययः, बध्यते, नियम्यते, अस्वतन्त्रीक्रियत इत्यर्थः । एतेन क्रियाशब्दस्येदं ग्रहणम्, न जात्यादिषु रूढस्याप्तपर्यायस्य बन्धुशब्दस्येति दर्शयति । एतच्च नपुंसकनिर्देशादवसीयते, आप्तपर्यायस्तु पुंल्लिङ्गः । **येन ब्राह्मणत्वादिजातिर्व्यज्यत इति** । व्यक्त्यधीना हि जातेरभिव्यक्तिः, न हि स्वातन्त्र्येण जातुचिज्जातिरुपलभ्यते । एतदेवाभिप्रेत्य—बध्यतेऽस्मिन्निति बन्ध्वित्युक्तम् । **ब्राह्मणजातीय इति** । भावप्रधानोऽत्र ब्राह्मणशब्दः 'द्व्येकयोः' इतिवत्, तेन बहुव्रीहिः । **ब्राह्मणादिरेवोच्यते इति** । ब्राह्मणत्वजात्याधारो द्रव्यात्मकः पिण्ड उच्यत इत्यर्थः ।

**भावबोधिनी**

दिग्वाचक स्त्रीलिङ्ग न हो—इसका क्या फल है ? प्राची दिक्, प्रतीची दिक् । [ यहाँ दिशावाचक स्त्रीलिङ्ग है । अतः यह प्रत्यय नहीं होता है । ] दिग्ग्रहण किसलिए है ? प्राचीना ब्राह्मणी । अर्वाचीना शिखा । [ यहाँ दिशा अर्थ न होने से प्रत्यय हो जाता है । ] स्त्रीलिङ्ग हो—इसका क्या फल है ? प्राचीनं दिक् रमणीयम् । उदीचीनं दिक् रमणीयम् । [ यहाँ प्रथमान्त शब्द से 'अस्ताति' प्रत्यय करके 'अञ्चेर्लुक्' सूत्र से इसका लुक् होता है । 'लुक् तद्धित-लुक' सूत्र से ङीप् का भी लुक् हो जाता है । 'तद्धितश्चासर्वविभक्तिः' सूत्र से अव्यय हो जाने से स्त्रीलिङ्ग नहीं रहत है । परन्तु जब स्वार्थ में ख = ईन किया जाता है तब स्वभावतः नपुंसक लिङ्ग ही रहता है । अतः प्राचीनं दिक् रमणीयम् ऐसा शुद्ध रूप होता है । ] ॥ ८ ॥

'जाति' जिसके अन्त में है, 'बन्धु' अर्थ में जो विद्यमान है ऐसे प्रातिपदिक से स्वार्थ में 'छ' प्रत्यय होता है । जिसमें जाति बांधी जाती हैं वह द्रव्य बन्धु शब्द से कहा जाता है । जिसके द्वारा ब्राह्मणत्वादि जाति व्यक्त होती है, वह 'बन्धु'=द्रव्य कहा जाता है । उदा०—ब्राह्मणजातीयः, क्षत्रियजातीयः, वैश्यजातीयः—इनसे ब्राह्मणादि ही कहे जाते हैं अर्थात् ब्राह्मणत्वजाति का आधार द्रव्यात्मक मांसपिण्ड कहा जाता है ।

बन्धु = द्रव्य अर्थ में—इसका क्या फल है ? ब्राह्मणजातिः शोभना । [ ब्राह्मण की जाति अथवा ब्राह्मणरूप

## २२९०. स्थानान्ताद् विभाषा सस्थानेनेति चेत् ॥ १० ॥ ( २०८७ )

**स्थानान्तात्प्रातिपदिकाद्विभाषा छः प्रत्ययो भवति सस्थानेन चेत् स्थानान्तमर्थवद्भवति। सस्थान इति तुल्य उच्यते, समानं स्थानमस्येति कृत्वा। पित्रा तुल्यः पितृस्थानीयः, पितृस्थानः। मातृस्थानीयः, मातृस्थानः। राजस्थानीयः, राजस्थानः।**

**सस्थानेनेति किम्? गोस्थानम्। अश्वस्थानम्।**

### न्यासः

**स्थानान्ताद् विभाषा सस्थानेनेति चेत्॥ सस्थानेनेति।** करणे तृतीया। स्थानेन स्थानवाच्येनार्थेन तुल्यपर्यायेण स्थानान्तं यद्यर्थवद्भवत्येवं प्रत्ययो भवति, नान्यथा। कथं पुनः स्थानशब्देन तुल्यत्वमुच्यते? इत्याह—**समानमित्यादि**। यस्य समानं स्थानं स सस्थान इत्युच्यते। यश्चैवंविधं स यदपेक्षं तस्य समानं स्थानं स तेन तुल्यो भवतीति। **पितृस्थानीय इति**। पितृस्थानमिव स्थानं यस्येति 'सप्तम्युपमान' इत्यादिनोत्तरपद-लोपो बहुव्रीहिः।

**गोस्थानमिति**। षष्ठीतत्पुरुषोऽयम्। भवति ह्येतत् स्थानान्तम्, प्रातिपदिकम्, न तु स्थानेन तुल्यार्थेनार्थ-वतः। यथा स्थानान्तात् प्रत्ययो भवति, तथा तत्पुरुषेणापि सस्थानशब्देनार्थ उपस्थापिते तेनार्थेनार्थवतः स्थानात् प्रत्ययेन भवितव्यम्; विशेषानुपादानात्। ततश्च तुल्यश्च तत् स्थानान्तं प्रातिपदिकं स्थानवाच्येनार्थेनार्थवदिति यश्चोदयेत्, तं प्रत्याह—**इतिकरणो विवक्षार्थ इति**। इतिकरणो ह्यत्र विवक्षार्थः क्रियते, तेनायमर्थो लभ्यते—

### पदमञ्जरी

**ब्राह्मणजातिरिति**। षष्ठीसमासः, कर्मधारयो वा ॥ ९ ॥

**स्थानान्ताद्विभाषा सस्थानेनेति चेत्॥ सस्थानेन चेदिति**। करणे एषा तृतीया, सस्थानेन सस्थानशब्द-वाच्येनार्थेन तुल्यपर्यायेण स्थानान्तं यद्यर्थवद्भवति, एवं प्रत्ययो भवति, नान्यथेत्यर्थः। **सस्थान इति तुल्य उच्यत इति**। स्थानत इति शेषः। स्थानम् = प्राप्तिः, सम्बन्धविशेषः, पदमिति यस्य प्रसिद्धि। कथं पुनः सस्थानशब्देन तुल्य उच्यते? इत्याह—**सामानं स्थानमस्येति**। यस्य समानं स्थानं स सस्थान इत्युच्यते, यश्चैवंविधः स यदपेक्षया तस्य समानं स्थानं तेन तुल्यो भवति, तत्र शब्दभेदेऽपि वस्तुवृत्तेन सस्थानशब्दस्य तुल्यो वाच्यो भवति। सभावः पुनरत्र 'ज्योतिर्जनपद' इत्यादि सूत्रेण। **पितृस्थानीय इति**। पितुरिव स्थान-मस्येति बहुव्रीहिः।

**गोस्थानमिति**। तिष्ठत्यस्मिन्निति स्थानं = देशः। **न तु तत्पुरुष इति**। समानं च तत्स्थानं चेत्येवंरूप-स्तत्पुरुषः। स्थानशब्दो नार्थमुपस्थापयति। यद्युपस्थापयेत्, तुल्यं च तत्स्थानं च तुल्यस्थानमित्यादेः कर्मधार-

### भावबोधिनी

जाति अच्छी है। यहाँ द्रव्य की प्रतीति नहीं होती है अतः प्रत्यय नहीं होता है। ] ॥ ९ ॥

स्थान शब्द जिस प्रातिपादिक के अन्त में है उससे विकल्प से 'छ' प्रत्यय होता है यदि सस्थान से स्थानान्त शब्द अर्थवान् होता है तो सस्थान—यह तुल्य कहा जाता है।—समानं स्थानम् अस्य—यह विग्रह करके [ समान का स आदेश होने पर सस्थान बनता है। ] उदा० पित्रा तुल्यः—इस अर्थ में पितृस्थानीयः, पितृस्थानः। [ छ—ईय करने और न करने पर दो रूप बनते हैं। पिता के समान—यह अर्थ है। मात्रा तुल्यः—अर्थ में— ] मातृस्थानीयः, मातृस्थानः। [ राज्ञा तुल्यः—इस अर्थ में ] राजस्थानीयः राजस्थानः। [ इनमें प्रत्ययविकल्प के कारण दो दो रूप हैं। ]

सस्थान से—इसका क्या फल है? गोस्थानम्, अश्वस्थानम्। [ तिष्ठन्ति अस्मिन् तत् स्थानम् = देशः। अतः प्रत्यय नहीं होता है। ]

**इतिकरणो विवक्षार्थः। तेन बहुव्रीहिः सस्थानशब्दोऽर्थमुपस्थापयति, न तत्पुरुषः। चेच्छब्दः सम्बन्धार्थः। द्वयोर्विभाषयोर्मध्ये नित्यविधय इति पूर्वत्र नित्यविधयः॥**

**२२९१. किमेत्तिङव्ययघादाम्वद्रव्यप्रकर्षे ॥ ११ ॥ ( २००४ )**

**किम एकारान्तात्तिङन्तादव्ययेभ्यश्च यो विहितो घः स किमेत्तिङव्ययघः, तदन्तात्प्रातिपदिकादद्रव्यप्रकर्षे आमु प्रत्ययो भवति। यद्यपि द्रव्यस्य स्वतः प्रकर्षो नास्ति, तथापि क्रियागुणस्थः प्रकर्षो यदा द्रव्ये**

**न्यासः**

ततश्चेत् विवक्षा भवतीति। बहुव्रीह्यर्थेनार्थवतः स्थानात् प्रत्ययोत्पत्तौ लोकस्य विवक्षा भवति, न तत्पुरुषार्थेनार्थवतः। तस्मात् स्थानान्तस्यार्थमुत्पादयितुम् बहुव्रीहिरेव स्थानशब्दार्थमुत्पादयति, न तु तत्पुरुषः। तेन न भवत्यतिप्रसङ्गः। **चेच्छब्दः सम्बन्धार्थ इति।** स्थानान्तस्य सस्थानसम्बन्धो यथा स्यादित्येवमर्थं चेच्छब्दः; अन्यथा प्रत्ययं प्रति पञ्चम्या स्थानान्तस्य निर्देशात् स्थानान्तस्य सस्थानेन सम्बन्धो न स्यात्। न हि पञ्चम्यन्तेन तस्य सम्बन्धः शक्यते कर्तुम्। चेच्छब्दे तु स चेत् स्थानेनार्थवद् भवतीत्युपपद्यते न तु सम्बन्धः। **द्वयोर्विभाषयोर्मध्ये नित्यविधय इति।** यदि नित्या न स्युः, पूर्वेव विभाषोत्तरत्रानुवर्त्तिष्यत इत्युत्तरं विभाषाग्रहणमनर्थकं स्यात्॥ १०॥

**किमेत्तिङव्ययघादाम्वद्रव्यप्रकर्षे॥ अद्रव्यप्रकर्ष इति।** ननु च द्रव्यस्य न प्रकर्षोऽस्ति, तथा च भाष्ये उक्तम्—'न वै द्रव्यस्य प्रकर्षोऽस्ति' इति, अतः प्रतिषेधोऽनर्थकः? इत्यत आह—**यद्यपीत्यादि।** दृश्यते चाधेयधर्मस्याधार उपचारः, यथा—मञ्चाः क्रोशन्तीति। तस्मादाधाराधेययोः क्रियागुणयोर्धर्मः प्रकर्षः। स यदाधारद्रव्य उपचर्यते तदासौ द्रव्यधर्मत्वादुपचारेण द्रव्यधर्मो भवति। अतोऽयं प्रतिषेधः क्रियते।

**पदमञ्जरी**

यादपि प्रत्ययः स्यात्। अथ बहुव्रीहेस्तुल्यस्थानशब्दात्सस्थानशब्दाद्वाऽयं प्रत्ययः कस्मान्न भवति? कः पुनराह—न भवतीति? नेष्यते इति करणादेव तु न भविष्यति। चेच्छब्दः सम्बन्धार्थ इति। चेच्छब्दे सति विभक्तिविपरिणामेनाध्याहारेण वा वाक्यपर्यवसानेन च सम्बन्धो भवति। असति तु तस्मिन्पञ्चम्यन्तेन तृतीयान्तस्य सम्बन्धोऽनुपपन्नः स्यात्॥ १०॥

**किमेत्तिङव्ययघादाम्वद्रव्यप्रकर्षे॥ किम एकारान्तादित्यादि।** अर्थप्रदर्शनपरमेतत्, सूत्रे तु षष्ठीसमासः, योगविभागाद्वा पञ्चमीसमासः। **यद्यपीति।** द्रव्यं विशेष्यं पर्यवसानभूतम्, तस्य स्वरूपेण प्रकर्षो नास्ति, प्रवृत्तिनिमित्तद्वारक एव तु तस्य प्रकर्षः, यथोक्तं भाष्ये - गुणस्यैव प्रकर्षो न द्रव्यस्येति। गुणः प्रवृत्तिनिमित्तम्। हरिरप्याह—

'द्रव्यस्याव्यपदेश्यस्य न विना भेदहेतुना।
प्रकर्षो विद्यते नापि शब्दस्योपैति वाच्यताम्॥ ( वा० प० ३.५.२,३ ) इति।

**भावबोधिनी**

'इति' यह विवक्षा के लिए है। इस कारण बहुव्रीहि समास वाला सस्थान शब्द अर्थ को उपस्थित कराता है, न कि तत्पुरुष [ = समानं च तत् स्थानम् ]।

'चेत्' शब्द सम्बन्ध अर्थ वाला है। दो विभाषाओं = विकल्पों के मध्य में नित्य विधियाँ हैं—यह पूर्व सूत्रों में सम्बन्ध होता है। [यदि पूर्वविधियाँ नित्य नहीं होतीं तब तो पहले वाला 'विभाषा' यहाँ अनुवृत्त हो जाता।] ॥१०॥

किम्, एकारान्त, तिङन्त और अव्यय शब्दों से जो 'घ' प्रत्यय किया गया है वह किमेत्तिङव्ययघ' है, वह जिसके अन्त में है ऐसे प्रातिपादिक से अद्रव्य-प्रकर्ष अर्थ में 'आम्' प्रत्यय होता है। यद्यपि द्रव्य का स्वतः प्रकर्ष नहीं होता है तथापि क्रिया अथवा गुण में रहने वाला प्रकर्ष जब द्रव्य में आरोपित होता है तब यह प्रतिषेध लागू होता है।

उपचर्यते तदाऽयं प्रतिषेधः। क्रियागुणयोरेवायं प्रकर्षे प्रत्ययः। किंतराम्। किंतमाम्। पूर्वाह्णेतराम्। पूर्वाह्णेतमाम्। पचतितराम्। पचतितमाम्। उच्चैस्तराम्। उच्चैस्तमाम्।

अद्रव्यप्रकर्ष इति किम्? उच्चैस्तरः पर्वतः। उच्चैस्तमः॥

२२९२. अमु चच्छन्दसि ॥ १२ ॥ ( ३५०३ )

किमेत्तिङव्ययघादद्रव्यप्रकर्षे अमु प्रत्ययो भवति छन्दसि विषये। चकारादामु च। 'प्रतरं न आयुः'

**न्यासः**

**क्रियागुणयोरेवेत्यादि।** क्रियाया गुणस्य प्रकर्षो यदा द्रव्ये नोपचर्यते क्रियागुणयोरेव प्रकर्षः, तत्रैव प्रत्ययः। यदि तु द्रव्ये उपचर्यते ततो द्रव्यप्रकर्ष इति वचनात्। **किन्तरामिति।** वस्तुनो बहवो विशेषाः, तत्र प्रश्नः किंशब्दार्थः। **पूर्वाह्णेतरामिति।** 'घकालतनेषु कालनाम्नः' इति सप्तम्या अलुक्। ननु च पूर्वाह्णः कालः, कालश्च द्रव्यम्, द्रव्यप्रकर्षे प्रत्ययेन न भवितव्यम्; अद्रव्यप्रकर्ष इति प्रतिषेधात्? नैव दोष; न ह्यत्र प्रातिपदिकार्थः प्रकर्षे वर्त्तते, किं तर्हि? विभक्त्यर्थः, स च गुण एव; द्रव्यशक्तिस्वरूपत्वात् कारकाणाम्। अथ वा—वचनसामर्थ्यात् कालप्रकर्षे भवति। न हि कालादन्यस्मादेकारात् परो घो भवति। 'कालनाम्न' इति परतः सप्तम्या अलुग्विधानात्। **उच्चैस्तरामिति ॥ ११ ॥ अमु च च्छन्दसि ॥ १२ ॥**

**पदमञ्जरी**

**क्रियागुणस्य इति।** प्रवृत्तिनिमित्तभूतस्य सहचरितस्य धर्ममात्रस्योपलक्षणं क्रियागुणग्रहणम्। **द्रव्य उच्यत इति।** द्रव्यनिष्ठोऽभिधीयत इत्यर्थः। **क्रियागुणयोरेवेति।** यो द्रव्यनिष्ठयोरनुविधीयते स तयोरेव प्रकर्षः। **किंतरामिति।** इदं च किमिदं च किम्, इदमनयोरतिशयेन किम् इति तरप् प्रत्ययः। यत्र स्वरूपेण ज्ञातस्य वस्तुनो विशेषाकारा बहवो जिज्ञासितास्तत्र किंशब्दार्थः प्रश्नप्रकृष्ट इव भवति, तदाश्रयः प्रत्ययः। **पूर्वाह्णेतरामिति।** 'घकालतनेषु' इति सप्तम्या अलुक्। तत्रासत्त्वभूतस्य विभक्त्यर्थस्य प्रकर्षः, न कालस्येति नायं द्रव्यप्रकर्षः। **उच्चैस्तरामिति।** अत्राप्युच्चैःशब्दस्याधिकरणप्रधानत्वान्नायं द्रव्यप्रकर्षः। **उच्चैस्तरः पर्वत इति।** नात्राधिकरणप्रधान उच्चैःशब्दः, किं तर्हि? उच्चैस्त्वं नाम गुणस्तद्गतः प्रकर्षः पर्वतनिष्ठोऽभिधीयते, स्वभावाच्च तरबन्तस्यात्र सत्त्वभूतार्थाभिधायित्वम्, लिङ्गसंख्यायोगश्च।

उदित्करणं किम्? 'आमि सर्वनाम्नः सुट्' इत्यत्रास्य सामान्यग्रहणं मा भूत्। यदि स्यात्? किन्तरामित्यत्र परत्वाद्यस्येतिलोपं बाधित्वा 'ह्रस्वनद्यापः' इति नुट् प्रसज्येत, मकारस्य त्वित्संज्ञा प्रयोजनाभावादेव न भविष्यतीति ॥ ११ ॥

**अमु चच्छन्दसि ॥ प्रतरामिति।** प्रशब्दार्थस्य प्रकर्षस्य प्रकर्षे तरप् प्रकृष्टतर इतिवत्। अत्राप्युदित्करणम्

**भावबोधिनी**

क्रिया और गुण के ही प्रकर्षों में यह प्रत्यय होता है। [ तरप्तमपौ घः' ( पा० सू० १।१।२२ ) सूत्र से तरप् और तमप् प्रत्ययों की 'घ' संज्ञा की गई है। अतः ये जिनके अन्त में हैं उनसे आम् प्रत्यय किया जाता है। ] उदा०—किन्तराम्, किन्तमाम्। पूर्वाह्णेतराम् पूर्वाह्णेतमाम्। पचतितराम्, पचतितमाम्। उच्चैस्तराम्, उच्चैस्तमाम्। [ किम् आदि से अतिशय अर्थ में तरप् और तमप् = घ संज्ञक प्रत्यय करने के बाद यह 'आमु' किया जाता है। ]

द्रव्य का प्रकर्ष न होने पर—इसका क्या फल है? उच्चैस्तरः पर्वतः, उच्चैस्तमः पर्वतः। [ यहाँ पर्वतरूप द्रव्य का प्रकर्ष बताया गया है। अतः प्रत्यय नहीं होता है। ] ॥ ११ ॥

वेदविषय में अद्रव्य के प्रकर्ष में 'किमेत्तिङव्ययघ' से 'अमु' प्रत्यय होता है। च के कारण 'आमु' भी होता अर्थात् वेद में दोनों होते हैं। उदा०—प्रतरं नयामः, प्रतरां वयस्यः। [ तरप् के बाद अमु और आमु दोनों हैं। ]

१. 'सर्वस्यैव प्रधानस्य' इति वाक्यदीये पाठः।

( ऋ० ४.१२.६ )। 'प्रतरां नय' ( वा० सं० १७.५१ )। स्वरादिषु अम्, आम् इति पठ्यते, तस्मात्तदन्तस्याव्ययत्वम् ॥

**२२९३. अनुगादिनष्ठक् ॥ १३ ॥ ( २०८३ )**

अनुगदतीत्यनुगादी। अनुगादिन्शब्दात्स्वार्थे ठक् प्रत्ययो भवति। आनुगादिकः ॥

**२२९४. णच स्त्रियामञ् ॥ १४ ॥ ( ३२१६ )**

'कर्मव्यतिहारे णच् स्त्रियाम्' ( ३.३.४३ ) इति णज्विहितः, तदन्तात्स्वार्थेऽञ् प्रत्ययो भवति स्त्रियां विषये। व्यावक्रोशी। व्यावहासी वर्त्तते।

स्त्रीग्रहणं किमर्थम्, यावता णच् स्त्रियामेव विहितः, ततः स्वार्थिकस्तत्रैव भविष्यति ? एवं तर्ह्येतज्

न्यासः

**अनुगादिनष्ठक् ॥ अनुगदतीत्यनुगादीति।** ग्रहादित्वाण्णिनिः, आवश्यके वा, ताच्छील्ये वा, अस्मादेव निपातनाच्च ॥ १३ ॥

**णचः स्त्रियामञ्। व्यावक्रोशीति।** 'क्रुश आह्वाने'– इत्यस्माण्णच्, लघूपधगुणः, णजन्तादञ्। स च कृद्ग्रहणपरिभाषायां सगतिकाद् भवति। तेन सगतिकमेवेह, प्रातिपदिकसंज्ञां प्रतिपद्यते, कर्मव्यतिहार इति प्रतिषेधादेव वृद्धिप्रतिषेधयोरादिवृद्धिरेव भवति। 'टिड्ढाणञ्' इति ङीप्। **व्यावहासीति।** 'अत उपधायाः' इति वृद्धिः।

**तत इति।** णजन्तादिति यावत्। 'स्वार्थिकाः प्रकृतितो लिङ्गवचनान्यनुवर्त्तन्ते' इति कृत्वा। **एवं तर्ह्येत्यादिना** स्त्रीग्रहणं ज्ञापकं दर्शयति। **तेनेत्यादिना** ज्ञापकस्य प्रयोजनम्। **अतिवर्त्तन्तेऽपीति।** व्यभिचरन्त्य-

पदमञ्जरी

'इच एकाचोऽम्प्रत्ययवच्च' इत्यत्रास्यापि ग्रहणं मा भूदिति। यदि स्यादत्रापि यद् दृष्टं कार्यं तदप्यतिदिश्येत, तत्र को दोषः ? इह—स्त्रियम्मन्यः, यस्येतिलोपः प्राप्नोति ॥ १२ ॥

**अनुगादिनष्ठक् ॥** अनुगदतीत्यनुगादी, अस्मादेव निपातनाण्णिनिः, प्रकृतिस्वरूपप्रदर्शनपरं चैतत्। न त्वयं केवलः प्रयोगार्हः; ठको नित्यत्वात् ॥ १३ ॥

**णचः स्त्रियामञ् ॥ व्यावक्रोशीति।** व्यवपूर्वात्क्रुशेर्णच्, 'कृद्ग्रहणे गतिकारकपूर्वस्यापि ग्रहणम्' ( व्या० परि० १२६ ) इति गत्योरपि णजन्तेऽनुप्रवेशात्समुदायादञ्, तस्याङ्गत्वादादिवृद्धिः। 'न य्वाभ्यां पदान्ताभ्याम्' इत्येष विधिर्न भवति; 'न कर्मव्यतिहारे' इति निषेधात्।

**तत इति।** णचः, णजन्तादित्यर्थः। **स्वार्थिकस्तत्रैव भविष्यतीति।** 'स्वार्थिकाः प्रकृतितो लिङ्गवचनान्यनु-

भावबोधिनी

स्वरादिगण में 'अम्' और 'आम्' का पाठ है अतः तदन्त की अव्यय संज्ञा होती है। [ अतः विभक्ति का लुक् हो हो जाता है। ] ॥ १२ ॥

अनुगदति = बाद में बोलने वाला = अनुगादी है। अनुगादिन् शब्द से स्वार्थ में 'ठक्' प्रत्यय होता है उदा०— आनुगादिकः। [ अनुगादिन् + ठक् = इक, टिलोप ] ॥ १३ ॥

'कर्मव्यतिहारे णच् स्त्रियाम्' ( पा० सू० ३।३।४३ ) सूत्र से 'णच्' प्रत्यय का विधान किया गया है। तदन्त शब्द से स्वार्थ में 'अञ्' प्रत्यय होता है स्त्रीलिङ्ग में। उदा०—व्यावक्रोशी, व्यावहासी वर्तते। [ वि + अव + क्रुश् + णच् = अ, इकार का यण् —व्यवक्रुश बनाकर प्रस्तुत सूत्र से अञ् होता है। आदिवृद्धि, व्यावक्रोश—'टिड्ढाणञ्' सूत्र से ङीप्, अलोप होता है। इसी प्रकार वि + अव + हस् + णच्, व्यवहास् = अ, पुनः अञ् प्रत्यय, + आदिवृद्धि ङीप्। इनमें कर्मव्यतिहार = क्रियाविनिमय की प्रतीति होती है। ]

**ज्ञापयति—'स्वार्थिकाः प्रत्ययाः प्रकृतितो लिङ्गवचनान्यतिवर्त्तन्तेऽपीति' ( म० भा० )। तेन गुडकल्पा द्राक्षा, तैलकल्पा प्रसन्ना, देव एव देवतेत्येवमादि उपपन्नं भवति ॥**

**२२९५. अणिनुणः ॥ १५ ॥ ( ३२१९ )**

**'अभिविधौ भावे इनुण्' ( ३.३.४४ ) विहितः, तदन्तात्स्वार्थेऽण् प्रत्ययो भवति। सांराविणं वर्त्तते। सांकूटिनम् ॥**

**२२९६. विसारिणो मत्स्ये ॥ १६ ॥ ( २०८४ )**

**विसरतीति विसारी। विसारिन्-शब्दात्स्वार्थेऽण् प्रत्ययो भवति मत्स्येऽभिधेये। वैसारिणो मत्स्यः। मत्स्य इति किम् ? विसारी देवदत्तः ॥**

**न्यासः**

पीत्यर्थः। अपिशब्दादनुवर्त्तन्तेऽपीति। यदि स्वार्थिकानां प्रकृतितो लिङ्गवचनानुवृत्तिव्यभिचारो ज्ञाप्यते, ततो गुडादिभ्यः पुंल्लिङ्गाद्यनुगतेभ्यश्च स्वार्थे कल्पबादयो भवन्ति, तेषां पुंल्लिङ्गवचनं च तदेव भवेत्, ततश्च गुडकल्पा द्राक्षेत्येवमादि नोपपद्यते, तस्मिंस्तु ज्ञापिते लिङ्गान्तरञ्च भवतीति। तेन सर्वमेतदुपपन्नं भवति। आदिशब्देनापि तैलकल्पा, चातुर्वर्ण्यम्, त्रैलोक्यमित्येवमादीनां ग्रहणम् ॥ १४ ॥

**अणिनुणः ॥ सांराविणमिति।** 'रु शब्दे' इत्येतस्मादिनुण्, 'अचो ञ्णिति' इति वृद्धिः, इनुणन्तादण्। स च पूर्ववत् सगतेरेव भवति। 'इण्यनपत्ये' इति प्रकृतिभावः। **सांकूटिनमिति।** 'कूट दाहे' इति, 'मृजूष् शुद्धौ', 'मृजेर्वृद्धिः', 'शमित्यष्टाभ्यो घिनुण्। घकारे लुप्ते यद्यपीनुण् भवति, तथापि तस्मादण् न भवति; स्थानान्ताद्विभाषा' इत्यतो विवक्षार्थस्येतिकरणस्यानुवृत्तेः ॥ १५ ॥

**विसारिणो मत्स्ये ॥ विसारीति।** पूर्ववण्णिनिः। **वैसारिण इति।** पूर्ववत् प्रकृतिभावः ॥ १६ ॥

**पदमञ्जरी**

वर्तन्ते' ( व्या० परि० ७४ ) इति कृत्वा। **अतिवर्त्तन्तेऽपीति।** व्यभिचरन्त्यपीत्यर्थः। अपिशब्दादनुवर्त्तन्तेऽपि, अनुवृत्तिस्तु 'कासूगोणीभ्यां ष्टरच्' इति षित्करणान्ङीषर्थादवसीयते। एकान्ततो निवृत्ते हि षकारोऽनर्थको भवेत्[1], **तेनेत्यादिना** ज्ञापनस्य प्रयोजनं दर्शयति। **प्रसन्ना** = सुराविशेषः। **देवतेति।** देवशब्दात्पुंल्लिङ्गादेव तल् ॥ १४ ॥

**अणिनुणः ॥ सांराविणमिति।** 'रु शब्दे' ( धा० पा० १०३४ ), 'कूट दाहे' ( धा० पा० १८९० ) दीर्घोपधः, 'मृजूष् शुद्धौ' ( धा० पा० १०६६ )—संपूर्वेभ्य इनुण्, पूर्ववत्सगतेरण्, इनण्यनपत्ये' इति प्रकृतिभावः; एकानुबन्धकपरिभाषया घिनुणोऽत्र ग्रहणाभावः ॥ १५ ॥

**विसारिणो मत्स्ये ॥ विसारीति।** पूर्ववण्णिनिः। **वैसारिण इति।** पूर्ववत्प्रकृतिभावः ॥ १६ ॥

**भावबोधिनी**

स्त्री—इसका ग्रहण किस लिए है क्योंकि णच् तो स्त्रीलिङ्ग में किया ही गया है; अतः स्वार्थिक प्रत्यय भी उसी लिङ्ग में होगा ? यदि ऐसी बात है तो यह सूत्र ज्ञापित करता है—स्वार्थिक प्रत्यय प्रकृति के लिङ्ग और वचनों का अतिक्रमण भी करते हैं। इस कारण 'गुडकल्पा द्राक्षा, तैलकल्पा प्रसन्ना = सुराविशेष, देव एव, देवता—आदि प्रयोग उपपन्न होते हैं। [ इनमें प्रकृति के पुंल्लिङ्ग और नपुंसकलिङ्ग न होकर स्त्रीलिङ्ग होते हैं। ] ॥ १४ ॥

'अभिविधौ भावे इनुण्' ( पा० सू० ३।३।४४ ) सूत्र से इनुण् प्रत्यय किया गया है, तदन्त प्रातिपदिक से स्वार्थ में अण् प्रत्यय होता है। उदा० सांराविणं वर्तते, सांकूटिनं वर्तते। [ सं रु + इनुण् = इन्, 'अचो ञ्णिति' से धातु की वृद्धि, आव् आदेश, प्रस्तुत सूत्र से अण्, आदिवृद्धि सांराविन् + अ, णत्व। संकूट् + इनुण् = इन् + अण् ] ॥ १५ ॥

विसरति—इस अर्थ में—विसारी। मत्स्य = मछली अभिधेय रहने पर विसारिन् शब्द से स्वार्थ में 'अण्' प्रत्यय

---

१. ष्टरचः षित्त्वकरणान् ङीषर्थादवसीयते। एकान्ततो निवृत्ते हि षकारोऽनर्थको भवेत् ॥ इति वा पाठः।

## २२९७. संख्यायाः क्रियाभ्यावृत्तिगणने कृत्वसुच् ॥ १७ ॥ ( २०८५ )

**संख्याशब्देभ्यः क्रियाभ्यावृत्तिगणने वर्त्तमानेभ्यः स्वार्थे कृत्वसुच् प्रत्ययो भवति। पौनःपुन्यम् = अभ्यावृत्तिः। एककर्तृकाणां तुल्यजातीयानां क्रियाणां जन्मसंख्यानं क्रियाभ्यावृत्तिगणनं तत्र प्रत्ययः। पञ्चवारान् भुङ्क्ते पञ्चकृत्वः। सप्तकृत्वः।**

**संख्याया इति किम् ? भूरीन्वारान् भुङ्क्ते।**

**न्यासः**

**संख्यायाः क्रियाभ्यावृत्तिगणने कृत्वसुच् ॥ पौनःपुन्यमभ्यावृत्तिरिति।** पौनःपुन्येनात्र साहचर्यदिककर्तृकाणां तुल्यजातीयानां सोपलक्ष्यते, अत एवाह—**एककर्तृकाणामित्यादि।** एककर्तृकाणामित्यत्र हि संख्येयानुकृष्ट उपसंख्यातगुणस्तन्मात्रे वर्तते। संख्याशब्देऽत एव व्यतिरेकनिबन्धना षष्ठी भवति। क्रियागणनमभ्यावृत्तिर्भवत्येव। **पञ्चकृत्वो भुङ्क्त इति।** क्रियायाः पञ्चोत्पत्तीः करोतीत्यर्थः।

**भूरीन् वारान् भुङ्क्त इति।** यदि संख्याग्रहणं न क्रियते, ततो यथा पञ्चादिभ्यः संख्याशब्देभ्यः प्रत्ययो

**पदमञ्जरी**

**संख्यायाः क्रियाभ्यावृत्तिगणने कृत्वसुच् ॥** अत्र 'उपाय एवाभ्युपायः' इतिवद् आवृत्तिरेवाभ्यावृत्तिरित्याश्रीयमाणे आद्याऽऽवृत्तिर्न भवतीति षट्कृत्वः प्रवृत्तौ पञ्चकृत्व इति स्यात्, अभिग्रहणं चानर्थकम्, क्रियावृत्तिगणन इत्येव वाच्यं स्यात्, अतोऽत्र विवक्षितं वक्तव्यम्? तदाह—**पौनः पुन्यमभ्यावृत्तिरिति।** पुनः पुनर्भवितरि वर्तमानात् पुनःपुनःशब्दात्प्रवृत्तिनिमित्तस्य भवनस्य निष्कृष्याभिधानाय भावप्रत्ययः। पौनःपुन्यम् = पुनः पुनर्भवनमित्यर्थः, असकृत्प्रवृत्तिरिति यावत्। तत्र चाद्या प्रवृत्तिरन्तर्भवति, तद्यथा— पौनःपुन्यं भृशार्थो वा क्रियासमभिहार इत्यत्र योऽपि द्विः पचति तत्रापि पापच्यते इति भवति। उक्तमेवार्थं स्पष्टयति—**एककर्तृकाणामिति।** बहुवचनमतन्त्रम्। द्वयोरपि जननसंख्यानमावृत्तिर्भवत्येव, जननसंख्यानम् = उत्पत्तिगणनम्। भिन्नकर्तृकासु भिन्नजातीयासु च क्रियासु निरन्तरमनुष्ठीयमानास्वपि क्रियाभ्यावृत्तिप्रत्ययाभावादुभयमुपात्तम्। एवम्भूतानां क्रियाणां जन्मन उत्पत्तेर्यत्संख्यानं गणनं तत्क्रियाभ्यावृत्तिगणनम्। एतच्चाभ्यावृत्तिशब्दस्य तत्रैव प्रसिद्धेर्लभ्यते, अत एव अभिग्रहणं कृतम्। **पञ्चकृत्वो भुङ्क्ते इति।** एकैवात्र भुजिक्रिया निवृत्तभेदाख्यातेनाभिधीयते, आवृत्त्या जनितेन फलेनैकीकृतत्वात् तस्या उत्पत्तयः पञ्चसंख्यानेन गण्यन्ते। आवृत्तिकृतं फलमिच्छन्भुजिक्रियायाः पञ्चोत्पत्त्यावृत्तीः करोतीत्यर्थः। अवान्तरफलापेक्षं पञ्चत्वम्, उत्पत्तिभेदश्च।

**भूरिवारानिति**[1]। वारशब्दस्य क्रियोत्पत्त्याधारकालवाचित्वात्, 'कालाध्वनोः' एति द्वितीया।

**भावबोधिनी**

होता है। उदा०—वैसारिणः मत्स्यः। [ वि—सर् + णिनि = इन, उपधावृद्धि—विसारिन् + अण् = अ, आदिवृद्धि। ]

मत्स्य अर्थ में—इसका क्या फल है? विसारी देवदत्तः। [ यहाँ अण् नहीं होता है। ] ॥ १६ ॥

क्रिया की अभ्यावृत्ति की गणना में वर्तमान संख्यावाचक शब्दों से स्वार्थ में कृत्वसुच् प्रत्यय होता है। पुनः पुनः होना = अभ्यावृत्ति है। एक कर्तावाली तुल्यजातीय ( एक प्रकार की ) क्रियाओं की जन्मसंख्या करना = क्रियाभ्यावृत्तिगणना है,। उस अर्थ में प्रत्यय होता है। उदा०—पञ्चवारान् भुङ्क्ते—इस अर्थ में—पञ्चकृत्वः भुङ्क्ते। [ पांच बार खाता है। पञ्चन् + कृत्वसुच् = कृत्वस् स् का रुत्व विसर्ग, अव्यय बन जाने से प्रत्यय का लुक्। ] सप्तकृत्वः। [ सप्तवारान् भुङ्क्ते—सात बार खाता है। इनमें भक्षण क्रिया की पाँच बार और सात बार उत्पत्ति की गणना प्रतीत होने से प्रत्यय होता है। ]

संख्या-वाचक से ही—इसका क्या फल है? भूरीन् वारान् भुङ्क्ते। [ यहाँ प्रत्यय नहीं होता है क्योंकि 'भूरि'

१. 'भूरीन् वारान्' इति काशिकासम्मतः पाठः।

**क्रियाग्रहणं किमर्थम्, यावताभ्यावृत्तिः क्रियाया एव सम्भवति, न द्रव्यगुणयोः ? उत्तरार्थं क्रियाग्रहणम् । 'एकस्य सकृच्च' ( ५.४.१९ ) इत्यत्रापि क्रियैव गण्यते, नाभ्यावृत्तिः; असम्भवात् ।**

**अभ्यावृत्तिग्रहणं किम् ? क्रियामात्रगणने मा भूत्—पञ्चपाकाः, दशपाकाः ।**

**न्यासः**

भवति, तथा भूर्य्यादिभ्योऽपि स्यात् । संख्याग्रहणान्न भवति ।

**अभ्यावृत्तिः क्रियाया एव सम्भवतीत्यादि ।** ननु च द्रव्यगुणयोरपि सम्भवति—पुनः पुनर्दण्डी, पुनः पुनः स्थूल इत्यादि ? नैतदस्ति; अत्र सामर्थ्यात् क्रियाभ्यावृत्तिः—पुनः पुनर्दण्डी भवति, पुनः पुनः स्थूलो भवतीति । तस्मादभ्यावृत्तिः क्रियाया एव सम्भवति, न द्रव्यगुणयोरपि । पुनः पुनर्दण्डीति अत्र सामर्थ्याल्लभ्या क्रियेति क्रियाग्रहणं न कर्त्तव्यम् ।

**एकस्य सकृच्चेत्यत्रेत्यादि ।** एकशब्देन ह्येकैव क्रियाव्यक्तिराख्यायते । न चैकस्यां क्रियाव्यक्तावभ्यावृत्तिः सम्भवति, किं तर्हि ? अनेकासु क्रियाव्यक्तिषु । तथा च प्रागुक्तम्—एककर्तृकाणामित्यादि । तस्मादेकस्य सकृच्च क्रियैव गण्यते, नाभ्यावृत्तिः । तस्मादसति क्रियाग्रहणे एकशब्दात् क्रियागणने प्रत्ययो न लभ्यते । तस्मादुत्तारार्थं क्रियाग्रहणं कर्त्तव्यम् ।

**पञ्चपाका इति ।** 'क्रियागणने' इत्येतावत्युच्यमानेऽत्रापि स्यात्, अस्ति ह्यत्र क्रियागणनम् । अभ्यावृत्तिर्हि

**पदमञ्जरी**

तथा च पुनःपुनःशब्दादुत्पत्त्याधारकालाभिधायित्वात् । 'कालाट्ठञ्' भवति—पौनःपुनिक इति । यदि कालशब्दः, वारशब्दः, भूरिशब्दोऽपि तत्समानाधिकरणः काल एव वर्तते, न क्रियाभ्यावृत्ताविति कथमत्र प्रसङ्गः ? अत्राहुः—कालवाचित्वेऽपि क्रियावृत्तेरपि गम्यमानत्वात्प्रसङ्ग इति । अपर आह—वारशब्दः क्रियागतामावृत्तिं द्योतयन् क्रियाविशेषणत्वात्कर्म । नपुंसकत्वं तु न भवति, लोकाश्रयत्वाल्लिङ्गस्य ( जै० परि० १०५ ) वारशब्दस्य नित्यपुंल्लिङ्गत्वात्—भूरिवारान् भुङ्क्ते । कोऽर्थः ? आवृत्तानि बहूनि भोजनानि करोतीत्यर्थः । अत्र 'बहुगणवतुडतिसंख्या' इत्यत्र बहुगणग्रहणं नियमार्थम्—अनियतप्रचयवाचिनां मध्ये एतयोरेवेति, तेन भूरिशब्दस्य लौकिकसंख्यावाचित्वेऽप्यत्र ग्रहणाभावः ।

**अभ्यावृत्तिः क्रियाया एव सम्भवतीति ।** साध्यार्थविषयत्वात्तस्याः । **न द्रव्यगुणयोरिति ।** तयोः सिद्धस्वभावतया शब्देनाभिधानात् । पुनः पुनर्दण्डी, पुनः पुनः स्थूल इत्यत्रापि गम्यमानाया भवतिक्रियाया एवाभ्यावृत्तिः, न तु द्रव्यगुणयोः । **एकस्य सकृच्चेत्यत्रापीत्यादि ।** एकशब्देन ह्येकैव क्रियाव्यक्तिराख्यायते । न च तस्यामावृत्तेः सम्भवः; तत्रासति क्रियाग्रहणे 'एको भुङ्क्ते' इत्यत्रापि स्यात् । तस्मादुत्तरार्थं क्रियाग्रहणम् । एवं च—क्रिया चाभ्यावृत्तिश्च क्रियाभ्यावृत्ती, तयोर्गणनं क्रियाभ्यावृत्तिगणनमिति द्वन्द्वगर्भः षष्ठीसमास इति केचित् । अन्ये तु—इहार्थमपि सुखप्रतिपत्तये क्रियाग्रहणं मन्यमानाः षष्ठीतत्पुरुषगर्भं तत्पुरुषं वर्णयन्ति । तत्र गुणभूतस्यापि क्रियाग्रहणस्य निष्कृष्य सम्बन्धः तद्ग्रहणसामर्थ्याद्वेदितव्यः ।

**पञ्चपाका इति ।** अत्र कर्तृभेदेन वा भिन्नकालाः क्रिया एव गण्यन्ते, नाभ्यावृत्तिः । सा हि भिन्नकाला-

**भावबोधिनी**

यह किसी निश्चित संख्या का वाचक नहीं है । ]

क्रिया का ग्रहण किस लिए है, क्योंकि क्रिया की ही अभ्यावृत्ति हो सकती है, द्रव्य और गुण की नहीं ? उत्तरवर्ती सूत्र के लिये क्रियाग्रहण है ।

'एकस्य सकृच्च' इस सूत्र में भी क्रिया ही गिनी जाती है, अभ्यावृत्ति; नहीं क्योंकि सम्भव नहीं है । [ एक ही बार होती है । अतः अभ्यावृत्ति नहीं है । ]

अभ्यावृत्ति का ग्रहण किस लिए है ? क्रिया-मात्र की गणना में न होने लगे—पञ्चपाकाः, दशपाकाः । [ यहाँ

**गणनग्रहणं किमर्थम्, यावता गणनात्मिकैव संख्या ? अक्रियमाणे गणनग्रहणे क्रियाभ्यावृत्तौ वर्तमानेभ्यः संख्येयवचनेभ्य एव प्रत्ययः स्यात् – शतवारान्भुङ्क्ते शतकृत्व इति । इह न स्यात्—शतं वाराणां भुङ्क्त इति, न ह्यत्राभ्यावृत्तौ शतशब्दः; संख्यानमात्रवृत्तित्वात् । गणनग्रहणात्तु सर्वत्र सिद्धं भवति ।**

**न्यासः**

**भिन्न**कालानां क्रियाणां भवति, इह त्वभिन्नकाला एव पाका गण्यन्त एव, अतस्तद्व्यावृत्तिः । ननु च क्रियाप्यत्र नास्त्येव, धात्वर्थस्य सिद्धताख्यो यो धर्मस्तस्मिन् घञो विधानात् ? नैष दोषः; सापि सिद्धता क्रियाप्रदेशेषु क्रियाग्रहणेन गृह्यत एव; धर्मधर्मिणोर्भेदस्याविवक्षितत्वात् । अन्यथा कारकस्य गतिः, कारकस्य व्रज्येत्यत्र 'तुमुन्ण्वुलौ क्रियायां क्रियार्थायाम्' इति ण्वुल् न स्यात् । **अक्रियमाण इत्यादि** । द्विविधाः संख्याशब्दाः–केचित् संख्याने वर्त्तन्ते, केचित् संख्येये । तत्र यदि गणनग्रहणं न क्रियेत, तदा क्रियाभ्यावृत्तौ संख्येये वर्त्तमानेभ्यः संख्येयवचनेभ्य एव प्रत्ययः स्यात् । **शतं वारान् भुङ्क्ते शतकृत्वो भुङ्क्त इति** । अत्र सोऽयमित्यभिसम्बन्धेन क्रियाभ्यावृत्तौ संख्येये शतशब्दो वर्त्तते । अत एव सामानाधिकरण्यम् । शतं वारानिति संख्याने वर्त्तमानेभ्यो न स्यादिति दर्शयितुमाह–**इह न स्यादिति** । कुत एतदित्याह—**संख्यानमात्रवृत्तित्वादिति** । मात्रशब्दः संख्येयं विहाय शतं वाराणामिति स्यात् ॥ १७ ॥

**पदमञ्जरी**

नामेककर्तृकाणामेककर्मकाणां च नैरन्तर्ये सति भवति । यद्यप्यत्र धात्वर्थस्य सिद्धताख्ये धर्मे घञो विधानम्, तथापि धातुनाऽत्रापि साध्यस्वभावा क्रियैवाभिधीयत इति तदाश्रयः प्रत्ययः स्यादेव । तथा च कारकस्य गतिः, कारकस्य व्रज्येत्यत्र 'तुमुन्ण्वुलौ क्रियायां क्रियार्थायाम्' इति ण्वुल् भवति ।

**अक्रियमाण इत्यादि** । आ दशभ्यः संख्याः संख्येय एव वर्तन्ते, अतः परं संख्याने संख्येये च । तत्रासति गणनग्रहणे क्रियाभ्यावृत्तौ संख्येयायां वर्तमानेभ्यः संख्येयवचनेभ्य एव प्रत्ययः स्यात्, संख्याने तु वर्तमानेभ्यो न स्यात्, तदाह –**इह न स्यादिति** । **शतं वाराणामिति** । इयमप्यत्यन्तसंयोगे द्वितीया । किं कारणं न स्यात् ? इत्यत आह—**न ह्यत्रेति** । कारणमाह -**संख्यानमात्रवृत्तित्वादिति** । **गणग्रहणात्त्विति** । 'क्रियाभ्यावृत्तिगणने' इति विषयनिर्देशः, तत्र ये संख्येयवचनाः, ये च संख्यानमात्रवचनाः—द्वयेऽपि ते गणनाविषया भवन्तीति सर्वत्र सिद्धिः । ननु शतं वाराणामित्यत्र यदा वाराणामिति प्रयुज्यते, तदा सापेक्षत्वात् प्रत्ययेन न भाव्यम् । यदा तर्ह्यर्थात्, प्रकरणाद्वाऽपेक्ष्यं निर्ज्ञातं भवति तदा भविष्यति । यद्येवम्, संख्येयवचनादेव शतकृत्व इति भविष्यति, न हि 'शतकृत्वो भुङ्क्ते' इत्यत्र वाराणामिति वारानिति वा प्रयोगार्हम्, तस्मात्प्रयोजनदिगियं दर्शिता । इदं तु प्रयोजनम्—यत्र साक्षादभ्यावृत्तिगणनं तत्र यथा स्याद्, अभ्यावृत्तिगणनसम्भवमात्रे मा भूत्—'सप्तदश प्राजापत्यान् पशूनालभत' इति । अस्ति ह्यत्रालभतिक्रियायाः प्रतिपशु वस्तुतोऽभ्यावृत्तिः, तस्या विषयभूतायाः साधनगणनवृत्तेरपि सप्तदशशब्दात् प्रत्ययः स्यात् ॥ १७ ॥

**भावबोधिनी**

एक ही काल में पाक की पञ्चत्व और दशत्व संख्या प्रतीत होती है । अतः भिन्न भिन्न काल में होने वाली अभ्यावृत्ति सम्भव नहीं है । ]

**गणन**—इसका ग्रहण किस लिए है क्योंकि गणनात्मिका क्रिया ही होती है ? यदि गणनग्रहण नहीं किया जाता तो क्रिया की अभ्यावृत्ति अर्थ में वर्तमान संख्येयवाचक शब्दों से ही प्रत्यय होता—शतवारान् भुङ्क्ते—शतकृत्वः । यहाँ नहीं हो पाता—शतं वाराणां भुङ्क्ते, क्योंकि यहाँ अभ्यावृत्ति में शतशब्द नहीं हैं । अपि तु संख्यानमात्र में ही वर्तमान है । किन्तु गणन के ग्रहण से तो सर्वत्र सिद्ध हो जाता है । [ अतः सूत्रघटक प्रत्येक पद का विशेष फल होने से उनकी सार्थकता है ] ॥ १७ ॥

२२९८. द्वित्रिचतुर्भ्यः सुच् ॥ १८ ॥ ( २०८६ )

द्वि, त्रि, चतुर्—इत्येतेभ्यः संख्याशब्देभ्यः क्रियाभ्यावृत्तिगणने वर्तमानेभ्यः सुच् प्रत्ययो भवति। कृत्वसुचोऽपवादः। द्विर्भुङ्क्ते। त्रिर्भुङ्क्ते। चतुर्भुक्तम्। चकारः स्वरार्थः॥

२२९९. एकस्य सकृच्च ॥ १९ ॥ ( २०८७ )

एकशब्दस्य सकृदित्ययमादेशो भवति सुच्च प्रत्ययः क्रियागणने। कृत्वसुचोऽपवादः। अभ्यावृत्तिस्त्विह न सम्भवति। सकृद् भुङ्क्ते। सकृदधीते।

न्यासः

द्वित्रिचतुर्भ्यः सुच् ॥ चतुर्भुक्तमिति। 'रात् सस्य' इति सकारलोपः। चकारः स्वरार्थ इति। प्रकृतेरन्तोदात्तत्वं यथा स्यादिति प्रत्ययस्य तु चकारः स्वरार्थं नोपपद्यते; तस्यानच्कत्वात्। चतुःशब्दमेव प्रकृतिं प्रति चकारस्य स्वरार्थत्वम्, नोत्तरयोः, तयोरुदात्तत्वात्। चतुःशब्दस्तु 'चतेरुरन्' इत्युरन्प्रत्ययान्तत्वान्नित्स्वरेणाद्युदात्तः॥ १८॥

एकस्य सकृच्च ॥ सकृद् भुक्तमिति। 'संयोगान्तस्य' इति प्रत्ययसकारलोपः। चकारोऽन्तोदात्तार्थः। असति तु तस्मिन् 'इण्भीकापाशल्यतिमर्चिभ्यः कन्' इति कन्प्रत्ययान्तत्वान् नित्स्वरेणैकशब्द आद्युदात्त इति स्थानिवद्भावादादेशोऽप्याद्युदात्त एव स्यात् चित्त्वादन्तोदात्तो भवति। अथैकः पाकः इत्यत्र कस्मान्न भवति,

पदमञ्जरी

द्वित्रिचतुर्भ्यः सुच् ॥ सकृदिति। 'रात्सस्य' इति सुचो लोपः। सुचश्चकारः स्वरार्थ इति। 'चितः सप्रकृतेर्बह्वकजर्थम्' इति वचनाच्चतुरित्यस्यान्तोदात्तो भवति; अन्यथा 'चतेरुरन्' ( द० उ० ८·७८ ) इत्युरन्प्रत्ययान्तत्वादाद्युदात्तः स्यात्॥ १८॥

एकस्य सकृच्च ॥ सकृदिति। 'संयोगान्तस्य लोपः' इति सुचो लोपः। सुचश्चकारोऽत्रात्यन्तोदात्तार्थः, अन्यथा 'इण्भीकापाशल्यतिमर्चिभ्यः कन्' ( द० उ० ३·२१ ) इति कन्प्रत्ययान्त एकशब्द आद्युदात्त इति तस्य स्थाने भवन्सकृच्छब्द आन्तर्यत आद्युदात्तः स्यात्। एकः पाक इत्यत्रेत्यादि। अपर आह—'अभ्यावृत्तिग्रहणादेव सिद्धे पूर्वसूत्रे क्रियाग्रहणं क्रियाविशेषप्रतिपत्त्यर्थम्, तेन साध्यस्वभावैव क्रिया गृह्यते। पाकादिभिस्तु शब्दैः सिद्धस्वभावाऽभिधीयते, यादृशी च पूर्वसूत्रे क्रिया गृहीता तादृश्येवात्राप्यनुवर्त्तते' इति। तत्र च पाकादिशब्दप्रयोगे प्रत्ययाभावः—

[1]घञन्ताद्यन्तप्रयोगेऽपि कृत्वोऽर्थप्रत्ययः क्वचित्।

भावबोधिनी

क्रिया की अभ्यावृत्तिगणन में वर्तमान द्वि, त्रि और चतुर् इन संख्या शब्दों से सुच् प्रत्यय होता है। यह कृत्वसुच् का अपवाद है। उदा०—द्विः भुङ्क्ते। त्रिः भुङ्क्ते। चतुः भुक्तम्। [ दो बार खाता है। तीन बार खाता है। चार बार खाया—ये अर्थ हैं। सुच् में स् शेष बचता है, उसका रुत्व विसर्ग होता है। ] चकार यह अन्तोदात्त स्वर करने लिए है॥ १८॥

क्रियागणन में एक शब्द से सुच् प्रत्यय और एक का 'सकृत्' यह आदेश होता है। यह कृत्वसुच् का अपवाद है। यहाँ अभ्यावृत्ति=पौनःपुन्य संभव नहीं है। उदा०—सकृद् भुङ्क्ते, सकृद् अधीते। [ एकवारं भुङ्क्ते, एकवारम् अधीते—इन अर्थों में सुच् प्रत्यय होता है और 'एक' का 'सकृत्' आदेश होता हैं। 'संयोगान्तस्य लोपः' सूत्र से सुच्=स् का लोप होता है। अव्यय होने से प्रत्यय का भी लोप हो जाता है। ]

१. श्लोके वर्णाधिक्यम्।

एकः पाकः—इत्यत्र न भवति; अनभिधानात् ॥

## २३००. विभाषा बहोर्धाऽविप्रकृष्टकाले ॥ २० ॥ ( २०८८ )

बहुशब्दात् क्रियाभ्यावृत्तिगणने वर्त्तमानात् विभाषा धा प्रत्ययो भवति। कृत्वसुचोऽवादः। पक्षे सोऽपि भवति। अविप्रकृष्टग्रहणं क्रियाभ्यावृत्तिविशेषणम्। क्रियाणामुत्पत्तयश्चेदासन्नकालाः भवन्ति, न विप्रकृष्टकालाः। बहुधा दिवसस्य भुङ्क्ते। बहुकृत्वो दिवसस्य भुङ्क्ते।

अविप्रकृष्टकाल इति किम् ? बहुकृत्वो मासस्य भुङ्क्ते ॥

## २३०१. तत्प्रकृतवचने मयट् ॥ २१ ॥ ( २०८९ )

'तत्' इति प्रथमा समर्थविभक्तिः, प्राचुर्येण प्रस्तुतम्=प्रकृतम्। प्रथमासमर्थात् प्रकृतोपाधिकेऽर्थे वर्तमानात्स्वार्थे मयट् प्रत्ययो भवति। टकारो ङीबर्थः। अन्नं प्रकृतम् अन्नमयम्। अपूपमयम्।

### न्यासः

अस्ति ह्यत्र क्रियागणनम् ? इत्याह—एकः पाकः इत्यादि ॥ १९ ॥

**विभाषा बहोर्धाऽविप्रकृष्टकाले।** बहुशब्दोऽपि सामान्य एव; प्रकारेऽपि वृत्तेः। तत्रानेकक्रियाभ्यावृत्तेर-विप्रकर्ष एव तावन् न्याय्यः, प्रकरणाद्यपेक्षश्च। कृत्वसुजपि न शक्नोत्यस्मिन् विषये वर्तितुम्। तस्माद् विभाषा-ग्रहणं न कर्त्तव्यम् ॥ २० ॥

**तत्प्रकृतवचने मयट् ॥ प्राचुर्येण प्रस्तुतं प्रकृतमिति।** कुतः पुनरयं विशेषो लभ्यते, यावता प्रस्तुतमात्र-वचनः प्रकृतशब्दः वचनग्रहणादिह प्रकृत इति वक्तव्ये वचनग्रहणम् · यादृशस्य लोके प्रकृतस्य मयटो वचनं

### पदमञ्जरी

लिङ्गाद् द्विर्वचनेऽच्वी'इति साधनीयो मनीषिभिः ॥ १९ ॥

**विभाषा बहोर्धाऽविप्रकृष्टकाले ॥ अविप्रकृष्टकालग्रहणं क्रियाभ्यावृत्तिविशेषणमिति।** यद्यप्येवम्, तथापि गणनग्रहणेनैवास्य शाब्दोऽन्वय इति नपुंसकलिङ्गमेव भवति, न स्त्रीलिङ्गम्। गणनस्याविप्रकृष्टकालत्वं गण्यमाना-नामभ्यावृत्तीनामविप्रकृष्टकालत्वे सतीत्यर्थप्राप्तं वृत्तिकारेण दर्शितम्। **बहुधा दिवसस्य भुङ्क्ते इति।** 'कृत्वोऽर्थ-प्रयोगे कालेऽधिकरणे' इति षष्ठी, अविप्रकृष्टकालत्वं चाभ्यावृत्तीनां तत्तत्क्रियावशेन व्यवतिष्ठते। **बहुकृत्वो मासस्य भुङ्क्ते इति।** अत्राभ्यावृत्तेर्विप्रकृष्टकालताऽशक्तिदारिद्र्याद्यपेक्षया द्रष्टव्या ॥ २० ॥

**तत्प्रकृतवचने मयट् ॥ प्राचुर्येण प्रस्तुतं प्रकृतमिति।** यद्यपि प्रस्तुतमात्रवचनः प्रकृतशब्दः, तथापीह वचनग्रहणादयं विशेषो लभ्यते। वचनग्रहणं हि यादृशस्य प्रकृतस्य लोके मयटा वचनं प्रत्यायनं तत्र यथा

### भावबोधिनी

एकः पाकः—यहाँ नहीं होता है क्योंकि अभिधान नहीं है ॥ १९ ॥

क्रिया की अभ्यावृत्तिगणन में वर्तमान 'बहु' शब्द से विकल्प से 'धा' प्रत्यय होता है। यह कृत्वसुच् का अपवाद है। पक्ष में वह भी होता है। अविप्रकृष्ट का ग्रहण क्रियाऽभ्यावृत्ति का विशेषण है। यदि क्रियाओं की उत्पत्तियाँ समीप-वर्ती काल में होने वाली हैं, दूरवर्ती काल में नहीं। उदा०—दिवसस्य बहुधा भुङ्क्ते, दिवसस्य बहुकृत्वः भुङ्क्ते। [ दिन में बहुत बार खाता है। 'कृत्वोऽर्थप्रयोगे कालेऽधिकरणे' सूत्र से षष्ठी विभक्ति दिवस शब्द से होती है। ]

अविप्रकृष्टकाल में—इसका क्या फल है ? मासस्य बहुकृत्वः भुङ्क्ते। [ यहाँ महीना भर में बहुत बार को प्रतीति है। अतः 'धा' प्रत्यय नहीं होता है कृत्वसुच् ही होता है। ] ॥ २० ॥

'तत्' यह प्रथमा समर्थ विभक्ति है। प्रचुर रूप से प्रस्तुत = प्रकृत। प्रकृत इस उपाधि वाले अर्थ में वर्तमान प्रथमासमर्थ से स्वार्थ में मयट् प्रत्यय होता है अर्थात् जो प्रचुर रूप से है उसके प्रतिपादक प्रथमासमर्थ से मयट् यह प्रत्यय होता है। टकार यह ङीप् के लिए है। उदा०—अन्नं प्रकृतम्—इस अर्थ में 'अन्नमयम्।' अपूपमयम्।

अपरे तु पुनरेवं सूत्रार्थमाहुः—प्रकृतमित्युच्यतेऽस्मिन्निति प्रकृतवचनम्। तदिति प्रथमासमर्थात् प्रकृतवचनेऽभिधेये मयट् प्रत्ययो भवति। अन्नं प्रकृतमस्मिन्नन्नमयो यज्ञः। अपूपमयं पर्व। वटकमयी यात्रा।

द्वयमपि प्रमाणम्; उभयथा सूत्रप्रणयनात्॥

## २३०२. समूहवच्च बहुषु॥ २२॥ ( २०९० )

'तत्प्रकृतवचने' इत्येव। बहुषु प्रकृतेषूच्यमानेषु समूहवत्प्रत्यया भवन्ति। चकारान्मयट् च। मोदकाः प्रकृताः = प्राचुर्येण प्रस्तुताः मौदकिकम् ( ४.२.४७ ), मोदकमयम्। शाष्कुलिकम्, शष्कुलीमयम्।

अतिवर्तन्तेऽपि स्वार्थिकाः प्रकृतितो लिङ्गवचनानि।

### न्यासः

प्रत्ययान्तेन दृष्टं तत्रैव मयडचथा स्यादित्येवमर्थम्। लोके च मयट्प्रत्ययान्तैरन्नमयादिशब्दैः प्रकृतस्य प्राचुर्यमुच्यत इति वचनग्रहणादेष विशेषो लभ्यते।

अपरे त्वित्यादि। अत्र प्रकृत्यर्थादर्थान्तर एव प्रत्ययः। प्रकृतशब्देन प्रस्तुतमात्रमुच्यते। न तु प्राचुर्यविशिष्टं प्रकृतमित्येष विशेषः।

उभयथेत्यादि। उभयथाप्यस्मिन्नर्थे सूत्रस्य प्रणयनादित्यर्थः॥ २१॥

समूहवच्च बहुषु॥ मौदकिकमिति। यथा समूहे 'अचित्तहस्तिधेनोष्ठक्' इति ठग् मोदकादिभ्यो भवति; तथेहापि च मोदकशब्दात्, स्वार्थवाचिनः पुंलिङ्गाच्च। स्त्रीलिङ्गादिभ्यः स्वार्थे ठग् विहितः, ततश्च 'स्वार्थिकाः

### पदमञ्जरी

स्यादित्येवर्थम्। प्रथमासमर्थादिति। केन पुनः प्रथमान्तस्य सामर्थ्यम्, प्रत्ययस्तावत्स्वार्थिकः? यद्यपि स्वार्थिकः, प्राचुर्यं तु तस्य द्योत्यम्। तच्च प्रकृत्यर्थगतमित्येतावदत्र सामर्थ्यम्।

अपरे पुनरित्यादि। अत्र प्रकृत्यर्थादर्थान्तर एव प्रत्ययः, तत्पुनरर्थान्तरं ल्युटा प्रतिपादितम्। सप्तम्यर्थे उच्यमानता प्रकृतता च प्रकृत्यर्थविशेषणम्, तद्दर्शयति—अन्नं प्रकृतमस्मिन्निति।

उभयथा सूत्रप्रणयनादिति। प्रकारद्वयसाधारण्येन सूत्रस्य प्रणयनादित्यर्थः। अत्र प्रथमे व्याख्याने तदिति विस्पष्टार्थम्; 'देवात्तल्' इत्येवमादिवत्समर्थविभक्तेः सिद्धत्वात्॥ २१॥

समूहवच्च बहुषु॥ आपूपिकम्, मौदकिकमिति। 'अचित्तहस्तिधेनोष्ठक्'॥ २२॥

### भावबोधिनी

दूसरे लोग तो सूत्र की व्याख्या इस प्रकार करते हैं—प्रकृत यह कहा जाता है इसमें वह—प्रकृतवचन है। उस प्रथमासमर्थ से प्रकृतवचन अभिधेय रहने पर मयट् यह प्रत्यय होता है। उदा०—अन्नं प्रकृतम् अस्मिन् सः—अन्नमयः यज्ञः। [ अपूपं प्रकृतम् अस्मिन् तत्— ] अपूपमयं पर्व। [ जिसमें अन्न प्रचुर रूप से है वह यज्ञ = अन्नमय है। जिसमें पुआ प्रचुर रूप से है वह—अपूपमय है। ] वटकमयी यात्रा। [ जिसमें वटक प्रचुर रूप में हैं। ]

ये दोनों व्याख्यान प्रमाण हैं क्योंकि आचार्य ने दोनों प्रकार से सूत्र का प्रणयन किया है।

विमर्श—'वचन' शब्द में भाव और अधिकरण—दोनों अर्थों में ल्युट् प्रत्यय है। अतः दो अर्थ होते हैं। अतः ( १ ) प्राचुर्येण प्रस्तुतम् = प्रकृतम्, तस्य वचनम् = प्रतिपादनम् इस अर्थ में अन्नमयम्। ( २ ) प्रकृतम् = प्राचुर्येण उच्यमानं वस्तु यत्र तत्—इस अर्थ में अन्नमयः यज्ञः आदि प्रयोग उपपन्न होते हैं। यहाँ तन्त्र द्वारा दोनों अर्थ हो जाते हैं॥ २१॥

'तत्प्रकृतवचने' इसकी अनुवृत्ति होती है। बहुत से प्रकृत अर्थ कहे जाने पर समूह के तुल्य प्रत्यय होते हैं। चकार द्वारा मयट् भी होता है। उदा०—मोदकाः प्रकृताः = प्राचुर्येण प्रस्तुताः—इस अर्थ में (१) मौदकिकम्,

**द्वितीये सूत्रार्थे—मोदकाः प्रकृता अस्मिन्यज्ञे मौदकिको यज्ञः, मोदकमयः। शाष्कुलिकः, शष्कुलीमयः ॥**

**२३०३. अनन्तावसथेतिहभेषजाञ्ञ्यः ॥ २३ ॥ ( २०९० )**

**अनन्तादिभ्यः स्वार्थे ञ्यः प्रत्ययो भवति। अनन्त एव आनन्त्यम्। आवसथ एवावसथ्यम्। इति ह एव ऐतिह्यम्। निपातसमुदायोऽयमुपदेशपारम्पर्ये वर्तते। भेषजमेव भैषज्यम्।**

**महाविभाषया विकल्पते प्रत्ययः ॥**

**२३०४. देवतान्तात्तादर्थ्ये यत् ॥ २४ ॥ ( २०९२ )**

**देवताशब्दान्तात् प्रातिपदिकाच्चतुर्थीसमर्थात् तादर्थ्ये यत् प्रत्ययो भवति। तदर्थ एव तादर्थ्यम्।**

**न्यासः**

प्रकृतितो लिङ्गवचनान्यनुवर्त्तन्ते' इति प्रकृतिगतेनैव लिङ्गादिना भवितव्यम्, तत् कथमिदं प्रत्ययान्तरस्य नपुंसकलिङ्गं वचनान्तरं च? इत्यत आह-**अतिवर्त्तन्तेऽपीत्यादि**। एतच्च 'णचः स्त्रियाम्' इत्यत्र ज्ञापितम् ॥२२॥

**अनन्तावसथेतिहभेषजाञ्ञ्यः ॥ उपदेशपारम्पर्ये वर्त्तत इति**। इति ह स्मोपाध्यायः कथयति, इति ह स्म पिता कथयतीत्यत्रैव प्रयोगदर्शनात् ॥ २३ ॥

**देवदान्तात् तादर्थ्ये यत् ॥ चतुर्थीसमर्थादिति**। तादर्थ्ये चतुर्थी; उपसंख्यानात्। 'चतुर्थी तदर्थार्थ' इति चतुर्थी भवतीति ज्ञापकाद्वा। 'तादर्थ्ये चतुर्थ्या भवितव्यम्' इति चतुर्थीसमर्थात् प्रत्ययो विज्ञायते। तदर्थ एव

**पदमञ्जरी**

**अनन्तावसथेतिहभेषजाञ्ञ्यः ॥** आवसन्त्येतमित्यावसथः, 'उपसर्गे वसेः' ( द० उ० ६.६९ ) इत्यथ-प्रत्ययः। **निपातसमुदायोऽयमिति**। वचनाच्चाप्रातिपदिकादपि प्रत्ययः। **उपदेशपारम्पर्ये वर्त्तते इति**। तद्यथा—इवि ह स्मोपाध्ययाः कथयन्तीति। भिषज्यतेः कण्ड्वादियगन्तात्क्विपि भिषक, भिषज इदमित्यण्—**भेषजम्**, अस्मादेव निपातनादेकारः ॥ २३ ॥

**देवतान्तात्तादर्थ्ये यत् ॥ चतुर्थीसमर्थादिति**। तादर्थ्ये चतुर्थ्या उपसंख्यानादेतल्लभ्यते। **पितृदेवत्यमिति**। कर्मधारयात्प्रत्ययः। कथं पुनरत्र सामानाधिकरण्यम्? कथं च न स्यात्?[1] जातिभेदात्, अन्या हि पितृजातिरन्या

**भावबोधिनी**

(२) मोदकमयम्। [ इसमें "अचित्तहस्तिधेनोष्ठक्" (पा० सू० ४।२।४७) से ठक्=इक प्रत्यय, आदिवृद्धि होती है। पक्ष में मयट् होता है। ] शाष्कुलिकम् शष्कुलीमयम्। [ यहाँ भी ठक् और मयट् होते हैं। ]

स्वार्थिक प्रत्यय प्रकृति के लिङ्ग और वचन का अतिक्रमण भी करते हैं। [ इसलिए नपुंसकलिङ्ग का प्रयोग है। ]

जब पूर्ववत् दूसरा सूत्रार्थ माना जाता है तब—मोदकाः प्रकृताः अस्मिन् यज्ञे —इस अर्थ में मौदकिकः यज्ञः, मोदकमयः। [ जिस यज्ञ में मोदक = लड्डू प्रचुर रूप से होते हैं। ] शाष्कुलिकः, शष्कुलीमयः। [ जिस यज्ञ में शष्कुली = पूड़ी प्रचुररूप से हैं। ] ॥ २२ ॥

अनन्त, आवसथ, इतिह, और भेषज—इन शब्दों से स्वार्थ में 'ञ्य' प्रत्यय होता है। उदा०—अनन्त एव आनन्त्यम्। आवसथ एव —आवसथ्यम्। इतिह एव – ऐतिह्यम्। यह दो निपातों का समुदाय उपदेशपारम्पर्य अर्थ में विद्यमान है। भेषजम् एव—भैषज्यम्। [ ञ्य में ञ् अनुबन्ध होने से इत्संज्ञा, लोप, आदिवृद्धि होती है। ]

महाविभाषा के कारण प्रत्यय विकल्प से होता है। [ अतः प्रत्यय विना भी प्रयोग होता है। ] ॥ २३ ॥

देवताशब्दान्त प्रातिपदिक जो कि चतुर्थीसमर्थ है उससे तादर्थ्य में यत् प्रत्यय होता है। उदा०—तदर्थ एव तादर्थ्यम् —इसमें चातुर्वर्ण्यादि होने से ष्यञ् होता है। तद्—इससे प्रकृत्यर्थ का निर्देश है। उदा०—अग्निदेवतायै

१. देवा मनुष्याः पितरश्च सर्वे ( मै० स०. ४.१४.१४.२०७ )

**चातुर्वर्ण्यादित्वात्ष्यञ्। तदिति प्रकृत्यर्थो निर्दिश्यते। अग्निदेवतायै इदम् अग्निदेवत्यम्। पितृदेवत्यम्। वायुदेवत्यम् ॥**

## २३०५. पादार्घाभ्यां च ॥ २५ ॥ ( २०९३ )

**'तादर्थ्ये' इत्येव। पादार्घशब्दाभ्यां चतुर्थीसमर्थाभ्यां तादर्थ्येऽभिधेये यत्प्रत्ययो भवति। पादार्थमुदकं पाद्यम्। अर्घ्यम्। अनुक्तसमुच्चयार्थश्चकारः। यथादर्शनमन्यत्रापि प्रत्ययो भवति—एष वै ( सप्तदशाक्षरश् ) छन्दस्यः प्रजापतिः ( तै० सं० १.६.११.४ )।**

**वसु, अयस्, ओक, कवि, क्षेम, उदक, वर्चस्, निष्केवल, उक्थ, जन, पूर्व, नव, सूर, मर्त, यविष्ठ—इत्येतेभ्यश्छन्दसि स्वार्थे यत्प्रत्ययो भवति। 'अग्निरीशे वसव्यस्य' ( ऋ० ४.५८८ )। 'अयस्यो वसानाः' ( मै० सं० २.६.८ )। द्वितीयाबहुवचनस्यालुक्। अयो वसाना इत्यर्थः। 'स्व ( ऋ० १.९१.१३ ) ओक्ये।**

### न्यासः

तादर्थ्यमिति स्वार्थे ष्यञं दर्शयति। कथं पुनः स्वार्थे ष्यञ्? इत्याह—**चातुर्वर्ण्यादित्यादिना**। चातुर्वर्ण्यादिसिद्ध्यर्थं स्वार्थे ष्यञ उपसंख्यानं कृतम्, अयं तु चातुर्वर्ण्यादित्वात् स्वार्थे ष्यञ्। **अग्निदेवतायै इति**। अग्निश्चासौ देवता चेति विशेषणसमासः ॥ २४ ॥

**पादार्घाभ्याञ्च** ॥ **छन्दस्य इति**। सप्तदशाक्षरसमाहाराभिधायिनश्छन्दःशब्दात् स्वार्थे यत्प्रत्ययो भवति।

### पदमञ्जरी

च देवताजातिः, दर्शयति च—देवा मनुष्याः पितरस्तेऽन्यत आसन्निति, देव एव देवता—स्वार्थिकस्तल्? एवं तर्हि—

तल्प्रत्ययस्य प्रकृतिर्देवशब्दः पचाद्यचि।
ऐश्वर्यार्थाद्दिवेः साध्यो न जातिवचनस्ततः।
सामानाधिकरण्यं स्याद्देवतापितृशब्दयोः।
एवं च देवदेवत्यमित्येतदपि सिद्ध्यति ॥

यागसम्प्रदानमन्त्रस्तुत्यं वा देवता, न जातिविशेष इत्यर्थः ॥ २४ ॥

**पादार्घाभ्यां च** ॥ गन्धोदकादिसमुदायोऽर्घः, तदर्थमुदकादि=अर्घ्यम्। **छन्दस्य इति**। यथा गायत्र्यादि-वृत्तं छन्दःशब्दोऽभिधत्ते, तथाऽऽश्रावयेत्यादिकमपि सप्तदशाक्षरसमाहारम्, तत्र वर्त्तमानाच्छन्दःशब्दात्स्वार्थे प्रत्ययः, व्यत्ययेन पुंल्लिङ्गता।

### भावबोधिनी

इदम्—इस अर्थ में अग्निदेवत्यम्। पितृदेवत्यम्। वायुदेवत्यम्। [ अग्निश्चासौ देवता यह कर्मधारय समास करके अग्नि-देवता + यत्, भसंज्ञा, आलोप। अग्निदेवता के लिए—यह अर्थ है। अन्यत्र भी इसी प्रकार समझना चाहिए। ] ॥ २४ ॥

'तादर्थ्ये' इसकी अनुवृत्ति है। चतुर्थी समर्थ पाद और अर्घ शब्दों से तादर्थ्य अभिधेय रहने पर 'यत्' प्रत्यय होता है। उदा०—पादार्थम् उदकम्—इसमें पाद्यम्। अर्घार्थम् उदकम्—इसमें अर्घ्यम्। [ यत् प्रत्यय में भसंज्ञा, अलोप होता है। ] अनुक्तों के समुच्चय ( संग्रह ) के लिए 'च' का ग्रहण है। इसलिए प्रयोग के दर्शन के अनुसार अन्यत्र भी 'यत्' प्रत्यय होता है—"एष वै सप्तदशाक्षरश्छन्दस्यः प्रजापतिः। [ यहाँ 'छन्दस्' से यत् होता है। ]

वसु, अयस्, ओक, कवि, क्षेम, उदक, वर्चस्, निष्केवल, उक्थ, जन, पूर्व, नव, सूर, मर्त्त, यविष्ठ—इन शब्दों से वेद में स्वार्थ में यत् प्रत्यय होता है। उदा०—(१) 'अग्निरीशे वसव्यस्य।' [ वसु+यत्, उकार की भसंज्ञा, 'ओर्गुणः' से गुण, अव् आदेश ] (२) अयस्यो वसाना। [ अयस्+यत् ] इसमें द्वितीया बहुवचन का अलुक् होता है।

कव्योऽसि काव्यवाहनः' ( मै० सं० १.३.१३ )। क्षेम्यमध्य वस्यति ( तै० सं० ५.२.१. ७ )। वायुर्वर्चस्यः। निष्केवल्यं शंसति ( काठ० सं० २८.१० )। उक्थ्यं शंसति ( ऐ० ब्रा० )। जन्यं ताभिः। 'पूर्व्या विदुः' ( अ० १९.३४.६ )। स्तोमैर्जनयामि नव्यम् ( ऋ० १.१०९.२ )। सूर्यः ( ऋ० १.२३.१७ )। मर्त्यः ( ऋ० १.१९.२ )। यविष्ठ्यः ( ऋ० १.३६.६ )॥

❀ आमुष्यायणामुष्यपुत्रिकेत्युपसंख्यानम् ❀ ( ? )।

❀ समशब्दादावतुप्रत्ययो वक्तव्यः ❀। समावद् वसति ( मै० सं० २.२.७.७ ) [ हसति ]।

❀ नवस्य नू आदेशः, त्नप्तनप्खाश्च प्रत्ययाः ❀ ( म० भा० ५.४.३० वा० ६ )। नूत्नम्। नूतनम्। नवीनम्।

❀ नश्च पुराणे प्रात् ❀ ( म० भा० वा० ७ )। पुराणे वर्त्तमानात् प्रशब्दान्न प्रत्ययो भवति। चकारात् त्नप्तनप्खाश्च। प्रणम्। प्रत्नम् ( ऋ० १.३६.४ )। प्रतनम्। प्रीणम्।

**न्यासः**

**द्वितीयाबहुवचनस्यालुगिति।** अप्शब्दाद् द्वितीया बहुवचनान्ताद् यति कृते 'सुपो धातुप्रातिपदिकयोः' इति सुपो लुकि प्राप्तेऽलुग् भवति, 'सर्वे विधयश्छन्दसि विकल्प्यन्ते' इति कृत्वा।

**पदमञ्जरी**

**द्वितीयाबहुवचनस्य [1]लुगिति।** छान्दसत्वात्। अत एव यदन्तात्प्रथमैकवचनं पुंल्लिङ्गं च भवति।

अमुष्यशब्दो नडादिः, **अमुष्यपुत्रशब्दो** मनोज्ञादिः; उभयत्र षष्ठ्या अलुगुपसंख्यायते। प्रत्ययप्रकरणे प्रासङ्गिकमेतत्, स चालुक् तयोरेव गणयोस्तथैव पाठात्सिद्धः।

**भावबोधिनी**

[ पदमंजरीकार के अनुसार लुक् होता है इसीलिए यदन्त से प्रथमा-एकवचन और पुंल्लिङ्ग होता है। ] अयोवसाना—यह अर्थ है। (३) स्व ओक्ये। [ ओक + यत् ]। (४) कव्योऽसि। [ कवि + यत् ] (५) क्षेम्यस्य वसति। [ क्षेम + यत् ] (६) वायुर्वर्चस्यः। [ वर्चस् + यत् ]। (७) निष्केवल्यं शंसति। [ केवल + यत् ]। [८] उक्थ्यं शंसति। [ उक्थ + यत् ]। (९) जन्यं ताभिः। [ जन + यत् ]। (१०) पूर्व्याः विशः। [ पूर्व + यत् ]। (११) स्तोमैर्जनयामि नव्यम्। [ नव + यत् ]। (१२) सूर्यः। [ सूर + यत् ] (१३) मर्त्यः। [ मर्त्त + यत्। ] (१४) यविष्ठ्यः। [ यविष्ठ + यत् ]। [ उदक से यत् प्रत्यय का उदाहरण नहीं दिया गया है। ]

❀ आमुष्यायण आमुष्यपुत्रिका—इनका भी उपसंख्यान करना चाहिए। ❀ [ अमुष्य शब्द नडादिगण में है अतः 'नडादिभ्यः फक्' से फक्=आयन होकर आदिवृद्धि करने पर आमुष्यायण बनता है। अमुष्यपुत्र—यह मनोज्ञादि-गण में पठित है अतः 'मनोज्ञादिभ्यश्च' से वुञ् होता है—आमुष्यपुत्रिका बनता है। इनमें षष्ठीविभक्ति का लुक् नहीं होता है। इसीके लिए यह वचन है। प्रत्यय के लिए नहीं। ]

❀ सम शब्द से आवतु=आवत् प्रत्यय होता है। ❀ उदा०—समावद् हसतु।

❀ नव शब्द का 'नू' आदेश होता है और त्नप्, तनप्, ख ये तीन प्रत्यय होते। ❀ उदा०—नूत्नम्, नूतनम्, नवीनम् [ नू + ख=ईन, ऊ का गुण अवादेश। ]

❀ पुराण=पुराना अर्थ में 'प्र' शब्द से पूर्वोक्त तीन प्रत्ययों के अतिरिक्त 'न' यह भी प्रत्यय होता है। ❀ 'च' के कारण त्नप्, तनप् और ख भी होते हैं। उदा०—प्रणम्। [ प्र+न, णत्व—प्रणम्। ] प्रत्नम्। प्रतनम्। प्रीणम्। [ प्र + ख=ईन, भसंज्ञा अलोप, णत्व। ]

---

१. काशिकान्यासयोः 'अलुक्' इति पाठः।

❀ भागरूपनामभ्यो धेयः प्रत्ययो वक्तव्यः ❀ ( म० भा० ५.४.३६ वा० २ )। भागधेयम्। रूपधेयम्। नामधेयम्।

❀ मित्राच्छन्दसि ❀ ( म० भा० वा०३। मित्रधेये यतस्व ( तै० सं० ४.२.७.२ )।

❀ आग्नीध्रसाधारणादञ् ❀ ( म० भा० वा० ५ )। आग्नीध्रम् ( तै० सं० ३.१.६.१ )। साधारणम् ( तै० सं० २.६.१.६ )। स्त्रियां ङीप्—आग्नीध्री, साधारणी ( ऋ० १.१६०.४ )।

वाप्रकरणाच्च विकल्पन्ते एतान्युपसंख्यानानि, तेन यथाप्राप्तमपि भवति—आग्नीध्रा शाला, साधारणा भूरिति।

❀अयवसमरुद्भ्यां छन्दस्यञ्वक्तव्यः ❀ ( म० भा० वा० ६ )। आयवसे[1] रमन्ते ( तै० सं० ५.२.८.३ )। मारुतं शर्धः[1] ( ऋ० १.१०५.१ )॥

२३०६. अतिथेर्ञ्यः ॥ २६ ॥ ( २०९४ )

'तादर्थ्ये' इत्येव। अतिथिशब्दाच्चतुर्थीसमर्थात् तादर्थ्येऽभिधेये ञ्यः प्रत्ययो भवति। अतिथये इदम् आतिथ्यम्॥

**न्यासः**

आमुष्यायणामुष्यपुत्रिकेत्युपसंख्यानमिति। विभक्तेरलुगर्थमेतदुपसंख्यानान्तरम्, न प्रत्ययार्थम्। आमुष्यायणमित्यमुष्यशब्दो नडादिषु पठ्यते, ततः फकि कृते विभक्तेर्लुकि प्राप्तेऽलुग्वक्तव्यः। नडादिषु सविभक्तिकस्य पाठसामर्थ्याद्धयलुग्भविष्यति। अमुष्यपुत्रिकेत्यत्र त्वमुष्यपुत्रशब्दो मनोज्ञादिषु पठ्यत इति विभक्तेर्लुकि प्राप्तेऽलुग्वक्तव्यः। मनोज्ञादिषु पाठाद्वा सिद्धमिति न वक्तव्यम्। उभयत्र 'अदसोऽसेर्दादु दो मः' इति मत्वोत्वे॥२५॥

**पदमञ्जरी**

समशब्दादावतुप्रत्यय इति। उकार उगित्कार्यार्थः—'समावती यज्ञस्याशीः' ( तै० सं० १.६.१०.५ ) इति। ङीब भवति। अतिथेर्ञ्यः॥ २६॥

**भावबोधिनी**

❀ भाग, रूप और नाम—इनसे 'धेय' प्रत्यय स्वार्थ में होता है। ❀ उदा०—भागधेयम्। रूपधेयम्। नामधेयम्।

❀ मित्र शब्द से वेदविषय में 'धेय' प्रत्यय होता है। ❀ उदा०—मित्रधेयं यतस्व।

❀ अग्नीध्र और साधारण—शब्दों से 'अञ्' प्रत्यय होता है। ❀ उदा० —आग्नीध्रम् साधारणम्। स्त्रीलिङ्ग में [ 'टिड्ढाणञ्' सूत्र से ] ङीप् होता है—आग्नीध्री। साधारणी। [ "अग्नीधः शरणे रण् भत्वं च" इस वचन से 'अग्नीध्र' शब्द बनाया जा चुका है। उससे अञ् होता है। फलतः स्त्रीलिंग में ङीप् हो जाता है। समानं धारणम् अस्य—इस अर्थ में समान का स आदेश करके अञ् प्रत्यय होने पर आदिवृद्धि—साधारणम्। इसका अर्थ है—अनेकों के प्रति अविशिष्ट। ]

'वा' का प्रकरण होने से उक्त उपसंख्यानों में विकल्प होता है, इस कारण यथाप्राप्त प्रत्यय भी होते हैं—'आग्नीध्रा शाला, साधारणा भूः। [ इनमें ङीप् नहीं होता है। ]

❀ अवयस और मरुत् से वेद में अञ् प्रत्यय कहना चाहिए। ❀ उदा०—आयवसे रमन्ते। मारुतं शर्धः। [ अवयस + अञ्, मरुत् + अञ् आदिवृद्धि होती है। ] ॥ २५॥

'तादर्थ्ये' इसकी अनुवृत्ति होती है। चतुर्थीसमर्थ अतिथि शब्द से तादर्थ्य अभिधेय रहने पर 'ञ्य' प्रत्यय होता है। उदा०—अतिथये इदम्—इस अर्थ में—आतिथ्यम्। [ अतिथि + ञ्य = य, आदिवृद्धि, भसंज्ञा, इलोप ] ॥ २६॥

१–१. 'आयवसः सामः, मारुतः पर्वतः' इति पाठा०।

२३०७. देवात्तल् ॥ २७ ॥ ( २०९५ )

'तादर्थ्ये' इति निवृत्तम् । देवशब्दात् स्वार्थे तल् प्रत्ययो भवति । देव एव देवता ॥

२३०८. अवेः कः ॥ २८ ॥ ( २०९६ )

अविशब्दात् स्वार्थे कः प्रत्ययो भवति । अविरेवाविकः ॥

२३०९. यावादिभ्यः कन् ॥ २९ ॥ ( २०९७ )

'याव'– इत्येवमादिभ्यः स्वार्थे कन् प्रत्ययो भवति । याव एव यावकः । मणिकः ।

याव । मणि । अस्थि । चण्ड । पीतस्तम्ब । ❀ ऋतावुष्णशीते ❀ ( ग० सू० १४४ ) । ❀ पशौ लूनवियाते ❀ ( ग० सू० १४५ ) । ❀ अणु निपुणे ❀ ( ग० सू० १४६ ) । ❀ पुत्र कृत्रिमे ❀ ( ग० सू० १४७ ) । ❀ स्नात वेदसमाप्तौ ❀ ( ग० सू० १४८ ) । ❀ शून्य रिक्ते ❀ ( ग० सू० १४९ ) । ❀ दान कुत्सिते ❀

न्यासः

देवात् तल् ॥ २७ ॥ अवेः कः ॥ २८ ॥ यावादिभ्यः कन् ॥ ऋतावित्यादि । उष्णशीते शब्दरूपे कनमुत्पादयत ऋतावभिधेये—उष्णकः ऋतुः, शीतक ऋतुः । अन्यत्र उष्णः, शीत इत्येव भवति । पशौ लूनवियाते इति । लूनवियाते शब्दरूपे कनमुत्पादयतः पशावभिधेये—लूनकः पशुः, वियातकः पशुः । पशोरन्यत्र—लूनम्, वियातम् । अणु निपुण इति । अणुशब्दो निपुणार्थः कनमुत्पादयति, अणुको निपुण इत्यर्थः । अन्यत्राणुरित्येव भवति । पुत्रः कृत्रिम इति । पुत्रशब्दः कृत्रिमेऽर्थे कनमुत्पादयति—पुत्रकः । अन्यत्र पुत्रः । स्नात वेदसमाप्ताविति । स्नातशब्दः कनमुत्पादयति वेदसमाप्तौ विवक्षितायाम् । यस्य वेदः समाप्तः स

पदमञ्जरी

'अग्नीध्रः शरणे रण् भत्वं च' ( कात्या० वा० २९११ )—आग्नीध्रम्, ततोऽञ्—आग्नीध्री । समानं धारणमस्य साधारणम्, अनेकं प्रत्यविशिष्टसम्बन्धम् । पृषोदरादित्वात्समानस्य सभावः, ततोऽञ् । साधारणी । ङीबर्थं वचनम् । क्षेमशब्दाद्यो वक्तव्यः, यति हि सति 'यतोऽनावः' इत्याद्युदात्तत्वं स्याद्, अन्तोदात्तत्वं चेष्यते ॥ २५ ॥ २६ ॥ २७ ॥ २८ ॥

यावादिभ्यः कन् । ऋतावुष्णशीते इति । उष्णक ऋतुः, शीतक ऋतुः । ऋतोरन्यत्र तु –उष्णोऽग्निः, शीतमुदकम् । पशाविति । लूनकः पशुः, वियातकः पशुः । अन्यत्र—लूना दर्भाः, वियातो नीचः । अणु निपुण इति । अणुकः=सूक्ष्मदृक्, निपुणः । अन्यत्राणुरेव । पुत्र कृत्रिमे । पुत्रको लोहादिनिर्मितः, अन्यत्र पुत्र एव । स्नात वेदसमाप्तौ इति । यस्याध्येतव्यो वेदः समाप्तः=पारं प्राप्तः, स वेदमधीत्य स्नास्यन्नित्यादिस्वगृह्योक्तप्रकारेण

भावबोधिनी

'तादर्थ्ये' इसकी निवृत्ति हो जाती है । देव शब्द से स्वार्थ में तल् प्रत्यय होता है । उदा०—देव एव देवता । [ देव + तल् 'तलन्तं स्त्रियाम्' इस वचन से स्त्रीलिंग मानकर टाप् होता है । अतः यह देवता शब्द स्त्रीलिंग में ही प्रयुक्त होता है । ] ॥ २७ ॥

अवि शब्द से स्वार्थ में 'क' प्रत्यय होता है । उदा०—अविः एव—अविकः । [ अवि + क ] ॥ २८ ॥

याव—आदिशब्दों से स्वार्थ में कन् प्रत्यय होता है । उदा०—याव एव यावकः । [ याव + कन् ] । [ मणिः एव— ] मणिकः ।

याव । मणि । अस्थि । चण्ड । पीतस्तम्ब । ❀ ऋतु अर्थ में उष्ण और शीत से । ❀ [ उष्णकः ऋतुः, शीतकः ऋतुः ] । ❀ पशु में लून और वियात से । ❀ [ लूनकः पशुः, वियातकः, पशुः । ] ❀ अणु से निपुण अर्थ में । ❀ [ अणुकः = सूक्ष्मद्रष्टा = निपुण । ] ❀ कृत्रिम = बनाया गया अर्थ में पुत्र शब्द से ❀ [ पुत्रकः=लोहादिनिर्मित

( ग० सू० १५० )। ❀ **तनु सूत्रे** ❀ ( ग० सू० १५१ )। ❀ **ईयसश्च** ❀ ( ग० सू० १५२ )। **श्रेयस्कः।** **ज्ञात।** ❀ **कुमारीक्रीडनकानि च** ❀ ( ग० सू० १५३ )। **यावादिः॥**

**२३१०. लोहितान्मणौ ॥ ३० ॥ ( २०९८ )**

**लोहितशब्दान्मणौ वर्त्तमानात्स्वार्थे कन् प्रत्ययो भवति। लोहितो मणिः लोहितकः। मणाविति किम् ? लोहितः॥**

**२३११. वर्णे चानित्ये ॥ ३१ ॥ ( २०९९ )**

**अनित्ये वर्णे वर्त्तमानाल्लोहितशब्दात्स्वार्थे कन्प्रत्ययो भवति। लोहितकः कोपेन। लोहितकः पीडनेन।**

**न्यासः**

स्नातक इत्युच्यते। वेदसमाप्ताविति किम् ? नद्यां स्नातः। **शून्य रिक्त इति।** शून्यशब्दः कनमुत्पादयति रिक्ते तुच्छेऽभिधेये—शून्यकः, तुच्छ इत्यर्थः। अन्यत्र शून्यम्। **दान कुत्सित इति।** दानशब्दः कुत्सिते कनमुत्पादयति—कुत्सितं दानं दानकम्। अन्यत्र तु दानम्। **तनु सूत्रे इति।** तनुशब्दः प्रत्ययमुत्पादयति सूत्रे—तनुकम्। अन्यत्र तनुः। **ईयसश्चेति।** ईयस्प्रत्ययान्तात् कन् भवति—श्रेयस्कः। **कुमारीक्रीडनकानि चेति।** कुमारीणां यानि क्रीडनकानि तानि कनमुत्पादयन्ति—कन्दुकम् ॥ २९ ॥

**लोहितान्मणौ ॥ ३० ॥ वर्णे चानित्ये ॥ लोहितकः कोपेनेति।** लोहितशब्दवाच्यो वर्णः कोपे सति भवति।

**पदमञ्जरी**

स्नानाय चोदितः स्नातकः=समावृत्त उच्यते। अन्यत्र—नद्यां स्नातः। **शून्य रिक्त इति।** उदकादिना रिक्तो घटः शून्यकः। अन्यत्र—शून्यः प्रत्ययः, बाह्यार्थरहित इत्यर्थः। तथा शुने हितः शून्यः, गवादिषु 'शुनः सम्प्रसारणं वा च दीर्घत्वं च' ( ग० सू० १०७ ) इति पठ्यते। **दान कुत्सिते इति।** कुत्सितं दानं दानकम्। **तनु सूत्रे इति।** तनुकं सूत्रम्=सूक्ष्मतन्तुः, अन्यत्र तनुः=शरीरम्। **ईयसश्च इति।** ईयसुन्नन्ताच्च स्वार्थे कन् भवति—श्रेयस्कम्। **कुमारीक्रीडनकानि च इति।** कुमारीणां यानि क्रीडनकानि=क्रीडासाधनानि तानि कनमुत्पादयन्ति—कण्डु(दु)कम् ॥ २९ ॥ ३० ॥

**वर्णे चानित्ये॥** सत्येवाश्रये यल्लौहित्यमपगच्छति तदनित्यम्। **लोहितकः कोपेनेति।** कोपे सति भवति। कोपापगमे च सत्येवाश्रये निवर्त्तेत इत्यनित्यमेतत् लौहित्यम्।

**भावबोधिनी**

आकृति। ] ❀ वेद के अध्ययन की समाप्ति पर स्नात शब्द से। ❀ [ स्नातकः। ] ❀ शून्य से रिक्त अर्थ में। ❀ [ शून्यकः ]। ❀ दान से कुत्सा में। ❀ [ दानकम् ]। ❀ सूत्र से तनु से। ❀ [ तनुकं सूत्रम् ]। ❀ ईयस् प्रत्ययान्त से भी कन् होता है। ❀ उदा०—श्रेयस्कः। [ प्रशस्य + ईयसुन् = श्र + ईयस् = श्रेयस् + कन् ]। ❀ कुमारियों के जो क्रीडनक = खिलौने हैं उनके वाचक शब्दों से भी कन् होता है। ❀ [ कन्दुकम् आदि। ] ॥ २९ ॥

मणि अर्थ में वर्तमान लोहित शब्द से स्वार्थ में कन् प्रत्यय होता है। उदा०—लोहितः मणिः—लोहितकः।

मणि अर्थ में—इसका क्या फल है ? लोहितः। [ यहाँ अन्य अर्थ होने से प्रत्यय नहीं होता है। ] ॥ ३० ॥

अनित्य वर्ण अर्थ में वर्तमान लोहित शब्द से भी स्वार्थ में कन् प्रत्यय होता है। उदा०—लोहितकः कोपेन। लोहितकः पीडनेन [ जब कोई क्रोध से तमतमाकर लाल हो जाता है तब यह प्रयोग होता है। परन्तु वह लौहित्य अल्पकालिक होने से अनित्य है। अतः प्रत्यय होता है। ]

**अनित्य इति किम् ? लोहितो गौः। लोहितं रुधिरम् ।**

**❀ लोहिताल्लिङ्गबाधनं वा वक्तव्यम् ❀** ( म० भा० ५.४.३० वा० १ )। **लोहितिका कोपेन। लोहिनिका कोपेन ॥**

**न्यास।**

स्थित एव च देवदत्ते कोपविगमे गच्छतीत्यनित्यो भवति। अथ वर्णग्रहणं किमर्थम्, यावता लोहितशब्दो वर्ण एव वर्तते ? नैतदस्ति; मणिनिमित्तोऽप्ययं द्रव्येऽपि वर्त्तत एव, तत्रासति वर्णग्रहणे द्रव्यस्याप्यनित्यग्रहणं विशेषणं विज्ञायेत, ततश्च लोहितकाः पार्थिवाः परमाणव इति प्रत्ययो न स्यात्; नित्यत्वात् वर्णग्रहणे तु सति वर्णस्यैवानित्यग्रहणं विशेषणं भवतीति नित्ये प्रत्ययः सिद्धो भवति। अपि च—लोहितशब्दो वर्णनिमित्त एव रुधिराख्ये वर्त्तते। तच्च सर्वत्रैवानित्य इति विशेषणोपादानसामर्थ्यादनित्ये कार्यविशेष उच्यते। स पुनः सत्येवाश्रये कदाचिद् भवति, कदाचिन्नेति। तेन यदेतत् स्त्रीणामार्त्तवं लोहितं तत्रैव स्यात्। तस्माद्वर्णग्रहणं कर्त्तव्यम्।

**लोहितो गौः, लोहितं रुधिरमित्यत्र** यावदाश्रयस्तावदवस्थानादनित्यो वर्णो न भवति। ननु चायमप्याश्रयविनाशेन विनाशादनित्य एव ? सत्यमेतत्; सर्व एव हि वर्ण ईदृशः। उच्यते चेदमनित्य इति विशेषणोपादानसामर्थ्यात्। तेन प्रकर्षेण योऽनित्य इति विज्ञायते, स पुनः सत्येवाश्रये, अभूत्वा भवतीति, यो भूत्वा प्रतिगच्छति स एव भवितुमर्हति।

**लोहिताल्लिङ्गबाधनमित्यादि।** लिङ्गाधिकारे यो विहितः प्रत्ययः स उपचारालिङ्गशब्देनोक्तः, तस्य लोहितशब्दाद् बाधनं भवतीति वक्तव्यम्; अन्यथा स्त्रीत्वस्य वर्णानित्यस्य युगपद्विवक्षायां लोहितशब्दाद् 'वर्णादनुदात्तात्तोपधात्तो नः' इति यो ङीप् प्राप्नोति स कना नित्यं बाध्येत। तस्य हि हरितवर्णादिरवकाशः प्राप्नोति, तत्र कनि कृते तदन्ताट्टापि लोहितकेत्येव स्यात्, लोहिनिकेत्येवं तु न प्राप्नोति। तस्माद्धि लिङ्गबाधनं कर्त्तव्यम्। एवं लोहितशब्दाद् वर्णादनुदात्तादिना ङीपि तकारस्य नकारे ततोऽनेन कन्। केऽणः' इति ह्रस्वत्वे कृते लोहिनिकेति सिद्धं भवति ॥ ३१ ॥

**पदमञ्जरी**

**लोहितो गौरिति।** यावदाश्रयभावित्वादयं नित्यो वर्णः।

**लोहितं रुधिरमिति।** विषादिदूषितं रुधिरं कदाचित्कृष्णमपि भवतीति विशेषणम्। वर्णग्रहणं किम् ? अनित्यत्वं विशेषणं यथा विज्ञायेत, अन्यथा लोहितशब्दो वर्णप्रवृत्तिनिमित्तमुपादाय यत्र द्रव्ये पर्यवस्यति, तत्रापि विशेषणं सम्भाव्येत। तत्र को दोषः ? इह च स्यात्—लोहितो गौरिति। इह च न स्यात्—लोहितकाः पार्थिवाः परमाणवोऽग्निसंयोगेनेति। तथा वर्णनिरपेक्षो रुधिराख्ये द्रव्ये लोहितशब्दस्तस्यापि ग्रहणं स्यात्, अनित्यग्रहणमिदानीं किमर्थं स्यात्! ननु सर्वमेव रुधिरमनित्यं यत्सत्येवाश्रये कादाचित्कम्, यथा—स्त्रीणामार्त्तवम्, तस्य ग्रहणार्थं स्यात्, तस्माद्वर्णग्रहणम्।

**लोहिताल्लिङ्गबाधनं वा इति।** ङ्याप्सूत्र एतद्व्याख्यातम् ॥ ३१ ॥

**भावबोधिनी**

अनित्य में—इसका क्या फल है ? लोहितः गौः। लोहितं रक्तम् [ यहाँ नित्य की प्रतीति है। अतः प्रत्यय नहीं होता है। ]

❀ लोहित से विकल्प से लिङ्ग का बाध कहना चाहिए।❀ लोहितिका कोपेन। लोहितिका कोपेन। [ यहाँ लिङ्ग का तात्पर्य लिङ्गाधिकार में विहित कार्य से है। अतः लोहित से ङीप्, त का न करने के बाद इससे कन् और टाप् होने पर 'केऽणः' सूत्र से ह्रस्व करने पर—लोहिनिका बनता है। पक्ष में पहले ही कन् और टाप् इत्व होने से नत्व न होकर लोहितिका यह दूसरा रूप बनता है। ] ॥ ३१ ॥

## २३१२. रक्ते ॥ ३२ ॥ ( २१०० )

लाक्षादिना रक्ते यो लोहितशब्दः, तस्मात् कन्प्रत्ययो भवति । लोहितकः कम्बलः । लोहितकः पटः । लिङ्गबाधनं वेत्येव—लोहितिका, लोहिनिका शाटी ॥

## २३१३. कालाच्च ॥ ३३ ॥ ( २१०१ )

'वर्णे चानित्ये' ( ५.४.३१ ), 'रक्ते' ( ५.४.३२ ) इति द्वयमप्यनुवर्तते । कालशब्दादनित्ये वर्त्तमानाद्रक्ते च कन् प्रत्ययो भवति । कालकं मुखं वैलक्ष्येण । रक्ते—कालकः पटः । कालिका शाटी ॥

## २३१४. विनयादिभ्यष्ठक् ॥ ३४ ॥ ( २१०२ )

'विनय'—इत्येवमादिभ्यः स्वार्थे ठक् प्रत्ययो भवति । विनय एव वैनयिकः । सामयिकः । औपयिकः । विभाषाग्रहणेन विकल्प्यते प्रत्ययः ।

### न्यासः

रक्ते ॥ लाक्षादिना रक्त इति । ननु च लाक्षादिना य आधीयते लोहितो वर्णः, तस्यानित्यत्वात् पूर्वसूत्रेणैव सिद्धम् ? यदा हि तेन योगविशेषेण तथाविधं स्थैर्यमुत्पद्यते; यतः स्वाश्रयं न जहाति तदा नित्यत्वान्न प्राप्नोति, तदर्थमिदमुच्यते ॥ ३२ ॥

कालाच्च ॥ ३३ ॥ विनयादिभ्यष्ठक् ॥ उपायाद् ह्रस्वत्वञ्चेति । उपायशब्दष्ठकमुत्पादयति, ह्रस्वत्वञ्च प्रतिपद्यते—औपयिकः ॥ ३४ ॥

### पदमञ्जरी

रक्ते ॥ यत्र द्रव्यान्तरसम्पर्केण लौहित्यं तथाधीयते यथा यावदाश्रयमवतिष्ठते, तत्रानित्यत्वाभावात्पूर्वेण न प्राप्नोतीत्ययमारम्भः । नन्वेवमपि रञ्जनात् प्राक् सत्येव पदादावाश्रये लौहित्यस्यावस्थानाभावादस्त्येवानित्यता, न कारणावस्थायामेव रञ्जनात् ? तदेतदेव वचनं ज्ञापकम्—पूर्वत्रायावद्द्रव्यभावित्वमनित्यत्वम्, न पुनराद्यन्तभाव इति । तादृशस्य त्वनित्यत्वस्य ग्रहणे तैजसानां परमाणूनां यल्लौहित्यं तद्व्यतिरिक्तस्य सर्वस्यैव लौहित्यस्य नित्यत्वादिदं वचनमनर्थकं स्यात् ॥ ३२ ॥

कालाच्च ॥ द्वयमप्यनुवर्त्तत इति । द्वयस्यापि स्वरितत्वात्, न त्वनन्तरं 'रक्ते' इत्येतदेवेत्यपिशब्दार्थः । वैलक्ष्येणेति । विलक्षस्य भावो वैलक्ष्यम् = लज्जा । कालकः पट इति । नील्यादिना कालतामापादित इत्यर्थः ॥३३॥

विनयादिभ्यष्ठक् ॥ उपायाद् ह्रस्वत्वं चेति । उपायशब्दष्ठकमुत्पादयति, ह्रस्वत्वं चापद्यते । स च ह्रस्व

### भावबोधिनी

लाक्षा = लाख आदि के द्वारा रंगा गया—अर्थ में जो लोहित शब्द है उससे 'कन्' प्रत्यय होता है । उदा०—लोहितकः कम्बलः । लोहितकः पटः । [ लाख आदि से रंगा गया उस वर्ण का कम्बल, पट ] ।

लिङ्ग का बाधन विकल्प से होता है—लोहितिका, लोहिनिका वा शाटी । [ इन दोनों की उपपत्ति पूर्वसूत्र की व्याख्या में देखें ] ॥ ३२ ॥

'वर्णे चानित्ये' और 'रक्ते' इन दोनों की अनुवृत्ति होती है । काल शब्द जो अनित्य ( वर्ण ) और रक्त (=रंगा हुआ )—इन अर्थों में वर्तमान है, उससे कन् प्रत्यय होता है । उदा०—कालकं मुखं वैलक्ष्येण । ( वैलक्ष्य = लज्जा के कारण कालक = काला हुआ मुख । यहाँ अनित्य वर्ण अर्थ है । कन् प्रत्यय होता है । ] रक्त = रंगा हुआ अर्थ में—कालकः पटः । कालिका शाटी । [ काला रंगा हुआ वस्त्र । काली रंगी हुई साड़ी । ] ॥ ३३ ॥

विनय—आदि शब्दों से स्वार्थ में ठक् होता है । उदा०—विनय एव—वैनयिकः । [ विनय + ठक् = ठ = इक, भसंज्ञा, अलोप, आदिवृद्धि—वैनयिकः । इसका अर्थ 'विनय' है । ] सामयिकः । [ समय + ठक् ] औपयिकः ।

**विनय । समय । ॐ उपायाद् ह्रस्वत्वं च ॐ ( ग० सू० १५४ ) । सङ्गति । कथञ्चित् । अकस्माद् । समयाचार । उपचार । समाचार । व्यवहार । सम्प्रदान । समुत्कर्ष । समूह । विशेष । अत्यय[1] । विनयादिः ॥**

**२३१५. वाचो व्याहृतार्थायाम् ॥ ३५ ॥ ( २१०३ )**

**व्याहृतः = प्रकाशितोऽर्थो यस्यास्तस्यां वाचि वर्त्तमानाद्वाच्—शब्दात्स्वार्थे ठक् प्रत्ययो भवति । पूर्वमन्येनोक्तार्थत्वात् सन्देशवाग् = व्याहृतार्थेत्युच्यते । वाचिकं कथयति । वाचिकं श्रद्धे ।**

**व्याहृतार्थायामिति किम् ? मधुरा वाक् देवदत्तस्य ॥**

**न्यासः**

**वाचो व्याहृतार्थायाम् ॥ व्याहृत इति ।** उक्त इत्यर्थः । **अन्येनेति ।** संदेष्ट्रा । न हि पूर्वं सा वाक् संदिष्टा । तेन हि पूर्वं सन्दिशता सन्देशवाक् भवति । यया सन्दिष्टोऽर्थोऽभिधीयते, सा च सन्देशवागुच्यते ॥ ३५ ॥

**पदमञ्जरी**

आकारस्यैव भवति; अन्यस्याचः स्वत एव ह्रस्वत्वात् । **अकस्मादित्यत्र** पठ्यते, तद्कारान्तम्, तेन 'इसुसुक्तान्तात्कः' इति कादेशो न भवति—आकस्मिकः, अव्ययत्वाट्टिलोपः ॥ ३४ ॥

**वाचो व्याहृतार्थायाम् ॥ व्याहृत इति ।** उक्त इत्यर्थः । **अन्येनेति ।** संदेष्ट्रा । तेन हि पूर्वमुक्तस्तस्यार्थः संदेशहरं प्रति । **सन्देशवागिति ।** सन्देशरूपा वाक् सन्देशवाक्, सन्दिश्यते इति सन्देशः, तस्य वाक् संदेशवाक यया संदिष्टोऽर्थोऽभिधीयते ।

अपर आह—लेख्यादिनावधारितेऽर्थे प्रवर्त्तमाना वाक् व्याहृतार्थेति । 'अतिवर्त्तन्ते च स्वार्थिकाः प्रकृतितो लिङ्गवचनानि' ( व्या० परि० ७४ ) इति नपुंसकत्वम् ॥ ३५ ॥

**भावबोधिनी**

[ उपाय + ठक्, अग्रिम वचन से ह्रस्व करने पर उपय + ठक्=ठ=इक, आदिवृद्धि, भसंज्ञा, अलोप—औपयिक । ] विभाषा का ग्रहण होने से प्रत्यय विकल्प से होता है ।

[ इस गण में पठित शब्द—] विनय । समय ।ॐ उपाय से प्रत्यय और ह्रस्व होता है ।ॐ सङ्गति । कथञ्चित् । अकस्माद् । समयाचार । उपचार । समाचार । व्यवहार । सम्प्रदान । समुत्कर्ष । समूह । विशेष । अत्यय । ये विनयादि हैं । [ इनसे स्वार्थ में ठक् होने के कारण मूल शब्द और ठक् प्रत्ययान्त में कोई अर्थभेद नहीं रहता है । ] कथञ्चित्= काथञ्चित्कम् । अकस्माद्=आकस्मिकम् । समयाचार=सामयाचारिकम् । उपचार=औपचारिकम् । समाचार= सामाचारिकम् । व्यवहार=व्यावहारिकम् । सम्प्रदान=साम्प्रदानिक । समुत्कर्ष=सामुत्कर्षिकम् । समूह=सामूहिकम् । विशेष = वैशेषिकम् । अत्यय=आत्ययिकम् । ] ॥ ३४ ॥

व्याहृत = प्रकाशित अर्थ है जिसका ऐसी वाक्=वाणी अर्थ में वर्तमान वाच् शब्द से स्वार्थ में 'ठक्' प्रत्यय होता है । पहले किसी अन्य के द्वारा उक्त अर्थवाली होने से सन्देशवाक्=व्याहृतार्था ऐसी कही जाती है । उदा०— वाचिकं कथयति । वाचिकं श्रद्धे । ( सन्देश कहता है । सन्देश पर विश्वास किया । ]

व्याहृत अर्थ वाली में—इसका फल है ? मधुरा वाक् देवदत्तस्य । ( देवदत्त की वाणी मधुर है । यहाँ प्रत्यय नहीं होता है । ] ॥ ३५ ॥

---

१. 'अस्थि, कण्डु'—एतौ शब्दावत्र गणेऽधिकौ कुत्रचित् ।

## २३१६. तद्युक्तात्कर्मणोऽण् ॥ ३६ ॥ ( २१०४ )

**व्याहृतार्थया वाचा यत्कर्म युक्तं तदभिधायिनः कर्मशब्दात् स्वार्थेऽण् प्रत्ययो भवति। कर्मैव कार्मणम्। वाचिकं श्रुत्वा तथैव यत्कर्म क्रियते तत्कार्मणमित्युच्यते।**

**❀ अण्प्रकरणे कुलालवरुडनिषादकर्मारचण्डालमित्रामित्रेभ्यश्छन्दस्युपसंख्यानम् ❀ ( म० भा० ५.२.३६ वा० १ )। कुलाल एव कौलालः ( का० ३४.१.७ )। वारुडः। नैषादः ( वा० स० ३०.८ )। कार्मारः ( ऋ० १.११२.२ )। चाण्डालः ( वा० सं० ३०.११ )। मैत्रः ( वा० सं० ३९.५ )। आमित्रः ( ऋ० ६.२८.२ )।**

**❀ सान्नाय्यानुजावरानुषूकाष्टुभचातुष्प्राश्यराक्षोघ्नवैयातवैकृतवारिवस्कृताग्रायणाग्रहायणसान्तपनाः ❀ ( म० मा० )। एतेऽणन्ताः स्वार्थिकाश्छन्दसि भाषायां चेष्यन्ते।**

### न्यासः

**तद्युक्तात् कर्मणोऽण्** ॥ **कर्मशब्दादिति**। एतेन कर्मण इति स्वरूपस्य ग्रहणम्, नेप्सिततमस्येति दर्शयति। ननु च कर्मशब्दस्य संज्ञाशब्दत्वादीप्सिततमस्यैव ग्रहणं युक्तम्, न स्वरूपस्येति? नैतदस्ति; इह हि 'स्थानान्तात्' इत्यादेः सूत्रादितिकरणोऽनुवर्तते, तेनायमर्थो लभ्यते—ततश्चेद्विवक्षा भवतीति। कर्मशब्दाच्च प्रत्ययोत्पत्तौ लोके विवक्षा भवति, नेप्सिततमात्। न हि तत उत्पन्नेनाणा व्याहृतार्थवाचा युक्तं कर्म शक्यते द्योतयितुम्, कर्मशब्दात् तूत्पन्नेन शक्यते। तस्मात् स्वरूपस्यैव ग्रहणं युक्तम्। **कार्मणमिति**। 'अन्' इति प्रकृतिभावः। **तथैवेति**। यथैव व्याहृतार्थया वाचा प्रतिपादितम्—एवं कर्त्तव्यमिति, तेनैव प्रकारेणेत्यर्थः।

**अण्प्रकरण इत्यादि**। उपसंख्यानशब्दस्य प्रतिपादनमर्थः। तत्रेदं प्रतिपादनम्—प्रज्ञादेराकृतिगणत्वात् कुलालादयस्तत्रैव द्रष्टव्याः। तेन 'प्रज्ञादिभ्यश्च' इत्यण् भविष्यतीति। यद्येवम्, भाषायामपि स्यात्? नैष दोषः; 'विभाषा बहोः' इत्यादिसूत्राद् विभाषेत्यनुवर्तते, सा च व्यवस्थितविभाषा छन्दस्येव भविष्यति,

### पदमञ्जरी

**तद्युक्तात्कर्मणोऽण्** ॥ **कर्मशब्दादिति**। एतेन 'कर्मणः' इति स्वरूपग्रहणम्, नेप्सिततमादेरिति दर्शयति। एतच्च व्याख्यानाल्लभ्यते। **कार्मणमिति**। 'अन्' इति प्रकृतिभावः। **तथैवेति**। यथैव व्याहृतार्थया वाचा प्रतिपादितम्—एवमेतत्त्वया कर्त्तव्यमिति, तथैवेत्यर्थः।

**अण्प्रकरण इति**। प्रज्ञादिष्वपाठः=एतेषां भाषायामण्मा भूदिति। **सान्नाय्येत्यादि**। सान्नाय्यादयः शब्दाः प्रज्ञादिषु द्रष्टव्या इत्यर्थः। अन्तोदात्तार्थं चेह सान्नाय्यशब्दस्य ग्रहणम्, रूपं तु 'पाय्यसान्नाय्य' इति निपातनादेव सिद्धम्। **आनुजावर इति**। अनुजादवर इत्यस्मादेव निपातनात्पञ्चमीसमासः, ततोऽण्। **आनुषूक इति**। सूतिः सूः, सम्पदादित्वात् क्विप्, अनुगता सूरेतमिति बहुव्रीहिः, कप्, 'पूर्वपदात्' इति षत्वम्। **चातुष्प्राश्यमिति**। चतुर्भिः प्राश्यमिति 'कर्तृकरणे कृता बहुलम्' इति समासः ततोऽण्। आधाने ब्रीह्योदनस्येदमभिधानम्। 'इदुदुपधस्य' इति षत्वम्। **राक्षोघ्नमिति**। रक्षांसि हन्यन्तेऽनेनेति घञर्थे कः। वियातविकृतशब्दाभ्यामण्—**वैयातः**,

### भावबोधिनी

व्याहृतार्था वाणी से जो कर्म युक्त होता है उसके अभिधायक कर्म शब्द से स्वार्थ में अण् प्रत्यय होता है। उदा०—कर्म एव कार्मणम्। [ कर्मन् + अण्=अ, आदिवृद्धि, प्रकृतिभाव। ] वाचिक सन्देश सुनकर उसी प्रकार जो कर्म किया जाता है उससे 'कार्मण' कहा जाता है। [ यही उस कर्म की तद्युक्तता है। ]

❀ अण् के प्रकरण में कुलाल, वरुड, निषाद, कर्मार, चण्डाल, मित्र, अमित्र—इन शब्दों से वेद में अण् कहना चाहिए। ❀ उदा०—कुलाल एव कौलालः। [ वरुड एव—] वारुडः। [ निषाद एव ] नैषादः। [ कर्मार एव ] कार्मारः। [ चण्डाल एव ] चाण्डालः। [ मित्र एव ] मैत्रः=सूर्य। [ अमित्र एव ] आमित्रः। [ सब में अण् करने पर आदि-

[ 'सान्नायम्' ( तै० सं० २.५.३.७ )। 'आनुजावरः' ( तै० सं० २.३.४.२ )। 'आनुषूकः' ( तै० सं० २.३.४.३ )। 'आष्टुभः'। 'चातुष्प्राश्यः' ( काठ० सं० ८.१० )। 'राक्षोघ्नम्' ( तै० सं० ५.१.१०.३ )। वैयातः। वैकृतः। वारिवस्कृतः ( तै० सं० ४.५.२.२ )। आग्रायणः ( मै० सं० २.७.१९ )। आग्रहायणः सान्तपनः ( वा० सं० १७.८५ )।[1] ]

**२३१७. ओषधेरजातौ ॥ ३७ ॥ ( २१०५ )**

**ओषधिशब्दादजातौ वर्तमानात्स्वार्थेऽण् प्रत्ययो भवति। औषधं पिबति। औषधं ददाति। अजाताविति किम्? ओषधयः क्षेत्रे रूढा भवन्ति ॥**

### न्यासः

न भाषायामिति।

**सान्नायेत्यादि।** सान्नायानुजावरानुषूकानुष्टुभचातुष्प्राश्यराक्षोघ्नवैयातवैकृतवारिवस्कृताग्रायणाग्रहायण-सान्तपनाश्छन्दसि भाषायाञ्चेष्यन्ते। तस्मात्सान्नायादय.। एषां प्रकृतयः प्रज्ञादिष्वेव द्रष्टव्याः। अत्र चाग्रायणा-ग्रहायण—इत्यत्रेकारान्ताभ्यामाग्रायण्यग्रहायणीशब्दाभ्यामन्यत्राकारान्तेभ्योऽनुजावरादिभ्यः प्रत्ययः। सान्नाय्य-शब्दस्य चेहान्तोदात्तस्य ग्रहणम्। रूपं तु 'पाय्यसान्नाय्य' इति निपातनादेव सिद्धम्॥ ३६ ॥

**ओषधेरजातौ ॥ औषधं पिबतीति।** फलादौ वर्त्तमानादोषधिशब्दात् प्रत्ययः, स च जातिर्न भवति; 'आकृतिग्रहणा जातिः' इत्यादेर्लक्षणस्याभावात्।

**औषधयः क्षेत्रे रूढा भवन्ति।** अत्र फलपाकान्ता जातिः, तत्रौषधिशब्दो वर्त्तते ॥ ३७ ॥

### पदमञ्जरी

**वैकृतः।** वरिवः=परिचर्या, तत्करोति वरिवस्कृत्, क्विप्, 'अतः कृकमि' इति सत्वम्, वरिवस्कृदेव **वारिवस्कृतः**=परिचारकः। अग्रमयनमस्य, अग्रे हायनमस्येति बहुव्रीहिभ्यामण्—**आग्रायणं** कर्म। नानिष्ट्वाग्रायणे-नाहिताग्निर्नवस्याश्नोयादिति। **आग्रहायणी,** अणन्तान् ङीप्। सन्तप्यतेऽनेनेति सन्तपनः, सन्तपन एव **सान्तपनः**=कृच्छ्रः ॥ ३६ ॥

**ओषधेरजातौ ॥ औषधं पिबतीति।** पथ्या-शुण्ठी-सैन्धवादीनां कल्के औषधशब्दो वर्त्तते। **औषधयः क्षेत्ररूढा इति।** फलपाकावसानेषु जातिविशेषेष्वत्रौषधिशब्दः ॥ ३७ ॥

### भावबोधिनी

वृद्धि होती है। ]

❀ **सान्नाय, आनुजावर, आनुषूक, आष्टुम, चातुष्प्राश्य, राक्षोघ्न, वैयात, वैकृत, वारिवस्कृत, आग्रायण, आग्रहायण, सान्तपन** ❀ —ये शब्द स्वार्थिक अण्प्रत्ययान्त रूप में वेद और भाषा=लोक में इष्ट हैं अर्थात् मूल शब्द और अण्प्रत्ययान्त दोनों का प्रयोग सर्वत्र किया जाता है [ उपपत्ति पदमंजरी में देखें। ] ॥ ३६ ॥

अजाति=जातिभिन्न अर्थ में वर्तमान ओषधि शब्द से स्वार्थ में अण् प्रत्यय होता है। उदा०— औषधं पिबति। औषधं ददाति। [ यहाँ विभिन्न पदार्थों को मिलाकर बनाई गई ओषधि=दवा अर्थ है। अतः जाति अर्थ न होने से अण् होता है। ]

अजाति अर्थ में—इसका क्या फल है? औषधयः क्षेत्रे रूढा भवन्ति। [ यहाँ फलपाकान्त जाति अर्थ न होने में ओषधि शब्द है। अतः अण् नहीं होता है। ]

---

१. मुद्रितकाशिकायामनुपलभ्यमानोऽप्ययं पाठः पदमञ्जर्यनुरोधात् संगृहीत इति बोध्यम्।

## २३१८. प्रज्ञादिभ्यश्च ॥ ३८ ॥ ( २१०६ )

**प्रजानातीति प्रज्ञः । 'प्रज्ञ'—इत्येवमादिभ्यः प्रातिपदिकेभ्यः स्वार्थेऽण् प्रत्ययो भवति । प्रज्ञ एव प्राज्ञः । स्त्री—प्राज्ञी । यस्यास्तु प्रज्ञा विद्यते सा प्राज्ञा भवति । 'प्रज्ञाश्रद्धार्चावृत्तिभ्योऽणः' ( ५.२.१०१ ) इति ।**

**विदन्नित्यत्र पठ्यते, विदेः शत्रन्तस्य ग्रहणम्, 'विदेः शतुर्वसुः' ( ७.१.३६ )। इत्यत एव ज्ञापकात् पाक्षिको वस्वादेशः ।**

**अन्यतरस्यांग्रहणं वा तत्रानुवर्तते—'तुह्योस्तातङाशिष्यन्यतरस्याम्' ( ७.१.३५ ) इति ।**

**प्रज्ञ । वणिक् । उशिक् । उष्णिक् । प्रत्यक्ष । विद्वस् । विदन् । षोडन् । षोडश । विद्या । मनस् । ❀ श्रोत्र शरीरे ❀ ( ग० सू० १५५ )। श्रौत्रम् । ❀ जुह्वत् कृष्णमृगे ❀ ( ग० सू० १५६ )। चिकीर्षत् ।**

**न्यासः**

**प्रज्ञादिभ्यश्च ॥ प्रजानातीति प्रज्ञ इति ।** 'इगुपधज्ञाप्रीकिरः कः' । ननु च यः प्रजानाति तस्य प्रज्ञास्तीति 'प्रज्ञाश्रद्धार्चावृत्तिभ्योऽणः' इति मत्वर्थेनैव णेन सिद्धम्, तत् किमर्थं प्रज्ञाशब्दादण् विधीयत इति ? अस्य चोद्यस्य निराकरणाय स्त्रियां विशेषं दर्शयन्नाह **स्त्री प्राज्ञीत्यादि । विदेः शत्रन्तस्य ग्रहणमिति ।** न तु 'विदेः शतुर्वसुः' इत्यादि ।

**श्रोत्र शरीर इति ।** शरीरे यः श्रोत्रशब्दो वर्त्तते तस्मादण् भवति—श्रौत्रम् । अन्यत्र श्रोत्रम् । **जुह्वदिति ।** जुह्वच्छब्दात् कृष्णमृगे वर्त्तमानादण् भववि—जौह्वतः । जुह्वदित्येवान्यत्र । अन्ये **कृष्ण मृगे** इति पृथक् पठन्ति । कृष्णशब्दादण् भवति मृगेऽभिधेये—कार्ष्णो मृगः, कृष्ण एवान्यत्र । जुह्वच्छब्दादविशेषेणास्मिन् पाठे प्रत्ययः । **सत्वन्त्विति ।** सच्छब्दो यो मतुप्प्रत्ययान्तः सः सत्वानेव सात्वतः ।

प्रज्ञादिरयमाकृतिगणः । तामेवास्याकृतिगणतां बोधयितुमनुक्तसमुच्चयार्थश्चकारः कृतः । तेन कुलाल-

**पदमञ्जरी**

**प्रज्ञादिभ्यश्च ॥ प्रजानातीति प्रज्ञ इति ।** 'इगुपधज्ञाप्रीकिरः कः' इति कः । अथ किमर्थमुभयं क्रियते, इह च प्रज्ञशब्दः पठ्यते, मत्वर्थे च प्रज्ञाशब्दाण्णो विधीयते, यः प्रजानाति तस्य प्रज्ञाऽस्ति, यस्य च प्रज्ञास्ति स प्रजानातीति, ततश्चान्यतरेणैव प्राज्ञ इति सिद्धम् ?–इत्याशङ्क्य स्त्रियां विशेष इति दर्शयति–**स्त्रियामित्यादि ।**

**विदन्, षोडन्निति** विभक्त्यन्तयोः पाठ एकत्वविवक्षार्थः । वैचित्र्यार्थः इत्यन्ये । **श्रोत्र शरीरे ।**[1] यः श्रोत्रशब्दः शरीरे वर्त्तते, असौ अणमुत्पादयति –श्रौत्रम् । अन्यत्र श्रोत्रमिन्द्रियम् । **जुह्वत्कृष्णमृग इति ।** कृष्णमृगे वर्त्तमानाज्जुह्वच्छब्दादण्प्रत्ययो भवति—जौह्वतः कृष्णमृगः । अन्यत्र जुह्वत् । अपर आह – कृष्णमृगे वर्त्तमानात्कृष्णशब्दादण्प्रत्ययो भवति—कार्ष्णो मृगः । अन्यत्र तु कृष्णाः, जुह्वच्छब्दात्त्वविशेषेणाण्भवतीति ।

**भावबोधिनी**

प्रजानाति—इस अर्थ में [ प्रज्ञा + क = अ, आलोप— ] 'प्रज्ञः' है । प्रज्ञ— आदि प्रातिपादिकों से स्वार्थ में अण् प्रत्यय होता है । उदा०—प्रज्ञ एव प्राज्ञः । स्त्री—प्राज्ञी । [ प्राज्ञ + ङीप् ] किन्तु जिसके पास प्रज्ञा है वह स्त्री 'प्राज्ञा' कही जाती है । 'प्रज्ञाश्रद्धाऽर्चावृत्तिभ्योऽणः' [ सूत्र से मत्वर्थीय अण् होता है । ]

विदन्—यह पठित है । विद् इसका शत्रन्तरूप गृहीत है, 'विदेः शतुर्वसुः' इस ज्ञापक के आधार पर विकल्प से वसु आदेश होता है ।

अथवा उसमें 'अन्यतरस्याम्' की अनुवृत्ति होती है—"तुह्योस्तातङाशिष्यन्यतरस्याम् ।"

[ इस गण में पठित शब्द— ] प्रज्ञ । वणिक् । उशिक् । उष्णिक् । प्रत्यक्ष । विद्वस् विदन् । षोडन् । षोडश । विधा । मनस् । ❀ शरीर अर्थ में वर्तमान श्रोत्र शब्द । ❀ श्रौत्रम् । ❀ कृष्णमृग में वर्तमान जुह्वत् शब्द ❀ [ जौ-

---

१. 'शारीरे' इति काशिकापाठः कुत्रचित् ।

चोर । शक । योध । वक्षस्[1] । धूर्त्त । वस् । एत् । मरुत् । क्रुङ् । राजा । सत्वन्तु । दशार्ह । वयस् । आतुर[2] । रक्षस् । पिशाच । अशनि । कार्षापण । देवता । बन्धु । प्रज्ञादिः ॥

२३१९. मृदस्तिकन् ॥ ३९ ॥ ( २१०७ )

मृच्छब्दात्स्वार्थे तिकन् प्रत्ययो भवति । विकल्पः सर्वत्रानुवर्तते । मृदेव मृत्तिका ॥

२३२०. सस्नौ प्रशंसायाम् ॥ ४० ॥ ( २१०८ )

प्रशंसोपाधिकेऽर्थे वर्त्तमानाद् मृच्छब्दात् स, स्न—इत्येतौ प्रत्ययौ भवतः । रूपपः ( ५.३.६५ ) अपवादः । प्रशस्ता मृद् मृत्सा । मृत्स्ना ।

नित्यश्चायं प्रत्ययः; उत्तरसूत्रेऽन्यतरस्यांग्रहणात् ॥

२३२१. वृकज्येष्ठाभ्यां तिल्तातिलौ चच्छन्दसि ॥ ४१ ॥ ( ३५०४ )

'प्रशंसायाम्' इत्येव । वृकज्येष्ठाभ्यां प्रशंसोपाधिकेऽर्थे वर्तमानाभ्यां यथासंख्यं तिल्—तातिलौ प्रत्ययौ

न्यासः

कुक्कुटादिभ्योण् सिद्धो भवति ॥ ३८ ॥

मृदस्तिकन् ॥ किमर्थं पुनस्तिकन् विधीयते, न तकन्नेव विधीयेत, नित्यश्च स्त्रीप्रत्ययोऽयम्, तत्र टापि कृते 'प्रत्ययस्थात् कात्' इतीत्वेनैव सिद्धम् ? यत्र तर्हि लुग्भावः क्रियते, तत्र न सिद्धचेत्—पञ्चभिर्मृत्तिकाभिः क्रीतः पञ्चमृत्तिक इति । तत्र हि 'अध्यर्द्धपूर्वद्विगोः' इत्यादिनाऽऽर्हीयस्य ठको लुकि कृते 'लुक् तद्धितलुकि' इति स्त्रीप्रत्ययस्यापि लुक् । तत्र यदि तकन् विधीयते, तदा टापोऽभावादिकारो न श्रूयेत, प्रक्रियागौरवं च स्यात्; इकारस्य शास्त्रान्तरेण विधीयमानत्वात् ॥ ३९ ॥

सस्नौ प्रशंसायाम् ॥ ४० ॥ वृकज्येष्ठाभ्यां तिल्तातिलौ च च्छन्दसि ॥ ४१ ॥

पदमञ्जरी

सत्वन्त्विति । सच्छन्दो मत्वन्त आगतनुम्को गृह्यते, सत्वानेव सात्वतः ॥ ३८ ॥

मृदस्तिकन् ॥ 'प्रत्ययस्थात्' इत्येव सिद्धे तिकन इकारोच्चारणम् यत्रापो लुक् क्रियते तदर्थम्— पञ्चभिर्मृत्तिकाभिः क्रीतः पटः पञ्चमृत्तिक पटः ॥ ३९ ॥

सस्नौ प्रशंसायाम् ॥ उत्तरसूत्रेऽन्यतरस्यांग्रहणादिति । मृच्छब्दस्य सामान्यशब्दत्वात् मृदित्युक्ते प्रशंसाया अनवगमाच्च ।

इह 'प्रशंसायां रूपप्' इत्यस्यानन्तरम्—'वृकज्येष्ठाभ्यां तिल्तातिलौ च छन्दसि, मृदस्सस्नौ, तिकंश्च'

भावबोधिनी

हृतः कृष्णमृगः । ] चिकीर्षत् । चोर । शक । योध । वक्षस् । धूर्त्त । वस् । एत् । मरुत् । क्रुङ् । राजा । सत्वन्तु । दशार्ह । वयस् । आतुर । रक्षस् । पिशाच । अशनि । कार्षापण । देवता । बन्धु । प्रज्ञादि हैं । [ इन मूल शब्दों का और स्वार्थिक अण् प्रत्ययान्तों का प्रयोग समान अर्थ में ही होता है । ] ॥ ३८ ॥

'मृद्' शब्द से स्वार्थ में तिकन् प्रत्यय होता है । विकल्प की अनुवृत्ति सर्वत्र होती है । उदा०—मृद् एव मृत्तिका । [ मृद् + तिकन्, टाप् ] ॥ ३९ ॥

प्रशंसारूप उपाधि वाले अर्थ में वर्तमान 'मृत्' शब्द से स्वार्थ में स और स्न—ये दो प्रत्यय होते हैं । ये रुपप् के अपवाद हैं । उदा०—प्रशस्ता मृत्—इस अर्थ में मृत्सा, मृत्स्ना ।

ये प्रत्यय नित्य हैं क्योंकि अगले सूत्र में 'अन्यतरस्याम्' का ग्रहण किया गया है ॥ ४० ॥

'प्रशंसायाम्' इसकी अनुवृत्ति होती है । प्रशंसा रूप उपाधि वाले अर्थ में वर्तमान (१) वृक और (२) ज्येष्ठ

१. 'वक्षण्' इति पाठा० । २. 'असुर' इति पाठा० ।

भवतश्छन्दसि विषये । रूपपोऽपवादः । वृकतिः ( ऋ० ४.३१.४ ) । ज्येष्ठतातिः ( ऋ० ५.४४.१ ) ॥

२३२२. बह्वल्पार्थाच्छस्कारकादन्यतरस्याम् ॥ ४२ ॥ ( २१०९ )

बह्वर्थादल्पार्थाच्च कारकाभिधायिनः शब्दाच् शस् प्रत्ययो भवति अन्यतरस्याम् । विशेषानभिधानाच्च सर्वं कर्मादिकारकं गृह्यते । बहूनि ददाति—बहुशो ददाति । अल्पं ददाति—अल्पशो ददाति । बहुभिर्ददाति—बहुशो ददाति । अल्पेन—अल्पशः । बहुभ्यः—बहुशः । अल्पाय—अल्पशः । इत्येवमाद्युदाहार्यम् ।

बह्वल्पार्थादिति किम् ? गां ददाति । अश्वं ददाति । कारकादिति किम् ? बहूनां स्वामी । अल्पानां स्वामी ।

अर्थग्रहणात् पर्यायेभ्योऽपि भवति—भूरिशो ददाति । स्तोकशो ददाति ।

न्यासः

बह्वल्पार्थाच्छस्कारकादन्यतरस्याम् ॥ इत्येवमादीनीति । आदिशब्देनापादानाधिकरणविषयोदाहरण-परिभाषाग्रहणम्—बहुभ्यो ह्यत्रागच्छन्ति बहुश आगच्छतीति, अल्पश आगच्छतीति । बहुशो निदधाति ।

बहूनां स्वामीत्यत्र शेषस्य विवक्षितकारकाभिधायी बहुशब्दो न भवति ।

अर्थग्रहणादित्यादि । असति ह्यर्थग्रहणे बह्वल्पशब्दाभ्यामेव प्रत्ययः स्यात् । तस्मिंस्तु सति पर्यायेभ्योऽपि भवति ।

पदमञ्जरी

इति वक्तव्यम् ? तथा तु न कृतमित्येव ॥ ४० ॥ ४१ ॥

बह्वल्पार्थाच्छस्कारकादन्यतरस्याम् ॥ कारकाभिधायिनः शब्दादिति । पञ्चकपक्षे प्रातिपदिकात्, त्रिकपक्षे सुबन्तात् । गहादिषु 'मध्यमध्यमं चाण्चरणे' ( ग० सू० ९९ ) इत्यविशेषाभिधानेऽपि पृथिवीमध्यस्य मध्यमभाव इत्युक्तम्, इह तु न तथेत्याह—अविशेषाभिधानाच्चेति ।[1] एवमादीति । आदिशब्देनापादानाधि-करणयोरुदाहरणपरिग्रहः—बहुभ्य आगच्छति बहुश आगच्छति; बहुषु निदधाति बहुशो निदधाति; एवमल्पेभ्यो-ऽल्पशः, अल्पेष्वल्पशः ।

बहूनां स्वामीति । शेषे षष्ठीविधानान्न कारकाभिधायी बहुशब्दः ।

पर्यायेभ्योऽपीति । अपिशब्दाद्विशेषेभ्योऽपि तत्र वृत्तौ पर्यायस्योदाहरणम् । विशेषस्य तु—त्रिशो ददावीति, वीप्सायां तूत्तरेण सिद्धम् ।

भावबोधिनी

शब्दों से क्रमशः—(१) तिल् और (२) तातिल् प्रत्यय होते हैं वेदविषय में । ये भी रूपप् के अपवाद हैं । उदा०—[ प्रशस्तः वृकः—इस अर्थ में ] वृकतिः । ज्येष्ठतातिः । [ प्रशस्तः ज्येष्ठः—यह अर्थ है । ] ॥ ४१ ॥

बहुत अर्थ वाले तथा अल्प अर्थ वाले कारक के अभिधायक शब्द से शस् प्रत्यय विकल्प से होता है । किसी विशेष का कथन न होने के कारण कर्म आदि सभी कारकों का ग्रहण होता है । उदा०—बहूनि ददाति = बहुशः ददाति । [ यहाँ कर्म में शस् है । ] अल्पं ददाति = अल्पशः ददाति । बहुभिः ददाति = बहुशः ददाति । [ यहाँ करण में शस् है । ] अल्पेन = अल्पशः । बहुभ्यः = बहुशः । अल्पाय = अल्पशः । [ यहाँ सम्प्रदान में शस् है । ] इसी प्रकार अन्य भी उदाहरण देने चाहिये ।

बहुत और अल्प अर्थ वाले से—इसका क्या फल है ? गां ददाति । अश्वं ददाति । [ यहाँ प्रत्यय नहीं होता है । ] कारकवाचक से—इसका क्या फल है ? बहूनां स्वामी, अल्पानां स्वामी । [ यहाँ सम्बन्धार्थक षष्ठी में कारकार्थ नहीं है अतः प्रत्यय नहीं होता है । ]

अर्थ—इसका ग्रहण होने से पर्याय शब्दों से भी होता है—भूरिशः ददाति, अल्पशः ददाति ।

---

१. 'विशेषनभिधानाच्च' इति काशिकापाठः ।

❀ बह्वल्पार्थान्मङ्गलामङ्गलवचनम् ❀ ( म० भा० ५.४.४२ वा० १ )। यत्र मङ्गलं गम्यते तत्रायं प्रत्यय इष्यते। बहुशो ददातीत्याभ्युदयिकेषु कर्मसु। अल्पशो ददातीत्यनिष्टेषु कर्मसु॥

## २३२३. संख्यैकवचनाच्च वीप्सायाम्॥ ४३॥ ( २११० )

संख्यावाचिभ्यः प्रातिपदिकेभ्य एकवचनाच्च वीप्सायां द्योत्यायां शस् प्रत्ययो भवति अन्यतरस्याम्। द्वौ द्वौ मोदकौ ददाति द्विशः। त्रिशः। एकवचनात्खल्वपि—कार्षापणं कार्षापणं ददाति कार्षापणशः। माषशः। पादशो ददाति।

एकोऽर्थ उच्यते येन तदेकवचनम्। कार्षापणादयश्च परिमाणशब्दा वृत्तावेकार्था एव भवन्ति।

### न्यासः

**बह्वल्पार्थादित्यादि**। बह्वल्पार्थात् प्रत्यये विधातव्ये मङ्गलवचनं कर्त्तव्यम्। मङ्गलवचनेन चेह व्याख्यानमुच्यते, व्याख्यायते तेनेति कृत्वा। कथं पुनः कारणस्य मङ्गलवचनं कर्त्तव्यम्? इत्याह—**तत्रेत्यादि**। तत्रेदं व्याख्यानम्—इह प्रशंसाग्रहणमनुवर्त्तते, प्रशंसायां प्रत्ययेन भवितव्यम्, तच्चाभ्युदयिकेषु। बहुशो ददाति, नाल्पशः - एवं प्रशंसा भवति। इदमेव वचनमाभ्युदयिकेषु बहुशो लोके दानविषयेषु; अन्यथा तेनास्य ग्रहणानुवृत्तेर्मङ्गले गम्यमाने प्रत्ययो न भवतीति।

अथ वा—इहापीतिकरणानुवृत्तेर्मङ्गल एव भवति, नान्यत्रेति। शसः सकारस्येत्संज्ञा न भवति; प्रयोजनाभावात्॥ ४२॥

**संख्यैकवचनाच्च वीप्सायाम्**॥ 'नित्यवीप्सयोः' इति द्विर्वचनेन तदपवादः शस्विधीयते।

**एकोऽर्थ उच्यते येन तदेकवचनमिति**। एतेन सहार्थैकवचनान्तादित्यभिप्रायः। ननु चान्वर्थग्रहणेन च

### पदमञ्जरी

**आभ्युदयिकेष्विति**। अभ्युदयप्रयोजनेषु अग्न्याधेयादिषु अनिष्टेषु भयादिनिमित्तेषु दानेषु। प्रायिकं चैतन्मङ्गल वचनम्, अन्यत्रापि हि दृष्यते। 'अपेतापोढमुक्तपतितापत्रस्तैरल्पशः' इति कारकत्वं समासक्रियां प्रति पञ्चम्याः कर्मत्वात्तदभिधायित्वाच्चाल्पशब्दस्य द्रष्टव्यम्। उदीरितं च—'अल्पा पञ्चमी समस्यते' ( काशिका २.१.३८ ) इति॥ ४२॥

**संख्यैकवचनाच्च वीप्सायाम्**॥ 'नित्यवीप्सयोः' इति द्विर्वचने प्राप्ते तदपवादः शस्विधीयते। कथं तर्हि 'एकैकशः पितृसंयुक्ताम्' इति शस्द्विर्वचनयोः सहप्रयोगः? छन्दोवदृषयः कुर्वन्ति।

**यद्यत्र** परिभाषिकस्यैकवचनस्य ग्रहणं स्यात्-सर्वेभ्यो ब्राह्मणेभ्यो घटंघटं ददातीत्यत्रापि स्यात्; घटशब्दस्यैकवचनान्तत्वादित्यालोच्यान्वर्थस्यैकवचनस्यात्र ग्रहणमित्याह—**एकोऽर्थ उच्यते येनेति**। नन्वेवमपि

### भावबोधिनी

❀ मङ्गलवचन में बहु से और अमङ्गलवचन में अल्प से शस् प्रत्यय होता है। ❀ जहाँ मङ्गल अर्थ प्रतीत होता है वहाँ 'बहु' शब्द से यह प्रत्यय इष्ट है—बहुशः ददाति—यह आभ्युदयिक कर्मों में होता है। अल्पशः ददाति—वह अनिष्ट कर्मों में होता है॥ ४२॥

संख्यावाची प्रातिपदिकों से और एकवचन से वीप्सा = व्याप्त करने की इच्छा द्योत्य रहने पर शस् प्रत्यय विकल्प से होता है। उदा०—द्वौ दौ मोदकौ ददाति—द्विशः ददाति। [ त्रीन् तीन् मोदकान् ददाति—] त्रिशः ददाति। एकवचनान्त से भी होता है—कार्षापण कार्षापणं ददाति—कार्षापणशः ददाति, माषशः ददाति। पादशः ददाति।

एक अर्थ जिसके द्वारा कहा जाता है वह—एकवचन है। कार्षापण आदि परिमाणवाचक शब्द वृत्ति ( तद्धितादि ) में एक अर्थ वाले ही हो जाते हैं।

**संख्यैकवचनादिति किम् ? घटं घटं ददाति । वीप्सायामिति किम् ? द्वौ ददाति । कार्षापणं ददाति । 'कारकात्' इत्येव – द्वयोर्द्वयोः स्वामी । कार्षापणस्य कार्षापणस्य स्वामी ॥**

**न्यासः**

प्राप्नोत्येव, भवति ह्येकवचनम्, एकार्थवृत्तित्वात् ? नैष दोषः, न हि वाक्यस्यैकार्थता प्रत्ययविधावाश्रीयते । किं तर्हि ? वृत्तिस्था । न च वृत्तौ निवृत्तायां विभक्तौ घटादय एकशब्दा एकवचनान्ता भवन्ति; जातिशब्दत्वात् । जातिशब्दा हि नैकस्यामेकजात्याधारभूतायां व्यक्तौ वर्तन्ते, किं तर्हि ? अनेकस्यामपि । तदेषामेकार्थवृत्तित्वं वाक्य एव विभक्तिसंख्याश्रयणे प्रतीयते, न वृत्तौ; विभक्तेर्निवृत्तत्वात् । **कार्षापणादयश्चेत्यादि** । 'कार्षापणादयः शब्दाः परिमाणाः' इत्युक्तम्, परिमाणस्य विशेषस्य वाचका इत्यर्थस्याधिक्ये तेषां वृत्तिर्न सम्भवति । वाक्ये तु तेषां प्रयोगेऽनेकार्थप्रतीतिः—कार्षापणौ, कार्षापणा इति, सा विभक्तिर्न तेभ्यः । वृत्तौ तु सा विभक्तिर्नास्तीति तेनैकार्था भवन्ति । वृत्तिस्थैकार्थता प्रत्ययविधावाश्रीयते, न वाक्यस्येत्युक्तमेतत् ।

**घटं घटं ददातीति** । घटादयः शब्दा वृत्तावेकार्था न भवन्ति । एतच्च प्रतिपादितम् । यदान्वर्थाः प्रकरणादिसहिता घटादयोऽपि जातिशब्दा एकार्था भवन्ति, तदा भवितव्यमेव शसा; अन्यथा 'जश्शसोः शिः' इत्यत्र यद् वक्ष्यति—'जसा सहचरितस्य शसो ग्रहणमित्यत्र न भवति—कुडवशो ददाति, शतशः प्रविशति' इति, तद्व्याहन्यते; कुडवादिशब्दस्यापि जातिशब्दत्वात् ॥ ४३ ॥

**पदमञ्जरी**

स दोषस्तदवस्थ एव, एकवचनान्तस्यैकार्थत्वात् ? इत्यत आह—**कार्षापणादयश्चेति** । अनेन वृत्तिस्थैकार्थताऽऽश्रीयते, न वाक्यगतेति दर्शयति । वृत्तौ न घटादयो जातिशब्दा अनेकार्था भवन्ति, जातियोगस्यैकानेकसाधारणकः त्वात्; किन्त्वभेदैकत्वसंख्यामुपाददते; कार्षापणादयस्तु परिमाणवचना अक्तपरिमाणमर्थमाचक्षाणा न मात्रयापि न्यूनाधिकभावे भवन्ति । वाक्ये तु कार्षापणौ, कार्षापणा इत्येकशेषबलात् अक्षाः पादाः, माषा इतिवदेकजात्यन्वयरहितानेकार्थप्रतीतिः । वृत्तौ तु विभक्त्यैकशेषयोरभावात्स एव केवलोऽक्तपरिमाणोऽर्थोऽवतिष्ठते । अतः कार्षापणादय एवोदाहरणमिति **जयादित्यो** मन्यते ।

**वामनस्तु** 'जश्शसोः शिः' ( ७. १.२० ) इत्यत्रोदाहरिष्यति—'जसा सहचरितस्य शसो ग्रहणादिह न भवति-कुण्डशो ददाति, वनशः प्रविशति' इति । स मन्यते-जातिशब्दोऽपि यदा अर्थप्रकरणादिना वृत्तावेकार्थीभवति, भवत्येव तदा ततोऽपि शसिति —द्वयोर्द्वयोः स्वामीति । कथं तर्हि —

अव्रतानामविद्यानां जातिमात्रोपजीविनाम् ।
सहस्रशः समेतानां परिषत्त्वं न विद्यते ॥ इति ?

कथं च न स्याद् ? वीप्साया अभावाद्, अकारकत्वाद्, अनेकवचनत्वाच्च, अयं ह्यत्रार्थः—एवम्भूतानां ब्राह्मणां सहस्रस्यापि परिषत्त्वं न विद्यत इति ? नायमत्रार्थो यथा त्वमात्थ, किं तर्हि ? सहस्रं सहस्रं ये समेतास्तेषामप्येवम्भूतानां परिषत्त्वं नास्तीति, तत्र समवायक्रियायां कर्तृत्वाद्वीप्सायाश्चाभावाच्छस् भवति ॥ ४३ ॥

**भावबोधिनी**

संख्यावाचक से और एकवचन से—इसका क्या फल है ? घटं घटं ददाति । [ यहाँ नहीं होता है । ] वीप्सा में—इसका क्या फल है ? द्वौ ददाति, कर्षापणं ददाति [ यहाँ नहीं होता है । ]

कारकार्थवाचक से ही—[ अतः यहाँ नहीं होता है—] द्वयोः द्वयोः स्वामी । कार्षापणस्य कार्षापणस्य स्वामी । [ यहाँ सम्बन्धार्थिका षष्ठी है । ] ॥ ४३ ॥

## २३२४. प्रतियोगे पञ्चम्यास्तसिः ॥ ४४ ॥ ( २१११ )

**प्रतिना कर्मप्रवचनीयेन योगे या पञ्चमी विहिता तदन्तात्तसिः प्रत्ययो भवति। प्रद्युम्नो वासुदेवतः प्रति। अभिमन्युरर्जुनतः प्रति।**

**वाग्रहणानुवृत्तेर्विकल्पेन भवति—वासुदेवात्, अर्जुनादित्यपि भवति।**

**❀ तसिप्रकरणे आद्यादिभ्य उपसंख्यानम् ❀ ( म० भा० ५.४.४४ वा० १ )। आदौ आदितः। मध्यतः। पार्श्वतः। पृष्ठतः। आकृतिगणश्चायम् ॥**

## २३२५. अपादाने चाहीयरुहोः ॥ ४५ ॥ ( २११२ )

**अपादाने या पञ्चमी तस्याः पञ्चम्या वा तसिः प्रत्ययो भवति। तच्चेदपादानं हीयरुहोः सम्बन्धि न भवति। ग्रामत आगच्छति, ग्रामात्। चोरतो बिभेति, चोरात्। अध्ययनतः पराजयते, अध्ययनात्।**

### न्यासः

**प्रतियोगे पञ्चम्यास्तसिः ॥ प्रद्युम्नो वासुदेवतः प्रतीति।** 'प्रतिनिधिप्रतिदाने च यस्मात्' इति पञ्चमी, ततस्तसिः। तसेरिकारो मुखसुखार्थः। ननु च सकारस्येत्संज्ञा मा भूदित्येवमर्थः स्यात्? नैतदस्ति; प्रयोजनाभावादेव हि तस्येत्संज्ञा न भविष्यति।

**आद्यादिभ्य उपसंख्यानमिति।** आद्यादिभ्यस्तसेरुपसंख्यानमिति प्रतिपादनं कर्त्तव्यमित्यर्थः। तत्रेदं प्रतिपादनम्—उत्तरसूत्रे चकारोऽनुक्तसमुच्चयार्थः, तेन आद्यादिभ्यस्तसिर्भविष्यतीति। अनुक्तसमुच्चायार्थत्वे चकारस्य 'तस्यादित उदात्तमर्धह्रस्वम्' इति निर्देशः ॥ ४४ ॥

**अपादाने चाहीयरुहोः ॥ ग्रामादागच्छतीति** 'ध्रुवमपायेऽपादानम्' इत्यपादानसंज्ञा। **चौरेभ्यो बिभेतीति।** 'भीत्रार्थानां भयहेतुः' इति। **अध्ययनात् पराजयत इति।** 'पराजेरसोढः' इति।

### पदमञ्जरी

**प्रतियोगे पञ्चम्यास्तसिः ॥ प्रतिना कर्मप्रवचनीयेनेत्यादि।** 'प्रतिः प्रतिनिधिप्रतिदानयोः' इति कर्मप्रवचनीयसंज्ञा, 'प्रतिनिधिप्रतिदाने च यस्मात्' इति पञ्चमी।

**आद्यादिभ्य उपसंख्यानमिति।** 'तस्यादित उदात्तमर्धह्रस्वम्' इत्येतदत्र लिङ्गम् ॥ ४४ ॥

**अपादाने चाहीयरुहोः ॥ सार्थाद्धीयत इति।** 'ओहाक्त्यागे', ( धा० पा० १०९० ) कर्मण्यात्मनेदम्, यक्, घुमास्थादिसूत्रेणत्वम्। कथं पुनः कर्मसंज्ञा, यावता 'कर्त्तुरीप्सिततमं कर्म'? न चात्र सार्थः कर्तृसंज्ञकः, किन्तु

### भावबोधिनी

कर्मप्रवचनीय-संज्ञक 'प्रति' के योग में जिस पञ्चमी का विधान है उस पञ्चम्यन्त से 'तसि' प्रत्यय होता है। उदा०—प्रद्युम्नो वासुदेवतः प्रति। अभिमन्युः अर्जुनतः प्रति। [ इन उदाहरणों में "प्रतिः प्रतिनिधिप्रतिदानयोः" ( पा० सू० १।४।९१ ) से प्रति की कर्मप्रवचनीय संज्ञा और "प्रतिनिधिप्रतिदाने च यस्मात्" ( पा० सू० २।३।११ ) से पञ्चमी विभक्ति होती है। यहाँ प्रतिनिधि अर्थ में पञ्चम्यन्त 'वासुदेव' और 'अर्जुन' से 'तसि' प्रत्यय होता है। इस प्रत्यय के करने पर अव्यय संज्ञा हो जाने से सभी विभक्तियों में एक ही रूप रहता है। ]

वा-ग्रहण की अनुवृत्ति के कारण विकल्प से प्रत्यय होता है—वासुदेवात्, अर्जुनात्—ये भी होते हैं।

❀ तसि के प्रकरण में 'आदि' आदि शब्दों से भी कहना चाहिये ❀ उदा०—आदौ—इसमें—आदितः। [ मध्ये = ] मध्यतः। [ पार्श्वे = ] पार्श्वतः। [ पृष्ठे = ] पृष्ठतः। और यह आद्यादिगण आकृतिगण है। [ अतः अन्य शब्दों से भी तसि होता है। ] ॥ ४४ ॥

अपादान में जो पञ्चमी है उस पञ्चमी का तसि प्रत्यय विकल्प से होता है, यदि वह अपादान 'हीय' और 'रुह्' से सम्बद्ध न हो। उदा०—ग्रामतः आगच्छति, ग्रामात्। चोरतो बिभेति, चोरात्। अध्ययनतः पराजयते, अध्ययनात्। [ वैकल्पिक तसि होने से पक्ष में पञ्चमी भी रहती है। ]

**अहीयरुहोरिति किम् ? सार्थाद्धीयते । पर्वतादवरोहति ।**

**हीयते इति विकारनिर्देशो जहातेः प्रतिपत्त्यर्थः, जिहीतेर्मा भूत्—भूमित उज्जिहीते, भूमेरुज्जिहीते ।**

**न्यासः**

**सार्थाद्धीयत इति ।** 'ओहाक् त्यागे', लः कर्मण्यात्मनेपदम्, यक्, 'घुमास्था' इत्यादिसूत्रेणेत्त्वम् । ननु चाकर्तृकं कर्म नास्ति, 'कर्तुरीप्सिततमं कर्म' इति वचनात्; सार्थश्चात्र न कर्म, किं तर्हि ? अपादानम् ? नैष दोषः; कर्मसंज्ञायां हि कर्तृग्रहणं स्वातन्त्र्योपलक्षणार्थम् । कुत एतत् ? क्रियाविशेषणत्वात् । कर्त्तरि च द्वयमस्ति—स्वातन्त्र्यम्, कर्तृसंज्ञा च । तत्र संज्ञायाः क्रियाविशेषणत्वं नोपपद्यते । यद्धि तस्याः कारणं तेनैव सा युक्ता विशेषपविर्णभ्यतुम् । न च तस्याः कर्तृसंज्ञा कारणम्, किं तर्हि ? स्वातन्त्र्यम्; तस्य कर्तृस्वरूपत्वात् । भवति क्रियां प्रति यदा कारणभावः, कर्मणा च नैव क्रिया विशेष्यते, तदायमर्थो भवति—स्वातन्त्र्यस्य क्रियाया यदीप्सिततमं तत्कर्मसंज्ञं भवतीति । सार्थस्यापि देवदत्तेन तस्याभिधानम् । तस्य तस्मिंस्त्वसत्यपादानमपि न स्यादेव । तस्याद्देवदत्तः कर्म । जहातेरेव सार्थस्यापादानेन भवितव्यम् । तत्रापादानस्यापि सतः सार्थस्य हानक्रियायां यत् स्वातन्त्र्यं तत्क्रियाविवक्षयैव देवदत्तस्य कर्मसंज्ञा भवति ।

अथ किमर्थं यका निर्देशः क्रियते, न 'ह्रारुहोः' इत्येवोच्येत ? इत्यत आह—**विकारनिर्देश इत्यादि ।** विक्रियते तस्मिन् रूपमिति विकारः, स पुनरिह यगेव—हीयेति । तत्र हि घुमास्थादिसूत्रेणकारस्य विधानाद् विक्रियते जहातेः रूपम् । अथ वा—विकृतिः=विकारः, तेन विकारेण निर्देशः । कथं नाम ? जहातेः प्रतिपत्तिर्यथा स्यात्, जिहीतेर्मा भूदित्येवमर्थम्; अन्यथा हि जिहीतेरपि ग्रहणं स्याद् । विकारनिर्देशे तु यस्येदृशं रूपं तस्यैव ग्रहणं भवतीति न भवतीत्येष प्रसङ्गः । **भूमित उज्जिहीत इति ।** जिहीतेरिहाग्रहणात् तत्सम्बधिनोऽपादानाद् भवत्येव । हाङो ङित्त्वादात्मनेपदम्, 'भृञामित्' इत्यभ्यासस्येत्त्वम्, 'ई हल्यघोः' इति धातोरीत्त्वम् ।

**कथं मन्त्रो हीनः स्वरतो वर्णतो वेति ?** यदाह—जहातेः प्रतिषेधः क्रियते, ततस्तस्मिन्न प्राप्नोतीत्यभिप्रायः । **नैषा पञ्चमीति ।** पञ्चम्या अविहितत्वात्, उपचारेण तसिः, नैषा पञ्चमीत्युक्तम् । **किं तर्हि ? तृतीयेति ।**

**पदमञ्जरी**

ध्रुवत्वेन विवक्षितत्वादपादानसंज्ञकः । मा भूत्कर्तृसंज्ञा, जहाति तावत्सार्थो देवदत्तं यदि न जह्यादपाय एव न संवर्त्तेत । स्वतन्त्र्योपलक्षणं च कर्मसंज्ञायां कर्तृग्रहणम्, कर्तृसंज्ञा भवतु मा वा भूत् । एवं चापादनस्यापि सतः सार्थस्य हाने यत्स्वातन्त्र्यं वास्तवम्, तदाश्रया कर्मसंज्ञा भवति । यद्येवम्, माषेष्वश्वं बध्नातीत्यत्र कर्मणोऽप्यश्वस्य वस्तुतो यद्भक्षणे स्वातन्त्र्यं तदाश्रया माषाणां कर्मसंज्ञा प्राप्नोति, तस्मात्कर्मकर्त्तर्यत्र लकारः । कथमिह जहातिरपगमनायां वर्त्तते ? देवदत्तं सार्थो जहाति, अपगमयतीत्यर्थः । एषैव च सार्थस्यापगमना यत् क्षुदुपघातादिना देवदत्तस्यापगमने तत्समर्थाचरणम्, यदा तु क्षुधादिना स्वयमेवापगच्छति तदा कर्मकर्तृत्वम्, ततश्च हीयत इति । कोऽर्थः ? स्वयमेवापगच्छतीत्यर्थः । पुनः 'कुतो हीयते ?'—इत्यपेक्षायां सार्थेन सम्बन्धः ।

**विकारनिर्देश इति ।** विकृतिर्विकारः, इह तु तद्धेतुत्वाद्यगभिप्रेतः । तत्र हि घुमास्थादिसूत्रेणेत्वविधानाद्धातुरूपं विक्रियते । यका निर्देशः–यस्य यकीत्वमस्ति, तस्य ग्रहणार्थमित्यर्थः । **जिहीतेरिति ।** श्तिपो ङित्त्वाभावादीत्वानुपपत्तेर्जिहातेरिति पठितव्यम् । तिङन्तानुकरणं वा जिहीतेरिति द्रष्टव्यम् ।

**भावबोधिनी**

'हीय' और 'रुह' से सम्बद्ध न हो—इसका क्या फल है ? सार्थाद् हीयते । पर्वताद् अवरोहति । [ यहाँ 'तसि' नहीं होता है । ]

'हीयते' यह विकार का निर्देश इस लिये है कि जहाति का ज्ञान हो सके, जिहीते का न हो—भूमित उज्जिहीते, भूमेरुज्जिहीते ।

कथम् 'मन्त्रो हीनः स्वरतो वर्णतो वा' ( पा० शि० ५२ ) इति ? नैषा पञ्चमी; किं तर्हि ? तृतीया। स्वरेण वर्णेन वा हीन इत्यर्थः ॥

२३२६. अतिग्रहाव्यथनक्षेपेष्वकर्तरि तृतीयायाः ॥ ४६ ॥ ( २११३ )

अतिक्रम्य ग्रहः = अतिग्रहः। अचलनम् = अव्यथनम्। क्षेपः = निन्दा। अतिग्रहादिविषये या तृतीया तदन्ताद्वा तसिः प्रत्ययो भवति, सा चेत् कर्तरि न भवति। वृत्तेनातिगृह्यते वृत्ततोऽतिगृह्यते। चारित्रेणातिगृह्यते चारित्रतोऽतिगृह्यते। सुष्ठु वृत्तवानन्यानतिक्रम्य वृत्तेन गृह्यत इत्यर्थः।

अव्यथने—वृत्तेन न व्यथते वृत्ततो न व्यथते। चारित्रेण न व्यथते चारित्रतो व्यथते। वृत्तेन न चलतीत्यर्थः।

क्षेपे—वृत्तेन क्षिप्तो वृत्ततः क्षिप्तः। चारित्रेण क्षिप्तः न चारित्रतः क्षिप्तः। वृत्तेन निन्दित इत्यर्थः।

अकर्तरीति किम् ? देवदत्तेन क्षिप्तः ॥

न्यासः

अत्रापि तृतीयाया विहितत्वात् तृतीयेत्युक्तस्तसिः। तेनेतत् सूचयति—नायमिह तसिरनेन सूत्रेण पञ्चम्या विहितः, किं तर्हि ? 'अतिग्रहाव्यथनक्षेपेष्वकर्त्तरि तृतीयायाः' इत्यनुवर्तमाने 'हीयमानपापयोगाच्च' इति तृतीयाया इति। सा च तृतीया हेतौ करणे वा द्रष्टव्या ॥ ४५ ॥

अतिग्रहाव्यथनक्षेपेष्वकर्त्तरि तृतीयायाः ॥ अतिक्रम्येति। अनेनातिशब्दोऽत्रातिक्रमे वर्तत इति दर्शयति। अचलनमव्यथनमिति। 'व्यथ भलचलनयोः' इति पठ्यते, तस्येह चलने वृत्तिमाचष्टे। वृत्तेनेति हेतौ करणे वा तृतीया ॥ ४६ ॥

पदमञ्जरी

नैषा पञ्चमीति। यदन्तात्तसिः, नैषा पञ्चमीत्यर्थः। किं तर्हि तृतीयेति। हेतौ, करणे वा तृतीया, तदन्ताद् 'हीयमानपापयोगाच्च' इति तसिरित्यर्थः। स्वरेण, वर्णेन वा विवक्षितादर्थाद्धीन इत्यर्थः सम्पद्यते ॥ ४५ ॥

अतिग्रहाव्यथनक्षेपेष्वकर्तरि तृतीयायाः ॥ अतिक्रम्य ग्रहोऽतिग्रह इति। अतिशब्दोऽत्रातिक्रमणे वर्त्तते इति दर्शयति। अतिशब्दो हि ससाधनेऽप्यतिक्रमणे दृष्टः, तद्यथा—'तस्माद्ब्राह्मणे राजन्यवानत्यन्यं ब्राह्मणम्' इति, 'न वै देवा नमस्कारमति' इति च। तेन तस्यातिक्रमणमात्रे वृत्तिर्न सम्भवति। वृत्तेनातिगृह्यत इति। बहुष्वासीनेष्वन्यातिक्रमेणायमसाविति विज्ञायत इत्यर्थः, तत्र वृत्तं कारणम्। चारित्रेणेति। 'चरेर्वृत्ते ह्रस्वश्च वा' ( द० उ० ८.९.२ ) इति णित्रन्प्रत्ययः–चरित्रम्, चारित्रम् ॥ ४६ ॥

भावबोधिनी

तब 'मन्त्रो हीनः स्वरतो वर्णतो वा' यहाँ कैसे तसि होता है ? यह पञ्चमी नहीं है, तो क्या है ? तृतीया है। स्वर से अथवा वर्ण से हीन—यह अर्थ है ॥ ४५ ॥

अतिक्रमण करके ग्रह = अतिग्रह है। अचलन = अव्यथन है। क्षेप = निन्दा है। अतिग्रह आदि के विषय में जो तृतीया होती है, तदन्त से विकल्प से 'तसि' प्रत्यय होता है, यदि वह तृतीया कर्ता अर्थ में न हो। उदा०—वृत्तेन अतिगृह्यते = वृत्ततोऽवगृह्यते। चारित्रेण अतिगृह्यते = चारित्रतः अतिगृह्यते। अच्छे आचरण वाला पुरुष अन्य लोगों का अतिक्रमण करके गृहीत = ज्ञात होता है।

अव्यथन में—वृत्तेन न व्यथते, वृत्ततो न व्यथते। चारित्रेण न व्यथते चारित्रतः न व्यथते। आचरण से कभी नहीं डिगता है।

क्षेप में—वृत्तेन क्षिप्तः, वृत्ततः क्षिप्तः। चारित्रेण क्षिप्तः, चारित्रतः क्षिप्तः। आचरण से निन्दित—'यह अर्थ है। कर्ता अर्थ में नहीं—इसका क्या फल है ? देवदत्तेन क्षिप्तः। [यहाँ कर्ता में तृतीया है। अतः इससे तसि नहीं है।] ॥४६॥

## २३२७. हीयमानपापयोगाच्च ॥ ४७ ॥ ( २११४ )

'अकर्तरि तृतीयायाः' ( ५.४.४६ ) इत्येव। हीयमानेन पापेन च योगो यस्य तद्वाचिनः शब्दात्परा या तृतीया विभक्तिरकर्तरि तदन्ताद्वा तसिः प्रत्ययो भवति। वृत्तेन हीयते वृत्ततो हीयते। चारित्रेण हीयते चारित्रतो हीयते। पापयोगात्—वृत्तेन पापः वृत्ततः पापः। चारित्रेण पापः चारित्रतः पापः।

क्षेपस्य चाविवक्षायां तत्त्वाख्यायामिदमुदाहरणम्। क्षेपे हि पूर्वेणैव सिद्धम्।

अकर्तरीत्येव—देवदत्तेन हीयते॥

## २३२८. षष्ठ्या व्याश्रये ॥ ४८ ॥ ( २११५ )

नानापक्षसमाश्रयः=व्याश्रयः। व्याश्रये गम्यमाने षष्ठ्यन्ताद् वा तसिः प्रत्ययो भवति। देवा अर्जुनतोऽभवन्। आदित्याः कर्णतोऽभवन्। षष्ठी चात्र पक्षापेक्षैव। अर्जुनस्य पक्षे, कर्णस्य पक्ष इत्यर्थः।

व्याश्रय इति किम्? वृक्षस्य शाखा॥

### न्यासः

हीनमानपापयोगाच्च॥ वृत्तेन हीयते, वृत्ततः पाप इत्यत्र वृत्तस्य हीयमानेन पापेन योगे तृतीया हेतौ, करणे वा।

क्षेपविवक्षावामिदमुदाहरणं कस्मान्न भवति? इत्याह—क्षेपस्य चेत्यादि॥ ४७॥

षष्ठ्या व्याश्रये॥ ४८॥

### पदमञ्जरी

हीयमानपापयोगाच्च॥ उदाहरणेषु वृत्तस्य हीयमानेन पापेन च योगः, हेतौ करणे वा तृतीया, कर्त्ता त्वत्र बन्धुजनादिः। क्षेपस्याविवक्षायामित्यादि। कस्मादेवमित्याह—क्षेपे हीति॥ ४७॥

षष्ठ्या व्याश्रये॥ नानापक्षसमाश्रयो व्याश्रय इति। तथा च 'हेतुमति च' इत्यत्र भाष्ये प्रयोगः—'व्याश्रिताश्च भवन्ति, केचित्कंसभक्ता केचिद्वासुदेवभक्ता' इति। देवा इत्यादि। अर्जुन इन्द्रपुत्रः, कर्णः सूर्यपुत्रः। षष्ठी चात्रेति। पक्षशब्दस्तु तसौ सति न प्रयुज्यते; गतार्थत्वात्, नानापक्षसमाश्रयण एवास्य विधानात्॥ ४८॥

### भावबोधिनी

'अकर्तरि तृतीयायाः' इसकी अनुवृत्ति होती है। हीयमान (=रहित होने वाला) के साथ और पाप के साथ जिसका योग है, उसके वाचक शब्द से परे जो तृतीया कर्तृ भिन्न अर्थ में है, तदन्त ( तृतीयान्त ) से तसि प्रत्यय विकल्प से होता है। उदा०—वृत्तेन हीयते, वृत्ततो हीयते। चारित्रेण हीयते। चारित्रतः हीयते। [ आचरणहीन होता है। ] पाप के योग वाले से उदा०—वृत्तेन पापः, वृत्ततः पापः। चारित्रेण पापः, चारित्रतः पापः। [ चरित्र से पापी ]

क्षेप = निन्दा की अविवक्षा में और तत्त्व = यथार्थता की आख्या में यह उदाहरण है क्योंकि क्षेप में तो पूर्ववर्ती सूत्र से ही सिद्ध है।

कर्तृ भिन्न तृतीयान्त से ही—देवदत्तेन हीयते। [ यहाँ नहीं होता है। ] ॥ ४७॥

नाना पक्षों का समाश्रय = व्याश्रय है। व्याश्रय गम्यमान रहने पर षष्ठ्यन्त से विकल्प से तसि प्रत्यय होता है। उदा०—देवा अर्जुनतः अभवन्। आदित्याः कर्णतः अभवन्। [ देवता अर्जुन के पक्ष में हो गये। आदित्य = सूर्य की सन्तान कर्ण के पक्ष में हो गये। यहाँ तसि होता है। ] यहाँ षष्ठी पक्ष को मान कर ही है। अर्जुन के पक्ष में, कर्ण के पक्ष में—यह अर्थ है।

व्याश्रय में—इसका क्या फल है? वृक्षस्य शाखा। [ यहाँ नहीं होता है। ] ॥ ४८॥

## २३२९. रोगाच्चापनयने ॥ ४९ ॥ ( २११६ )

**रोगः = व्याधिः । तद्वाचिनः शब्दाद्या षष्ठी विभक्तिः तदन्ताद्वा तसिः प्रत्ययो भवति अपनयने गम्यमाने । अपनयनम् = प्रतीकारः, चिकित्सेत्यर्थः । प्रवाहिकातः कुरु । कासतः कुरु । छर्दिकातः कुरु । प्रतीकारमस्याः कुर्वित्यर्थः ।**

**अपनयन इति किम् ? प्रवाहिकायाः प्रकोपनं कुरु ।**

## २३३०. अभूततद्भावे कृभ्वस्तियोगे सम्पद्यकर्तरि च्विः ॥ ५० ॥ ( २११७ )

**कारणस्य विकाररूपेणाभूतस्य तदात्मना भावः = अभूततद्भावः । सम्पद्यतेः कर्त्ता सम्प कर्ता वर्तमानात् सम्पद्यकरि । प्रातिपदिकादभूततद्भावे गम्यमाने कृभ्वस्तिभिर्धातुभियोगे च्विः प्रत्ययो भवति । अशुक्लः शुक्लः**

**न्यासः**

**रोगाच्चापनयने प्रवाहिकात इति ।** प्रवाहिकाशब्दात् प्रतीकारापेक्षया षष्ठी, ततस्तसिः ॥ ४९ ॥

**अभूतद्भावे कृभ्वस्तियोगे सम्पद्यकर्त्तरि च्विः । कारणस्य विकाररूपेणाभूतस्येति ।** कारणम् = प्रकृतिः, तस्यैवोत्तरमवस्थान्तरम् = विकारः । तेन विकाररूपेणाभूतस्याजातस्येत्यर्थः । कुतः पुनरयमभूततद्भावविशेषो लभ्यते ? अभूतग्रहणादिह भावः - जन्म, सत्ता वा । यदि हि सत्ता भावः स्याद्, भ्वस्तिभ्यामेव सम्बन्धः स्यात्, न करोतिना । न हि यत् क्रियते सा सत्ता । धातुत्रयोपादाने च सति यस्मिन्नर्थे गृह्यमाणे त्रिभिरपि धातुभिर्योगोऽस्ति स एवाश्रयितुं युक्तः; स च जन्मैव, न सत्ता कृग्रहणादेष विशेषो लभ्यते । **तदात्मना भाव इति ।** तच्छब्देन विकारः परामृश्यते, स एव विकार; आत्मा = स्वभावः, तेन विकारात्मा = अभूततद्भावः । अपि तु लब्धसत्तकस्यैव कारणस्य प्रागप्रतिपन्नविकारस्योत्तरकालविकारभूमावाप्तिरभूततद्भाव इत्युक्तं भवति । तेन यत्र प्रकृतिर्न विवक्ष्यते, तत्र प्रत्ययो न भवति, यथा = शुक्लं करोतीति प्रत्युदाहरणे । न हि प्रकृतावत्र

**पदमञ्जरी**

**रोगाच्चापनयने ॥ प्रवाहिकात् इति ।** प्रवाहिकाशब्दात्प्रतीकारापेक्षया षष्ठी, तदन्तात्तसिः, तदन्तात्तसिः, प्रतीकारशब्दस्य तु पूर्ववदप्रयोगः ॥ ४९ ॥

**अभूततद्भावे कृभ्वस्तियोगे सम्पद्यकर्तरि च्विः ॥** वार्त्तिककारेण 'च्विविधावभूततद्भावग्रहणं कर्त्तव्यम्' ( कात्या० वा० ३३४० ) इत्युक्तम्, तदवश्यं कर्त्तव्यमिति मन्यमानः सूत्र एव प्रक्षिप्य व्याचष्टे—**कारणस्येति ।** उपादानम्, निमित्तम्, असमवायीति—त्रीणि कारणानि, तत्रोपादानकारणस्येत्यर्थः । **विकाररूपेणेति ।** कारणस्यैवोत्तरमवस्थान्तरम् = विकारः, तेन रूपेण तदात्मनाऽभूतस्याजातस्यापरिणतस्येत्यर्थः । तदात्मना विकारात्मना भावः—जन्म, परिणाम इत्यर्थः । अनेन कार्यकारणयोरभेदो दर्शितः । यथा रज्जुः शिक्यमिति

**भावबोधिनी**

रोग = व्याधि । रोगवाचक शब्द से जो षष्ठी है, तदन्त शब्द से विकल्प से 'तसि' प्रत्यय होता है अपनयन गम्यमान रहने पर । अपनयन = प्रतीकार, चिकित्सा—यह अर्थ है । उदा०—प्रवाहिकातः कुरु । कासतः कुरु । छर्दिकातः कुरु । इसका प्रतीकार = चिकित्सा करो यह अर्थ है ।

अपनयन में—इसका क्या फल है ? प्रवाहिकायाः प्रकोपनं कुरु । [ यहाँ प्रतीकार न होकर उसका बढ़ाना प्रतीत होता है । अतः 'तसि' नहीं होता है । ] ॥ ४९ ॥

कारण ( = प्रकृति ) जो विकार रूप से अभूत = नहीं था उस ( कारण ) का तदात्मना भाव = विकार रूप से होना = अभूततद्भाव है । अर्थात् प्रकृति जो विकार रूप से नहीं थी उसका विकार रूप से हो जाना—अभूततद्भाव है । सम्पद्यते इसका कर्ता = सम्पद्यकर्ता । सम्पद्य के कर्ता अर्थ में वर्तमान प्रातिपदिक से अभूततद्भाव गम्यमान रहने पर कृ, भू, अस्—इन धातुओं के योग में 'च्वि' प्रत्यय होता है । उदा०—अशुक्लः शुक्लः सम्पद्यते तं करोति—इस अर्थ में

**सम्पद्यते, तं करोति शुक्लीकरोति। मलिनं शुक्लीकरोति। शुक्लीभवति। शुक्लीस्यात्। घटीकरोति मृदम्। घटीभवति। घटीस्यात्।**

**अभूततद्भाव इति किम्? शुक्लं करोति। नात्र प्रकृतिर्विवक्षिता। कृभ्वस्तियोग इति किम्? अशुक्लः**

**न्यासः**

विवक्षितायामेवंविधोऽभूततद्भावो गम्यते। तच्छब्देन प्रकृतिविकारयोरभेदविवक्षा प्रतिपाद्यते। तेन यत्र प्रकृतिर्विकाररूपमापद्यमाना तस्माद्भिन्ना विवक्ष्यते, तत्रैव प्रत्ययो भवति; न तु यत्र कारणतः कार्यस्य भेदो विवक्ष्यते। यत्र तु भेदः, यथा—पटं करोतीति, न तत्र। **सम्पद्यतेः कर्त्ता सम्पद्यकर्त्तेति।** कथं पुनस्तिङन्तेन समासः? कथं च तिङो लोपः? सौत्रत्वात्? निर्देशस्य सत्त्वात् सर्वमिदमुपपद्यते। अथ वा—सम्पूर्वात् पदेरत एव निपातनाद् यत्प्रत्ययः, तदन्तस्यायं विशेषणसमासः। तत् तिङन्तस्य वृत्तिकरणे त्वर्थप्रदर्शनमात्रं कृतम्, न पुनरेतद् विग्रहवाक्यम्। 'सम्पत्तिः' इति वक्तव्ये, **सम्पद्यकर्त्तरीत्युक्तं** वैचित्र्यार्थम्। **शुक्लीकरोतीति।** 'अस्य च्वौ इतीत्वे, 'च्वौ' इति दीर्घत्वम्, च्व्यन्तस्याव्ययत्वात् सोर्लोपः।

**नात्र प्रकृतिर्विवक्षितेति।** विकारमात्रस्य विवक्षितत्वात्। यत्र च प्रकृतिर्न विवक्ष्यते, नात्राभूततद्भावो गम्यत इति न भवति प्रत्ययः।

**पदमञ्जरी**

न तत्त्वान्तरम्, अथ च न रज्जुमात्रे शिक्यप्रतीतिः। एवं हिरण्यमेव कुण्डलम्, मृदेव घटः, तन्तव एव पटः, दार्वेव यूपः। अथ च न हिरण्यादिमात्रे कुण्डलादिप्रतीतिः, नो खलु कुण्डलं हिरण्यं न भवतीति कश्चित्प्रत्येति। यदि च कुण्डलं हिरण्यं न भवति, किं तर्हि? हिरण्यं पिण्डः। ननु सोऽपि पिण्डः, एवं वृत्तमेवं दीर्घमिति न किञ्चन हिरण्यं स्यात्, तस्मादनुवृत्तं कारणम्, व्यावर्त्तमानस्त्ववस्थाभेदो विकार इति युक्तम्। कुतः पुनरयमभूततद्भावविशेषो लभ्यते, न पुनरभूत्वा भवनमात्रं भवन्त्यस्मिन्क्षेत्रे शालय इति? तच्छब्दोपादानात्। येन रूपेण प्रागभूतं कारणं तेन रूपेण तस्य भावोऽभूततद्भाव इति हि तस्यार्थः, अन्यथाऽभूतभाव इत्येव वाच्यम्। तदपि वा न वक्तव्यम्; सम्पद्यकर्तृत्वादेव सिद्धेः।

यद्वा—जन्मग्रहण एव कर्त्तव्ये 'अभूततद्भावः' इति वचनाद्यथोक्तार्थलाभः, सर्वथा यत्र प्रकृतिरेव विकाररूपतामापद्यमाना विकाराभेदेन विवक्ष्यते तत्रैव प्रत्ययः, तत्रैव हि दर्शितोऽभूततद्भावः सम्भवति। **सम्पद्यतेः कर्तेति।** शब्दात्मकस्य धातोः स्वरूपेण कर्त्रा सम्बन्धासम्भवादर्थद्वारकमिदमभिधानम्, सम्पद्यर्थस्य यः कर्त्ता स सम्पद्यकर्तेत्यर्थः। अर्थकथन चैतत्, विग्रहस्तु सम्पद्यश्चासौ कर्त्ता चेति, 'पाघ्राध्माधेट्दृशः शः', अस्मादेव निपातनात्सम्पदोऽपि भवति। दिवादित्वात् श्यन्। क्वचित्तु **सम्पद्यतेः कर्तेति।** तिङन्तं पठ्यते, यः सम्पद्यते कर्त्ता स सम्पद्यकर्तेत्यर्थः। **शुक्लीकरोतीति।** प्रकृतौ विकारावस्थां प्राप्नुवत्यां वर्त्तमानाद्विकारशब्दात्स्वार्थे

**भावबोधिनी**

शुक्लीकरोति = मलिन को शुक्ल करता है। [ अशुक्लः शुक्लः सम्पद्यते—इसमें ] शुक्लीभवति। [ अशुक्लः शुक्लः सम्पद्येत—इसमें ] शुक्लीस्यात्। [ अघटः घटः सम्पद्यते, तं करोति—इसमें ] घटीकरोति मृदम्। [ अघटः घटः सम्पद्यते—] घटीभवति। [ अघटः घटः सम्पद्येत—] घटीस्यात्।

[ जो शुक्ल = सफेद नहीं है उसे शुक्ल बनाता है—इस अर्थ में शुक्ल से च्वि प्रत्यय—शुक्ल + च्वि, अनुबन्धलोप, "अस्य च्वौ" ( पा० सू० ७।४।३२ ) से अ का ई, 'वेरपृक्तस्य' ( पा० सू० ६।१।६५ ) से 'व्' का लोप कर देने पर 'शुक्ली' कृ धातु के योग में—शुक्लीकरोति। भू के योग में शुक्लीभवति। अस् के योग में लिङ् का उदाहरण है—शुक्लीस्यात्। क्योंकि लट् आदि में भू आदेश हो जाता है। ]

अभूत का तद्भाव—इसका क्या फल है? शुक्लं करोति। यहाँ प्रकृति विवक्षित नहीं है। कृ, भू और अस्—इनके

शुक्लो जायते।

सम्पद्यकर्तरीति किम्, यावता अभूततद्भावसामर्थ्याल्लब्धमेव सम्पद्यकर्तृत्वम्? कारकान्तरसम्पत्तौ मा भूत्—अदेवगृहे देवगृहे सम्पद्यते। देवगृहस्याधेयविशेषसम्बन्धेन अभूततद्भावः सत्त्वाधिकरणस्य, न कर्तुरिति ॥

**न्यासः**

**अभूततद्भावसामर्थ्याल्लब्धमेवेत्यादि।** यो ह्यविकाररूपेण भूतो विकारात्मना भवति स, नियोगतस्तेन रूपेण सम्पद्यमानः सम्पद्यकर्त्ता भवतीत्येतत् सामर्थ्यात् स्वरूपान्तरेण सम्पद्यते। तत् कर्तृसंज्ञकमेव भवतीति नायं नियोगत इत्यभिप्रायेणाह—**कारकान्तरसम्पत्तौ मा भूदिति। अदेवगृह इत्यादि।** अत्र देवगृहस्य देवताराधनत्वेनाभूतस्य प्रागुत्तरकालं देवताधेयसम्बन्धेन तदात्मत्वमापद्यमानस्य भवत्ययमभूततद्भावः; स त्वधिकरणस्य, न कर्तुः। तथा हि—तद्रूपान्तरमाद्यमानपि न कर्तृसंज्ञम्, किं तर्हि? अधिकरणसंज्ञमेव, अन्यथा सप्तमी न स्यात्। 'च्वौ' इकार उच्चारणार्थः। चकारः प्रकृतेरन्तोदात्तार्थः। वकारस्य 'वेरपृक्तस्य' इति लोपः ॥ ५० ॥

**पदमञ्जरी**

च्विप्रत्ययः, इकारः 'वेरपृक्तस्य' इति सामान्यग्रहणार्थः। चकारस्तु तदविघातार्थः, प्रकृतेरन्तोदात्तार्थश्च। वकारस्य 'वेरपृक्तस्य' इति लोपः, 'अस्य च्वौ' इतीत्वम्, 'ऊर्यादिच्विडाचश्च' इति निपातत्वेनाव्ययत्वात्सोर्लुक्।

**नात्र प्रकृतिर्विवक्षितेति।** प्रकृतिविवक्षायामेवाभूततद्भावः सम्भवतीत्युक्तम्।

**अभूततद्भावसामर्थ्यलभ्यमेवेति।** यो विकाररूपेणाभूतः सन् विकारात्मना भवति, स नियोगतस्तेन रूपेण सम्पद्यमानः सम्पद्यकर्त्ता भवतीत्येतत्सामर्थ्यं यद्रूपान्तरेण सम्पद्यते न तदवश्यं कर्तृसंज्ञमेव भवतीत्यभिप्रायेणाह—**कारकान्तरसम्पत्तौ मा भूदिति। अदेवगृहे** देवगृहे **सम्पद्यत इति।** अदेवगृहे प्राग्भूयो वृक्षादिः, स इदानीं तस्मिन्प्रदेशे देवालयीभूते देवगृहे सम्पद्यत इत्यर्थः।

उदाहरणदिक्चेयं वृत्तिकारेण दर्शिता।
कृभ्वस्तियोगाभावाद्धि नैवात्र च्विः प्रसज्यते ॥ इति ॥

तस्माददेवगृहे देवगृहे भवतीति प्रत्युदाहार्यम्। अत्र वृक्षादेः सम्पत्तिं प्रत्यधिकरणस्याप्यदेवगृहस्याभूततद्भावोऽस्त्येव; तस्य प्रागदेवगृहस्यापि सम्प्रति देवगृहत्वेन परिणामात्। एवं हि वृक्षादेस्तदाधारविशिष्टतयाऽभूततद्भावो यद्यपि वस्तुतः सम्पद्यकर्तृत्वमपि देवगृहस्यास्ति, तथापि न तद्विवक्षितम्, किं तर्हि? आधारभाव एवेति भवत्युदाहरणम्। ननु चैवं सति शुक्लीकरोतीत्यत्रापि न स्याद्, अत्रापि हि कारकान्तरस्य कर्मणः सम्पत्तिः, न कर्तुः? अस्त्यत्र विशेषः; कर्मव्यापारोपसर्जनं कर्तृव्यापारं करोतिराह, कर्मव्यापारश्च सम्पत्तिः—शुक्लं करोतीति, कोऽर्थः? शुक्लं सम्पद्यमानं सम्पादयतीत्यर्थः। ततश्च सम्पद्यकर्तृत्वमस्मिन्प्रयोगे शब्देनैवोपात्तम्। इतरत्र तु वृक्षादेरेव सम्पद्यकर्तृत्वं शाब्दम्, देवगृहस्य त्वार्थम्। आधारभाव एव तु शाब्द इति न कश्चिद् दोषः। इह तर्हि कथं समीपीभवति, अभ्याशीभवति, अन्तिकीभवतीति? कथं च न स्यात्? न ह्यसमीपं समीपं भवतीत्यत्रार्थः, किं तर्हि? असमीपे स्थितं समीपे स्थितं भवतीति? तात्स्थ्यात्ताच्छब्द्यं भविष्यति ॥ ५० ॥

**भावबोधिनी**

योग में—इसका क्या फल है? अशुक्लः शुक्लः जायते। [ यहाँ 'जन्' धातु का योग है। अतः च्वि' नहीं होता है। ]

सम्पद्य के कर्त्ता अर्थ में—ऐसा क्यों है क्योंकि अभूततद्भाव के सामर्थ्य से ही सम्पद्य का कर्ता होना प्राप्त ( ज्ञात ) हो जाता है? अन्य किसी कारक के होने पर न होने लगे—अदेवगृहे देवगृहे सम्पद्यते। यहाँ देवगृह का आधेय विशेष सम्बन्ध से सत्त्व के अधिकरण का अभूततद्भाव है, कर्ता का [ अभूततद्भाव ] नहीं है। [ यहाँ अधिकरण है अतः च्वि प्रत्यय नहीं है। ]

**विमर्श**—काशिकाकार ने अन्य अनेक स्थलों के समान यहाँ भी वार्तिक को सूत्र में प्रक्षिप्त करके प्रस्तुत किया है। सूत्र का इतना ही स्वरूप है—'कृभ्वस्तियोगे सम्पद्यकर्तरि च्विः।' इस पर वार्तिक है—'च्विविधावभूततद्भावग्रहणम्।' इसीके 'अभूततद्भावे' इस अंश को सूत्र में जोड़ दिया है।

## २३३१. अरुर्मनश्चक्षुश्चेतोरहोरजसां लोपश्च ॥ ५१ ॥ ( २१२१ )

**अरुःप्रभृतीनामन्तस्य लोपो भवति च्विश्च प्रत्ययः। अत्र सर्वविशेषणसम्बन्धात्पूर्वेणैव प्रत्ययः सिद्धः, लोपमात्रार्थं आरम्भः। अनरुररुः सम्पद्यते, तं करोति अरूकरोति। अरूभवति। अरूस्यात्। मनस्— उन्मनीकरोति। उन्मनीभवति। उन्मनीस्यात्। चक्षुष्—उच्चक्षूकरोति। उच्चक्षूभवति। उच्चक्षूस्यात्। चेतस्— विचेतीकरोति। विचेतीभवति। विचेतीस्यात्। रहस्—विरहीकरोति। विरहीभवति। विरहीस्यात्। रजस्—विरजीकरोति। विरजीभवति। विरजीस्यात्।**

**न्यासः**

**अरुर्मनश्चक्षुश्चेतोरहोरजसां लोपश्च ॥ अत्र विशेषणसम्बन्धादित्यादि।** अभूततद्भावादीनि सर्वाणि विशेषणानीह पूर्वसूत्रादनुवर्त्तन्ते। तस्मात् सर्वविशेषणसम्बन्धात् पूर्वेणैवारुप्रभृतिभ्यः प्रत्ययः सिद्ध इति नासौ विधीयते, लोपमात्रं तु न प्राप्नोति। अतस्तदर्थं वचनम्। यदि पुनरनेनैव प्रत्ययविधिः स्याद्, दुर्मनीकरोतित्यादौ प्रत्ययो न स्यात्; ग्रहणवता प्रातिपदिकेन तदन्तविधेः प्रतिषेधात्। पूर्वेण तु तदन्तादपि भवति; तत्र ग्रहणवत्प्रातिपदिकस्याभावात्। **उन्मनीकरोत्येवमादौ** बहुव्रीहेः प्रत्ययः ॥ ५१ ॥

**पदमञ्जरी**

**अरुर्मनश्चक्षुश्चेतोरहोरजसां लोपश्च ॥ अत्र सर्वविशेषणसम्बन्धादित्यादि।** यदि त्वभूततद्भावादीनां विशेषणानां मध्येऽन्यतमं न सम्बध्येत, ततश्च्वेरपि विध्यर्थमेतत्स्यात्। यतस्तु सर्वाणि विशेषणानि सम्बध्यन्ते, ततो लोपमात्रमेव न प्राप्नोतीति तदर्थं वचनम्, न च्वेर्विधानार्थम्। 'च्विश्च प्रत्ययः' इति तु पूर्वेणैव विहितस्य च्वेरनुवादः कृतः, तत्सन्नियोगशिष्टत्वं लोपस्य दर्शयितुम्। यदि पुनर्विशेषविहितेन बाधा मा भूदिति च्विरप्यनेन विधीयेत, तत उन्मनीकरोतीत्यादावनेन प्रत्ययो न स्याद्, 'ग्रहणवता प्रातिपदिकेन तदन्तविधिप्रतिषेधात्'। ( व्या० परि० ८९ ) ततश्चैतत्सन्नियोगशिष्टो लोपो न स्यात्, पूर्वेण तु केवल एव च्विः स्यात्। तस्मात्पूर्वेण विहिते च्वौ परतोऽरुःप्रभृतीनां लोपो भवतीत्येव सूत्रार्थः। पूर्वेणैव च केवलेभ्यस्तदन्ताच्च च्विर्भवति ॥ ५१ ॥

**भावबोधिनी**

जब प्रकृतिभूत कोई वस्तु विकार रूप से नहीं रहती हुई उस रूप को प्राप्त करती है तब इस सूत्र से च्वि प्रत्यय होता है। जैसे मृत्तिका घट रूप विकार नहीं है उसे वैसा करता है तब प्रत्यय होने पर 'घटी करोति मृत्तिकाम्' आदि प्रत्यय होते हैं।

सम्पद्यकर्तरि—यह सौत्र समास है। इसी लिए 'सम्पद्यतेः कर्त्ता' ऐसा विग्रह लिखा गया है ॥ ५० ॥

अरुस्, मनस्, चक्षुष्, चेतस्, रहस्, रजस्—इनके अन्त्य ( स् ) का लोप होता है। यहाँ ( पूर्व सूत्रोक्त ) सभी विशेषणों का सम्बन्ध होने के कारण पूर्ववर्ती सूत्र से ही च्वि प्रत्यय सिद्ध है, केवल लोप के लिए यह सूत्र किया गया है। उदा०—अनरुः अरुः सम्पद्यते, तं करोति—इस अर्थ में अरूकरोति। अरूभवति। अरूस्यात्। [ अरुस्+च्वि, सर्वापहारी लोप के बाद प्रस्तुत सूत्र से 'स्' का लोप कर देने पर 'च्वौ च' ( पा० सू० ७।४।२६ ) से दीर्घ होने से 'अरूकरोति' आदि रूप होते हैं। ] मनस् का उदा०—अनुन्मनाः उन्मनाः सम्पद्यते, तं करोति—इस अर्थ में उन्मनीकरोति। उन्मनीभवति। उन्मनीस्यात्। [ उन्मनस्+च्वि, स् का लोप कर देने पर 'अस्य च्वौ' से अ का ईत्व हो जाने से 'उन्मनीकरोति' आदि होते हैं। ] चक्षुष् का उदा०—उच्चक्षूकरोति। उच्चक्षूभवति। उच्चक्षूस्यात्। [ अनुच्चक्षुः उच्चक्षुः करोति—इस अर्थ में—उच्चक्षूकरोति। ] चेतस् का उदा० –विचेतीकरोति। विचेतीभवति। विचेतीस्यात्। रहस् का उदा०—विरहीकरोति। विरहीभवति। विरहीस्यात्। रजस् का उदा०—विरजीकरोति। विरजीभवति। विरजीस्यात्। [ सभी में तत्तद् का अभाव है, किन्तु तत्तद् का भाव – होना प्रतीत कराने के लिए प्रत्यय किया गया है। स् का लोप कर देने पर 'अ' का ईत्व हो जाने से पूर्वोक्त रूप होते हैं। ]

## २३३२. विभाषा साति कार्त्स्न्ये ॥ ५२ ॥ ( २१२२ )

**'अभूततद्भावे कृभ्वस्तियोगे सम्पद्यकर्तरि' इति सर्वमनुवर्तते। अस्मिन्विषये विभाषा सातिः प्रत्ययो भवति कार्त्स्न्ये गम्यमाने। यदि प्रकृतिः कृत्स्नां विकारात्मतामापद्यते इत्यर्थः। अग्निसाद्भवति शस्त्रम्। अग्नीभवति शस्त्रम्। उदकसाद्भवति लवणम्। उदकीभवति लवणम्।**

**कार्त्स्न्ये इति किम्? एकदेशेन पटः शुक्लीभवति। विभाषाग्रहणं च्वेः प्रापकम्। प्रत्ययविकल्पस्तु महाविभाषयैव सिद्धः।**

### न्यासः

**विभाषा साति कार्त्स्न्ये॥ विभाषाग्रहणं च्वेः प्रापकमिति।** समुच्चयार्थत्वात्। समुच्चयार्थत्वं त्वनेकार्थत्वान्निपातस्य। यद्येवम्, चकार एव कस्मान्नोह्यः? वैचित्र्यात् सूत्रकृतेः।

अथ प्रत्ययविकल्पार्थमेवेति विभाषाग्रहणं कस्मान्न भवति? इत्याह - **प्रत्ययविकल्पस्त्वित्यादि** ॥ ५२ ॥

### पदमञ्जरी

**विभाषा साति कार्त्स्न्ये॥ यदि प्रकृतिः [1]कृत्स्ना विकारतामापद्यत इति।** अभूततद्भावविषयम् कार्त्स्न्यमाश्रीयत इति दर्शयति—**विभाषाग्रहणं च्वेः प्रापकमिति।** विकल्पार्थस्याप्यस्य प्रापयितव्यान्तराभावात्। ननु वाक्यं प्रापयितव्यं स्यात्? तत्राऽऽह—**प्रत्ययविकल्पस्त्विति।** अपर आह अनेकार्थत्वान्निपातानां समुच्चयोऽर्थः।

**विभाषाग्रहणं च्वेः प्रापकमिति।** विभाषाशब्दस्तु निपातो न भवति, 'द्वयोर्विभाषयोर्मध्ये' इति विभक्तेदर्शनात्, किं तर्हि? 'गुरोश्च हलः' इत्यकारप्रत्ययान्तः—विभाष्यते=विकल्प्यते इति विभाषेति ॥ ५२ ॥

### भावबोधिनी

[ अरूकरोति=जो लाल खदिर नहीं है उसे लाल खदिर करता है। अरूभवति=जो लाल खदिर नहीं है वह लाल खदिर होता है। अरूस्यात्=जो लाल खदिर नहीं है वह लाल खदिर हो जाय। उन्मनीकरोति=जो उदास नहीं है उसे उदास करता है। उच्चक्षूकरोति=जो जागा हुआ नहीं है उसे जागा हुआ करता है, जगाता है। विचेतीकरोति=जो चेता हुआ नहीं है उसे चेतनायुक्त करता है। विरहीकरोति=जो एकान्त स्थित नहीं है, व्याकुल नहीं है उसे वैसा करता है। विरजीकरोति=जो रजोगुण से रहित है, उसे रजोगुण से युक्त करता है। सभी में कृ=करोति, भू=भवति, अस्=स्यात् का योग करके तीन प्रकार के अर्थ करने चाहिये। ] ॥ ५१ ॥

'अभूत-तद्भावे कृभ्वस्तियोगे सम्पद्यकर्तरि' इस सब की अनुवृत्ति होती है। इस विषय में कार्त्स्न्य=पूरा पूरा होना गम्यमान रहने पर 'साति' प्रत्यय विकल्प से होता है। यदि प्रकृति पूर्ण विकार को प्राप्त कर लेती है तो प्रत्यय होता है—यह अर्थ है। उदा०— अग्निसाद्भवति शस्त्रम्। अग्नीभवति शस्त्रम्। उदकसाद्भवति लवणम्, उदकीभवति लवणम्। ( सम्पूर्ण शस्त्र आग बन जाते हैं। पूरा नमक पानी बन जाता है। कृत्स्नं शस्त्रम् अग्निः सम्पद्यते, कृत्स्नं लवणम् उदकं सम्पद्यते – इस अर्थ में साति=सात् प्रत्यय होता है। 'सात्पदाद्योः' ( पा० सू० ८।३।१११ ) सूत्र से षत्व का निषेध हो जाने से अग्निसाद्भवति आदि में 'ष्' नहीं होता है। ]

कार्त्स्न्य=पूरा पूरा होना—इसका क्या फल है? एकदेशेन पटः शुक्लीभवति। [ यहाँ सात् प्रत्यय नहीं होता है। विभाषा का ग्रहण च्वि का प्रापक=विधान कराने वाला है, अर्थात् इसके न होने पर च्वि होता है। परन्तु प्रत्यय का विकल्प होना अर्थात् पक्ष में वाक्य भी होना—यह तो महाविभाषा से ही सिद्ध है। [ अतः सूत्रस्थ 'विभाषा' से सात् के पक्ष में च्वि होता है। और दोनों के अभाव में वाक्य भी होता है। तीन स्थितियाँ हैं ] ॥ ५२ ॥

---

१. 'कृत्स्नां विकारात्मताम्' इति काशिका।

## २३३३. अभिविधौ सम्पदा च ॥ ५३ ॥ ( २१२४ )

**अभिविधिः=अभिव्याप्तिः । अभिविधौ गम्यमाने च्विविषये सातिः प्रत्ययो भवति सम्पदायोगे, चकारात् कृभ्वस्तिभिश्च ।**

**विभाषाग्रहणानुवृत्तेश्च्विरप्यभ्यनुज्ञायते। स तु कृभ्वस्तियोग एव भवति, न सम्पदा। अग्निसात्सम्पद्यते शस्त्रम् । अग्निसाद्भवति । उदकसात्सम्पद्यते । उदकसाद्भवति लवणम् । अग्नीभवति । उदकीभवति ।**

**अथाभिविधेः कात्स्न्र्यस्य च को विशेषः ? यत्रैकदेशेनापि सर्वा प्रकृतिर्विकारमापद्यते सोऽभिविधिः ।**

**न्यासः**

**अभिविधौ सम्पदा च ॥ स तु कृभ्वस्तिभिरेव योगे भवतीति ।** कृभ्वस्तिभिरित्येव योग इत्यनेन सम्बन्धस्यैव तस्येहानुवृत्तेः अभिविधेः कात्स्न्र्यस्य चावश्यं विशेषण भवितव्यम्; अन्यथा सूत्रद्वयारम्भो निष्फलः स्यात्, एकेनैव सिद्धत्वात् ।

स च विशेषो न ज्ञायते, इत्यतस्तत् पृच्छति--**अथाभिविधेरित्यादि । यथास्यां सेनायामित्यादि ।** अथ शेषाणां शस्त्रणामेकदेशेन ह्यात्मना सम्बन्धमात्रं विवक्षितम्, न सर्वात्मना विकाररूपापत्तिः । **वर्षासु सर्वं लवणमुदकसात् सम्पद्यत इति ।** अत्रापि सर्वासां लवणव्यक्तीनामेकदेशेनोदकात्मताविकारेण सम्बन्धमात्रं विवक्षितम्, न त्वेकस्य सर्वात्मना विकाररूपापत्तिः । **कात्स्न्र्यं त्वित्यादि ।** यत्र ह्येकस्यापि द्रव्यस्य सर्वात्मना विकाररूपापत्तिः, न त्वेकदेशेन, तत्र कात्स्न्र्यं भवति। तत्र यदि पूर्वो योगो नारभ्येत, यत्रैकद्रव्यविशेषविषयं कात्स्न्र्यं

**पदमञ्जरी**

**अभिविधौ सम्पदा च ॥ स[1] तु कृभ्वस्तिभिरेव योगे भवतीति ।** विभाषाग्रहणस्य विकल्पार्थत्वात्स्वशास्त्रेणैव च्विर्भवतीति सम्पदायोगे तस्याप्रसङ्गात् । स्पष्टीकृतं चैतत्पूर्वग्रन्थे ।

**विभाषाग्रहणानुवृत्तेश्च्विरप्यभ्यनुज्ञायत इति ।** समुच्चयार्थे तु तस्मिन्ननेनैव च्विर्भवन्सम्पदापि योगे स्याद्, अभ्यनुज्ञायत इति चानुपपन्नं स्यात् । **अथेति ।** उभयत्र व्याप्तिसम्भवात्प्रश्नः । **सर्वा प्रकृतिरिति ।** प्रकारकात्स्न्र्येऽत्र सर्वशब्दः, यथा —सर्वान्नीनो भिक्षुरिति । **यथास्यां सेनायामित्यादि ।** अत्रापि प्रकारकात्स्न्र्य एव सर्वशब्दः, खड्गप्रासादीनामशेषाणां शस्त्राणामेकदेशेनाप्यग्न्यात्मभावोऽत्र विवक्षितः, न त्वेकस्या अपि शस्त्रव्यक्तेः सर्वात्मना विकाररूपापत्तिः । एवं **वर्षासु लवणमित्यत्रापि । कात्स्न्र्यं त्वित्यादि ।** यत्रैकस्यापि

**भावबोधिनी**

अभिविधि = अभिव्याप्ति ( पूरा व्याप्त कर लेना ) । अभिविधि गम्यमान रहने पर च्वि के विषय में, 'सम्पद्' का योग रहने पर 'साति' प्रत्यय होता है और 'च' के कारण कृ, भू, अस् के योग में भी होता है ।

विभाषा-ग्रहण की अनुवृत्ति के कारण 'च्वि' प्रत्यय की भी स्वीकृति है । परन्तु वह तो कृ, भू, अस्—इनके योग में ही होता है, 'सम्पद्' के योग में नहीं । उदा०—अग्निसात्सम्पद्यते शस्त्रम् । अग्निसाद्भवति । [ शस्त्र पूरा पूरा अग्नि हो जाता है । ] उदकसात्सम्पद्यते लवणम्, उदकसाद्भवति । [ नमक पूरा पूरा पानी बन जाता है । पक्ष में च्वि होने पर ] अग्नीभवति, उदकीभवति ।

अब प्रश्न है कि अभिविधि और कात्स्न्र्य में क्या अन्तर है ? जहाँ एक देश = अवयव से भी सम्पूर्ण प्रकृति विकार को प्राप्त कर लेती है वह अभिविधि है; जैसे—इस सेना में उत्पात ( प्राकृतिक प्रकोपादि ) के कारण सभी शस्त्र ( जलकर ) आग बन जाते हैं, वर्षा में सारा लवण पानी बन जाता है । कात्स्न्र्य तो तब होता है जब सम्पूर्ण रूप से द्रव्य विकार रूप को प्राप्त कर लेता है ।

---

१. 'स तु कृभ्वस्तियोग एव भवति' इति काशिकापाठः ।

**यथा—अस्यां सेनायामुत्पातेन सर्वं शस्त्रमग्निसात्सम्पद्यते, वर्षासु सर्वं लवणमुदकसात्सम्पद्यत इति। कात्स्न्यं तु सर्वात्मना द्रव्यस्य विकाररूपापत्तौ भवति।**

## २३३४. तदधीनवचने ॥ ५४ ॥ ( २१२५ )

**'अभूततद्भावे' इति निवृत्तम्; अर्थान्तरोपादानात्। 'कृभ्वस्तियोगे', 'सम्पदा च' इति वर्तते। तदधीनम्=तदायत्तम्, तत्स्वामिकमित्यर्थः। स्वामिसामान्यम्, ईशितव्यसामान्यं च तदधीनशब्देन निर्दिश्यते। स्वामिविशेषवाचिनः प्रातिपदिकादीशितव्येऽभिधेये सातिः प्रत्ययो भवति कृभ्वस्तिभिः सम्पदा च योगे।**

**न्यासः**

तत्र प्रत्यययोगो न स्यात्; अभिविधेरभावात्। अथाय नारभ्येत ? यत्र सर्वाः प्रकृतय एकदेशेन विकारमापद्यन्ते तत्र न स्यात्। तस्मादुभयमारब्धव्यम् ॥ ५३ ॥

**तदधीनवचने ॥ तदधीनं तदायत्तमिति।** तस्यायत्तं तदायत्तम्। तच्छब्देन स्वामिसामान्यमुच्यते। अधीनशब्देनापीशितव्यसामान्यम्। अनन्तरोक्तमेवार्थं विस्पष्टीमर्तुमाह—**तत्स्वामिकमित्यर्थ इति।** स स्वामी यस्य तत् तत्स्वामिकम्। अत्राप्यन्यपदार्थप्रधानत्वाद् बहुव्रीहिः। ईशितव्यस्य चान्यपदार्थत्वात् तस्य प्रधानभावः। स्वामिनस्तु तदुपलक्षणत्वाद् गुणभावः। **स्वामिसामान्यमित्यादि।** स्वामिसामान्यम् = ईश्वरसामान्यम्, ईशितव्यसामान्यमित्येतदुभयं तदधीनशब्देनोच्यते। कथं कृत्वा? इह 'अधिरीश्वरे' इत्यधिशब्दस्य कर्मप्रवचनीयसंज्ञा; तेन योगे 'यस्मादधिकं यस्य चेश्वर' इति च सप्तमी। स चेश्वर ईशितव्यापेक्षित इति सामर्थ्यादीशितव्याभिधानमधिशब्देन योगे भवति। अधिशब्दश्चायं शौण्डादिषु पठ्यते, तत्र 'सप्तमी शौण्डैः'

**पदमञ्जरी**

द्रव्यस्य सर्वात्मना विकाररूपापत्तिः, न कश्चिदवयवः परिहाप्यते, तत्र कात्स्न्यं भवति। तस्मादर्थभेदादुभयमुक्तम्, न त्वेकत्रैवान्यतरत्र सम्पदो ग्रहणं कृतमिति ॥ ५३ ॥

**तदधीनवचने ॥ स्वामिसामान्यमित्यादि।** इह 'अधिरीश्वरे' इति अधिशब्दस्य कर्मप्रवचनीयसंज्ञा तेन योगे 'यस्मादधिकं यस्य चेश्वरवचनम्' इति ईश्वरवाचिनः सप्तमी, ईश्वरश्चेशितव्यापेक्षः। अधिशब्दश्चायं शौण्डादिषु पठ्यत इति सप्तमीसमासः, ततोऽध्युत्तरपदलक्षणः खः, तत्र कृते ब्रह्मदत्ताधीनाः पञ्चाला इति सामानाधिकरण्यदर्शनादधिशब्द ईशितव्यसामान्यभिधायी, पञ्चालादयस्तु तद्विशेषवचना इति गम्यते; ततश्च

**भावबोधिनी**

**विमर्श**—एक व्यक्ति=पदार्थ का सभी अवयवों के साथ दूसरा रूप हो जाना कात्स्न्यं है। जैसे—उदकसात् भवति लवणम्—यहाँ नमक पूरा का पूरा जल बन जाता है, उसका कोई अवयव नमक रूप में नहीं रह जाता है, यहाँ कात्स्न्यं है। जब बहुत से व्यक्तियों=पदार्थों का कुछ अवयवों की दृष्टि से दूसरा रूप हो जाता है तब अभिविधि होती है। जैसे अग्निसाद्भवति शस्त्रम्—जितने भी शस्त्र थे वे सब आग बन गये। यहाँ शस्त्रों में अभिव्याप्ति है, शस्त्र कोई नहीं बचा। किन्तु वह पूरी तरह आग बना या नहीं—ऐसा निश्चय नहीं होता है। सिद्धान्तकौमुदी में दोनों का भेद इस प्रकार लिखा गया है "एकस्याः व्यक्तेः सर्वावयवावच्छेदेनान्यथाभावः कात्स्न्यम्।" 'बहूनां व्यक्तीनां किञ्चिदवयवावच्छेदेनान्यथात्वं त्वभिविधिः ॥ ५३ ॥

'अभूततद्भावे' इसकी निवृत्ति हो जाती है क्योंकि अब दूसरे अर्थ का ग्रहण किया गया है। 'कृ, भू, अस्—इनके योग में' और 'सम्पद् के योग में' इनकी अनुवृत्ति होती है। तदधीन=उसके आयत्त, तत्स्वामिक=उसको स्वामी बना देना—यह अर्थ है। स्वामिसामान्य और ईशितव्यसामान्य दोनों का निर्देश 'तदधीन' इस शब्द के द्वारा होता है। स्वामी विशेष के वाचक प्रातिपदिक से ईशितव्य अर्थ वाच्य रहने पर, कृ, भू, अस् और सम्पद् के योग में 'साति' प्रत्यय होता है। उदा०—राजाधीनं करोति—इसमें राजसात् करोति। [ राजा के अधीन करता है। ] राजसाद्भवति।

**राजाधीनं करोति राजसात्करोति। राजसाद्भवति। राजसात्स्यात्। राजसात्सम्पद्यते। ब्राह्मणसात्करोति। ब्राह्मणसाद्भवति। ब्राह्मणसात्स्यात्। ब्राह्मणसात्सम्पद्यते॥**

### २३३५. देये त्रा च ॥ ५५ ॥ ( २१२६ )

**'तदधीनवचने' इत्यनुवर्तते, तस्य विशेषणं देयग्रहणम्। दातव्यम्=देयम्, तदधीने देये त्रा प्रत्ययो भवति, चकारात्साति‌श्च कृभ्वस्तिभिः सम्पदा च योगे। ब्राह्मणेभ्यो देयमिति यद्विज्ञातम्, तद्यदा तेषां समर्पणेन तदधीनं क्रियते तदा 'त्रा' प्रत्ययः। ब्राह्मणाधीनं देयं करोति ब्राह्मणसात्करोति। ब्राह्मणत्राकरोति। ब्राह्मणत्राभवति। ब्राह्मणत्रास्यात्। ब्राह्मणत्रासम्पद्यते।**

**देये इति किम् ? राजसाद्भवति राष्ट्रम्॥**

### २३३६. देवमनुष्यपुरुषपुरुमर्त्येभ्यो द्वितीयासप्तम्योर्बहुलम् ॥ ५६ ॥ ( २१२७ )

**'सातिः' निवृत्तः, त्राप्रत्ययोऽनुवर्तते। देवादिभ्यः प्रातिपदिकेभ्यो द्वितीयासप्तम्यन्तेभ्यः त्रा प्रत्ययो**

**न्यासः**

इति समासे कृते पूर्वपदस्य स्वामिसामान्यमर्थो भवति, उत्तरपदस्य चेशितव्यसामान्यम्। अषडक्षादिसूत्रेण खप्रत्यये कृते स एवायमर्थो भवति, तस्य तत्स्वामिकत्वादित्येवं च कृत्वा। स्वामिसामान्यमीशितव्यसामान्यं तदधीनशब्देनोच्ते। तत्र स्वामिसामान्यं प्रकृत्यर्थः, ईशितव्यसामान्यं तु प्रत्ययार्थ इत्यत आह—**स्वामिविशेषवाचिन इत्यादि** ॥ ५४ ॥

**देये त्रा च ॥ राजसाद्भवति राष्ट्रमिति।** पूर्वेण सातिरेव भवति ॥ ५५ ॥

**देवमनुष्यपुरुषपुरुमर्त्येभ्यो द्वितीयासप्तम्योर्बहुलम् ॥** अथ बहुलग्रहणं किमर्थम्, यावता 'विभाषा साति

**पदमञ्जरी**

स्वामिसामान्यम्, ईशितव्यसामान्यं च तदधीनशब्देनोच्यते। तत्र स्वामिसामान्यं प्रकृत्यर्थः, सामान्यं च विशेषोपलक्षणार्थमिति विशेषवाचिभ्यः प्रत्ययो विज्ञायत इत्याह—**स्वामिविशेषावाचिन इति** ॥ ५४ ॥

**देये त्रा च ॥ ब्राह्मणत्राकरोतीति।** स्वरादिष्वयं त्रान्तः पठितव्यः, तेनाव्ययत्वात्सोर्लुक्। अपर आह—तत्रैव 'च्व्यर्थाश्च' इति पठ्यते; तत्र बहुवचननिर्देशादच्व्यर्थस्यापि त्राप्रत्ययस्य साहचर्येण परिग्रहादव्ययत्वमिति।

**राजासाद्भवति राष्ट्रमिति।** पूर्वेण सातिरेव भवति ॥ ५५ ॥

**देवमनुष्यपुरुषपुरुमर्त्येभ्यो द्वितीयासप्तम्योर्बहुलम् ॥ सातीति निवृत्तमिति। पूर्वसूत्रे चानुकृष्टत्वात्**

**भावबोधिनी**

[ राजा के अधीन होता है। ] राजसात्स्यात् [ राजा के अधीन हो जाय। ] राजसात्सम्पद्यते। [ राजा के अधीन हो जाता है। ] ब्राह्मणसात्करोति। ब्राह्मणसाद्भवति। ब्राह्मणसात्स्यात्। ब्राह्मणसात्सम्पद्यते। [ ब्राह्मण के अधीन करता है। ] ॥ ५४ ॥

'तदधीनवचने' इसकी अनुवृत्ति होती है। उसका विशेषण 'देय' का ग्रहण है। दातव्य=देय, उसके अधीन देय अर्थ में 'त्रा' प्रत्यय होता है और 'च' के कारण कृ, भू, अस् तथा सम्पद् के योग में। ब्राह्मणों के लिए देय—ऐसा जो समझा गया वह जब उन ब्राह्मणों को समर्पित करके उनके अधीन किया जाता है तब 'त्रा' प्रत्यय होता है। उदा०—ब्राह्मणाधीनं देयं करोति—इस अर्थ में—ब्राह्मणसात्करोति। ब्राह्मणत्राकरोति। ब्राह्मणत्राभवति। ब्राह्मणत्रास्यात्। ब्राह्मणत्रासम्पद्यते। [ जो पदार्थ ब्राह्मणों को देने के लिये था उसे उन्हें दे देता है—यह अर्थ है। ]

देय=दातव्य—इसके ग्रहण का क्या फल है ? राजसाद्भवति राष्ट्रम्। [ यहाँ अधीन अर्थ तो है किन्तु देय अर्थ नहीं है अतः 'त्रा' प्रत्यय नहीं होता है। ] ॥ ५५ ॥

'साति' इसकी निवृत्ति है, 'त्रा' इस प्रत्यय की अनुवृत्ति है। द्वितीयान्त और सप्तम्यन्त देव, मनुष्य, पुरुष,

भवति बहुलम् । 'कृभ्वस्तिभिः' इति नात्र सम्बध्यते । सामान्येन विधानम् । देवान् गच्छति देवत्रागच्छति । देवेषु वसति देवत्रावसति । मनुष्यान् गच्छति मनुष्यत्रागच्छति । मनुष्येषु वसति मनुष्यत्रावसति । एवमन्येऽप्युदाहार्याः—पुरुषान्गच्छति पुरुषत्रागच्छति । पुरुषेषु वसति पुरुषत्रावसति । पुरून्गच्छति पुरुत्रागच्छति । पुरुषु वसति पुरुत्रावसति । मर्त्यान् गच्छति मर्त्यत्रागच्छति । मर्त्येषु वसति मर्त्यत्रावसति ।

बहुलवचनादन्यत्रापि भवति—'बहुत्रा जीवतो मनः' ( मै० सं० १९.३४.४ ) इति ।

## २३३७. अव्यक्तानुकरणाद् द्व्यजवरार्द्धादनितौ डाच् ॥ ५७ ॥ ( २१२८ )

**यत्र ध्वनावकारादयो वर्णा विशेषरूपेण न व्यज्यन्ते सोऽव्यक्तः । तस्यानुकरणमव्यक्तानुकरणम् । द्व्यच् अवरार्द्धं यस्य द्व्यजवरार्धम् । अवरशब्दोऽपकर्षे । यस्यापकर्षे क्रियमाणे सुष्ठु न्यूनमर्द्धं द्व्यच्कं सम्पद्यते,**

### न्यासः

कार्त्स्न्ये' इत्यत्र विभाषाग्रहणमनुवर्त्तिष्यत एव, विकल्पेन प्रत्ययो भविष्यति ? इत्याह—**बहुलग्रहणादन्यत्रापि लभ्यत इति** । तस्माद्विभाषायां प्रकृतायां यद्बहुलवचनं कृतम्, तदन्यत्रापि यथा स्यादित्यभिप्रायः ॥ ५६ ॥

**अव्यक्तानुकरणाद् द्व्यजवरार्धादनितौ डाच्** ॥ **अव्यक्तस्तस्यानुकरणमव्यक्तानुकरणमिति** । यद्यप्यनुकरणे वर्णविशेषो रूपेण न प्रकाशते, तथापि ध्वनेः समानतया तन्मात्रसादृश्येन स त्वनुक्रियत इति तस्याप्यनुकरणमित्युच्यते । द्व्यच् अवरमर्द्धं यस्येत्यर्द्धशब्दो नपुंसकलिङ्ग एव । **यस्येत्यादि** । यस्यापकर्षे क्रियमाणे सुष्ठून्नं द्व्यजर्द्धं भवति तस्मात् प्रत्ययो भवति, यस्य न ततोऽपि न्यूनतरमेकाज् भवति । यद्यकृते द्विवचने यस्य

### पदमञ्जरी

**'कृभ्वस्तियोगे'** इति न सम्बध्यत इति तदर्थमत्र स्वरितत्वं कर्त्तव्यम् । स्वरिते सति नाधिकार इत्ययं च पक्ष आश्रयणीयः मण्डूकप्लुत्या उत्तरत्र सम्बन्धः । 'सम्पदा च' इत्येतत्तु सर्वथैवं निवृत्तवान्न सम्बध्यते ॥ ५६ ॥

**अव्यक्तानुकरणाद् द्व्यजवरार्द्धादनितौ डाच्** ॥ **यत्र ध्वनावित्यादि** । यद्यप्यनुकार्यमेव रूपमनुकरणे वर्णविशेषरूपेण प्रकाशते, तथापि 'अव्यक्तानुकरणस्यात इतौ' इत्यनुकरणस्थस्याच्छब्दस्य पररूपं विधत्ते । ध्वनिमात्रसाम्येन तु तस्यानुकरणमुच्यते । **अवरशब्दोऽपकर्ष इति** । अपकर्षः=न्यूनता, प्रवृत्तिनिमित्तकथनं चैतत्, अपकृष्टं त्ववरशब्दस्यार्थः । **यस्यापकर्षे क्रियमाणे इत्यादि** । अत्रापकर्षः=विभागः, समप्रविभागेऽर्द्धशब्दः, अवरत्वं

### भावबोधिनी

पुरु तथा मर्त्य—इन प्रातिपदिकों से बहुलरूप से 'त्रा' प्रत्यय होता है । कृ, भू, अस्—इनका सम्बन्ध यहाँ नहीं होता है । सामान्यरूप से विधान है । उदा०—देवान् गच्छति—इस अर्थ में—'देवत्रा गच्छति ।' [ यहाँ द्वितीयान्त से 'त्रा' प्रत्यय है । ] देवेषु वसति—इस अर्थ में देवत्रा वसति । [ यहाँ सप्तम्यन्त से 'त्रा' प्रत्यय है । देवों के पास जाता है । देवों में रहता है—ये अर्थ हैं । इसी प्रकार—] मनुष्यान् गच्छति—इस अर्थ में 'मनुष्यत्रा गच्छति ।' मनुष्येषु वसति—इस अर्थ में मनुष्यत्रा वसति । [ मनुष्यों के पास जाता है । मनुष्यों में रहता है—अर्थ हैं । ] इसी प्रकार अन्य उदाहरण भी देने चाहिए—पुरुषान् गच्छति—इसमें पुरुषत्रा गच्छति । पुरुषेषु वसति—इसमें पुरुषत्रा वसति । पुरून् गच्छति—इसमें पुरुत्रा गच्छति । पुरुषु वसति—इसमें पुरुत्रा वसति । मर्त्यान् गच्छति—इसमें मर्त्यत्रा गच्छति । मर्त्येषु वसति—इसमें मर्त्यत्रा वसति ।

बहुल—इसका ग्रहण होने से अन्यत्र भी होता है—बहुत्रा जीवतो मनः । [ यहाँ 'बहु' से 'त्रा' प्रत्यय है । मनुष्य और पुरुष—दो शब्दों का ग्रहण है । ] ॥ ५६ ॥

जिस ध्वनि में अकारादि वर्ण विशेष रूप से ( स्पष्ट रूप से ) व्यक्त नहीं होते हैं वह 'अव्यक्त' ध्वनि है । उस ध्वनि का अनुकरण अव्यक्तानुकरण है । द्व्यच् ( दो अचों वाला ) अवरार्ध ( अर्धभाग ) है जिसका वह—द्व्यजवरार्ध है । अवर शब्द अपकर्ष अर्थ में हैं । जिसका अपकर्ष कर देने पर अच्छी प्रकार कम आधा भाग द्व्यच्क ( दो अचों वाला ) बन जाता है उस अव्यक्तानुकरण से, जिसके बाद 'इति' शब्द नहीं है, 'डाच्' प्रत्यय होता है । इसमें कृ, भू, अस्—

तस्मादव्यक्तानुकरणादनितिपराड्डाच्प्रत्ययो भवति। 'कृभ्वस्तियोगे' इत्यनुवर्तते। तस्य च द्विर्वचने कृते द्व्यजवरार्धम्, ततः प्रत्ययः।

'डाचि बहुलं द्वे भवतः' (६.१.९९) इति विषयसप्तमी। डाचि विवक्षिते द्विर्वचनमेव पूर्वं क्रियते, पश्चात्प्रत्ययः। पटपटाकरोति। पटपटाभवति। पटपटास्यात्। दमदमाकरोति। दमदमाभवति। दमदमास्यात्।

**न्यासः**

द्व्यजवरार्द्धता ततो डाज् भवतीति ज्ञायते, ततः पटदित्यादेर्न स्यात्, न ह्यत्र द्व्यजवरमर्द्धम् भवतीत्येतच्चेतसि कृत्वाऽऽह—**यस्य चेत्यादि**। नन्वेवं सति डाचि परभूते तदाश्रये द्विर्वचने कृते द्व्यजवरार्द्धता भवति, तस्याञ्च सत्यां डाजितीतरेतराश्रयः प्रसजति, इतरेतराश्रयाणि कार्याणि शास्त्रे न प्रकल्पन्ते? इत्याह—**डाचि बहुलमित्यादि**। यद्येषा परसप्तमी स्यात्, स्यादेष दोषः; न चैषा परसप्तमी, किं तर्हि? विषयसप्तमी। **पटपटाकरोतीति**। पटच्छब्दाड् डाचि विवक्षिते विषयभूते बुद्धिस्थेऽनुत्पन्न एव पूर्वं तावद् द्विर्वचनम् पटच्छब्दस्य क्रियते, तस्मिन् कृते द्व्यजवरार्द्धतायामुपजातायां डाचि टिलोपः, 'नित्यमाम्रेडिते डाचि' इति पूर्वस्य तकारस्य पररूपत्वम्। **दमदमाकरोतीति**। दमच्छब्दस्य पूर्ववद् द्विर्वचनम्, ततो डाच्।

**दृषत्करोतीति**। अत्रापि द्विर्वचने कृते द्व्यजवरार्द्धता भवतीति। नाव्यक्तस्येदमनुकरणम्। **श्रत्करोतीति**। भवत्येतदव्यक्तानुकरणम्, न द्व्यजवरार्द्धम्। कृतेऽपि ह्यत्र द्विर्वचने एकाजवरमर्द्धं सम्पद्यते। **खरटखरटाकरोतीति**। खरटदित्येतस्यानुकरणस्यात्र पटदित्येतस्यानुकरणस्येव पूर्ववद् द्विर्वचनम्, ततो डाच्। यदि 'द्व्यजर्द्धम्'

**पदमञ्जरी**

चाच्कृतमेव, व्यच्सन्निधानात्। यस्मिन्विभज्य निरूप्यमाणे सुष्ठु न्यूनमपि अल्पमपि अर्धं व्यच्छब्दवत्सम्पद्यते न ततो न्यूनम्, अधिकं तु सम्भवतु मा वा भूत्, व्यजवरार्द्धमित्यर्थः। **यस्येत्यादि**। यदि त्वकृते द्विर्वचने यस्य व्यजवरार्द्धता ततो डाज् भवतीति विज्ञायते, तदा पटच्छब्दादेर्न स्यादिति भावः।

नन्वेवं सति डाचि परभूते तदाश्रये द्विर्वचने व्यजवरार्द्धता भवति, तस्यां च सत्यां डाचा भवितव्यमितीतरेतराश्रयत्वं प्राप्नोति? तत्राह—**डाचि बहुलमितीत्यादि**। सत्यं परसप्तम्यां स्यादेष दोषः; विषयसप्तमी त्वेषा, ततो न दोष इत्यर्थः। उदाहरणे परभागस्य टिलोपः, 'नित्यमाम्रेडिते डाचि' इति पूर्वतकारस्य परादेश्च पकारस्य पररूपम्–एकं पकारः, द्वितीय उदाहरणे दकारः।

**दृषत्करोतीति**। व्यक्तानुकरणमेतत्, प्रकरणादिना चानुकरणत्वानुगतिः। **खरटखरटाकरोतीति**। खरटदित्यस्य द्विर्वचनादि पूर्ववत्। 'व्यजर्द्धात्' इत्युच्यमानेऽत्र न स्यात्, न ह्यत्रार्द्धं व्यच्कम्, किं तर्हि? त्र्यच्कम्।

**भावबोधिनी**

इनकी अनुवृत्ति होती है। उस (ध्वनि) का द्वित्व कर देने पर द्व्यजवरार्ध (दो अचों वाला आधा भाग) बन जाता है, उससे प्रत्यय किया जाता है।

[डाच् परे रहने पर द्वित्व करने पर द्व्यजवरार्धता होती है और द्व्यजवरार्धता होने पर डाच् प्रत्यय होता है—इस प्रकार तो अन्योन्याश्रय दोष हो जाने से कोई कार्य नहीं हो सकता? इस शंका का समाधान यह है—] 'डाचि बहुलं द्वे भवतः' इसमें विषय सप्तमी है [पर सप्तमी नहीं]। डाच् प्रत्यय के विवक्षित होने पर द्वित्व ही पहले किया जाता है, उसके बाद डाच् प्रत्यय होता है। उदा०—पटपटाकरोति। [पटत् करोति—यहाँ डाच् प्रत्यय की विवक्षा में 'डाचि बहुलं द्वे भवतः' इस वार्तिक से द्वित्व कर देने पर पटत् पटत् करोति। इसमें आधा भाग द्व्यच्क है अतः डाच्=आ प्रत्यय करने पर पटत् पटत् आ। 'नित्यमाम्रेडिते डाचीति वक्तव्यम्' (आम्रेडित जिसके बाद डाच्

**अव्यक्तानुकरणादिति किम् ? दृषत्करोति । द्व्यजवरार्द्धादिति किम् ? श्रत्करोति । अवरग्रहणम् किम् ? खरटखरटाकरोति । त्रपटत्रपटाकरोति । अनिताविति किम् ? पटिति करोति ।**

**न्यासः**

एतावदुच्येत, इह प्रत्ययो न स्यात्, न ह्यत्र द्व्यजर्द्धतास्ति । अवरग्रहणे तु सतीहापि भवति । तत्र हि द्व्यचोऽर्द्धाद् यस्य न्यूनतरमर्द्धं तत एव प्रत्ययेन भवितव्यम्, अन्यतस्तु सर्वतो भवितव्यमेव; अन्यथाऽवरग्रहणमनर्थकमेवेति द्व्यजर्द्धादित्येवं ब्रूयात् । **पटिति करोतीति** । 'अव्यक्तानुकरणस्यात इतो' इत्यच्छब्दस्य पररूपत्वम् । यद्यत्र डाच् स्यात्, तस्य डाजन्तस्य परमिति शब्दमुच्चार्य करोतिरनन्तरः स्यादिति, न च तत्परम्; तच्चानिष्टम् ।

अथ चकारः किमर्थः, यावतान्तोदात्तत्वं कृत्वादस्य प्रत्ययस्वरेणैव सिद्धम् ? इत्यत आह—**चकार इत्यादि** । पटपटा असि इति स्थिते 'तिङ्ङतिङः' इत्यसिशब्दस्य निघाते कृते 'स्वरितो वानुदात्तेऽपदादौ' इति स्वरित एकादेशः प्राप्नोति, न च स्वरित इष्यते, तदर्थं चकारः ।

**स्वार्थिको विज्ञेय इति** । व्यतिरिक्तस्यार्थस्याभावात् । केन पुनः स्वार्थिको यकारः ? अनेनैव निपातनेन ॥ ५७ ॥

**पदमञ्जरी**

अवरग्रहणे तु सति भवति; न्यूननिवृत्त्यर्थत्वादवरशब्दस्य । **पटिति करोतीति** । 'अव्यक्तानुकरणस्यात इतौ' इति अच्छब्दस्य पररूपत्वम् । यद्यत्र स्याद्, डाजन्तस्य गतित्वं स्यादिति शब्दमनुच्चार्य करोतिरन्तरः स्यात्, इतिश्च, ततः परः एकाच्त्वादस्य प्रत्ययस्वरेणैव सिद्धमुदात्तत्वम्, 'लोहितादिडाज्भ्यः' इत्यत्रापि 'डाभ्यः' इत्युच्यमानेऽपि न कश्चिद्दोषः ।

इडायां डाशब्दोऽनर्थकः, 'नाभा पृथिव्याः' इत्यादौ सुबादेशस्यापि डाशब्दस्याग्रहणम्; छन्दसि ततः क्यषोऽदर्शनात्, तस्मान्नार्थश्चकारेण ? तत्राह—**चकार इत्यादि** । पटपटा आसीति स्थिते 'तिङ्ङतिङः' इति निघातः, एकादेशः । अत्रासति चकारे 'स्वारितो वानुदात्तेऽपदादौ' इति पक्षे स्वरितः स्यात् । चित्करणसामर्थ्यात्तु चिदचितोरेकादेशस्य पूर्वं प्रत्यन्तवाद्भावाच्चित्स्वरेणान्वोदात्त एव भवति ।

स **स्वार्थिको विज्ञेय इति** । अर्थान्तरस्याभावात् । स्वार्थे तु यकारोऽस्मादेव निपातनाद्विज्ञेयः । ५७ ॥

**भावबोधिनी**

प्रत्यय है, उसके परे रहते पूर्व और पर वर्णों का पररूप होता है ) इस वचन से ' पटत् पटत् आ' में 'अत्' और 'प' का पररूप 'प' हो जाने से—पट पटत् आ ।' डित् होने से पटत् के टि=अत् का लोप कर देने पर पटपट्आ= पटपटाकरोति बन जाता है । पटत् पटत् ऐसी ध्वनि का अनुकरण करता है ] पटपटाभवति । पटपटास्यात् । [ इसमें भू तथा अस् के योग में पूर्वोक्त सब प्रक्रिया की जाती है । ] दमदमाकरोति । दमदमाभवति । दमदमास्यात् । [ दमत् करोति, द्वित्व, डाच्, पररूप, टिलोप करने पर रूप बन जाता है । ]

अव्यक्त का अनुकरण—इसका क्या फल है ? दृषत् करोति । [ यहाँ व्यक्त का अनुकरण है, ऐसा ज्ञान प्रकरणादि से हो जाता है । अतः प्रत्यय नहीं होता है । द्व्यजवरार्ध ( दो अचों वाला आधा भाग जिसका है उस से )—इसका क्या फल है ? श्रत्करोति । [ यहाँ केवल एक अच् है । अतः प्रत्यय नहीं होता है । ] अवरग्रहण किस लिए है ? खरट-खराटाकरोति । [ यहाँ खरटत् इसमें तीन अच् हैं परन्तु अवर का ग्रहण करने से प्रत्यय होता है क्योंकि दो अचों से कम आधा नहीं होना चाहिए । यदि केवल 'द्व्यजर्धात्' ऐसा रहता तो प्रत्यय नहीं होता क्योंकि खरटत् इसमें तीन अचों वाला है । जब कम से कम दो अचों वाला माना जाता है तब तीन या अधिक अचों वाले में हो ही जाता है । इसी प्रकार त्रपटत् में भी समझना चाहिए-] त्रपटत्रपटाकरोति । इति—परे न होने पर—इसका क्या फल है ? पटितिकरोति । [ यहाँ इति परे है अतः प्रत्यय नहीं होता है । ]

चकारः स्वरार्थः—स्वरितबाधनार्थः। पटपटासि—अत्र 'स्वरितो वानुदात्तेऽपदादौ' (८.२.६) इति स्वरितो न भवति।

केचित्—'द्व्यचजवराध्यात्' इति यकारं पठन्ति, स स्वार्थिको विज्ञेयः॥

## २३३८. कृञो द्वितीयतृतीयशम्बबीजात्कृषौ॥ ५८॥ (२१२९)

द्वितीयतृतीयादिभ्यः शब्देभ्यः कृषावभिधेयायां डाच् प्रत्ययो भवति कृञो योगे, नान्यत्र। पुनः कृञ्ग्रहणं भ्वस्त्योर्निवृत्त्यर्थम्। द्वितीयाकरोति। द्वितीयं कर्षणंविलेखनं करोतीत्यर्थः। तृतीयाकरोति। शम्बाकरोति। अनुलोमकृष्टं क्षेत्रं पुनः प्रतिलोमं कृषतीत्यर्थः। बीजाकरोति। सह बीजेन विलेखनं करोतीत्यर्थः।

कृषाविति किम्? द्वितीयं करोति पदम्॥

## २३३९. संख्यायाश्च गुणान्तायाः॥ ५९॥ (२१३०)

'कृञः' इत्यनुवर्तते, 'कृषौ' इति च। संख्यावाचिनः शब्दस्य गुणशब्दोऽन्ते=समीपे यत्र सम्भवति सा

### न्यासः

कृञो द्वितीयतृतीयशम्बबीजात् कृषौ। ननु कृभ्वस्तियोग इत्यतः करोतिरनुवर्त्तते, तत् किमर्थं कृञ्ग्रहणम्? इत्याह—कृञ्ग्रहणमित्यादि। धातुत्रयं प्रकृतम्, तत्रासति कृञ्ग्रहणे यथा कृञो योगो भवति, तथा भ्वस्त्योरपि स्यात्। तस्मात् कृञो ग्रहणं भ्वस्तिनिवृत्त्यर्थम्॥ ५८॥

संख्यायाश्च गुणान्तायाः॥ संख्याया इति सामीप्यसम्बन्धे षष्ठी। गुणाताया इति प्रत्ययविधौ

### पदमञ्जरी

कृञो द्वितीयतृतीयशम्बबीजात् कृषौ॥ कृषावभिधेयायामिति। कस्याभिधेयायाम्? द्वितीयादिशब्दानां डाजन्तानां कृञश्च। तद्दर्शयति—द्वितीयं कर्षणं विलेखनं करोतीत्यर्थं इति। प्रतिलोमं कर्षतीत्यर्थं इति। शम्बशब्दस्यात्र प्रातिलोम्ये वृत्तिः, कृञश्च कर्षणे। सह बीजेनेति। बीजशब्दस्य बीजावापसहिते विलेखने वृत्तेरयमर्थो भवति॥ ५८॥

सङ्ख्यायाश्च गुणान्तायाः॥ सङ्ख्यावाचिनः शब्दस्येति। एतेन सङ्ख्याया इत्यस्य षष्ठ्यन्ततां दर्शयति।

### भावबोधिनी

डाच् में 'च' अनुबन्ध स्वर के लिए है—स्वरित का बाध करने के लिए है। 'पटपटा असि' यहाँ [ "तिङ्ङतिङः" सूत्र से अतिङन्त से परे तिङन्त का निघात कर देने पर दीर्घरूप एकादेश करने पर ] 'स्वरितो वानुदात्तेऽपदादौ' इस सूत्र से स्वरित नहीं होता हैं। [ अपि तु 'चितः' सूत्र से अन्तोदात्त ही इष्ट है। इस लिए 'च' का ग्रहण है। ]

कुछ लोग—'द्व्यचजवराध्यात्' यह यकार पढ़ते है, वह तो स्वार्थिक 'य' समझना चाहिए। [ और इसी सूत्र में ग्रहण होने से इसी से निपातन करना चाहिए। ]।

द्वितीय, तृतीय, शम्ब, बीज—इन शब्दों से कृषि अर्थ अभिधेय रहने पर कृञ् के योग में डाच् प्रत्यय होता है, अन्य धातुओं के योग में नहीं होता है। 'कृञ्' का दुबारा ग्रहण करना भू और अस् की निवृत्ति के लिए है। उदा०—द्वितीयाकरोति। दूसरा कर्षण=विलेखन=जोतना करता है, यह अर्थ है। [ दूसरी वार हल चला कर खेती करता है—यह भाव है। ] तृतीयाकरोति। शम्बाकरोति। अनुलोम कृष्ट=सीधे जुते हुए खेत को पुनः प्रतिलोम खींचता है, यह अर्थ है। बीजाकरोति। बीज बोने के साथ जुताई करता है, यह अर्थ है।

कृषि अर्थ में—इसका क्या फल? द्वितीयं पदं करोति। [ यहाँ नहीं होता है। ]॥ ५८॥

कृञः इसकी और 'कृषौ' इसकी अनुवृत्ति होती है। संख्यावाचक शब्द के गुण शब्द अन्त में=समीप में जिसके संभव होता है वह संख्या गुणान्ता कही जाती है। ऐसे गुण शब्द अन्त वाली संख्या के वाचक प्रातिपदिक से कृषि अर्थ

**संख्या गुणान्तेत्युच्यते।** तादृशात्प्रातिपदिकात्कृषावभिधेयायां डाच्प्रत्ययो भवति कृञो योगे। द्विगुणं विलेखनं करोति क्षेत्रस्य द्विगुणाकरोति क्षेत्रम्। त्रिगुणाकरोति।

कृषाविति किम्? द्विगुणां करोति रज्जुम्॥

## २३४०. समयाच्च यापनायाम्॥ ६०॥ ( २१३१ )

'कृञः' इत्येव। 'कृषौ' इति निवृत्तम्। कर्तव्यस्यावसरप्राप्तिः = समयः, तस्यातिक्रमणम् = यापना।

### न्यासः

संख्यावाचिनः शब्दस्येत्यनेन संख्याशब्दस्य षष्ठ्यन्ततां दर्शयति। अन्तशब्दोऽवयववचनोऽप्यस्ति, तस्येह ग्रहणे संख्याशब्देन सम्बन्धो न स्यात्, न हि संख्याशब्दस्य गुणशब्दोऽवयव उपपद्यते—इति मत्वा सामीप्य-वचनोऽयमन्तशब्द इति दर्शयन्नाह—**गुणशब्दोऽन्ते समीप इति। यत्रेति।** अनेन प्रकृतिर्निर्दिश्यते। **सेत्यादि।** सा प्रकृतिः संख्या गुणान्तेनाभिधीयत इत्यर्थः। गुणशब्दोऽन्ते यस्य स तथोक्तः। **तादृशादित्यादिना** तथाभूतात् संख्याशब्दात् सामीप्यवर्त्तिगुणशब्दादित्यर्थः। ननु च सामीप्यवचनान्तशब्दे संख्यायाः पूर्वः परो वा गुण इति विशेषो नावधार्य्यते, तथा च यत्राप्यसौ पूर्वस्तत्रापि स्यात्? नैष दोषः; सामीप्येऽयं वर्त्तमानो नियतदेशमेव पराश्रयं वा यत् सामीप्यं तदाचष्टे, न सामीप्यमात्रम्; यथा—अवयवे वर्त्तमानो नावयवमात्रमभिधत्ते, किं तर्हि? विशिष्टदेशमेवावयवम्—**द्विगुणं विलेखनं करोतीति॥ ५९॥ समयाच्च यापनायाम्॥ ६०॥**

### पदमञ्जरी

**गुणान्तेति।** व्यधिकरणपदो बहुव्रीहिः, अन्तशब्दश्च समीपवचन इत्याह—**गुणशब्दोऽन्ते समीप इति।** अन्तशब्दस्य सङ्ख्याया इत्येतदपेक्षमाणस्यापि सम्बन्धिशब्दस्य नित्यसापेक्षत्वात्समासः, निपातनाच्च सप्तम्यन्त-स्यापि तस्य परनिपातः। **यत्रेत्यनेन** प्रकृतिर्निर्दिश्यते। **सेत्यादिना** प्रकृतिसङ्ख्या। **गुणान्तेत्युच्यते।** सङ्ख्याशब्द-स्यान्ते गुणशब्दो यस्याः सा तथोक्ता। अत्रापि गमकत्वात्समासः। **तादृशादिति।** सङ्ख्याशब्दसमीपवर्त्तिगुण-शब्दादित्यर्थः। अन्तशब्दश्चायं नियतमेव परत्वविशिष्टं सामीप्यमाचष्टे, न सामीप्यमात्रम्। तेन गुणविंशतिरित्यादौ पूर्वंभूते गुणशब्देऽतिप्रसङ्गो नोद्भावनीयः। अनभिधानाद्वाऽत्र प्रत्ययाभावः। **द्विगुणं विलेखनं करोति क्षेत्रस्येति।** अत्र विलेखनशब्दस्य कृदन्तस्य प्रयोगात्कृद्योगलक्षणा षष्ठी क्षेत्राद्भवति। उत्पन्ने तु तद्धिते तदभावाद् द्वितीयैव भवति।

अथैवं कस्मान्न व्याख्यायते–सङ्ख्याया इति पञ्चमी, अन्तशब्दोऽवयववचनः, संख्यावाचिनः परो यो गुणशब्दस्तदन्तायाः प्रकृतेरिति? उच्यते; एवं हि सति गुणान्ताया एव सङ्ख्याय इति विशेषणं स्यात्, न गुणशब्दस्य समासे गुणभूतस्य। एवं तर्हि मा भूदन्तग्रहणम्, सङ्ख्याया गुणादित्येवास्तु, व्यधिकरणे च पञ्चम्यौ सङ्ख्यायाः परो यो गुणशब्दस्तस्मादिति? एवमपि वाक्ये प्रसङ्गः—पञ्च गुणान्करोतीति, विपर्ययश्च सम्भाव्येत—गुणशब्दात्परा या सङ्ख्या तदन्तादिति। एवं तर्हि सङ्ख्यादेर्गुणादित्येवास्तु? सत्यम्; तथा तु न कृतमित्येव, प्रत्युत यथान्यासे द्विगुणभागं क्षेत्रं करोतीत्यत्रापि प्रसङ्गः॥ ५९॥

**समयाच्च यापनायाम् समयाकरोतीति।** 'अद्य मे पारवश्यं परश्वो वास्य समयः' इत्येवं यो बहुषु

### भावबोधिनी

अभिधेय रहने पर कृञ् के योग में 'डाच्' प्रत्यय होता है। उदा०—द्विगुणं विलेखनं करोति क्षेत्रस्य—इस अर्थ में—द्विगुणाकरोति क्षेत्रम्। [ त्रिगुणं विलेखनं करोति क्षेत्रस्य—इस अर्थ में—त्रिगुणाकरोति क्षेत्रम्। [ दुगुनो = दो बार जुताई करता है। तीन गुनो = तीन बार जुताई करता है। ]

कृषि अर्थ में—इसका क्या फल है? द्विगुणां करोति रज्जुम्। [ रस्सी को दुगुनी करता है। यहाँ डाच् नहीं होता है। ]॥ ५९॥

'कृञ्' इसकी अनुवृत्ति होती है। 'कृषौ' इसकी निवृत्ति है। कार्य करने का अवसर प्राप्त होना = समय है, उसका

समयशब्दाद्यापनायां डाच् प्रत्ययो भवति कृञो योगे। समयाकरोति। समयं यापयति, कालक्षेपं करोतीत्यर्थः।
यापनायामिति किम्? समयं करोति॥

**२३४१. सपत्त्रनिष्पत्त्रादतिव्यथने॥ ६१॥ ( २१३२ )**

'कृञः' इत्येव। सपत्त्रनिष्पत्त्रशब्दाभ्यामतिव्यथने डाच् प्रत्ययो भवति कृञो योगे सति। अतिव्यथनम्=अतिपीडनम्। सपत्त्राकरोति मृगं व्याधः। सपत्त्रं शरमस्य शरीरे प्रवेशयतीत्यर्थः। निष्पत्त्राकरोति। शरीराच्छरमपरपार्श्वे निष्क्रामयतीत्यर्थः।

अतिव्यथन इति किम्? सपत्त्रं वृक्षं करोति जलसेचकः। निष्पत्त्रं वृक्षतलं करोति भूमिशोधकः॥

**२३४२. निष्कुलान्निष्कोषणे॥ ६२॥ ( २१३३ )**

'कृञः' इत्येव। निष्कुलशब्दान्निष्कोषणे वर्तमानात्कृञो योगे डाच् प्रत्ययो भवति। निष्कोषणम्=अन्तरवयवानां बहिर्निष्कासनम्। निष्कुलाकरोति पशून्। निष्कुष्णातीत्यर्थः।

निष्कोषण इति किम्? निष्कुलान् करोति शत्रून्।

**न्यासः**

सपत्त्रनिष्पत्त्रादतिव्यथने॥ सह पत्त्रेण सपत्त्रः। निर्गतं पत्त्रं यस्मान्निष्पत्त्रः। अतिपीडनम्=अतिबाधनम्॥ ६१॥

निष्कुलान्निष्कोषणे॥ निष्कुलान् करोतीति। निर्दिष्टं कुलं यस्येति स निष्कुलः। कुलशब्दोऽत्र बन्धुषु वर्त्तते॥ ६२॥

**पदमञ्जरी**

दिवसेषु अतिवर्त्तते स एवमुच्यते। समयं करोतीति। समयः=नियमः, सङ्गमो वा–समयनं समय इति॥ ६०॥

सपत्त्रनिष्पत्रातिदतिव्यथने॥ पतत्यनेनेति पत्त्रम्=शराणां पुङ्खगतो बर्हः। सपत्त्रं शरमिति। सह पत्त्रेण वर्त्तते इति। सपत्त्रः, आपुङ्खान्मृगशरीरे शरं प्रवेशयतीत्यर्थः। निष्पत्त्राकरोतीति। निर्गतं पत्त्रमस्मान्निष्पत्त्रं मृगं करोतीति। यथास्य शरीरे पुङ्खप्रदेशो न लगति, तथा शरं शरीरान्निष्क्रामयवीर्त्थः।

सपत्त्रं वृक्षमिति। पत्त्राणि=पर्णानि। [1]जलसेचनत इति। 'कर्तृकरणे कृता बहुलम्' इति तृतीयासमासः। भूमिशोधक इति। 'नित्यं क्रीडाजीविकयोः' इति जीवकायां षष्ठीसमासः॥ ६१॥

निष्कुलान्निष्कोषणे॥ निष्कुलाकरोतीति। निष्कोशितं कुलमन्तरवयवानामास्मादिति बहुव्रीहौ डाच्॥६२॥

**भावबोधिनी**

अतिक्रमण=यापना है। यापना प्रतीयमान रहने पर समय शब्द से डाच् प्रत्यय 'कृञ्' के योग में होता है। उदा०—समयाकरोति। समय बिता रहा है, कालक्षेप=समय काट रहा है—यह अर्थ है [ जो व्यक्ति अवसर-प्राप्त कार्य न करके समय बिता देता है, उसके लिए ऐसा प्रयोग किया जाता है। ]

यापना में—इसका क्या फल है? समयं करोति। [ नियम करता है, संगम करता है, यह अर्थ है। अतः प्रत्यय नहीं होता है, ]॥ ६०॥

'कृञ' इसकी अनुवृत्ति है। अतिव्यथन अर्थ में कृञ् के योग में सपत्र और निष्पत्र शब्दों से डाच् प्रत्यय होता है। अतिव्यथन=अतिपीडन। उदा०—सपत्त्राकरोति मृगं व्याधः। व्याध पंखयुक्त वाण को मृग के शरीर में प्रविष्ट करा देता है, मार देता है– यह अर्थ है। निष्पत्त्राकरोति। वाण को ( इतने जोर से मारता है कि ) मृग के शरीर के दूसरी ओर अर्थात् शरीर फाड़कर बाहर निकाल देता है।—यह अर्थ है।

अतिव्यथन—यह किस लिए है? सपत्त्रं वृक्षं करोति जलसेचकः। निष्पत्रं करोति वृक्षतलं भुमिशोधकः। [ इन में अतिपीडा पहुँचाना अर्थ नहीं है। अतः डाच् प्रत्यय नहीं होता है। ]॥ ६१॥

"कृञः" इसकी अनुवृत्ति होती है। निष्कोषण अर्थ में वर्तमान 'निष्कुल' शब्द से कृञ् के योग में 'डाच्' प्रत्यय होता है। निष्कोषण=भीतरी अवयवों को बाहर निकाल देना। उदा०—निष्कुलाकरोति पशून्। निष्कुष्णाति—यह

१. जलसेचक इति काशिका पाठः।

## २३४३. सुखप्रियादानुलोम्ये ॥ ६३ ॥ ( २१३४ )

सुख-प्रिय-शब्दाभ्यामानुलोम्ये वर्तमानाभ्यां कृञो योगे डाच् प्रत्ययो भवति। आनुलोम्यम् = अनुकूलता, आराध्यचित्तानुवर्तनम्। सुखाकरोति। प्रियाकरोति। स्वाम्यादेश्चित्तमाराधयतीत्यर्थः। सुखं प्रियं वा कुर्वन्नप्यानुलोम्येऽवस्थित एवमुच्यते।

आनुलोम्य इति किम्? सुखं करोति, प्रियं करोत्यौषधपानम् ॥

## २३४४. दुःखात्प्रातिलोम्ये ॥ ६४ ॥ ( २१३५ )

'कृञः' इत्येव। दुःखशब्दात्प्रातिपदिकात् प्रातिलोम्ये गम्यमाने डाच् प्रत्ययो भवति कृञो योगे। प्रातिलोम्यम् = प्रतिकूलता, स्वाम्यादेश्चित्तपीडनम्। दुःखाकरोति भृत्यः।

प्रातिलोम्य इति किम्? दुःखं करोति कदन्नम् ॥

### न्यासः

**सुखप्रियादानुलोम्ये ॥ आराध्यचित्तानुवर्त्तनमिति।** आराध्याः = स्वाम्यादयः, तेषामभिमतकरणेनानभिमतवर्जनेन वा यच्चित्तस्यानुवर्त्तनम् = आराधनम् = आनुलोम्यम्, तत्र प्राणिधर्म एव वेदितव्यम् ॥ ६३ ॥

**दुःखात् प्रातिलोम्ये ॥ स्वाम्यादेश्चित्तपीडनमिति।** स्वाम्यादेरनभिमतानुष्ठानेनाभिमताननुष्ठानेन वा चित्तस्य पीडनं दुःखम् = प्रातिलोम्यम्। तदपि प्राणिधर्म एव ॥ ६४ ॥

### पदमञ्जरी

**सुखप्रियादानुलोम्ये ॥ आराध्यचित्तानुवर्तनमिति।** आराध्याः=स्वाम्यादयः, तेषामिष्टानिष्टकरणाकरणाभ्यां यच्चित्तस्यानुवर्त्तनम्=आराधनं तदानुलोम्यम्। **प्रियं करोत्यौषधपानमिति।** प्रीतिः=प्रियम्, घञर्थे कः ॥ ६३ ॥

**दुःखात्प्रातिलोम्ये ॥ चित्तपीडनमिति।** स्वाम्यादेर्यदनिष्टस्याचरणेन, इष्टस्याकरणेन वा चित्तस्य पीडनं तत्प्रातिलोम्यम् ॥ ६४ ॥

### भावबोधिनी

अर्थ है। [ पशु को आंते आदि भीतरी अवयव इस प्रकार निकाल देता है कि पशु की मृत्यु हो जाती है यह भाव है। ]

निष्कोषण में—इसका क्या फल है? निष्कुलान् करोति शत्रून्। [ यहाँ निष्कोण अर्थ नहीं अपि तु पूर्णतया नाश अर्थ है। अतः प्रत्यय नही होता है ] ॥ ६२ ॥

अनुलोम्य अर्थ में वर्तमान सुख और प्रिय शब्दों से कृञ् के योग में डाच् प्रत्यय होता है। अनुलोम्य = अनुकूल होना, आराधनीय व्यक्ति के चित्त का अनुवर्त्तन करना। उदा०—सुखाकरोति। प्रियाकरोति। अपने स्वामी आदि के चित्त की आराधना करता है—उसे प्रसन्न करने का कार्य करता है—यह अर्थ है। सुख अथवा प्रिय करने वाले, आनुलोम्य में अवस्थित को ऐसे शब्दों से कहा जाता है।

आनुलोम्य में—इसका क्या फल है? सुखं करोति, प्रियं करोति औषधपानम्। [ यहाँ सामान्य प्रतीति है अतः प्रत्यय नहीं होता है। ] ॥ ६३ ॥

'कृञः' इसकी अनुवृत्ति होती है। प्रातिलोम्य गम्यमान रहने पर दुःख इस प्रातिपदिक से कृञ् के योग में डाच् प्रत्यय होता है। प्रातिलोम्य = प्रतिकूलता, अपने स्वामी आदि के चित्त को पीडित करना। उदा० दुःखाकरोति भृत्यः। [ नौकर अपने स्वामी के चित्त को पीड़ित करता है। ]

प्रातिलोम्य—यह किस लिए है? दुखं करोति कदन्नम्। [ खराब अन्न दुःखं देता है। यहाँ प्रत्यय नहीं होता है। ] ॥ ६४ ॥

२३४५. शूलात्पाके ॥ ६५ ॥ ( २१३६ )

'कृञः' इत्येव। शूलशब्दात्पाकविषये डाच् प्रत्ययो भवति कृञो योगे। शूले पचति शूलाकरोति मांसम्। पाक इति किम्? शूलं करोति कदन्नम्॥

२३४६. सत्यादशपथे ॥ ६६ ॥ ( २१३७ )

'कृञः' इत्येव। सत्यशब्दादशपथे डाच् प्रत्ययो भवति कृञो योगे। सत्यशब्दोऽनृतप्रतिपक्षवचनः। क्वचित्तु शपथे च वर्तते—सत्येन शापयेद्विप्रमिति, तस्यायं प्रतिषेधः। सत्याकरोति वणिक् भाण्डम्। 'मयैतत्क्रेतव्यम्'—इति तथ्यं करोति।

अशपथ इति किम्? सत्यं करोति ब्राह्मणः॥

२३४७. मद्रात्परिवापणे ॥ ६७ ॥ ( २१३८ )

'कृञः' इत्येव। मद्रशब्दात्परिवापणे डाच् प्रत्ययो भवति कृञो योगे। परिवापणम् = मुण्डनम्। मद्रशब्दो मङ्गलार्थः। मङ्गलं मुण्डनं करोति, मद्राकरोति।

❀ भद्राच्चेति वक्तव्यम् ❀ ( म० भा० )। भद्राकरोति नापितः कुमारम्।

न्यासः

शूलात् पाके॥ शूलाकरोति मांसमिति। पचतीत्यर्थः॥ ६५॥ सत्यादशपथे॥ ६६॥

मद्रात् परिवापणे॥ मद्राकरोतीति। मङ्गलपूर्वं मुण्डनं करोतीत्यर्थः।

भद्राच्चेति वक्तव्यमिति। भद्रशब्दाच्च डाज्भवतीत्येतदर्थरूपं व्याख्येयमित्यर्थः। तत्रेदं व्याख्यानम्—

पदमञ्जरी

शूलात्पाके॥ शूलं करोति कदन्नमिति। शूलम् = उदरतोदः, कुत्सितमन्नं कदन्नम्॥ ६५॥

सत्यादशपथे॥ सत्सु साधु सत्यम्, प्राग्घितोये यति प्राप्तेऽस्मादेव निपातनाद्यः। अन्तोदात्तो हि सत्यशब्दः—'सत्येनोत्तभिता भूमिः' ( ऋ० १०.८५.१ ), 'ऋतं च सत्यं च' ( तै० सं० ३.२.७.१ ) इति। 'शपेरथः' ( द० उ० ६.३८ ) शपथः, भाण्डम् = रत्नादिद्रव्यजातम्। तथ्यमिति। तथैव=तथ्यम्, 'पादार्घाभ्यां च' इति चकारस्यानुक्तसमुच्चयार्थत्वात्स्वार्थे यत्॥ ६६॥

मद्रात्परिवापणे॥ परिवापणमिति। कर्मव्यापारमात्रवाचिनो वपेर्हेतुमण्णिचि ल्युट्, माङ्गल्यं मुण्डनं

भावबोधिनी

'कृञः' इसकी अनुवृत्ति होती है। पाकविषय में कृञ् के योग में शूल शब्द से डाच् प्रत्यय होता है। उदा०—शूले पचति—इस अर्थ में शूलाकरोति मांसम् [ मांस को शूल पर पकाता है। ]

पाक अर्थ में—इसका क्या फल है? शूलं करोति कदन्नम्। खराब अन्न पेट में दर्द करता है—यहाँ नहीं होता है। ]॥ ६५॥

'कृञः' इसकी अनुवृत्ति है। अशपथ में वर्तमान सत्य शब्द से कृञ् के योग में डाच् प्रत्यय होता है। सत्य शब्द अनृत के प्रतिपक्ष = विरुद्ध का बाचक है। परन्तु कहीं पर शपथ अर्थ में भी है—"सत्येन शापयेद् विप्रम्।' [ सत्य से ब्राह्मण को शपथ दिलवानी चाहिए। मनु० ]' उसका यह प्रतिषेध है। उदा०—सत्याकरोति वाणिक् भाण्डम्। मुझे यह खरीदना चाहिए—इसे बनिया सच करता है। अशपथ में इसका क्या फल है? सत्यं करोति ब्राह्मणः। [ यहाँ नहीं होता है। ]॥ ६६॥

'कृञ्' इसकी अनुवृत्ति होती है। कृञ् के योग में, परिवापण अर्थ में मद्र शब्द से 'डाच्' प्रत्यय होता है। परिवापण = मुण्डन ( शिर के सब बाल कटवाना )। मद्र शब्द मङ्गल अर्थवाला है। उदा०—मङ्गलं मुण्डनं करोति—इस अर्थ में—मद्राकरोति = माङ्गलिक कार्य में शिर मुड़वाता है ]।

परिवापण इति किम् ? भद्रं करोति ॥

## २३४८. समासान्ताः ॥ ६८ ॥ ( ६७६ )

**अधिकारोऽयम्। आ पादपरिसमाप्तेर्ये प्रत्यया विहितास्ते समासस्यान्तावयवाएकदेशा भवन्ति—तद्ग्रहणेन गृह्यन्त इति वेदितव्यम्। प्रयोजनम्—अव्ययीभावद्विगुद्वन्द्वतत्पुरुषबहुव्रीहिसंज्ञाः। अधिराजम्, उपराजम्। 'नाव्ययीभावाद्' ( २.४.८३ ) इत्येष विधिर्भवति, 'अनश्च' ( ५.४.१०८ ) इति टच्।**

**न्यासः**

'समयाच्च यापनायाम्' इत्यतश्चकारोऽनुवर्त्तते, स चानुक्तसमुच्चयार्थः, तेन भद्रादपि भविष्यतीति ॥ ६७ ॥

**समासान्ताः** ॥ 'समासान्ताः' **इत्ययमधिकार इति**। वक्ष्यमाणेन 'बहुव्रीहौ संख्येये डजबहुगणात्' इत्यादिना बहुव्रीह्यादित्वेन समासविशेषाद् विधास्यन्ते; यत्रापि बहुव्रीह्यादिग्रहणं नास्ति, तत्र सङ्घातः प्रकृतित्वेन निर्दिश्यते। यथा—'अच् प्रत्यन्ववपूर्वात् सामलोम्न' इति, ततश्च सामर्थ्यादेव समासान्ताः प्रत्यया विज्ञास्यन्ते, तत् किं समासग्रहणेन ? यत्रैतदुभयं नास्ति—यथा, 'ऋक्पूरब्धूःपथामानक्षे' इति, तदर्थं समासान्तग्रहणं क्रियते। अन्तशब्दोऽयं सामीप्यवचनोऽप्यस्ति, यदि तस्येहग्रहणं स्यात् प्रत्ययपरत्वेनैव डजादीना सामीप्यस्य सिद्धत्वादन्तशब्दोऽनर्थकः स्यादिति मत्वाऽऽह—अवयववचनोऽयमन्तशब्दो गृह्यत इति दर्शयन्नाह—**अवयवा इति**। अस्य पर्यायेण वृत्तिं कर्तुमाह—**एकदेशा इति**। एकदेशशब्दमिहाश्रयता प्राक्समासविधेः समासार्थादुत्तरपदात् वक्ष्यमाणाः प्रत्यया भवन्ति, पश्चात् समासः—इत्युक्तं भवति। एवं हि ते समासस्यैकदेशा भवन्ति यदि प्राक् समासवृत्तेः स्यात्। समासान्तान् कृत्वा पश्चात् तदन्तेन समासः क्रियते। एवञ्च तैः सह समाससंज्ञा भवतीत्युपपद्यते डजादीनां समासावयवत्वम्। अतश्चैतदेवं विज्ञेयम्। योऽभिमन्यते—समासे कृते डजादिभिर्भवितव्यमिति, तस्य 'न कपि' इत्यत्र यद् वक्ष्यति **वृत्तिकारः**—'समासार्थे ह्युत्तरपदे कपि कृते पश्चात्

**पदमञ्जरी**

करोतीत्यर्थः, चोलदीक्षादौ। **भद्राच्चेति वक्तव्यमिति**। मद्रादित्यर्थग्रहणमिति तु व्याख्याने मङ्गलादिभ्योऽपि स्यात् ॥ ६७ ॥

**समासान्ताः** ॥ अवयववचनोऽन्तशब्द इत्याह—**अवयवा एकदेशा इति**। समीपवचनस्तु न गृह्यते; प्रत्ययपरत्वेनैव सिद्धत्वात्। अवयववचनं चान्तशब्दमाश्रयता समासार्थादुत्तरपदादकृत एव समासे समासान्ता भवन्तीत्युक्तं भवति। एवं हि ते समासस्यैकादेशा भवन्ति, यदि प्रागेव तान्प्रत्ययान्कृत्वा तदन्तेन समासः क्रियते। तथा च 'न कपि' इत्यत्र वक्ष्यति—'समासार्थे ह्युत्तरपदे कपि कृते पश्चात्समासेन भवितव्यम्' ( काशिका ७.४.१४ ) इति। ये पुनरत्र पक्षे दोषास्ते ङ्याप्सूत्रे एव प्रतिविहिताः।

**अधिराजम्, उपराजमिति**। विभक्त्यर्थे सामीप्ये चाव्ययीभावः, 'अव्ययीभावे शरत्प्रभृतिभ्यः', 'अनश्च' इति टच्।

**भावबोधिनी**

❀ मद्र शब्द से भी कहना चाहिए। ❀ उदा०—मद्राकरोति नापितः कुमारम्। [ नाई कुमार के बाल मूड़ता है। ]

परिवापण में—इसका क्या प्रयोजन है ? मद्रं करोति। [ यहाँ मुण्डन अर्थ नहीं है। अतः प्रत्यय नहीं होता है। ] ॥ ६७ ॥

यह अधिकार सूत्र है। इस पाद की समाप्ति तक जिन प्रत्ययों का विधान किया गया है वे समास के अन्तावयव = एकदेश होते हैं, उसके ग्रहण से गृहीत होते हैं—ऐसा समझना चाहिए। इसका प्रयोजन है—अव्ययीभाव, द्विगु, द्वन्द, तत्पुरुष, बहुव्रीहि— संज्ञायें। [ जब ये प्रत्यय भी समास के अवयव बनकर उसके ग्रहण से गृहीत होने लगते हैं तो ]

**द्विपुरी, त्रिपुरीति।** 'द्विगोः' ( ४.१.२१ ) इति ङीब्भवति। **कटकवलयिनी। शङ्खनूपुरिणी। कोशनिषदिनी। स्रक्त्वचिनी।** 'द्वन्द्वोपतापगर्ह्यात्' ( ५.२.१२८ )। इतीनिर्भवति।

**न्यासः**

समासेन भवितव्यम्' इति, तद्विरुध्यते। ननु च समासार्थादुत्तरपदाड् डजादिषु कृतेषु पश्चात् तदन्तेन समासः क्रियते—इत्यस्मिन्नपि पक्षे समानो दोषः, यतः 'पथो विभाषा' इत्येवमादिषु नञः परो यः पथिन्-शब्दस्तदन्तात् तत्पुरुषाद्विभाषा समासान्तो भवतीत्येवमादयो निर्देशा विरुध्यन्त एव? नैतदस्ति; तदविरोधस्य 'ङ्याप्प्रातिपदिकात्' इत्यत्र प्रतिपादितत्वात्। **तद्ग्रहणेन गृह्यन्त इति।** तच्छब्देन समासः प्रत्यवमृश्यते। समासावयवत्वे सति तेषामपि तदनुप्रवेशो भवति। अतस्ते समासग्रहणेन गृह्यन्त इति। अथ समासावयवत्वे प्रत्ययस्य किं प्रयोजनम्? इत्याह—**प्रयोजनमित्यादि। अधिराजम्, उपराजमिति।** यथाक्रमं विभक्त्यर्थे सामीप्येऽव्ययीभावः। 'अव्ययीभावे शरत्प्रभृतिभ्यः', 'अनश्च' इति टजन्तस्याव्ययीभावग्रहणेन ग्रहणात् 'नाव्ययीभावादतोऽम्त्वपञ्चम्याः' इति विभक्तेरलुग्, अमन्तभावश्च भवति।

द्वे पुरी समाहृते इति 'तद्धितार्थोत्तरपदसमाहारे च' इति समासः, स च 'संख्यापूर्वो द्विगुः' इति द्विगुसंज्ञः, 'ऋक्पूरब्धूःपथाम्' इत्यकारप्रत्ययान्तस्य द्विगुग्रहणेन ग्रहणादकारान्ताद् 'द्विगोः' इति ङीप् सिद्धो भवति।

**कोशनिषदिनीति।** कोशश्च निषच्चेति समाहारद्वन्द्वः, 'द्वन्द्वाच्चुदषहान्तात् समाहारे' इति टच्, तस्य द्वन्द्वग्रहणेन ग्रहणात् कोशनिषदमस्या अस्तीति 'द्वन्द्वोपतापगर्ह्यात्' प्राणिस्थादिनिर्भवति, 'ऋन्नेभ्यो ङीप्' इति ङीप्। **स्रक्त्वचिनीति।** पूर्वेण तुल्यम्।

**विधुरः प्रधुर इति।** विगतो धुरः, प्रगतो धुर इति 'कुगतिप्रादयः' इति प्रादितत्पुरुषसमासः। पूर्ववदकारस्येह तत्पुरुषग्रहणेन ग्रहणात् 'तत्पुरुषे तुल्यार्थतृतीया' इत्यदिना पूर्वपदप्रकृतिस्वरः सिद्धो भवति। पूर्वपदं पुनरत्र निपात आद्युदात्तः। असति तु समासान्तत्वे प्रत्ययस्वरेणान्तोदात्तता स्यात्। **उच्चैर्धुरः, नीचैर्धुर**

**पदमञ्जरी**

**द्विपुरीति।** समाहारद्वन्द्वः। ऋक्पूरब्धूः' इत्यकारः। कोषश्च निषच्च कोषनिषदम्, स्रुक्च त्वक् च स्रुक्त्वस्रम्—'द्वन्द्वाच्चुदषाहान्तात्समाहारे' इति टच्। विगतो धुरः, प्रगतो धुर इति। प्रादिसमासः। **तत्पुरुषे तुलार्थेत्येष स्वरो भवतीति।** पूर्वपदप्रकृतिस्वरः, पूर्वपदं चात्र 'निपाता आद्युदात्ताः' (फि०सू०८०) 'उपसर्गाश्चाभिवर्जम्' ( धि० सू० ८१ ) इत्याद्युदात्तम्, उच्चैर्नीचैःशब्दौ स्वरादिष्वन्तोदात्तौ पठितौ। अथ समासग्रहणं किमर्थम्, यावता 'बहुव्रीहौ संख्येये', 'तत्पुरुषस्याङ्गुलेः', 'अव्ययीभावे शरत्प्रभृतिभ्यः' 'द्वन्द्वाच्चुदषहान्तात्' इति प्रायेण

**भावबोधिनी**

अधिराजम् [ राजनि अधि—यहाँ अव्ययीभाव समास के बाद ] 'अनश्च' सूत्र 'टच्'=अ प्रत्यय और 'नाव्ययीभावादतोऽस्त्वपञ्चम्याः'' से [ सु आदि का ] अम् होता है।

द्विपुरी, त्रिपुरी। [ द्वे पुरी समाहृते—इसमें "तद्धितार्थोत्तरपदसमाहारे च" सूत्र से समास होता है और वह "संख्यापूर्वो द्विगुः" सूत्र से द्विगुसंज्ञक हो जाता है। 'ऋक्पुरब्धूःपथामानक्षे' इस सूत्र से 'अच्' प्रत्यय होता है यह भी द्विगु का अवयव हो जाता है इसलिए ] "द्विगोः" इस सूत्र से ङीप् होता है। कटकवलयिनी। शङ्खनूपुरिणी। कोशनिषदिनी। स्रक्त्वचिनी। [ इनमें पहले द्वन्द्व करके ] "द्वन्द्वोपतापगर्ह्यात्" इस सूत्र से इनि प्रत्यय होता है। कोशनिषीदिनी, स्रक्त्वचिनी में 'द्वन्द्वाच्चुदषहान्तात्' सूत्र से टच्=प्रत्यय होता है। इसको भी द्वन्द्व का अवयव मानकर इनि और ङीप् होते हैं। ]

विधुरः। प्रधुरः। [ विगतः धूरः, प्रगतः धुरः—इन विग्रहों में "कुगतिप्रादयः" सूत्र से तत्पुरुष समास के बाद ] "तत्पुरुषे तुल्यार्थ०" इस सूत्र से [ पूर्वपद का प्रकृति—] स्वर होता है। उच्चैर्धुरः, नीचैर्धुरः [ उच्चैः

विधुरः । प्रधुरः । 'तत्पुरुषे तुल्यार्थ' ( ६.२.२ ) इत्येष स्वरो भवति । उच्चैर्धुरः । नीचैर्धुरः । 'बहुव्रीहौ प्रकृत्या पूर्वपदम्' ( ६.२.१ ) इत्येतद्भवति ॥

## २३४९. न पूजनात् ॥ ६९ ॥ ( ९५४ )

**यान् शब्दानुपादाय समासान्ता विधीयन्ते 'राजाहःसखिभ्यष्टच्' ( ५.४.९१ ) इत्येवमादीन्, यदा ते पूजनात् = पूजनवचनात्परे भवन्ति तदा समासान्तो न भवति । सुराजा । अतिराजा । सुगौः । अतिगौः ।**

**❀ पूजायां स्वतिग्रहणं कर्तव्यम् ❀ ( म० भा० ५.४.६९ वा० १ ) । इह मा भूत—परमराजः परमगव इति ।**

**❀ प्राग्बहुव्रीहिग्रहणं च कर्तव्यम् ❀ ( म० भा० वा० २ ) । 'बहुव्रीहौ सक्थ्यक्ष्णोः' ( ५.४.११३ ) इत्येवमादौ प्रतिषेधो न भवति—सुसक्थः, अतिसक्थः । स्वक्षः, अत्यक्षः ( म० भा० ) ॥**

### न्यासः

**इति ।** उच्चैर्धूरस्येति, नीचैर्धूरस्येति बहुव्रीहिः । पूर्ववदकार प्रत्ययः, तस्य बहुव्रीहिग्रहणेन ग्रहणाद् 'बहुव्रीहौ प्रकृत्या पूर्वपदम्' इति पूर्वपदप्रकृतिस्वरो भवति । पूर्वपदप्रकृतिस्वरस्त्विहान्तोदात्तः ।

सनुतर्, उच्चैस्, नीचैस्, शनैस्, ऋधक्, ऋते, युगपत्, आरात्, पृथगित्येते सनुतर्—प्रभृतयोऽन्तोदात्ताः; स्वरादिषु पाठात् ॥ ६८ ॥

**न पूजनात् ॥ सुराजा, अतिराजेति ।** शोभनो राजा, अतिशयितः राजेति विगृह्य 'कुगतिप्रादयः' इति समासः । **सुगौरिति** पूर्ववत् समासः । अत्र 'गोरतद्धितलुकि' इति टच् प्राप्नोति; अस्माद्वचनान्न भवति ।

**परमराजः, परमगव इति ।** 'सन्महत्' इत्यादिना समासः । **सुसक्थ इति ।** 'बहुव्रीहौ सक्थ्यक्ष्णोः स्वाङ्गात् षच्' इति षच् ॥ ६९ ॥

### पदमञ्जरी

समासविशेषणग्रहणमस्ति ? यत्रापि नास्ति तत्रापि सद्भाव एव गृह्यते, यथा 'अच् प्रत्यन्ववपूर्वात्सामलोम्नः' इति । यत्र तर्ह्येतदुभयं नास्ति 'ऋक्पूरब्धूः' इत्यादौ, तदर्थं समासग्रहणमिति ॥ ६८ ॥

**न पूजनात् ॥ यान् शब्दानुपादायेति ।** पूजनवचनात्समासान्तो न भवतीत्ययमर्थो न भवति; परिगणिताभ्य एव प्रकृतिभ्यः समासान्तविधानात् । तत्र च पूजनार्थस्य कस्यचिदभावात्, अभावे प्रतिषेधानुपपत्तेः । **सुराजेत्यादौ** प्रादिसमासः ।

**पूजायां स्वतिग्रहणमिति ।** पूजनग्रहणमपि कर्त्तव्यमेव, अवक्षेपणे अतिक्रमणे च वर्त्तमानयोः स्वत्योर्ग्रहणं मा भूदिति । **प्राग्बहुव्रीहिग्रहणं चेति ।** 'बहुव्रीहौ सक्थ्यक्ष्णोः' इत्यतः प्रागयमधिकार इति वक्तव्यमित्यर्थः ॥ ६९ ॥

### भावबोधिनी

धूर्यस्य, नीचैः धूर्यस्य—इनमें बहुव्रीहि के बाद "ऋक्पूरब्धूःपथामानक्षे" सूत्र से 'अ' प्रत्यय करने पर भी बहुव्रीहि ही मान कर ] "बहुव्रीहौ प्रकृत्या पूर्वपदम्" इस सूत्र से पूर्वपद का प्रकृतिस्वर होता है । [ यह अन्तोदात्त होता है । ] ॥ ६८ ॥

जिन शब्दों को लेकर समासान्त प्रत्यय किए जाते हैं "राजाहःसखिभ्यष्टच्'—आदि से टच् आदि, ये जब पूजनवाचक से परे होते हैं, तब उन शब्दों से समासान्त प्रत्यय नहीं होता है । उदा०—सुराजा । अतिराजा । [ शोभनः राजा, अतिशयितः राजा—इनमें 'कुगतिप्रादयः" सूत्र से समास के बाद 'राजाहःसखिभ्यष्टच्" सूत्र से टच् प्रत्यय नहीं होता है । ] सुगौः । अतिगौः [ यहाँ "गोरतद्धितलुकि" सूत्र से टच् नहीं होता है । ]

❀ पूजा के प्रसङ्ग में सु और अति का ग्रहण करना चाहिए । ❀ जिससे इनमें निषेध न हो सके—परमराजः,

२३५०. किमः क्षेपे ॥ ७० ॥ ( ९५५ )

क्षेपे यः किंशब्दस्ततः परस्य समासान्तो न भवति । किंराजः यो न रक्षति । किंसखा योऽभिद्रुह्यति । किंगौर्यो न वहति । 'किं क्षेपे' ( २.१.६४ ) इति समासः ।

क्षेप इति किम् ? कस्य राजा किंराजः । किंसखः । किंगवः ॥

२३५१. नञस्तत्पुरुषात् ॥ ७१ ॥ ( ९५६ )

नञः परे वक्ष्यमाणा ये राजादयस्तदन्तात् तत्पुरुषात् समासान्तो न भवति । अराजा । असखा । अगौः । तत्पुरुषादिति किम् ? अनृचो माणवकः । अधुरं शकटम् ॥

न्यासः

किमः क्षेपे ॥ किंराजेति । निन्दितो राजेति विगृह्य 'किं क्षेपे' इति समासः । किंराज इत्यत्र प्रश्ने किंशब्दः, न क्षेपे, षष्ठीसमासः । ननु 'लक्षणप्रतिपदोक्तयोः प्रतिपदोक्तस्यैव ग्रहणम्' इति प्रतिपदोक्तो यः किमः समासः 'किं क्षेपे' इत्यनेन विहितः स एव ग्रहीष्यत इति क्षेपग्रहणमनर्थकम् ? एवं तर्हि क्षेपग्रहणेनैतदेव ज्ञापयति—इयं परिभाषा नावतिष्ठत इति । तेन बहुव्रीहावपि प्रतिषेधः सिद्धो भवति—निन्दिता धूरस्य किन्धुरं शकटम्, निर्धुरं शकटमिति ॥ ॥ ७० ॥

नञस्तत्पुरुषात् ॥ अराजेति । तत्पुरुषोऽयम् ।

अनृचो माणवकः, अधुरं शकटमिति । द्वावपि बहुव्रीही । पूर्ववदकारः ॥ ७१ ॥

पदमञ्जरी

किमः क्षेपे ॥ किंराजेति । 'किं क्षेपे' इति समासः । कस्य राजा किंराज इति । प्रश्नेऽत्र किंशब्दः ।

'क्षेपे' शक्यमकर्त्तुम्, कस्मादत्र न भवति—'लक्षणप्रतिपदोक्तयोः प्रतिपदोक्तस्यैव ग्रहणम्' ( व्या० परि० ३, इति । कश्चिदाह—क्षेपग्रहणेनैतज्ज्ञापयति—इयमिह परिभाषा नापतिष्ठत इति, तेन निन्दिता धूरस्य

भावबोधिनी

परमगवः । [ यहाँ भी पूजन = प्रशंसा की प्रतीति है' परन्तु 'सु' अथवा 'अति' न होने से निषेध नहीं होता है टच् = अ प्रत्यय हो जाता है । ]

ॐ बहुव्रीहि में होने वाले प्रत्ययों से पहले इस निषेध की प्रवृत्ति कहनी चाहिए । ॐ इसलिए 'बहुव्रीहौ सक्थ्यक्ष्णोः स्वाङ्गात् षच्'' आदि से होने वाले प्रत्ययों में प्रतिषेध नहीं होता है—सुसक्थः, अतिसक्थः । स्वक्षः, अत्यक्षः । [ शोभने अक्षिणी यस्य सः—इसमें बहुव्रीहि के बाद षच् = अ, यह समासान्त प्रत्यय होता है । अक्षि के 'इ' का लोप होने से अकारान्त हो जाता है स्त्रीलिङ्ग में षित् मान कर ङीष् होता है—स्वक्षी ] ॥ ६९ ॥

क्षेप = निन्दा अर्थ में जो किम् शब्द है, उससे परे शब्द का समासान्त प्रत्यय नहीं होता है । उदा०—किं राजा यो न रक्षति । किंसखा योऽभिद्रुह्यति । किंगौर्यो न वहति । [ इनमें कुत्सितः राजा आदि विग्रह करके ] 'किं क्षेपे' इस सूत्र से समास होता है । [ टच् प्रत्यय प्राप्त होता है परन्तु उसका निषेध हो जाता है । ] क्षेप में—इसका क्या फल है ? कस्य राजा = किंराजः । कस्य सखा—किंसखः । कस्य गौः—किंगवः । [ इनमें क्षेप नहीं अपितु सम्बन्धसामान्य की प्रतीति होती है । अतः निषेध न होने से टच् = अ प्रत्यय हो जाता है । ] ॥ ७० ॥

नञ् से परे वक्ष्यमाण ( आगे कहे जाने वाले ) जो राजा आदि वे जिनके अन्त में हैं ऐसे तत्पुरुष से समासान्त प्रत्यय नहीं होता है । उदा०—अराजा । असखा । अगौः । [ इनमें 'न राजा, न सखा, न गौः—इस नञ् तत्पुरुष के बाद प्राप्त समासान्त टच् प्रत्यय का निषेध हो जाता है । ]

तत्पुरुष से—इसका फल है ? अनृचः माणवकः । अधुरं शकटम् । [ न ऋक् यस्य सः, न धूः यस्य सः—इन अर्थों में बहुव्रीहि है । अतः निषेध न होने से ''ऋक्पूरब्धूःपथामानक्षे'' सूत्र से 'अ' यह समासान्त होता है । ] ॥ ७१ ॥

## २३५२. पथो विभाषा ॥ ७२ ॥ ( ९५७ )

**'नञस्तत्पुरुषात्' इति वर्त्तते। नञः परो यः पथिन्-शब्दस्तदन्तात्तत्पुरुषात् समासान्तो विभाषा न भवति। पूर्वेण नित्यः प्रतिषेधः प्राप्तो विकल्प्यते। अपथम्, अपन्थाः ॥**

## २३५३. बहुव्रीहौ संख्येये डजबहुगणात् ॥ ७३ ॥ ( ८५१ )

**संख्येये यो बहुव्रीहिर्वर्तते तस्मादबहुगणान्ताड्डच् प्रत्ययो भवति। 'संख्ययाव्ययासन्न' ( २.२.२५ ) इति यो बहुव्रीहिस्तस्येदं ग्रहणम्। उपदशाः। उपविंशाः। उपत्रिंशाः। आसन्नदशाः। अदूरदशाः। अधिकदशाः। द्वित्राः। पञ्चषाः। पञ्चदशाः।**

### न्यासः

**पथो विभाषा ॥ अपथमित्यत्र पूर्ववदकारः।** 'अपथं नपुंसकम्' इति नपुंसकलिङ्गता ॥ ७२ ॥

**बहुव्रीहौ संख्येये डजबहुगणात् ॥** बहुव्रीहाविति सुब्व्यत्ययेन पञ्चम्यर्थे सप्तमी। 'संख्ययाव्ययासन्न' इत्यादिना यो बहुव्रीहिः, तस्येदं ग्रहणमिति। तस्यैव संख्येये वृत्तिः। यर्त्तहि वार्थे वर्त्तते-द्वित्राः, पञ्चषा इति, यश्च सुजर्थे-द्विदशाः, त्रिदशा इति, तत्र न प्राप्नोति? नैष दोषः; तावपि संख्येये वर्तेत एव, संख्येयतयैव वार्थस्य सुजर्थस्य चाभिधानात्। दशानाञ्च समीप **उपदशाः**। विंशतेः समीपे **उपविंशाः**। 'ति विंशतेर्डिति' इति तिलोपः, द्वयोरप्यकारयोः 'अतो गुणे' पररूपत्वम्। दशानामासन्ना **आसन्नदशाः**। दशानामदूरा **अदूरदशाः**। दशानामधिका **अधिकदशाः**। द्वौ वा त्रयो वा **द्वित्राः**। पञ्च वा षड् वा **पञ्चषाः**। सर्वत्र 'सख्ययाव्ययासन्न' इत्यादिना बहुव्रीहिः।

### पदमञ्जरी

शटकस्य किंधूः शटकमिति बहुव्रीहावपि प्रतिषेधः सिद्धो भवतोति। तद्भाष्यविरोधादुपेक्ष्यम्। तस्माद्विस्पष्टार्थं क्षेपग्रहणम् ॥ ७० ॥ ७१ ॥ ७२ ॥

**बहुव्रीहौ संख्येये डजबहुगणात् ॥** 'बहुव्रीहौ' इति सुब्व्यत्ययेन पञ्चम्यर्थे सप्तमी। **तस्येदं ग्रहणमिति।** तस्यैव संख्येये वृत्तेः योऽपि वार्थे वर्त्तते-द्वित्राः, पञ्चषा इति, योऽपि सुजर्थे-द्विदशास्त्रिदशा इति; तावुभावपि संख्येय एव वर्त्तेते; संख्येयस्यैव वार्थस्य सुजर्थस्य चाभिधानात्। **उपदशा इत्यादौ** टिलोपः। **उपविंशा इत्यत्र** 'तिर्विंशतेर्डिति' इति तिलोपः, द्वयोरकारयोः 'अतो गुणे' पररूपत्वम्।

**चित्रगुरिति।** 'गोस्त्रियोः' इति ह्रस्वः।

### भावबोधिनी

'नञ् तत्पुरुष से' इसको अनुवृत्ति होती है। नञ् से परे जो पथिन् शब्द, तदन्त तत्पुरुष से समासान्त प्रत्यय विकल्प से नहीं होता है। पूर्व सूत्र द्वारा नित्य प्रतिषेध विकल्प से किया जा रहा है। उदा०—अपथम् अपन्थाः। [ जब निषध नहीं होता है तब "ऋक्पूरब्धूःपथामानक्षे" सूत्र से 'अ' प्रत्यय और टिलोप होने से "अपथं नपुंसकम्" से नपुंसक होकर 'अपथम्' बनता है। समासान्त प्रत्यय न होने पर—अपन्थाः—यह रहता है। ] ॥ ७२ ॥

संख्येय अर्थ में जो बहुव्रीहि है, बहु और गण शब्द जिसके अन्त में नहीं है, उससे 'डच्' प्रत्यय होता है। "संख्ययाऽव्ययाऽसन्न०" इस सूत्र से जो बहुव्रीहि होता है, उसका यह ग्रहण है। उदा०—उपदशाः। [ दशानां समीपे ये सन्ति—इसमें बहुव्रीहि समास करने पर प्रस्तुत सूत्र से डच् प्रत्यय करने पर उपदशन्+डच्=अ, टिलोप उपदशाः [ =नौ या ग्यारह। इसी प्रकार अन्य शब्दों की प्रक्रिया और अर्थ करने चाहिये— ] उपत्रिंशाः। [ त्रिंशतः समीपे ये ते=२९ या ३१ ] आसन्नदशाः। [ दशानाम् आसन्नाः ] अदूरदशाः। [ दशानाम् अदूराः ] अधिकदशाः। [ दशानाम् अधिकाः। ] द्वित्राः। [ द्वौ वा त्रयो वा ] पञ्चषाः। [ पञ्च वा षड् वा ] पञ्चदशाः। [ पञ्च वा दश वा। सभी में डच् प्रत्यय के डित् होने से टि का लोप होता है। ]

संख्येये इति किम् ? चित्रगुः। शबलगुः।

अबहुगणादिति किम् ? उपबहवः। उपगणाः। अत्र स्वरे विशेषः।

❀ डच्प्रकरणे संख्यायास्तत्पुरुषस्योपसंख्यानं कर्तव्यं निस्त्रिंशाद्यर्थम् ❀ (म० भा० ५.४.७३ वा० १)। निर्गतानि त्रिंशतः निस्त्रिंशानि वर्षाणि देवदत्तस्य। निश्चत्वारिंशानि यज्ञदत्तस्य। निर्गतस्त्रिंशतोऽङ्गुलिभ्यो

**न्यासः**

**संख्याया इत्यादि**। उपसंख्यानशब्दस्य प्रतिपादनमर्थः। तत्पुरुषस्य संख्यावाचि यदुत्तरपदं ततो डचः प्रतिपादनं कर्त्तव्यमित्यर्थः। तत्रेदं प्रतिपादनम्—'संख्यायाश्च गुणान्तायाः' इत्यतश्चकारोऽनुवर्त्तते, स चानुक्त-समुच्चयार्थः, तेन संख्यायास्तत्पुरुषस्य डज्भविष्यतीति। निस्त्रिंशाद्यर्थमिति। आदिशब्दः प्रकारे। निस्त्रिंशा

**चित्रगुरिति**। 'गोस्त्रियोरुपसर्जनस्य' इति ह्रस्वः। ननु च नञिवयुक्तन्यायेन बहुगणप्रतिषेधात् तत्सदृशविज्ञानेन संख्योत्तरपद एव बहुव्रीहिर्विज्ञास्यते, एवञ्च चित्रगुप्रभृतिषु प्राप्तिरेव नास्तीति किं संख्येयग्रहणेन ? स्यादेतदेवं यदि बहुशब्दः संख्येयपदमेव स्यात्; स च वैपुल्यवचनोऽप्यस्ति, तेनासति संख्येयग्रहणे संख्योत्तरपदग्रहणं न स्यात्। **उपबहवः, उपगणा इति**। पूर्ववद् बहुव्रीहिः। **अत्रेत्यादि**। उपगणा इत्यत्र सत्यसति वा डचि रूपं प्रति विशेषो नास्तीति। स्वरे तु विद्यते—डचि हि सत्यन्तोदात्तत्वं स्यात्, तस्मिन्नसति पूर्वपदप्रकृतिभावेनाद्युदात्तं भवति।

**पदमञ्जरी**

संख्येय इति शक्यमवक्तुम्। इह कस्मान्न भवति—चित्रगुरिति ? नञिवयुक्तन्यायेन ( व्या० परि० ६५ ) बहुगणप्रतिषेधात्तत्सदृशविज्ञाने सति संख्योत्तरपदो, बहुव्रीहिर्ग्रहीष्यते। स्यादेतत्—वैपुल्यवचनोऽपि बहुशब्दोऽस्ति न संख्यापदमेव गणशब्दोऽपि सङ्घवचनोऽप्यस्ति, तस्मादशक्यं बहुगणसादृश्येन संख्योत्तरपदं ग्रहीतुमिति ? तन्न; परस्परसाहचर्यात्संख्यापदयोरेव पर्युदासात्। तस्मात् प्रसज्यप्रतिषेधेऽपि समाससम्भावात्सादृश्यस्य चानवस्थित-त्वात् संख्येयग्रहणं कृतम्। **उपबहवः, उपगणा इति**। अनियतप्रचयवचनयोरपि बहुगणशब्दयोरर्थप्रकरणादिना यदा विशिष्टेष्वेव दशादिषु वृत्तिस्तदा तत्समीपगता नवादय उपबहव इत्यविरुद्धं बहुवचनम्। **अत्रेति**। उपगणा इत्यत्र। **स्वरे विशेष इति**। डचि सत्यन्तोदात्तत्वं स्यात्, तस्मिंस्त्वसति पूर्वपदप्रकृतिस्वरेणाद्युदात्तत्वमेव भवति।

**सांख्यायास्तत्पुरुषस्येति**। तत्पुरुषस्यावयवभूतं यत्संख्यावाच्युत्तरपदं तस्मादित्यर्थः। **निस्त्रिंशाद्यर्थमिति**। आदिशब्दः प्रकारे, अव्ययादयः संख्यान्तास्तत्पुरुषा निस्त्रिंशप्रकाराः। गोविंशतिरित्यादौ न भवति। **निस्त्रिंशानि वर्षाणीति**। त्रिंशल्लक्षणायाः संख्याया निर्गतानि अधिकानि एकत्रिंशदादीनीत्यर्थः। **निर्गतस्त्रिंशतोऽङ्गुलिभ्य इति**। ततोऽपि दीर्घतर इत्यर्थः। रूढिशब्दस्येयं यथाकथञ्चिद्व्युत्पत्तिः।

**डच**श्चित्करणं स्वरार्थम्; अन्यथा समासार्थादुत्तरपदात्प्रत्यये कृते पश्चाद्बहुव्रीहौ सतिशिष्टः पूर्वपदप्रकृतिस्वरः स्यात्। इदमेव चित्करणं लिङ्गम्–समासार्थादुत्तरपदात्समासान्ते कृते पश्चात्समासः इति, अन्यथा प्रत्ययस्वर

**भावबोधिनी**

संख्येय अर्थ में—इसका क्या लाभ है ? चित्रगुः। शबलगुः। [ यहाँ संख्येय में बहुव्रीहि नहीं है। अतः प्रत्यय नहीं होता है। ]

बहु और गण अन्त में न हों—इसका क्या लाभ है ? उपबहवः। उपगणाः [ उपगणाः—इसमें डच् प्रत्यय होने या न होने पर रूप में कोई अन्तर नहीं होता है केवल ] स्वर में अन्तर हो जाता है। [चित् होने से अन्तोदात्त होता है।]

❀ डच् प्रत्यय के प्रकरण में संख्या जो तत्पुरुष ( का उत्तर पद ) है उससे उपसंख्यान=प्रतिपादन 'निस्त्रिंश' आदि के लिए करना चाहिए। ❀ उदा०—निर्गतानि त्रिंशतः—इसमें निस्त्रिंशानि वर्षाणि देवदत्तस्य। [ इसमें तीस वर्ष बीते हुए अर्थात् एकतीस वर्ष आदि अर्थ हैं। निस्त्रिंशत्+डच्=अ, टिलोप—निस्त्रिंशानि। ] निश्चत्वारिंशानि

निस्त्रिंशः खड्गः ॥

२३५४. ऋक्पूरब्धूःपथामानक्षे ॥ ७४ ॥ ( ९४० )

'बहुव्रीहौ' इति न स्वर्य्यते, सामान्येन विधानम्। ऋक्, पुर्, अप्, धुर्, पथिन्—इत्येवमन्तानां समासानामकारः प्रत्ययो भवति समासान्तोऽक्षे न। सामर्थ्याद्धुर एतद्विशेषणम्, ऋगादीनां न भवति। अक्ष-

न्यासः

इति। 'कुगतिप्रादयः' इति तत्पुरुषः। डचश्चित्करणमन्तोदात्तार्थम्, अन्यथा हि प्रत्ययस्य समासैकदेशत्वात् प्रत्ययस्वरो बहुव्रीहिस्वरेण बाध्यते ॥ ७३ ॥

ऋक्पूरब्धूःपथामानक्षे ॥ सामर्थ्यादिति। यस्य येन सम्बन्धोऽस्ति तत् तस्य विशेषणं भवति; धुर एव चाक्षेण सम्बन्धोऽस्ति, नेतरेषाम्। अतः सामर्थ्यात् तस्यैवानक्ष इत्येतद् विशेषणं विज्ञायते, न ऋगादीनाम्। 'अनक्षे' इति च षष्ठ्यर्थे सप्तमी सुब्व्यत्ययेन। अत एवाह—अनक्षसम्बन्धिनीत्यादि। अक्षेण सम्बन्धोऽवयवावयविलक्षणः, सोऽस्या अस्तीत्यक्षसम्बन्धिनी। सा धूर्यस्यां तस्या न भवति। अथैवं कस्मान्न विज्ञायते—अक्षेऽभिधेये न भवतीति ? अशक्यमेवं विज्ञातुम्; एवं हि विज्ञायमान इहैव प्रतिषेधः स्याद—दृढा धूरस्याक्षस्य दृढधूरक्ष इति। इह तु न स्यात्—अक्षस्य धूरक्षधूरिति। एवं तर्हि विज्ञायते—अक्षे पूर्वपदे न भवतीति ? एवमप्यशक्यं विज्ञातुम्; यथा ह्येवं विज्ञायमान इहैव प्रतिषेधः स्यात्—अक्षधूरिति। इह तु न स्यात्—दृढधूरक्ष इति। यथा वृत्तिकारेण व्याख्यातं तथोभयत्रापि भवति। अक्षम्बन्धिनी या धूः, तदन्तत्वात्

पदमञ्जरी

एव सतिशिष्टः स्वरः स्यात्। यस्तु मन्यते—कृते समासे समासान्तग्रहणसामर्थ्याच्चागमवत्तद्ग्रहणेन गृह्यते' इति, तस्यापि ज्ञापकार्थं चित्करणम्; स्वरविधेः प्रागेव समासान्तो भवतीति। तेन महाधुर इत्यादौ बहुव्रीहिस्वरो भवति ॥ ७३ ॥

ऋक्पूरब्धूःपथामानक्षे ॥ सामर्थ्यादिति। धुर एवाक्षेण सम्बन्धोऽस्ति, नेतरेषामित्येतत्सामर्थ्यम्। एतद्विशेषणमिति। 'अनक्षे' इत्यत्रोत्तरपदार्थं एतदा प्रत्यवमृश्यते, अत एवाह—अक्षसम्बन्धिनो या धूरिति। सूत्रे त्वक्षस्य धूरपेक्षयाऽधिकरणात्वादनक्ष इति सप्तमी। चक्रसम्बद्धः काष्ठविशेषो रथाद्यवयवः=अक्षः, तत्सम्बन्धिनी धूस्तस्यां न भवतीत्यर्थः। यदि त्वक्षे समासार्थे न भवतीति विज्ञायेत, इहैव प्रतिषेधः स्यात्—दृढा धूरस्य दृढधूरक्ष इति, इह तु न स्याद्—अक्षस्य धूरक्षधूरिति। अथाप्येवं विज्ञायेत—अक्षे पूर्वपदे न भवतीति,

भावबोधिनी

देवदत्तस्य। [ चत्वारिंशतः निर्गतानि— इस अर्थ में समास के बाद डच् प्रत्यय, टिलोप। ] निर्गतः त्रिंशतः अङ्गुलिभ्यः— इस अर्थ में=निस्त्रिंशः खड्गः। अर्थ है तीस अंगुलियों से भी लम्बी तलवार। यह रूढ़ शब्द है किसी प्रकार बना लेना चाहिए। ] ॥ ७३ ॥

'बहुव्रीहौ' इस पर स्वरितत्व प्रतिज्ञा नहीं है, इसकी अनुवृत्ति नहीं है। यह सामान्य रूप से विधान है। ऋक्, पुर्, अप्, धुर् और पथिन्—ये शब्द जिनके अन्त में हैं ऐसे समासों से 'अ' प्रत्यय होता है किन्तु अक्ष अर्थ में नहीं होता है। सामर्थ्यवश यह 'अनक्षे' धुर् का ही विशेषण है, ऋच् आदि का नहीं। अक्षसम्बन्धी जो धुर् उससे यह प्रत्यय नहीं होता है। [ रथादि के पहिये के बीच में लगी लकड़ी को अक्ष कहते हैं। उसकी 'धुर्' होने पर यह प्रत्यय नहीं होता है। उदा०—न ऋक् विद्यते यस्य सः=अनृचः। बह्व्यः ऋचः सन्ति यस्य सः=बहवृचः। [ अ प्रत्यय करने पर अकारान्त हो जाता है। ] अर्धर्चः [ ऋचः अर्धम्—इस में 'अर्धं नपुंसकम्' सूत्र से समास, प्रस्तुत सूत्र से 'अ' प्रत्यय, 'अर्धर्चाः पुंसि च' सूत्र से विकल्प से पुंल्लिङ्ग होता है ] पुर्—ललाटपुरम्। नान्दीपुरम्। [ यहाँ षष्ठी समास के बाद 'अ' प्रत्यय और लोकव्यवहाराधीन नपुंसकत्व होता है। ] अप्—द्वीपम्। [ द्विर्गताः आपः अस्मिन्—इस अर्थ में समास, "द्व्यन्तरुपसर्गेभ्योऽप ईत्" सूत्र से 'आ' का ई, अप्रत्यय—द्वीप। ] अन्तरीपम्। [ अन्तर्गताः आपः अस्मिन्—इसमें भी

**सम्बन्धिनी या धूस्तदन्तस्य न भवति । अनृचः । बह्वृचः । अर्धर्चः । पुर्—ललाटपुरम् । नान्दीपुरम् । अप्—द्वीपम् । अन्तरीपम् । समीपम् । धुर्—राजधुरा । महाधुरः । पथिन्—स्थलपथः । जलपथः ( म० भा० ) ।**

**अनक्षे इति किम् ? अक्षस्य धूः अक्षधूः । दृढधूरक्षः ।**

**अनृचो माणवको ज्ञेयो, बह्वृचश्चरणाख्यायाम् । अनृचो माणवकः । बह्वृचो ब्राह्मणः । अनृक्कं साम, बह्वृक्कं सूक्तमित्यत्र न भवति ॥**

**न्यासः**

समासस्य । **अर्द्धर्च इति** । ऋचोऽर्द्धमिति 'अर्धं नपुंसकम्' इति समासः । 'अर्द्धर्चाः पुंसि च' इति नपुंसकलिङ्गता च । **बह्वृच इति** । बह्व ऋचोऽस्य सन्तीति बहुव्रीहिः । **ललाटपुरमिति** । षष्ठीतत्पुरुषोऽयम् । अथ वा—ललाटं पूरिवेति 'उपमितं व्याघ्रादिभिः' इत्यादिना समासः । **नान्दीपुरमिति** । षष्ठीसमासः । यद्यप्यकारान्तेन पुरशब्देन समासे कृत एतत् सिध्यति, तथापि व्यञ्जनान्तेन पूःशब्देन यदि समासः क्रियते, तदा व्यञ्जनान्तस्य श्रवणं मा भूदित्येवमयं पुरो ग्रहणम् । **द्वीपमिति, अन्तरीपमिति, समीपमिति** । द्विर्गता आपोऽस्मिन्, अन्तर्गता आपोऽस्मिन्, सङ्गता आपोऽस्मिन्निति बहुव्रीहिः; 'द्व्यन्तरुपसर्गेभ्योऽप ईत्' इतीत्वम् । **राजधुरेति** । षष्ठीसमासः । **महाधुर** इति बहुव्रीहिः, 'आन्महः' इत्यात्त्वम्, 'स्त्रियाः पुंवत्' इत्यादिना पुंवद्भावः । **स्थलपथः, जलपथ इति** । षष्ठीसमासः । सप्तमीति योगविभागात सप्तमीसमासो वा ।

ऋगन्तस्य यो बहुव्रीहिर्नञ्पूर्वपदः, तस्य माणवक एवाभिधेये प्रत्यय इष्यते । यो बहुपूर्वपदो बहुव्रीहिर्ऋगन्तः, तस्य चरणाख्यायामेव इष्यत इति दर्शयति—**अनृचो माणवको ज्ञेय इत्यादि** । एतच्च 'पथो विभाषा' इत्यतो विभाषाग्रहणानुवृत्तेर्व्यवस्थितविभाषात्वं चोपलभ्यमिति वेदितव्यम् । **अनृक्कः बह्वृक्कः इति** । 'शेषाद्विभाषा' इति कप् । 'चोः कुः' इति कुत्वम् – चकारस्य ककारः ॥ ७४ ॥

**पदमञ्जरी**

एवमपीहैव प्रतिषेधः स्याद्—अक्षधूरिति, इह तु न स्याद्दढधूरक्ष इति । तस्माद् व्याप्तिन्यायादुक्त एवार्थो न्याय्यः । **अर्द्धर्च इति** । 'अर्धं नपुंसकम्' इति समासे 'अर्द्धर्चाः पुंसि च' इति पुंल्लिङ्गत्वम् । **बह्वृच इति** । बहुव्रीहिः । **ललाटपुरम्, नान्दीपुरमिति** । षष्ठीसमासौ । पवरल्लिङ्गता तु न भवति, लोकाश्रयत्वाल्लिङ्गस्य । यद्यप्यकारान्तेन पुरशब्देन समासे कृते एतत्सिद्ध्यति, तथापि व्यञ्जनान्तेन समासे तस्य श्रवणं मा भूदिति पूर्वग्रहणम् । **द्वीपं समीपमिति** । द्विर्गता आपोऽस्मिन्निति बहुव्रीहिः, 'व्द्यन्तरुपसर्गेभ्योऽप इत्' इतीत्वम् । **राजधुरादयः** । षष्ठीसमासाः । **महाधुर इति** । बहुव्रीहिः, 'स्त्रियाः पुंवत्' इति पुंवद्भावः, 'आन्महतः' इत्यात्वम् ।

**अनृचो माणवक इत्यादि** । ऋगन्तस्य बहुव्रीहेर्नञ्पूर्वस्य माणवक एवाभिधेये प्रत्यय इष्यते, तथा बहुपूर्वपदस्य चरणाख्यायामेवेत्यर्थः । **अनृक्कं साम, बह्वृक्कं सूक्तमिति** । 'शेषाद्विभाषा' इति कप्' 'चोः कुः' इति कुत्वम् ॥ ७४ ॥

**भावबोधिनी**

समास, आ का ई, अ प्रत्यय ] समीपम् । [ संगताः आपः अस्मिन्—इस अर्थ में समास, आ का ई, 'अ' प्रत्यय ] । धुर्—राजधुरा । महाधुरः । [ राज्ञः धूः—इस में षष्ठी तत्पुरुष के बाद 'अ' प्रत्यय, टाप् । महती धूः यस्य—इस बहुव्रीहि में पुवंद्भाव, महत् का आ अन्तादेश, महाधुर् + अ । ] पथिन्—स्थलपथः । जलपथः । [ यहाँ षष्ठीतत्पुरुष समास के बाद स्थलपथिन् + अ, जलपथिन् + अ, टिलोप ] ।

अनक्ष में—इसका क्या फल है ? अक्षस्य धूः—अक्षधूः । दृढ़धूः अक्षः [ षष्ठीतत्पुरुष और बहुव्रीहि दोनों में यह प्रत्यय नहीं होता है । ]

अनृच माणवक गेय=गायक है, बह्वृच चरण को आख्या में ही है । [ अर्थात् अनृच यह प्रयोग माणवक अर्थ में और बह्वृच यह चरणाख्या में ही होते हैं । अनृचः माणवकः, बह्वृचः ब्राह्मणः । अनृक्कं साम, बह्वृक्कं सूक्तम्—इनमें नहीं होता है । [ इन में बहुव्रीहि समास के बाद 'शेषाद्विभाषा' सूत्र से समासान्त कप् प्रत्यय, 'चोः कुः, सूत्र से 'च्' का क होता है । ] ।।७४।।

## २३५५. अच् प्रत्यन्ववपूर्वात्सामलोम्नः ॥ ७५ ॥ ( ९४३ )

**प्रति, अनु, अव-इत्येवम्पूर्वात्सामान्ताल्लोमान्ताच्च समासादच् प्रत्ययो भवति । प्रतिसामम्, अनुसामम्, अवसामम् । प्रतिलोमम्, अनुलोमम्, अवलोमम् ।**

कृष्णोदक्पाण्डुपूर्वाया भूमेरच्प्रत्ययः स्मृतः ।
गोदावर्याश्च नद्याश्च संख्याया उत्तरे यदि ॥

**कृष्णभूमः । पाण्डुभूमः । उदग्भूमः । पञ्चनदम् । पञ्चगोदावरम् । 'नदीभिश्च' ( २.१.४० ) इत्यव्ययीभावः ।**

**न्यासः**

**अच्प्रत्यन्ववपूर्वात्सामलोम्नः ॥ प्रतिसाममिति ।** प्रति गतं साम प्रतिसामम् । प्रादिसमासः । प्रतिगतं वा सामास्येति बहुव्रीहिः, गतशब्दो गतार्थत्वाद् वृत्तौ न प्रयुज्यते । अथ वा—साम प्रतीति यथार्थे 'अव्ययं विभक्ति' इत्यादिनाऽव्ययीभावः । अनुगतं सामेत्यनुसामम् । प्रादिसमासः । अनुगतं सामानेनेति बहुव्रीहिर्वा । **अवसाममिति ।** पूर्वेण तुल्यम् । **अनुलोममित्यादौ** पूर्वेण तुल्यम् । **अवलोममित्यादि** पूर्ववत् प्रादिसमासादयो वेदितव्याः ।

**कृष्णोदक्पाण्डुपूर्वाया इत्यादि ।** कृष्णोदक्पाण्डुशब्दाः पूर्वे यस्या भूमेस्तस्या अच्प्रत्ययः स्मृतः । कृष्णा भूमिरस्मिन् देशे कृष्णभूमो देशः । उदीची भूमिरस्मिन् देश उदग्भूमः । पाण्डुर्भूमिरस्मिन् पाण्डुभूमः । गोदावर्य्याश्च नद्याश्चाच्प्रत्ययः स्मृतः, ते चेन्नदीगोदावर्य्यौ संख्याया उत्तरे भवतः । पञ्चानां गोदावरीणां समाहारः ।' नदीभिश्च' इति समाहारेऽव्ययीभावः—पञ्चगोदावरम्, पञ्चनदम् ।

**पदमञ्जरी**

**अच् प्रत्यन्ववपूर्वात्सामलोम्नः ॥ प्रतिसाममित्यादौ** प्रादिसमासः, बहुव्रीहिः, अव्ययीभावाश्च यथासम्भवं वेदितव्याः ।

**कृष्णोदक्पाण्डुपूर्वाया इति ।** कृष्णादिशब्दाः पूर्वे यस्यास्तस्या भूमेरच् प्रत्ययः स्मृतः । कृष्णा भूमिरस्मिन् कृष्णभूमो देशः उदीची भूमिरस्मिन्नुदग्भूमो देशः । कः पुनरसौ पृथिव्या दक्षिणसीमा ? भूमिशब्दो वा तद्विशेषे सस्यसंपन्ने द्रष्टव्यः । यस्य दक्षिणतः खिलः स देश उदग्भूमः । गोदावर्याश्च नद्याश्चाच् प्रत्ययः स्मृतः, ते यदि संख्याया उत्तरे भवतः—पञ्चगोदावरम्, पञ्चनदम् । 'नदीभिश्च' इति समाहारेऽव्ययीभावः ।

**भावबोधिनी**

प्रति, अनु, अव —ये जिसके पूर्व में हैं, साम और लोम जिसके अन्त में है ऐसे समास से अच् प्रत्यय होता है। उदा०—प्रतिगतं साम—इस में —प्रतिसामम्, अनुगतं साम—इसमें—अनुसामम् । [ इनमें प्रादि समास है अथवा बहुव्रीहि है अथवा अव्ययीभाव है जो सम्भव है वह मान लेना चाहिए । अच् प्रत्यय के बाद टि का लोप हो जाता है । ] प्रतिलोमम्, अनुलोमम्, अवलोमम् । [ इनमें भी—अनुगतं लोम—आदि विग्रह मानकर समास के बाद अच् प्रत्यय होता है । ]

कृष्ण, उदक् और पाण्डु जिसके पूर्व में ऐसे 'भूमि' शब्द से अच् प्रत्यय माना गया है । और यदि संख्यावाचक से उत्तरवर्त्ती गोदावरी तथा नदी है तो उनसे अच् प्रत्यय होता है ॥

कृष्णभूमः । [ कृष्णा भूमिः यस्मिन् सः—इसमें है । ] पाण्डुभूमः । [ पाण्डु भूमिः यस्मिन् सः—यहाँ भी अच्, इलोप ] । उदग्भूमिः । [ उदीची भूमिर्यस्मिन्—इस अर्थ में समास पुंवद्भाव, अच् प्रत्यय, इलोप ] पञ्चनदम् । पञ्चगोदावरम् । [ यहाँ समाहार अर्थ में ] "अव्ययीभावश्च" इस सूत्र से अव्ययीभाव समास होता है ।

❀ भूमेरपि संख्यापूर्वाया अच् प्रत्यय इष्यते ❀ द्विभूमः प्रासादः, त्रिभूमः। दशभूमकं सूत्रम्।
अन्यत्रापि च दृश्यते। पद्मनाभः। ऊर्णनाभः। दीर्घरात्रः। समरात्रः। अरात्रः।
तदेतत्सर्वमिह 'अच्' इति योगविभागं कृत्वा साधयन्ति॥

## २३९६. अक्ष्णोऽदर्शनात्॥ ७६॥ ( ९४४ )

'अच्' इत्यनुवर्तते। दर्शनादन्यत्र योऽक्षिशब्दस्तदन्तादच् प्रत्ययो भवति। लक्षणाक्षम्। पुष्कराक्षम्। 'उपमितं व्याघ्रादिभिः' ( २.१.५६ ) इति समासः।

अदर्शनादिति किम्? ब्राह्मणाक्षि।

**न्यासः**

**भूमेरपीत्यादि।** न केवलं नदीगोदावरीभ्याम्, अपि तु भूमेरपि संख्यापूर्वाया इष्यते। **द्विभूम** इत्यादौ सर्वत्र बहुव्रीहिः।

**तदित्यादि।** एतत् कृष्णभूमाद्यपि योगविभागं कृत्वाऽऽचार्याः साधयन्ति॥ ७५॥

**अक्ष्णोऽदर्शनात्॥** अदर्शनादिति प्रतिषेधः क्रियते। **कवराक्षम्, गवाक्षमिति।** रूढिशब्दावेतौ, नात्रावयवार्थेऽभिनिवेशः कार्यः। कवराक्षं गवाक्षमिति न सिध्यतीत्यभिप्रायः। स्यादेतत्—दर्शनप्रतिषेधात्

**पदमञ्जरी**

**पद्मनाभ इति।** पद्माकारो नाभिरस्येति प्रथमान्तयोर्बहुव्रीहिः। पद्मं नाभावस्येति विग्रहे गड्वादिषु दर्शनात्सप्तम्याः परनिपातः। **ऊर्णनाभ इति।** 'ङ्यापोः संज्ञाछन्दसोर्बहुलम्' इत्यूर्णाशब्दस्य ह्रस्वः। **तदेतदिति।** कृष्णभूमादिकम्।

**[1]योगविभागेनेति।** अत एव प्राक् प्रत्ययनिर्देशः कृतः॥ ७५॥

**अक्ष्णोऽदर्शनात्।** 'अदर्शनात्' इति वचनादक्षीवाक्षीत्यक्षिसदृशार्थवृत्तिरिहाक्षिशब्द उपात्तः। **लवणाक्षम्, पुष्कराक्षमिति।** लवणमक्षीव, पुष्करमक्षीवेति 'उपमितं व्याघ्रादिभिः' इति समासः।

**भावबोधिनी**

❀संख्या पूर्व में हो तो भूमि शब्द से भी अच् प्रत्यय इष्ट है। ❀ उदा०—द्विभूमः प्रासादः, त्रिभूमः। दसभूमकं सूत्रम्। [ द्वे भूमी यस्मिन् सः, तिस्रः भूमयः यस्मिन् सः, दश भूमयः यस्मिन् तत्—इन सभी में बहुव्रीहि के बाद अच् प्रत्यय, इलोप, स्वार्थिक 'क' प्रत्यय है। ]

❀ इनसे अन्यत्र भी देखा जाता है। ❀ उदा०—पद्मनाभः। ऊर्णनाभः। [ पद्मं नाभौ अस्य सः, ऊर्णा नाभावस्य सः—इसके बाद प्रत्यय होता है। ] दीर्घरात्रः। समरात्रः। अरात्रः। [ सभी में अच् प्रत्यय, इलोप है। ]

यह पूर्वोक्त सभी कार्य 'अचः ऐसा योगविभाग करके सिद्ध कर लेते हैं। [ अत अन्य वचनों की आवश्यकता नहीं है। ]॥ ७५॥

'अच्' इसकी अनुवृत्ति होती है। दर्शन = देखना से भिन्न अर्थ में जो 'अक्षि' शब्द है, तदन्त ( अक्षिशब्दान्त ) से अच् प्रत्यय होता है। उदा०—लवणाक्षम्। पुष्कराक्षम्। [ लवणम् अक्षि इव, पुष्करम् अक्षि इव—इन विग्रहों में ] 'उपमितं व्याघ्रादिभिः सामान्याप्रयोगे' ( पा० सू० २।१।५५ ) सूत्र से उपमित समास होता है।

अदर्शन=दर्शनभिन्न से—इसका क्या प्रयोजन है? ब्राह्मणाक्षि। [ यहाँ देखने वाली आँख है अतः प्रत्यय नहीं होता है। ]

---

१. 'योगविभागं कृत्वा' इति काशिकापाठः।

कथं कबराक्षम्, गवाक्षमिति; अश्वादीनां मुखप्रच्छादनार्थं बहुच्छिद्रं कबराक्षम्, तेनापि हि दृश्यते, गवाक्षेण च ? नैष दोषः; चक्षुःपर्यायवचनो दर्शनशब्दः प्राण्यङ्गवचन इहाश्रीयते ॥

**२३५७. अचतुरविचतुरसुचतुरस्त्रीपुंसधेन्वनडुहर्क्सामवाङ्मनसाक्षिभ्रुवदारगवोर्वष्ठीवपदष्ठीवनक्तन्दिवरात्रिन्दिवाहर्दिवसरजसनिश्श्रेयसपुरुषायुषद्व्यायुषत्र्यायुषर्ग्यजुषजातोक्षमहोक्षवृद्धोक्षोपशुनगोष्ठश्वाः ॥ ७७ ॥ ( ९४५ )**

**अच्प्रत्ययान्ता एते शब्दा निपात्यन्ते । समासे व्यवस्थाऽपि निपातनादेव प्रतिपत्तव्या ।**

**आद्यास्त्रयो बहुव्रीहयः । अदृश्यान्यविद्यमानानि वा चत्वारि यस्य सोऽचतुरः । विगतानि चत्वारि यस्य स विचतुरः । शोभनानि चत्वारि यस्य स सुचतुरः ।**

**न्यासः**

सिद्धमेतत्, दृश्यतेऽनेनेति; न दर्शनम्, न च कबराक्षेण दृश्यते, नापि गवाक्षेण ? इत्यत आह—**तेनापीत्यादि** । दर्शनशब्दोऽयं चक्षुषि प्राण्यङ्गे प्रसिद्धः । तथा हि दर्शनं प्रयुङ्क्ते चक्षुर्ग्राह्यमपि । तस्मात् प्रसिद्धिवशेन चक्षुष्पर्यायो दर्शनशब्दः, स इहाश्रीयते ॥ ७६ ॥

**अचतुरविचतुरसुचतुरस्त्रीपुंसधेन्वनडुहर्क्सामवाङ्मनसाक्षिभ्रुवदारगवोर्वष्ठीवपदष्ठीवनक्तन्दिवरात्रिन्दिवाहर्दिवसरजसनिःश्रेयसपुरुषायुद्व्यायुषत्र्यायुषर्ग्यजुषजतातोक्षमहोक्षवृद्धोक्षोपशुनगोष्ठश्वाः ॥ समासे व्यवस्थापीत्यादि** । समासव्यवस्था = समासनियमः—क्वचिद् बहुव्रीहिरेव, क्वचिद् द्वन्द्व इत्येवमादिका निपातनादेव वेदितव्या; व्यवस्थाभेदस्यान्यस्याभावात् । अपिशब्दादन्यदपि टिलोपादि कार्यं निपातनादेव वेदितव्यम् ।

**पदमञ्जरी**

**कथमित्यादि** । ननु दर्शनादन्यत्र योऽक्षिशब्दस्तदन्तादित्युक्तम्, गवाक्षकबराक्षयोश्च समुदायो दर्शनवचनः, नाक्षिशब्द इति कात्रानुपपत्तिः ? सत्यम्; अक्ष्यन्ताददर्शनादिति सूत्रार्थः कस्मान्न भवतीति मन्यमानस्यायं प्रश्नो द्रष्टव्यः । **चक्षुःपर्याय इति** । तस्य प्रसिद्धतरत्वादिति भावः ॥ ७६ ॥

**अचतुरविचतुरसुचतुरस्त्रीपुंसधेन्वनडुहर्क्सामवाङ्मनसाक्षिभ्रुवदारगवोर्वष्ठीवपदष्ठीवनक्तंदिवरात्रिंदिवाहर्दिवसरजसनिश्श्रेयसपुरुषायुषद्व्यायुषत्र्यायुषर्ग्यजुषजातोक्षमहोक्षवृद्धोक्षोपशुनगोष्ठश्वाः ॥ [1]समासव्यवस्थापीति** । क्वचिद्बहुव्रीहेरेव, क्वचिद् द्वन्द्वादेव—इत्येवमादिको नियमः=व्यवस्था । अपिशब्दादन्यदपि टिलोपादिकं तन्निपातनादेव । **स्त्रियाः पुमानिति** । स्त्रियं प्रति पुमान् शूर इत्यर्थः ।

**भावबोधिनी**

कबराक्षम्, गवाक्षम्—ये कैसे होते है, घोड़ों आदि का मुख ढकने के लिए बहुत से छेदों वाली ( जालीदार बुनी हुई ) को 'कबराक्ष' कहते हैं, उसके द्वारा भी देखा ही जाता है और गवाक्ष ( झरोखा ) से भी देखा जाता है ? यह दोष नहीं है क्योंकि 'दर्शन' शब्द चक्षु का पर्यायवाचक है, वह प्राणी का अङ्गवाचक ही यहाँ लिया जाता है । [ अतः कबराक्ष और गवाक्ष में उससे भिन्न होने के कारण प्रत्यय में बाधा नहीं है । ] ॥ ७६ ॥

अचतुर—आदि २५ शब्द अच्प्रत्ययान्त निपातित होते हैं । समास में व्यवस्था भी निपातन से ही समझनी चाहिए ।

पहले वाले तीन शब्द बहुव्रीहि हैं—( १ ) अदृश्यानि अविद्यमानानि वा चत्वारि यस्य सः—अचतुरः । [ जिसके चार अविद्यमान हैं । अचतुर् + अच् = अ ] ( २ ) विगतानि चत्वारि यस्य सः—इस में विचतुरः । ( ३ ) शोभनानि चत्वारि यस्य सः—इसमें सुचतुरः ।

---

१. 'समासे व्यवस्थाऽपि' इति काशिकापाठः ।

ततः परे एकादश द्वन्द्वाः। स्त्री च पुमांश्च स्त्रीपुंसौ। इह न भवति—स्त्रियाः पुमान् स्त्रीपुमानिति। धेनुश्च अनड्वांश्च धेन्वनडुहौ। ऋक्च साम च ऋक्सामे। वाक्च मनश्च वाङ्मनसे। अक्षि च भ्रुवौ च अक्षिभ्रुवम्। दाराश्च गावश्च दारगवम्। ऊरू च अष्ठीवन्तौ च ऊर्वष्ठीवम्। टिलोपो निपात्यते। पादौ च अष्ठीवन्तौ च पदष्ठीवम्। पादस्य पद्भावो निपात्यते। नक्तं च दिवा च नक्तन्दिवम्। सप्तम्यर्थवृत्तयोरव्यययोः समासोऽपि निपातनादेव। रात्रौ च दिवा च रात्रिन्दिवम्। पूर्वपदस्य मान्तत्वं निपात्यते। अहनि च दिवा च अहर्दिवम्। ननु च पर्यायावेतौ, कथमनयोर्द्वन्द्वः? वीप्सायां द्वन्द्वो निपात्यते। अहन्यहनीत्यर्थः। एकोऽव्ययीभावः।

साकल्ये—सरजसमभ्यवहरति। बहुव्रीहौ न भवति—सह रजसा सरजः=पङ्कजमिति, ततस्तत्पुरुषः।

निश्चितं श्रेयो निःश्रेयसम्। निःश्रेयस्कः पुरुष इत्यत्र न भवति। ततः षष्ठीसमासः—

पुरुषस्यायुः पुरुषायुषम्। द्वन्द्वे न भवति—पुरुषश्च आयुश्च पुरुषायुषी। ततो द्विगू—

### न्यासः

सप्तम्यर्थवृत्तयोरित्यादिना हि सप्तम्यर्थवृत्तयोरव्यययोराधेयप्रधानयोः समासो विद्यते। तस्मान्निपातनादेव च भवतीति वेदितव्यम्। अपिशब्दात् समासोऽपि निपातनादेव। अहर्दिवमिति। 'रोऽसुपि' इति नकारस्य रेफः। ननु चेत्यादि। अर्थगत्यर्थो हि शब्दप्रयोगः। पर्यायाणाञ्चैकेनैवार्थस्योक्तत्वात् द्वितीयस्य प्रयोगो न सम्भवति। अहर्दिवाशब्दौ पर्यायौ, तत् कथमनयोर्द्वन्द्वः? न कथञ्चिदिति भावः। वीप्साद्योतनार्थमुक्तस्यापि प्रयोगो न विरुध्यत इति मन्यमान आह—वीप्सायामित्यादि। चार्थं उत्पद्यमानो द्वन्द्वो वीप्सायां न प्राप्नोतीत्यतो निपात्यते। एकोऽव्ययीभावः।

साकल्य इति। 'अव्ययं विभक्ति' इत्यादिना। सरजसमिति। 'अव्ययीभावे चाकाले' इति सहस्य सभावः। निःश्रेयसमिति। प्रादिसमासः। निश्श्रेयस्क इति। निश्चितं श्रेयोऽनेनेति बहुव्रीहिः, 'शेषाद्विभाषा' इति कप्।

### पदमञ्जरी

अक्षिभ्रुवमिति। प्राण्यङ्गत्वादेकवद्भावः। दारगवमिति। 'सर्वो द्वन्द्वो विभाषयैकवद्भवति' (व्या० परि० ९१)। सप्तम्यर्थे वृत्तयोरव्यययोः समासोऽपि निपातनादेवेति। चार्थेन योगाभावात्, न हि भवति—इह च, एवं चेति। अहर्दिवमिति। 'रोऽसुपि' इति रेफः। कथमनयोर्द्वन्द्व इति। न कथञ्चित्, 'विरूपाणामपि समानार्थानामेकशेषारम्भात्' (कात्या० वा० ७४७)। वीप्सायामित्यादि। चार्थे विधीयमानो वीप्सायां न प्राप्नोति, एकशेषारम्भाच्च। तस्माद्वीप्सायां द्वन्द्वो निपात्यते, वीप्साद्योतनाच्चैकेन गतार्थत्वमपि नाशङ्कनीयम्, यथा द्विर्वचने—ग्रामोग्रामो रमणीय इति।

सरजसमिति। 'अव्ययीभावे चाकाले' इति सहस्य सभावः। निःश्रेयसमिति। प्रादिसमासः। निःश्रेयस्क इति। निश्चितं श्रेयोऽनेनेति बहुव्रीहिः, शेषलक्षणः कप्, 'सोऽपदादौ' इति सत्वम्।

### भावबोधिनी

इनके बाद वाले ग्यारह शब्द द्वन्द्व हैं—(४) स्त्री च पुमान् च—स्त्रीपुंसौ। [स्त्री पुंस्+अच् करने से अकारान्त द्विवचन हो जाते हैं।] यहाँ षष्ठी तत्पुरुष में नहीं होता है—स्त्रियाः पुमान्—स्त्रीपुमान्। (५) धेनुश्च अनड्वान् च—इसमें धेन्वनुडुहौ। [धेनु+अनडुह्+अच्] (६) ऋक् च साम च—इसमें ऋक्सामे [ऋच्+सामन्+अच्, च् का कुत्व, अन् का लोप, नपुंसकलिङ्ग द्विवचन का रूप है।] (७) वाक् च मनश्च—इसमें वाङ्मनसे। [वाच् मनस्+अच्, च् का कुत्व, परसवर्ण नपुंसकलिङ्ग द्विवचन का रूप है।] (८) अक्षि च भ्रुवौ च—इसमें अक्षिभ्रुवम्। अक्षिभ्रु अच्; उवङ् आदेश, प्राणी का अङ्ग होने से 'द्वन्द्वश्च प्राणितूर्यसेनाङ्गानाम्' सूत्र से एकवद्भाव होता है।] (९) दाराश्च गावश्च—इसमें दारगवम्। [दारागो+अच्, अवङ् आदेश, पुंवद्भाव, एकवद्भाव] (१०) ऊरू

द्वे आयुषी समाहृते द्व्यायुषम् । त्र्यायुषम् । इह न भवति-द्वयोरायुः द्व्यायुः, त्र्यायुरिति । ततो द्वन्द्वः—

ऋक्च यजुश्च ऋग्यजुषम् । इह न भवति—ऋग्यजुरस्योन्मुग्धस्य ऋग्यजुरुन्मुग्धः ।

जातादिपूर्वपदा उक्षशब्दान्तास्त्रयः कर्मधारयाः । जातोक्षः । महोक्षः । वृद्धोक्षः । बहुव्रीहौ न भवति—जातोक्षा ब्राह्मणः । महोक्षा, वृद्धोक्षेति । ततोऽव्ययीभावः—

शुनः समीपमुपशुनम् । टिलोपाभावः, सम्प्रसारणं च निपातनादेव । ततः सप्तमीसमासः—

गोष्ठे श्वा गोष्ठश्वः ।

### न्यासः

**ऋग्यजुरुन्मुग्ध इति** । य उन्मुग्धत्वादृचो यजूंषि मन्यते स ऋग्यजुरिति बहुव्रीहिणोच्यते । **ततोऽव्ययीभाव इति** । 'अव्ययं विभक्ति' इत्यादिना सामीप्ये । **टिलोपाभाव इत्यादि** । उपशुन इत्यत्र 'नस्तद्धिते' इति टिलोपाभावो निपातनादेव । 'श्वयुवमघोनामतद्धिते' इति तद्धितादन्यत्र सम्प्रसारणमुच्यमानं तद्धिते न प्राप्नोतीति तदेव निपातनादेव भवतीति ।

### पदमञ्जरी

**ऋग्यजुरुन्मुग्ध इति** । य ऋचो यजूंषि मन्यते ।

### भावबोधिनी

च अष्ठीवन्तौ च—इसमें ऊर्वष्ठीवम् । [ ऊरु + अष्ठीवत् + अच्, यण् ] टि का लोप निपातन से होता है । [ प्राणी का अङ्ग होने से एकवद्भाव ] (११) पादौ च अष्ठीवन्तौ च—इसमें पदष्ठीवम् । पाद का पद् निपातित होता है । अतः पद् अष्ठीव् + अ = पदष्ठीव, प्राण्यङ्ग होने से एकवद्भाव । ] (१२) नक्तं च दिवा च—इसमें नक्तन्दिवम् । सप्तम्यर्थ में वर्तमान भी इन शब्दों का समास निपातन से ही होता है । [ पूर्व पद का मकारान्त या अलुक् निपातित होता है । ] (१३) रात्रौ च दिवा च—इसमें समास के बाद पूर्वपद का मकारान्तत्व निपातित होता है । (१४) अहनि च दिवा च—इसमें अहर्दिवम् । [ अहन् दिव् + अच्, 'रोऽसुपि' सूत्र से न् का रेफ ] ये अहन् तथा दिव् तो पर्याय शब्द है तब इनका द्वन्द्व कैसे होता है ? वीप्सा अर्थ में द्वन्द्व निपातित होता है—अहनि अहनि । [ वीप्सा अर्थ में द्वन्द्व के निपातन के लिये ग्रहण है । ]

(१५) एक शब्द अव्ययीभाव है । साकल्य अर्थ में—सरजसम् अभ्यवहरति [ रजसा सह—इसमें साकल्य अर्थ में 'अव्ययं विभक्ति॰' आदि सूत्र से अव्ययीभाव समास, "अव्ययीभावे चाकाले" सूत्र से सह का स आदेश सरजस् + अच् । ] बहुव्रीहि में यह प्रत्यय नहीं होता है—सह रजसा—सरजः = पङ्कजम् । [ सहार्थ में बहुव्रीहि है । अतः प्रत्यय नहीं होता है । ]

इसके बाद तत्पुरुष है । (१६) निश्चितं श्रेयः—इस अर्थ में निश्श्रेयसम् । निःश्रेयस्कः पुरुषः—यहाँ बहुव्रीहि में अच् नहीं होता है ।

इसके बाद षष्ठी तत्पुरुष है । (१७) पुरुषस्य आयुः—इसमें पुरुषायुषम् । द्वन्द में नहीं होता है—पुरुषश्च आयुश्च—पुरुषायुषी ।

इसके बाद द्वन्द्व है । (१८) द्वे आयुषी समाहृते—द्व्यायुषम्, [ त्रीणि आयूंषि समाहृतानि—इसमें ] (१९) त्र्यायुषम् । यहाँ नहीं होता है—द्वयोः आयुः—द्व्यायुः, [ त्रयाणाम् आयुः—त्र्यायुः ।

इसके बाद द्वन्द्व है । (२०) ऋक् च यजुश्च—ऋग्यजुषम् । यहाँ नहीं होता है—ऋग्यजुः अस्य उन्मुग्धस्य—ऋग्यजुरुन्मुग्धः । [ जो ऋचाओं को यजुष् मानने वाला है वह । ]

**❀ चतुरोऽच्प्रकरणे त्र्युपाभ्यामुपसंख्यानम् ❀ ( म० भा० ५.४.७७ वा० १ ) त्रिचतुराः। उपचतुराः॥**

## २३५८. ब्रह्महस्तिभ्यां वर्चसः ॥ ७८ ॥ ( ९४६ )

**ब्रह्महस्तिभ्यां परो यो वर्चःशब्दः तदन्तात् समासादच् प्रत्ययो भवति। ब्रह्मवर्चसम्। हस्तिवर्चसम्।**
**❀ पल्यराजभ्यां चेति वक्तव्यम् ❀ ( म० भा० )। पल्यवर्चसम्। राजवर्चसम् ( म० भा० )॥**

### न्यासः

**चतुरोऽच्प्रकरण इत्यादि।** त्रिशब्दादुपशब्दात् परो यश्चतुरशब्दस्तस्मादच उपसंख्यानं प्रतिपादनं कर्त्तव्यमित्यर्थः। तत् पूर्वमेव योगविभागमाश्रित्य कर्त्तव्यम्। त्रयो वा चत्वारो वा **त्रिचतुरा इति।** चतुर्णां समीप उपचतुराः। 'संख्ययाव्ययासन्न' इत्यादिना बहुव्रीहिः। तत्र 'बहुव्रीहौ संख्येये डजबहुगणात्' इति डचि प्राप्तेऽज्विधीयते ॥ ७७ ॥

**ब्रह्महस्तिभ्यां वर्चसः ॥ ब्रह्मवर्चसम्, हस्तिवर्चसमिति।** षष्ठीसमासौ। वर्चःशब्दोऽयं दीप्तिवचनः।

**पल्यराजशब्दाभ्याञ्चेति वक्तव्यम्।** पल्यशब्दाद्राजशब्दाच्च परो यो वर्चस्शब्दस्तस्माच्चाऽभवतीत्येवमर्थरूपं व्याख्येयमित्यर्थः। व्याख्यानं चास्य पूर्वमेव योगविभागमाश्रित्य कर्त्तव्यम् ॥ ७८ ॥

### पदमञ्जरी

त्रयो वा चत्वारो वा त्रिचतुराः। चतुर्णां समीप **उपचतुराः,** 'बहुव्रीहौ सङ्ख्येये' इति प्राप्तस्य डचोऽपवादोऽज्विधीयते ॥ ७७ ॥

**ब्रह्महस्तिभ्यां वर्चसः ॥** वर्चः=दीप्तिः। उदाहरणेषु षष्ठीसमासः ॥ ७८ ॥

### भावबोधिनी

जात आदि पूर्व पद हैं उक्ष शब्द अन्त में है जिनके वे तीन शब्द कर्मधारय हैं। (२१) जातोक्षः। (२२) महोक्षः। (२३) वृद्धोक्षः। [ जातश्चासौ उक्षाः महान् चासौ उक्षाः वृद्धश्चासौ उक्षाः—इनमें अच् करने पर टिलोप हो जाने से अकारान्त रूप होते हैं। ]

इसके बाद अव्ययीभाव है। (२४) शुनः समीपम्—उपशुनम्। इसमें अच् प्रत्यय के साथ-साथ टि लोप का अभाव और सम्प्रसारण निपातन से ही होता है। [ श्वन् में व् का सम्प्रसारण और अ का पूर्वरूप करने पर शुन्+अ होता है। समीप अर्थ में अव्ययीभाव है। ]

इसके बाद सप्तमीतत्पुरुष है। (२५) गोष्ठे श्वा—गोष्ठश्वः। [ गोष्ठश्वन्+अच्, टिलोप ]।

❀ चतुर् से अच् प्रत्यय के प्रकरण में त्रि और उप पूर्व रहें तो भी अच् प्रत्यय कहना चाहिये।❀ उदा०—त्रिचतुराः। [ त्रयो वा चत्वारो वा—इसमें समास होता है। ] उपचतुराः। [ चतुर्णां समीपे ये सन्ति—इस अर्थ में बहुव्रीहि करने के बाद अच् प्रत्यय होता है। यदि यह वचन नहीं होता तो डच् प्रत्यय करने पर टि का लोप अवश्य हो जाता है। उपदशाः आदि के समान उपचतुराः आदि अनिष्ट रूप होने लगते। ] ॥ ७७ ॥

ब्रह्मन् और हस्तिन् से परे वर्चस् शब्द, तदन्त समास से अच् प्रत्यय होता है। उदा०—ब्रह्मवर्चसम्, हस्तिवर्चसम्। [ ब्रह्मणः वर्चः = दिप्तिः, तेजः। हस्तिनः वर्चः। षष्ठी समास, अच् प्रत्यय होने से अकारान्त है। परवल्लिङ्गता के कारण नपुंसकता है। ]

❀ पल्य और राजन् से परे भी वर्चस् से अच् कहना चाहिए। ❀ उदा०— पल्यवर्चसम्, राजवर्चसम् ॥ ७८ ॥

२३५९. अवसमन्धेभ्यस्तमसः ॥ ७९ ॥ ( ९४७ )

अव, सम्, अन्ध–इत्येतेभ्यो यः परस्तमःशब्दस्तदन्तात्समासाद् अच् प्रत्ययो भवति। अवतमसम्। सन्तमसम्। अन्धतमसम् ॥

२३६०. श्वसो वसीयःश्रेयसः ॥ ८० ॥ ( ९४८ )

श्वसः परौ यौ वसीयस्-श्रेयःशब्दौ तदन्तात्समासादच् प्रत्ययो भवति। श्वोवसीयसम्। श्वःश्रेयसम्। मयूरव्यंसकादित्वात्समासः। स्वभावाच्चेह श्वःशब्द उत्तरपदार्थस्य प्रशंसामाशीर्विषयामाचष्टे। श्वःश्रेयसं ते भूयात्। शोभनं श्रेयस्ते भूयादित्यर्थः। श्वोवसीयसमित्यस्यैवायं पर्यायः ॥

न्यासः

**अवसमन्धेभ्यस्तमसः** ॥ **अवतमसमिति**। अवहीनं तमसा, अवहीनं वा तम इति प्रादिसमासो वायम्। एवं सङ्गतं तमसा, सङ्गतं तमः—**सन्तमसम्**। अन्धं करोतीति णिच्, तदन्तात् पचाद्यच्, अन्धयतीत्यन्धम्। अन्धञ्च तत् तमश्चेति **अन्धतमसम्**। यदन्धं तमः करोतीति तदेवमुच्यते ॥ ७९ ॥

**श्वसो वसीयःश्रेयसः** ॥ **श्वोवसीयम्**। **श्वःश्रेयसमिति**। श्वो वसीयः, श्वः श्रेय इति विगृह्य मयूरव्यंसकादित्वात् समासः। **स्वभावाच्चेत्यादि**। यद्यपि श्वःशब्दोऽन्यत्र कालविशेषे वर्तते, तथापीह समास उत्तरपदार्थस्य प्रशंसां स्तुतिमाशीर्विषयां प्रतिपादयति कुतः? स्वभावात्। शब्दानां ह्यर्थाभिधानं स्वाभाविकम्। तत्र स्वभाव एवात्र हेतुः। **श्वोवसीयसमित्यस्यैवायं पर्याय इति**। अस्येत्यनेन च श्वःश्रेयसमित्येष शब्दो निर्दिश्यते ॥ ८० ॥

पदमञ्जरी

**अवसमन्धेभ्यस्तमसः** ॥ अवगतं **तमोऽवतमसम्**, सन्ततं तमः **सन्तमसम्**, प्रादिसमासौ। अन्धं करोति अन्धयति, अन्धयतेः पचाद्यच्—अन्धम्, तच्च तत्तमश्च **अन्धतमसम्** ॥ ७९ ॥

**श्वसो वसीयःश्रेयसः** ॥ वसुशब्दात्प्रशस्तवचनादीयसुन्—वसीयः, 'प्रशस्यस्य श्रः'–श्रेयः। **स्वभावाच्चेत्यादि**। यद्यपि श्वःशब्दोऽन्यत्र कालविशेषे वर्तते, तथापीह समासे उत्तरपदार्थप्रशंसामाशीर्विषयामाचष्टे। कुतः? स्वभावात्। **अस्यैवेति**। श्वःश्रेयसशब्दस्येत्यर्थः ॥ ८० ॥

भावबोधिनी

अव, सम्, अन्ध—इनसे परे जो तमस् शब्द—तदन्त समास से अच् प्रत्यय होता है। उदा०—अवतमसम्। [ अवगतं तमः, अथवा तमसा अवहीनम्—इस अर्थ में समास और प्रत्यय है। ] सन्तमसम्। [ संगतं तमः सन्ततं तमः, तमसा संगतम्—इन में समास है। ] अन्धतमसम्। [ अन्धं करोति—इस अर्थ में 'नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः' इस सूत्र के पचादिगण को आकृतिगण मानकर अच् प्रत्यय करने से 'अन्ध=अन्धा कर देने वाला—यह अर्थ है। अन्धं च तत्तमश्च—इस कर्मधारय में अच् प्रत्यय होता है। अन्धा कर देने वाला अन्धेरा यह अर्थ है। ] ॥ ७९ ॥

श्वस् से परे जो वसीयस् और श्रेयस् शब्द, ये हैं अन्त में जिसके ऐसे समास से अच् प्रत्यय होता है। उदा०—श्वोवसीयसम्। श्वःश्रेयसम्। यहाँ "मयूरव्यंसकादयश्च' इस सूत्र से समास होता है। शब्दस्वभाव से यहाँ श्वः शब्द उत्तरपदार्थ की आशीर्विषयिणी प्रशंसा को कहता है। श्वःश्रेयसं ते भूयात्=शोभनं श्रेयस्ते भूयात् [ तुम्हारा अच्छा कल्याण हो ]—यह अर्थ है। श्वोवसीयसम्—यह भी इसी ( श्वःश्रेयसम् ) का पर्याय है। [ अतः यही अर्थ समझना चाहिए। कहीं-कहीं 'श्वः' को आगामी कल का वाचक मानकर अर्थ लिखा गया है, वह प्रामाणिक नहीं प्रतीत होता। इसीलिए न्यासकार ने स्पष्ट लिखा है "यद्यपि श्वःशब्दोऽन्यत्र कालविशेषे वर्तते, तथापीह समास उत्तरपदार्थस्य प्रशंसां स्तुतिमाशीर्विषयां प्रतिपादयति कुतः? स्वभावात्।.............." ] ॥ ८० ॥

## २३६१. अन्ववतप्ताद्रहसः ॥ ८१ ॥ ( ९४९ )

**अनु, अव, तप्त—इत्येतेभ्यः परो यो रहश्शब्दस्तदन्तात् समासाद् अच्प्रत्ययो भवति। अनुरहसम्। अवरहसम्। तप्तरहसम् ॥**

## २३६२. प्रतेरुरसः सप्तमीस्थात् ॥ ८२ ॥ ( ९५० )

**प्रतेः परो य उरःशब्दस्तदन्तात् समासादच् प्रत्ययो भवति, स चेदुरःशब्दः सप्तमीस्थो भवति। सप्तम्यर्थे वर्त्तत इत्यर्थः। उरसि वर्त्तते। विभक्त्यर्थे 'अव्ययम्' ( २.१.६ ) इति समासः। प्रत्युरसम्।**

**सप्तमीस्थादिति किम् ? प्रतिगतमुरः प्रत्युरः ॥**

### न्यासः

**अन्ववतप्ताद्रहसः ॥ अनुरहसमिति।** रहःशब्दोऽयमप्रकाशे वर्त्तते। अनुगतं रहसा, अनुगतं रह इति वा प्रादिसमासः। अनुगतं रहोऽस्मिन्निति बहुव्रीहिर्वा। **अवरहसमिति।** अवहीनं रहसाऽवहीनं रह इति वा प्रादिसमासः। अवहीनं वा रहोऽस्मिन्निति बहुव्रीहिः। तप्तञ्च तद्रहश्चेति **तप्तरहसम्।** विशेषणसमासः। यदुत्पन्नं रहो लोके न केनचिदवगम्यते, तत् तप्तरहसमित्युच्यते। तप्तमिव तप्तम्। यथैव ह्यग्निना तप्तं न केनचिदवगम्यते, तथेदमिति ॥ ८१ ॥

**प्रतेरुरसः सप्तमीस्थात् ॥ सप्तमीस्थादिति** सप्तम्यां तिष्ठतीति सप्तमीस्थः, 'सुपि स्थः' इति कप्रत्ययः। यश्च सप्तम्यर्थे वर्त्तते, एवं स सप्तमीस्थो भवतीत्याह—**सप्तम्यर्थे वर्त्तत इति। प्रतिगतमुरः प्रत्युर इति।** 'अत्यादयः क्रान्ताद्यर्थे द्वितीयया' इति समासः ॥ ८२ ॥

### पदमञ्जरी

**अन्ववतप्ताद्रहसः।** रहःशब्दोऽयमप्रकाशे वर्त्तते। **अनुगतं रह इति।** प्रादिसमासः, अनुगतं रहोऽस्मिन्निति बहुव्रीहिर्वा। एवमवहीनं रहः, अवहीनं रहोऽस्मिन्निति **अवरहसम्।** तप्तं च तद्रहश्च **तप्तरहसम्।** अत्यन्तं रह इत्यर्थः ॥ ८१ ॥

**प्रतेरुरसः सप्तमीस्थात् ॥ सप्तम्यर्थे वर्त्तत इति।** न ह्यन्यदुरःशब्दस्य सप्तमीस्थत्वं नामेति भावः ॥ ८२ ॥

### भावबोधिनी

अनु, अव, तप्त—इनसे परे जो रहस् शब्द तदन्त समास से अच् प्रत्यय होता है। उदा०—अनुरहसम्। अवरहसम्। तप्तरहसम्। [ रहस् शब्द का अर्थ अप्रकाश है। यहाँ प्रादिसमास अथवा बहुव्रीहि है—अनुगतं रहसा, अनुगतं रहः, अनुगतं रहः अस्मिन्—इसमें समास के बाद प्रत्यय होता है। अवहीनं रहसा अवहीनं रहः, अवहीनं रहः अस्मिन्। तप्तं च तद् रहः च—यह कर्मधारय है। इसका अर्थ है—अत्यन्त रहः = पूर्णतया अप्रकाश, गुप्त। ] ॥ ८१ ॥

प्रति से परे जो उरस् शब्द तदन्त समास से अच् प्रत्यय होता है यदि वह उरस् शब्द सप्तमीस्थ होता है। सप्तमी के अर्थ में वर्तमान होता है—यह अर्थ है। उदा०—उरसि वर्तते—यहाँ विभक्त्यर्थ में 'अव्ययं विभक्ति' ( पा० सू० २.१.६ ) से समास होता है। प्रत्युरसम्। [ समास के बाद अच् होता है। ]

सप्तमी के अर्थ में वर्तमान से—इसका क्या फल है ? प्रतिगतम् उरः इस अर्थ में—प्रत्युरः। [ यहाँ अच् नहीं होता है ] ॥ ८२ ॥

## २३६३. अनुगवमायामे ॥ ८३ ॥ ( ९५१ )

'अनुगवम्' इत्यच्प्रत्ययान्तं निपात्यते आयामेऽभिधेये। अनुगवं यानम्। 'यस्य चायामः' ( २.१.१६ ) इति समासः।

आयाम इति किम् ? गवां पश्चादनुगु ॥

## २३६४. द्विस्तावा त्रिस्तावा वेदिः ॥ ८४ ॥ ( ९५२ )

'द्विस्तावा', 'त्रिस्तावा' इति निपात्यते वेदिश्चेद् अभिधेया भवति। अच्प्रत्ययः, टिलोपः, समासश्च निपात्यते। यावती प्रकृतौ वेदिस्ततो द्विगुणा वा त्रिगुणा वा कस्याञ्चिद्विकृतौ तत्रेदं निपातनम्। द्विस्तावा वेदिः। त्रिस्तावा वेदिः।

न्यासः

**अनुगवमायामे ॥ आयामेऽभिधेये इति।** आयामः = दैर्घ्यम्। मत्वर्थीयाकारान्तश्चायम्। आयामे चेत्यभिधेय इत्यर्थः। अन्यथानुगवं यानमिति सामानाधिकरण्यं न स्यात्। यानम्=आयामः। **अनुगवं यानमिति।** गावो यथा तथा यानमायातमित्यर्थः।

**गवां पश्चादिति।** 'अव्ययं विभक्ति' इत्यादिनाव्ययीभावः पश्चादर्थे च पूर्ववद् गोशब्दस्य ह्रस्वः। अनुशब्दात् प्रत्यये विधातव्ये यदनुगवमिति निपातनं तत्प्रसिद्ध्युपसंग्रहार्थम्। तेन यद् गवा बाह्यं गोमिश्च तुल्यायामं तत्रैव भवति, नान्यत्र ॥ ८३ ॥

**द्विस्तावा त्रिस्तावा वेदिः ॥** टिलोपस्तावतीशब्दस्य। यस्येतिलोपे कृते तावच्छब्दस्य टिलोपो निपात्यते। **समासश्चेति** द्वित्रिशब्दयोर्निपात्यते। सापेक्षं तु यावतीशब्दापेक्षत्वात्। **यावती प्रकृतावित्यादिना** निपातनस्य

पदमञ्जरी

**अनुगवमायामे ॥ आयामेऽभिधेय इति।** प्रवृत्तिनिमित्तमायामः, तद्वति तु पर्यवसानम्। मत्वर्थीयाकारान्तो वा आयामशब्दः, आयामवत्यभिधेय इत्यर्थः; अन्यथाऽनुगवं यानमिति सामानाधिकरण्यं न स्यात्। **यस्य चायाम इति समास इति।** ननु तत्र लक्षणेनेति वर्त्तते ? सत्यम्; इहापि बाह्यं यानं प्रति गवामस्त्येव लक्षणभावः। अनुगुशब्दात्प्रत्ययेऽभिधातव्ये निपातनाश्रयणं प्रसिद्ध्युपसंग्रहार्थम्, तेन यद्गवां बाह्यं तत्रैव भवति ॥ ८३ ॥

**द्विस्तावा त्रिस्तावा वेदिः ॥ समासश्च निपात्यत इति।** लक्षणाभावात्। **यावती प्रकृतावित्यादिना** निपातनस्य विषयं दर्शयति, यस्मिन्कर्मण्युपदिष्टा धर्माः कर्मान्तरेणोपजीव्यन्ते सा प्रकृतिर्ज्योतिष्टोमादिः, येनोपजीव्यते सा = विकृतिः। **कस्याञ्चिद्विकृताविति।** अश्वमेधादौ। **द्विस्तावेति।** तावतीशब्देन तत्सम्बन्धिन्या

भावबोधिनी

आयाम=दीर्घता (लम्बाई) वाच्य (अर्थ) रहने पर 'अनुगवम्' यह अच् प्रत्ययान्त निपातित होता है। उदा०— अनुगवं यानम्। "यस्य चायामः" सूत्र से अव्ययीभाव समास होता है। [ प्रस्तुत सूत्र से अच् प्रत्यय ओ का अव् आदेश। यहाँ 'आयाम' यह मत्वर्थीयाकारान्त समझना चाहिए। अतः 'आयामवान्' यह अर्थ है। तभी 'यान' के साथ समानाधिकरण्य होता है। गायों के समान लम्बाई वाला यान आया—यह अर्थ है। ]

आयाम—इसका क्या फल है ? गवां पश्चाद् 'अनुगु'। [ यहाँ 'पश्चात्' अर्थ में अव्ययीभाव होने से प्रत्यय नहीं होता है। ] ॥ ८३ ॥

यज्ञीय वेदी अभिधेय रहने पर 'द्विस्तावा' और 'त्रिस्तावा' ये निपातित होते हैं। अच् प्रत्यय, टिलोप और समास निपातित होते हैं। जितनी बड़ी वेदी प्रकृतियाग में होती है। उससे दुगुनी और तीनगुनी बड़ी वेदी किसी विकृति याग में होने पर यह निपातन होता है। [ द्विःतावती त्रिः तावती—इनमें द्विः, त्रिः शब्द सुच् प्रत्ययान्त हैं। अच् प्रत्यय, ङीप् लोप टि=अत् लोप, समास और टाप् = आ और सत्व करने पर द्विस्तावा, त्रिस्तावा वेदिः बनते हैं। ]

**वेदिरिति किम्? द्विस्तावती, त्रिस्तावती, रज्जुः॥**

**२३६५. उपसर्गादध्वनः॥ ८५॥ ( ९५३ )**

**उपसर्गात्परो योऽध्वन्-शब्दस्तदन्तात् समासाद् अच् प्रत्ययो भवति। प्रगतोऽध्वानं प्राध्वो रथः। प्राध्वं शकटम्। निरध्वम्। प्रत्यध्वम्।**

**उपसर्गादिति किम्? परमाध्वा। उत्तमाध्वा॥**

**२३६६. तत्पुरुषस्याङ्गुलेः संख्याव्ययादेः॥ ८६॥ ( ७८६ )**

**अङ्गुलिशब्दान्तस्य तत्पुरुषस्य संख्यादेरव्ययादेश्चाच् प्रत्ययो भवति। द्वे अङ्गुली प्रमाणमस्य द्व्यङ्गुलम्। त्र्यङ्गुलम्। 'तद्धितार्थ' ( २.१.५१ ) इति समासः। प्रमाणे लो द्विगोर्नित्यम्' ( ६.२.१२ ) इति मात्रचो लोपः। अव्ययादेः— निर्गतमङ्गुलिभ्यो निरङ्गुलम्। अत्यङ्गुलम्।**

न्यासः

फलं दर्शयति। प्रकृतिविकृतिशब्दौ कार्यविशेषवचनौ। कर्मविशेषे हि कश्चित् यागाख्यः प्रकृति शब्देनोच्यते, कश्चिद्विकृतिशब्देन॥ ८४॥

**उपसर्गादध्वनः॥ प्राध्वमिति।** प्रादिसमासः। तत्र प्राध्वमिति 'अत्यादयः क्रान्ताद्यर्थे द्वितीयया' इति समासः निष्क्रान्तमध्वन इति 'निरादयः क्रान्ताद्यर्थे पञ्चम्या' इति। **अत्यध्वमिति।** प्राध्वमित्यनेन तुल्यमेतत्। उपसर्गश्चात्र न गत्युपलक्षणम्। कुत एतत्? क्रियायोगाभावात्॥ ८५॥

**तत्पुरुषस्याङ्गुलेः संख्याव्ययादेः॥ मात्रचो लोप इति।** 'प्रमाणे द्वयसज्' इत्यादिना विहितस्य।

पदमञ्जरी

वृत्तिर्लक्ष्यते, सैव च द्विशब्देन संख्यायत इति सुच् प्रत्ययः, परस्परसामर्थ्यं च। द्विस्तावतीत्यसमासोऽयम्। 'सूत्रे लिङ्गमविवक्षितम्' ( चान्द्रपरि० ७० ) द्विस्तावोऽग्निरित्यपि दृश्यते। न चात्राग्निरभिधीयते, न वेदिः? अग्निरपि वेदिरेव; उत्तरवेदिविकारत्वात्, 'उत्तरवेद्यामग्निश्चीयते' इति वचनात्॥ ८४॥

**उपसर्गादध्वनः॥** अध्वशब्दस्याक्रियावचनत्वात्तं प्रत्युपसर्गसंज्ञाभावादुपसर्गग्रहणं प्राद्युपलक्षणम्॥ ८५॥

**तत्पुरुषस्याङ्गुलेः संख्याव्ययादेः॥** अङ्गुलिशब्दान्तस्येत्यादि। सर्वत्र समासान्तसम्बन्धे षष्ठी॥ ८६॥

भावबोधिनी

वेदी अर्थ—इसका क्या फल है? द्विस्तावती, त्रिस्तावती रज्जुः। [ यहाँ न प्रत्यय है और न समास, क्योंकि वेदि अर्थ न होकर रज्जु = रस्सी अर्थ है। जो दो बार बट कर दुगुनी, और तीन बार बट कर तीन गुनी बनाई गई है। ]॥ ८४॥

उपसर्ग से परे जो अध्वन् शब्द, तदन्त ( अध्वन्शब्दान्त ) समास से अच् प्रत्यय होता है। उदा०—प्रगतम् अध्वानम्—इस अर्थ में—प्राध्वः रथः। प्राध्वं शकटम्। निरध्वम्। प्रत्यध्वम्। [ इनमें 'प्रादयो गताद्यर्थे प्रथमया' वचन से समास के बाद 'अच्' प्रत्यय, टिलोप। निष्क्रान्तम् अध्वनः—इसमें 'निरादयो गताद्यर्थे प्रथमया' इस वचन से समास के बाद अच् प्रत्यय, टिलोप। प्राध्वः रथः = मार्ग पार किया हुआ रथ। निरध्वः रथः—मार्ग से निकला हुआ रथ। शकट = बैलगाड़ी ]।

उपसर्ग से परे—इसका क्या फल है? परमाध्वा। उत्तमाध्वा। [ यहाँ कर्मधारय समास है। उपसर्ग से परे नहीं है। अतः प्रत्यय नहीं होता है। ]॥ ८५॥

संख्यावाचक जिसके आदि में है और अव्यय जिसके आदि में तथा अङ्गुलि शब्द जिसके अन्त में है ऐसे तत्पुरुष से अच् प्रत्यय होता है। उदा०—द्वे अङ्गुली प्रमाणम् अस्य—इसमें द्व्यङ्गुलम्। तिस्रः अङ्गुल्यः प्रमाणम्

तत्पुरुषस्येति किम् ? पञ्चाङ्गुलिः। अत्यङ्गुलिः पुरुषः।
तत्पुरुषाधिकारश्च 'द्वन्द्वाच्चुदषहान्तात्' ( ५.४. १०६ ) इति यावत् ॥

२३६७. अहस्सर्वैकदेशसंख्यातपुण्याच्च रात्रेः ॥ ८७ ॥ ( ७८३ )

अहरादिभ्यः परो यो रात्रिशब्दस्तदन्तस्य तत्पुरुषस्याच् प्रत्ययो भवति, चकारात्संख्यादेरव्ययादेश्च। ❀ अहर्ग्रहणं द्वन्द्वार्थम् ❀ ( म० भा० ५.४.८७ वा० १ )। अहश्च रात्रिश्च अहोरात्रः। सर्वरात्रः। एकदेशे—पूर्वं रात्रे पूर्वरात्रः। अपररात्रः। 'पूर्वपरावर' ( १.१.३४ ) इति समासः। संख्याता रात्रिः संख्यात-

न्यासः

निरङ्गुलमिति। निरध्वमित्यनेन तुल्यमेतत्। अत्यङ्गुलमिति। एतदप्यत्यध्वमित्यनेन तुल्यम्। पञ्चाङ्गुलिरिति। बहुव्रीहिः ॥ ८६ ॥

अहःसर्वैकदेशसंख्यातपुण्याच्च रात्रेः॥ अहर्ग्रहणं द्वन्द्वार्थमिति। इष्टिरियम्। न तत्पुरुषार्थम्; मुख्यार्थे तत्पुरुस्यासम्भवात्। द्वन्द्वार्थे पदार्थं प्रत्याश्रयः। तथा हि-यद्यहर्गुणा रात्रिरहःशब्देनोच्यते, रात्रिगुणं वाहो रात्रिशब्देन गौण्या कल्पनया, तदाहश्च रात्रिश्चेति समानाधिकरणस्तत्पुरुषः सम्भवत्येव। तस्मादिष्टिरियम्। एतावदुक्तं स्याद्-द्वन्द्व इष्यत् इति। अत्र च ज्ञापकम्-'हेमन्तशिशिरावहोरात्रे च च्छन्दसि' इति द्वन्द्वे समासान्तस्य रात्रिशब्दस्य निपातनम्। अहोरात्र इति। 'रात्राह्नाहाः पुंसि' इति पुंल्लिङ्गता। 'अहन्' इति 'रूपरात्रिरथन्तरेषूपसंख्यानम्' इति नकारस्य रुत्वाद् गुणः। सर्वरात्र इति। 'पूर्वकालैकसर्व' इत्यादिना समानाधिकरण-

पदमञ्जरी

अहःसर्वैकदेशसंख्यातपुण्याच्च रात्रेः अहर्ग्रहणं द्वन्द्वार्थमिति। न तु तत्पुरुषार्थम्; मुख्यार्थवृत्तयोस्तत्पुरुषासम्भवात्। न ह्यस्ति सम्भवः-अहश्चासौ रात्रिश्चेति, नाप्यहोरात्रिरित्यस्ति। यदि तु रात्रिशब्देन तद्गुणमहरुच्यते, अहःशब्देन तद्गुणा रात्रिः, ततः सम्भवेदपि विशेषणसमासः। गौणार्थता तु भवति। न च मुख्ये सम्भवति गौणस्य ग्रहणं युक्तम्, तस्मादहर्ग्रहणं द्वन्द्वार्थम्। तथा च-'हेमन्तशिशिरावहोरात्रे च छन्दसि' इति द्वन्द्वे समासान्तो निर्दिष्टः। अहोरात्र इति। समाहारद्वन्द्वः, 'रात्राह्नाहाः पुंसि', अह्नो रुत्वे 'रूपरात्रिरथन्तरेषु'

भावबोधिनी

अत्य— इसमें त्र्यङ्गुलम्। इनमें 'तद्धितार्थोत्तरपदसमाहारे च' सूत्र से तत्पुरुष समास होता हैं। "प्रमाणे लो द्विगोर्नित्यम्" इस वचन से [ प्रमाणार्थ में विहित ] मात्रच् प्रत्यय का लुक्। [ द्विअङ्गुलि + अच्, इ लोप, यण्, त्र्यङ्गुलि + अच् इ लोप। ] अव्ययादि का उदा०—निर्गतम् अङ्गुलिभ्यः [ इसमें 'निरादयः क्रान्ताद्यर्थे' इस वचन से समास के बाद 'अच्' प्रत्यय, इ लोप होता है। ] अत्यङ्गुलम्। [ अतिगता अङ्गुलिः—इसमें प्रादि समास के बाद अच् प्रत्यय होता है। ]

तत्पुरुष का—इसका क्या फल है ? पञ्चाङ्गुलिः, अत्यङ्गुलिः पुरुषः। [ पञ्च अङ्गुल्यः यस्य सः, अतिगताः अङ्गुल्यः यस्य सः—इसमें बहुव्रीहि है। अतः प्रत्यय नहीं होता है। ]

"द्वन्द्वाच्चुदषहान्तात्" ( ५।४।१०६ ) तक 'तत्पुरुषस्य' इसका अधिकार है। [ अतः वहाँ तक तत्पुरुष समास सम्बन्धी प्रत्यय होगें ] ॥ ८७ ॥

अहर्, आदि [ = सर्व, एकदेश, संख्यात और पुण्य—इन ] से परे जो रात्रि शब्द, तदन्त ( रात्रिशब्दान्त ) तत्पुरुष का अच् प्रत्यय होता है, 'च' के बल से संख्यादि और अव्ययादि [ तत्पुरुष जिसके अन्त में रात्रिशब्द है उस ] से भी अच् होता है। अहर् का ग्रहण द्वन्द्व के लिए है। उदा०—अहश्च रात्रिश्च—इसमें अहोरात्रः। [ द्वन्द्वसमास, 'रूपरात्रिरथन्तरेषूपसंख्यानम्' इस सूत्र से अहन् के न् का रुत्व, उत्व, गुण अहोरात्रि + अच्, इलोप, 'रात्राह्नाहाः पुंसि'

रात्रः। 'विशेषणं विशेष्येण' ( २.१.५७ ) इति समासः। एवं पुण्या रात्रिः पुण्यरात्रः। संख्याव्ययादेः खल्वपि—द्वे रात्री समाहृते द्विरात्रः। त्रिरात्रः। अतिक्रान्तो रात्रिमतिरात्रः। नीरात्रः॥

## २३६८. अह्नोऽह्न एतेभ्यः ॥ ८८ ॥ ( ७९० )

'राजाहःसखिभ्यष्टच्' ( ५.४.९१ ) इति वक्ष्यति, तस्मिन् परभूते अहन्नित्येतस्य 'अह्न' इत्ययमादेशो भवति एतेभ्य उत्तरस्य। संख्याव्ययादयः प्रकान्ताः सर्वनाम्ना प्रत्यवमृश्यन्ते। सामर्थ्याच्चाहःशब्दः पूर्वत्वेन

### न्यासः

स्तत्पुरुषः। द्विरात्र इति। 'तद्धितार्थोत्तरपद' इत्यादिना समाहारे द्विगुः, 'द्विगुश्च' इति तत्पुरुषसंज्ञा। अतिरात्र इति। अत्यध्वमित्यनेन तुल्यमेतत्। नीरात्र इति। 'रो रि' इति रेफलोपः, 'ढ्रलोपे पूर्वस्य' इति दीर्घः ॥८७॥

अह्नोऽह्न एतेभ्यः॥ 'राजाहःसखिभ्यष्टच्' इति टच्प्रत्ययं वक्ष्यतीति। अथ प्रकृत एवाचि कस्मादादेशो न विज्ञायते ? अशक्यस्तत्रायं विज्ञातुम्, ? न ह्यहःशब्दान्तात् तत्पुरुषात् केनचिदज्विहितः, तत् कथमादेशस्य निमित्तं स्यात् ? अथ 'अच' इति योगविभागेनाज्विधीयते ? एवमप्येतद् वचनमनर्थकं स्यात्; अचि कृते

### पदमञ्जरी

( कात्य० वा० ४८४७ ) इति नकारस्य रुत्वम्, तस्य 'हशि च' इत्युत्वम्। द्विरात्र इति। समाहारे द्विगुः। नीरात्र इति। प्रादिसमासः 'ढ्रलोपे पूर्वस्य दीर्घोऽणः' ॥ ८७ ॥

अह्नोऽह्न एतेभ्यः॥ तस्मिन्परभूत इति। समासान्तप्रकरणात्तत्र परतोऽयमादेशो विज्ञायते, न तदपवादः। स च टजेव विहित इति सामर्थ्यादियमर्थो लभ्यते, व्याख्यानाच्चाह्नादेशः। स्वयं समासान्तो न विज्ञायते 'ऊधसोऽनङ्' इत्यादिवत्। सामर्थ्याच्चेत्यादि। सामर्थ्यमेव दर्शयति। न हीति। एकशेषविधानाद् द्वन्द्वस्तावन्न सम्भवति, तेनैव तस्यासम्बन्धान्न षष्ठीसमासः, नापि विशेषणसमासः, न हि तदेव तस्य विशेषणं सम्भवति। एतेन बहुव्रीहिर्व्याख्यातः। द्व्यह्न इति। तद्धितार्थे समासः, 'तत्र भवः' इत्यण्, तस्य 'द्विगोर्लुगनपत्ये' इति लुक्। सर्वाह्ण इति। 'अह्नोऽदन्तात्' इति णत्वम्।

अह्नोऽह्नवचनानर्थक्यम्, अह्नष्टखोर्नियमवचनात् 'अह्न एतेभ्यः' इत्येतावदेव सूत्रं कर्तव्यम्, अजनुवर्तते, एतेभ्यः परो योऽहन्शब्दस्ततोऽज्भवति, टचोऽपवादः, तत्राचि कृतेऽह्नष्टखोरेवेति नियमाट्टिलोपाभावेऽल्लोपे सति

### भावबोधिनी

सूत्र से पुंल्लिङ्ग होता है। ] सर्वरात्रः। [ सर्वाश्च ता रात्रयः—इसमें "पूर्वकालैकसर्व०" इत्यादि सूत्र से कर्मधारय तत्पुरुष करने के बाद अच् प्रत्यय, इलोप। ] एकदेश = एक भाग में—पूर्वं रात्रेः—पूर्वरात्रः। अपररात्रः [ अपरं रात्रेः—इनमें ] "पूर्वापराधरोत्तरमेकदेशिनैकाधिकरणे" सूत्र से समास होता है। [ तब अच् प्रत्यय होता है। ] संख्याता रात्रिः—संख्यातरात्रः—इसमें 'विशेषणं विशेष्येण बहुलम्' सूत्र से कर्मधारयतत्पुरुष समास है। इसी प्रकार पुण्या रात्रिः—यहाँ पुण्यरात्रः। संख्यादि और अव्ययादि के उदा०—द्वे समाहृते रात्री—द्विरात्रः। [ तिस्रः समाहृताः रात्रयः— ] त्रिरात्रः [ समाहार में द्विगु है। अतः "तद्धितार्थोत्तरपदसमाहारे च" सूत्र से द्विगु तत्पुरुष है। ] अतिक्रान्तः रात्रिम्—इसमें प्रादिसमास करके प्रत्यय होता है ] अतिरात्रः। नीरात्रः। निर्गतः रात्र्याः इसमें समास, विभक्तिलोप, अच् प्रत्यय, इलोप—निर् रात्र। 'रो रि' सूत्र से रेफ का लोप। "ढ्रलोपे पूर्वस्य दीर्घोऽणः" से दीर्घ—नीरात्रः। ] ॥ ८७ ॥

"राजाहस्सखिभ्यष्टच्" यह आगे कहा जायगा। उसके परे रहते इन पूर्वोक्त शब्दों के बाद आने वाले 'अहन्' इसका 'अह्न' यह आदेश हो जाता है। प्रकरण से प्राप्त संख्यावाचक और अव्यय आदि 'एतेभ्यः' इस सर्वनाम से परामृष्ट हो जाते हैं। सामर्थ्यवश अहः शब्द पूर्ववर्ती के रूप में नहीं लिया जाता है। शेष शब्द पूर्ववर्ती के रूप में गृहीत होते हैं, क्योंकि अहन् से परे अहन् शब्द संभव नहीं है। संख्यावाचक से परे के उदा०—द्वयोः अह्नोः भवः—

नाश्रीयते । परिशिष्टानां ग्रहणम् । न ह्यहःशब्दात् परोऽहःशब्दः सम्भवति । संख्यायास्तावत्—द्वयोरह्नोर्भवः द्व्यह्नः । त्र्यह्नः । अव्ययात्—अहरतिक्रान्तः अत्यह्नः । निरह्नः । सर्वाह्णः । पूर्वाह्णः । अपराह्णः । संख्याताह्नः ।

पुण्यशब्दात्प्रतिषेधं वक्ष्यति ( ५.४.९० ) ॥

## २३६९. न संख्यादेः समाहारे ॥ ८९ ॥ ( ७९३ )

संख्यादेस्तत्पुरुषस्य समाहारे वर्त्तमानस्याहःशब्दस्याह्नादेशो न भवति । पूर्वेण प्राप्तः प्रतिषिध्यते । द्वे अहनी समाहृते द्व्यहः । त्र्यहः ।

समाहार इति किम् ? द्वयोरह्नोर्भवो द्व्यह्नः । त्र्यह्नः । 'तद्धितार्थ' ( २.१.५१ ) इति समासे कृतेऽण ( ४.२.५४ ) आगतस्य 'द्विगोर्लुगनपत्ये' ( ४.१.८८ ) इति लुक् ॥

### न्यासः

'अल्लोपोऽनः' इत्यनेनाह्नादेशस्य सिद्धत्वात् । न च टिलोपः प्राप्नोतीति मन्तव्यम्; 'अह्नष्टखोरेव' इति नियमात् । तस्मादच्येव टिलोपापवादोऽयम् । आदेशोऽयमयुक्तः । किं पुनस्तत् सामर्थ्यम्, यतोऽहःशब्दः पूर्वत्वेन नाश्रीयते ? इत्याह—न ह्यहःशब्दादित्यादि । द्व्यह्न इति । द्वयोरह्नोर्भव इति 'तद्धितार्थ' इत्यादिना समासः, 'तत्र भवः' इत्यण्, तस्य 'द्विगोर्लुगनपत्ये' इति लुक् । अत्यह्न इति । अत्यध्ववत्समासः । निरह्न इति । अत्रापि निरध्ववत् समासः । सर्वाह्ण इति । विशेषणसमासः ।

प्रतिषेधं वक्ष्यतीति । 'उत्तमैकाभ्याञ्च' इति ॥ ८८ ॥

न संख्यादेः समाहारे ॥ द्व्यह इति । 'अह्नष्टखोरेव' इति टिलोपः ॥ ८९ ॥

### पदमञ्जरी

द्व्यह्न इत्यादि सिध्यति, 'रात्राह्नाहाः पुंसि' इति वचनात् स्त्रियां प्रवृत्त्यभावाट्टजचोरविशेषः । 'एतेभ्यः' इति वचनं संख्याव्ययार्थम्; इतरथा चानुकृष्टत्वान्न सम्बद्ध्येत ॥ ८८ ॥

न सङ्ख्यादेः समाहृरे ॥ 'सङ्ख्यादेः' इति न वक्तव्यम्; अन्यस्य समाहारे वृत्त्यसम्भात् ॥ ८९ ॥

### भावबोधिनी

इसमें द्व्यह्नः । [ त्रिषु अहस्सु भवः—इसमें ] त्र्यह्नः । [ यहाँ "तद्धितार्थोत्तरपदसमाहारे च" सूत्र से समास होता है 'तत्र भवः' सूत्र से किये गए 'अण्' प्रत्यय का लुक् 'द्विगोर्लुगनपत्ये' इस से हो जाता है । 'राजाहस्सखिभ्यष्टच्' सूत्र से टच् = अ प्रत्यय करने के बाद प्रस्तुत सूत्र से अहन् का 'अह्न' यह आदेश हो जाता है । यण् करने पर—द्व्यह्नः, त्र्यह्नः बनता है । ] अव्यय से परे—अहः अतिक्रान्तः—इसमें अत्यह्नः । [ निर्गतः अह्नः—इसमें पञ्चमीतत्पुरुष ] निरह्नः । सर्वाह्णः । [ कर्मधारय, अह्न आदेश, णत्व ] पूर्वाह्णः । पराह्णः । अपराह्णः । [ यहाँ 'पूर्वापराधरोत्तरम्०' सूत्र से समास, अच् प्रत्यय, अह्न आदेश, 'अह्नोऽदन्तात्' इससे णत्व होता है । ] संख्याताह्नः ।

पुण्य शब्द से परे 'अह्न' आदेश का प्रतिषेध कहा जायगा । [ 'उत्तमैकाभ्यां च' इस सूत्र पर निषेध वचन है ] ॥ ८८ ॥

संख्यादि ( संख्यावाचक है आदि में जिसके ) तत्पुरुष जो समाहार में वर्तमान है उसके अहन् का 'अह्न' आदेश नहीं होता है । पूर्वसूत्र से प्राप्त आदेश का प्रतिषेध होता है । उदा०—द्वे अहनी समाहृते—इस में द्व्यहः । [ त्रीणि अहानि समाहृतानि—इसमे ] त्र्यहः । [ यहाँ 'अह्न' आदेश नहीं होता है । टि का लोप होता है । ]

समाहार में—इसका क्या फल है ? द्वयोः अह्नोः भवः—इस में भव अर्थ है अतः निषेध नहीं होता है । त्र्यह्नः । इनमें 'तद्धितार्थोत्तरपदसमाहारे' इस सूत्र से समास करने के बाद किये गए [ भवार्थक ] अण् प्रत्यय का 'द्विगोः' इस सूत्र से लुक् हो जाता है ॥ ८९ ॥

## २३७०. उत्तमैकाभ्यां च ॥ ९० ॥ ( ७९४ )

**उत्तमैकशब्दाभ्यां च परस्याह्न इत्ययमादेशो न भवति। उत्तमशब्दोऽन्त्यवचनः पुण्यशब्दमाचष्टे; पुण्यग्रहणमेव न कृतं वैचित्र्यार्थम्। पुण्याहः। एकाहः।**

**केचित्तु उपोत्तमस्यापि प्रतिपत्त्यर्थं वर्णयन्ति। तेन संख्यातशब्दादपि परस्य न भवति-संख्याताह इति॥**

## २३७१. राजाहस्सखिभ्यष्टच् ॥ ९१ ॥ ( ७८८ )

**राजन्, अहन्, सखि —इत्येवमन्तात्प्रातिपदिकात् टच् प्रत्ययो भवति। महाराजः। मद्रराजः। परमाहः। उत्तमाहः। राज्ञः सखा राजसखः। ब्राह्मणसखः।**

**न्यासः**

**उत्तमैकाभ्याञ्च॥ पुण्याहमिति।** 'विशेषणम्' इत्यादिना समासः। **एकाह इति।** अत्रापि 'पूर्वकालैक' इत्यादिना। कथं पुनः 'उत्तमैकाभ्याम्' इत्युच्यमाने पुण्यशब्दात् प्रतिषेधो लभ्यते? इत्यत आह—**उत्तमशब्दोऽन्त्यवचन इत्यादि।** 'अहःसर्वैकदेश' इत्यादौ सूत्रे पुण्यशब्दस्यान्ते निर्दिष्टत्वात्। **अन्त्य इति।** उत्तमशब्देऽपि प्रतिषेधार्थं इहान्त्यवचन उपात्तः। तस्मात् पुण्यशब्दमाचष्टे। अथ पुण्यग्रहणमेव कस्मान्न कृतम्, लघु ह्येवं सूत्रं भवति? इत्याह—**पुण्यग्रहणमेवेत्यादि।** वैचित्र्यं हि सूत्रकृतेरिष्यते, तच्चोत्तमग्रहणे सति सम्पद्यते। यस्माद् वैचित्र्यार्थमुत्तमग्रहणं कृतम्, न पुण्यग्रहणम्।

**केचिदित्यादि।** पुण्यग्रहणे कर्त्तव्ये यदुत्तमग्रहणं कृतं तत् प्रयोजनम्—उत्तमशब्दस्यापि संख्यातस्य प्रतिषेधप्रतिपत्तिर्यथा स्यादित्येवं केचिद्वर्णयन्ति। भवति तत्सामीप्यात् ताच्छब्द्यम्—गङ्गायां घोष इत्यादि। तस्माच्छक्त उत्तमशब्दः सामीप्यादुपोत्तमशब्दमभिधातुमिति तेषामभिप्रायः तेनेत्यादिना प्रतिषेधस्योपोत्तमशब्द-प्रतिपत्तेः फलं दर्शयति ॥ ९० ॥

**राजाहःसखिभ्यष्टच्॥ परमाहः, उत्तमाह इति।** 'सन्महत्' इत्यादिना कर्मधारयः। **मद्रराज इति** षष्ठी-तत्पुरुषः। कथं पुना राजशब्दग्रहणे राज्ञीशब्दस्य प्राप्नोति? इत्यत आह—**लिङ्गविशिष्टपरिभाषयेत्यादि।**

**पदमञ्जरी**

**उत्तमैकाभ्यां च॥ केचित्त्वत्यादि।** यथा 'प्रथमयोः' इति प्रथमाद्वितीययोर्ग्रहणं द्विवचननिर्देशात्, तथैवात्राप्युत्तमग्रहणसामर्थ्यादुपोत्तमोत्तमयोर्द्वयोरपि ग्रहणमिति तेषामभिप्रायः। अत्र पक्षे उत्तमौ द्वावेकश्चापर इति बहुवचनप्रसङ्गात् सौत्रो द्विवचननिर्देशः। एकशब्दस्यापूर्वनिपातः 'अल्पाच्तरम्' इत्यस्यानित्यत्व-ज्ञापनार्थः ॥ ९० ॥

**राजाहस्सखिभ्यष्टच्॥ इह कस्मादिति।** किं च स्याद्यत्र टच् स्यात्? 'भस्याढे तद्धिते' ( वा० ७३१ ) इति पुंवद्भावेन ङीपि निवृत्ते टचि टिलोपे सति टित्त्वान्ङीपि मद्रराजीति स्यात्, मद्रराज्ञीति चेष्यते। तस्मादत्र

**भावबोधिनी**

उत्तम और एक इनसे परे अहन् का अह्न आदेश नहीं होता है। इस सूत्र में 'उत्तम' शब्द अन्त्य का वाचक है। [ अतः प्राप्तिवाले सूत्र के अन्तिम अर्थात् "अहःसर्वैकदेशसंख्यातपुण्याच्च रात्रेः" इसके अन्तिम शब्द पुण्य का ज्ञान कराता है ] पुण्य शब्द का ग्रहण तो [ सूत्रकार ने ] वैचित्र्य के लिए नहीं किया है। उदा०—पुण्याहः। एकाहः। [ इनमें टच् प्रत्यय प्राप्त है उसका निषेध, न् का रुत्व विसर्ग होता है। ]

कुछ विद्वान् उपोत्तम ( अन्त्य से पहले वाले ) का भी ज्ञान कराने के लिए 'उत्तम' का ग्रहण मानते हैं। इस लिए अन्त्य के समीप वाले 'संख्यात' से भी परे अहन् का टच् नहीं होता है—संख्याताहः ॥ ९० ॥

राजन्, अहन्, सखि—ये जिसके अन्त में हैं ऐसे प्रातिपदिक से टच् प्रत्यय होता है। उदा०—महाराजः। मद्रराजः। [ परमश्चासौ राजा। मद्राणां राजा—इनमें समास करने के बाद टच्=अ प्रत्यय, टिलोप होता है। ]

इह कस्मान्न भवति—मद्राणां राज्ञी मद्रराज्ञी, लिङ्गविशिष्टपरिभाषया प्राप्नोति ? लघ्वक्षरस्य पूर्वनिपाते प्राप्ते राजन्-शब्दस्य सवर्णदीर्घार्थं प्रथम प्रयोगं कुर्वन्नेतद् ज्ञापयति—यस्याकारेण सवर्णदीर्घत्वं सम्भवति तस्येदं ग्रहणमिति ॥

## २३७२. गोरतद्धितलुकि ॥ ९२ ॥ ( ७२९ )

गोशब्दान्तात्तत्पुरुषाट्टच् प्रत्ययो भवति स चेतत्पुरुषस्तद्धितलुग्विषयो न भवति। परमगवः। उत्तमगवः। पञ्चगवम्। दशगवम्।

अतद्धितलुकीति किम् ? पञ्चभिर्गोभिः क्रीतः पञ्चगुः। दशगुः। 'तेन क्रीतम्' ( ५.१.३७ ) इत्यागतस्यार्हीयस्य ठकः 'अध्यर्द्धपूर्वद्विगोः' ( ५.१.२८ ) इति लुक्।

**न्यासः**

'प्रातिपदिकग्रहणे लिङ्गविशिष्टस्यापि ग्रहणं भवति' इत्येषा लिङ्गविशिष्टपरिभाषा। **लघ्वक्षरस्येति**। सवर्णदीर्घोऽर्थः प्रयोजनं यस्य प्रथमप्रयोगस्य स तथोक्तः। अत्र लघ्वक्षरं पूर्वं निपततीति सख्युरह्नो वा पूर्वनिपाते प्राप्ते योऽहःशब्दस्य परनिपातः स राजशब्दस्य सवर्णदीर्घार्थः। प्रयोगस्तु क्वचिन्नैतज् ज्ञापयति—अकारवत एव राजशब्दाट्टज् भवति, ईकारान्तान्न; ईकारस्याकारेण सवर्णदीर्घान्तिस्यासम्भवात् ॥ ९१ ॥

**गोरतद्धितलुकि ॥ पञ्चगवमिति**। 'तद्धितार्थे' इति समाहारे द्विगुः। **पञ्चगुरित्यत्रापि** तद्धितार्थे। **राजगवमिति**। षष्ठीसमासः। 'सुपो धातुप्रातिपदिकयोः' इति सुपो लुक्। **राजगवीयतीति**। 'सुप आत्मनः क्यच्',

**पदमञ्जरी**

टचोऽनुत्पत्तिर्वक्तव्येति भावः। टचश्चित्करणमन्तोदात्तार्थम्; अन्यथा प्रत्ययस्य समासैकदेशत्वाद्विधुरः, प्रधुर इत्यादाविव प्रत्ययस्वरोऽव्ययपूर्वपदप्रकृतिस्वरेण बाध्येत ॥ ९१ ॥

**गोरतद्धितलुकि ॥ पञ्चगवमिति**। समाहारे द्विगुः, पञ्चगुरित्यत्र तद्धितार्थे।

**भावबोधिनी**

परमाहः। उत्तमाहः। [ परमं तद् अहश्च, उत्तमं च तदहश्च—ये कर्मधारय हैं। टच् करने पर टिलोप होता है। ] राज्ञः सखा + इसमें राजसखः। ब्राह्मणसखः। [ टच् करने के बाद टिलोप होता है। ]

इसमें टच् क्यों नहीं होता है—मद्राणां राज्ञी—मद्रराज्ञी, क्योंकि 'प्रातिपदिकग्रहणे लिङ्गविशिष्टस्यापि ग्रहणम्' इस परिभाषा से स्त्रीलिङ्ग में भी प्राप्त होता है ? लघ्वक्षर = कम अक्षरों वाले अहन् या सखि का पूर्वनिपात प्राप्त रहते राजन् शब्द का सवर्णदीर्घ के लिए प्रथम प्रयोग करते हुए यह ज्ञापित करते हैं—जिस ( राजन् ) शब्द के अकार के साथ सवर्णदीर्घ संभव होता है उसी का ग्रहण यहाँ हैं। [ राज्ञी इसका सवर्णदीर्घ संभव नहीं है अतः इससे टच् नहीं होता है। यदि सर्वविध राजन् का ग्रहण होता तो लघ्वक्षर अहन् या सखि का आदि में उल्लेख करके अन्त में राजन् का उल्लेख रहता। अतः पाणिनि को यही इष्ट है कि राजन् से ही टच् होगा, राज्ञी से नहीं। ] ॥ ९१ ॥

गोशब्दान्त तत्पुरुष से 'टच्' प्रत्यय होता है यदि वह तत्पुरुष तद्धितलुग्विषय ( तद्धित प्रत्यय के लुक् वाला ) नहीं होता है। उदा०—परमगवः। उत्तमगवः। [ परमश्चासौ गौः, उत्तमश्चासौ गौः—इनमें कर्मधारय तत्पुरुष करने के बाद टच् = अ प्रत्यय 'ओ' का अव्' आदेश होता है। ] पञ्चगवम्। दशगवम्। [ पञ्चानां गवां समाहारः, दशानां गवां समाहारः—इसमें "तद्धितार्थोत्तरपदसमाहारे च" सूत्र से समास के बाद टच् प्रत्यय होता है। ]

तद्धितलुक् न होने पर—इसका क्या फल है ? पञ्चभिः गोभिः क्रीतः—इस अर्थ में पञ्चगुः। ( दशभिः गोभिः क्रीतः इस अर्थ में ) दशगुः। यहाँ 'तेन क्रीतम्' सूत्र से किये गये आर्हीय ठक् प्रत्यय का 'लुक्' 'अध्यर्धपूर्वद्विगोः' सूत्र से होता है। [ अतः इनमें टच् नहीं होता है। ]

तद्धितग्रहणं किम् ? सुब्लुकि प्रतिषेधो मा भूत्—राजगवमिच्छति राजगवीयति। लुग्ग्रहणं किम् ? तद्धित एव मा भूत्—पञ्चभ्यो गोभ्य आगतं पञ्चगवरूप्यम्, पञ्चगवमयम्। दशगवरूप्यम्, दशगवमयम् ॥

२३७३. अग्राख्यायामुरसः ॥ ९३ ॥ ( ७९५ )

उरःशब्दान्तात्तत्पुरुषाट्टच् प्रत्ययो भवति, स चेदुरःशब्दोऽग्राख्यायां भवति। अग्रम् = प्रधानमुच्यते। यथा शरीरावयवानामुच्यते उरः प्रधानम्, एवमन्योऽपि प्रधानभूत उरश्शब्देनोच्यते। अश्वानामुरः अश्वोरसम्। हस्त्युरसम्। रथोरसम्।

अग्राख्यायामिति किम् ? देवदत्तस्योरः देवदत्तोरः ॥

२३७४. अनोऽश्मायस्सरसां जातिसंज्ञयोः ॥ ९४ ॥ ( ७९६ )

अनस्, अश्मन्, अयस्, सरस् = इत्येवमन्तात्तत्पुरुषाट्टच् प्रत्ययो भवति जातौ संज्ञायां च विषये। उपानसमिति जातिः। महानसमिति संज्ञा। अमृताश्म इति जातिः। पिण्डाश्म इति संज्ञा। कालायसमिति

**न्यासः**

सुब्लुक्, 'क्यचि च' इतीत्वम्। अस्त्यत्र लुक्, स तु सुपः; न तद्धितस्य। परव्यत्ययेनात्र पञ्चम्यर्थे सप्तमी। कुत एतत् ? पञ्चम्यन्तेन गोशब्देन सामानाधिकरण्यात् ॥ ९२ ॥

अग्राख्यायामुरसः ॥ स चेदुरःशब्दोऽग्रस्याख्या भवतीत्यनेन दर्शितम्। अश्वोरसमिति षष्ठी समासः। अश्वानां प्रधानमित्यर्थः। हस्त्युरसम्। रथोरसमिति ॥ ९३ ॥

अनोऽश्मायःसरसां जातिसंज्ञयोः ॥ उपानसमिति। उपगतमन इति प्रादिसमासः। महानसमिति। महदन

**पदमञ्जरी**

पञ्चगवरूप्यम्, पञ्चगवमयमिति। यथात्र 'द्विगोर्लुगनपत्ये' इति रूप्यमयटोर्लुग्न भवति तथा तत्रैवोक्तम् ॥ ९२ ॥

अग्राख्यायामुरसः ॥ 'अग्राख्यायाम्' इति पञ्चम्यर्थे सप्तमी, पञ्चम्यन्तेनोरः शब्देन समानाधिकरण्यात्। समानाधिकरण्यं तु 'स चेदुरःशब्दः' इत्यादिना दर्शितम् ॥ ९३ ॥ ९४ ॥ ९५ ॥

**भावबोधिनी**

तद्धितग्रहण का क्या प्रयोजन है ? सुप् का लोप होने पर प्रतिषेध न हो सके—राजगवम् इच्छति–राजगवीयति। [ राज्ञः गौः, राजगवः। आत्मनः राजगवम् इच्छति—इसमें 'सुप आत्मनः क्यच्' से क्यच्, धातुसंज्ञा, 'सुपो धातुप्रातिपदिकयोः' सूत्र से सुप् का लुक् 'क्यचि च' सूत्र से अ का ई होता है। यहाँ लुक् तो है परन्तु तद्धित का नहीं सुप् का, अतः निषेध नहीं होता है। ]

लुक् का ग्रहण किस लिए है ? तद्धित प्रत्यय में ही निषेध न होने लग जाय—पञ्चभ्यः गोभ्य आगतम्—पञ्चगवरूप्यम्, पञ्चगवमयम्। दशगवरूप्यम्। दशगवरूप्यम्। [ यहाँ तद्धित है उसका लुक् नहीं है अतः निषेध नहीं होता है। ] ॥ ९२ ॥

उरःशब्दान्त तत्पुरुष से टच् होता है, यदि वह उरः शब्द अग्र अर्थ कहने वाला होता है। अग्र = प्रधान को कहा जाता है। जैसे शरीर के अवयवों में 'उरः' को प्रधान कहा जाता है, वैसे ही अन्य भी प्रधानभूत 'उरः' शब्द से कहा जाता है। उदा०—अश्वानाम् उरः—अश्वोरसम्। [ हस्तिनाम् उरः— ] हस्त्युरसम्। [ रथानाम् उरः— ] रथोरसम्। [ घोड़ों में प्रधान = श्रेष्ठ। हाथियों में श्रेष्ठ। रथों में श्रेष्ठ ]

अग्राख्या में—इसका क्या फल है ? देवदत्तस्य उरः—देवदत्तोरः। [ यहाँ टच् नहीं होता है क्योंकि यह अग्र = प्रधान अर्थ में नहीं है। ] ॥ ९३ ॥

अनस्, अश्मन्, अयस् और सरस्—इनमें से कोई जिसके अन्त में है ऐसे तत्पुरुष से टच् प्रत्यय जाति और संज्ञा विषय रहने पर होता है। उदा०—उपानसम् यह जाति है। [ उपगतम् अनः यह विग्रह करके प्रादि समास है। ]

जातिः । लोहितायसमिति संज्ञा । मण्डूकसरसमिति जातिः । जलसरसमिति संज्ञा ।

'जातिसंज्ञयोः' इति किम् ? सदनः । सदश्मा । सत्सरः ॥

२३७५. ग्रामकौटाभ्यां च तक्ष्णः ॥ ९५ ॥ ( ७९७ )

'जातिसंज्ञयोः' इति नानुवर्त्तते । ग्रामकौटाभ्यां परो यस्तक्षन्शब्दस्तदन्तात्तत्पुरुषाट्टच् प्रत्ययो भवति । ग्रामस्य तक्षा ग्रामतक्षः । बहूनां साधारण इत्यर्थः । कुटयां भवः कौटः, तस्य तक्षा कौटतक्षः । स्वतन्त्रः कर्मजीवी, न कस्यचित्प्रतिबद्ध इत्यर्थः ।

ग्रामकौटाभ्यामिति किम् ? राज्ञस्तक्षा राजतक्षा ॥

२३७६. अतेः शुनः ॥ ९६ ॥ ( ७९८ )

अतिशब्दात्परो यः श्वन्-शब्दः तदन्तात्तत्पुरुषाट्टच् प्रत्ययो भवति । अतिक्रान्तः श्वानमतिश्वो वराहः । जववानित्यर्थः । अतिश्वः सेवकः । सुष्ठु स्वामिभक्त इत्यर्थः । अतिश्वी सेवा । अतिनीचेत्यर्थः ॥

**न्यासः**

इति 'सन्महत्' इत्यादिना कर्मधारयसमासः । अमृताश्मः, पिण्डाश्म इति विशेषणसमासौ । एवं कालायसम्, लोहितायसमिति । मण्डूकसरसम्, जलसरसमिति । षष्ठीसमासौ ।

सदन इति । महानसवत् समासः ॥ ९४ ॥

ग्रामकौटाभ्याञ्च तक्ष्णः ॥ बहूनां साधारण इत्यर्थ इति । ग्रामशब्दस्य जनपदसमुदाये वृत्तेः । कौटतक्षेति । पूर्ववत् समासः ॥ ९५ ॥ अतेः शुनः ॥ अतिश्व इति । प्रादिसमासः ॥ ९६ ॥

**पदमञ्जरी**

अतेः शुनः ॥ जवन[1] इत्यर्थ इत्यादि । विषयविशेषादियमर्थव्यवस्था श्वशब्दस्य ॥ ९६ ॥

**भावबोधिनी**

महानसम् यह संज्ञा है । [ महच्च तद् अनः—यह कर्मधारय करके टच् होता है । ] अमृताश्मः—यह जाति है । पिण्डाश्मः यह संज्ञा है । [ अमृतं च तद् अश्म, पिण्डं च तद् अश्म—ये भी कर्मधारय ही हैं । टच् करने पर टिलोप होता है । ] कालायसम्—यह जाति है । लोहितायसम् यह संज्ञा है । मण्डूकसरसम्—यह जाति है । जलसरसम्—यह संज्ञा है । [ कालायसम् = लोह जातिविशेष । लोहितायसम् = ताम्बा जातिविशेष । मण्डूकसरसम् = बहुत मेढकों वाला तालाब । जलसरसम्— बहुत अधिक जल वाला तालाब—ये संज्ञायें हैं । ]

जाति और संज्ञा में—इसका क्या फल है ? सदनः । सदश्मा । सत्सरः । [ इनमें जाति अथवा संज्ञा की प्रतीति नहीं है । सत् अनः, सत् अश्मा, सत् सरः—सामान्य अर्थ में हैं अतः टच् नहीं होता है । ] ॥ ९४ ॥

'जातिसंज्ञयोः' इसकी अनुवृत्ति नहीं होती है । ग्राम और कौट से परे जो तक्षन् शब्द, तदन्त तत्पुरुष समास से टच् प्रत्यय होता है । उदा०—ग्रामस्य तक्षा—ग्रामतक्षः । [ बहुतों के लिये साधारण बढ़ई । यहाँ टच् करने पर टिलोप हो जाता है । ] कुट्यां भवः = कौटः, तस्य तक्षा—कौटतक्षः । स्वतन्त्र काम करके जीविका चलाने वाला, किसी के प्रतिबंध पर काम न करने वाला—यह अर्थ है । [ अपने घर पर ही काम करने वाला बढ़ई । ]

ग्राम और कौट से परे—इसका क्या फल है ? राज्ञः तक्षा—राजतक्षा । [ यहाँ टच् नहीं होता है । ] ॥ ९५ ॥

'अति' शब्द से परे जो श्वन् शब्द तदन्त तत्पुरुष से टच् प्रत्यय होता है । उदा०—अतिक्रान्तः श्वानम्—अतिश्वः वराहः । बहुत तेज दौड़ने वाला—यह अर्थ है । अतिश्वः सेवकः । सुन्दर स्वामिभक्त । अतिश्वी सेवा । अतिनिकृष्ट सेवा—यह अर्थ है । [ टित् होने से ङीप् हो जाता है । जब किसी कार्य में कुत्ते को भी कम कर दिया जाता है तब इसका प्रयोग होता है । ] ॥ ९६ ॥

---

१. 'जववान्' इति काशिकापाठः ।

२३७७. उपमानादप्राणिषु ।। ९७ ।। ( ७९९ )

उपमानवाची यः श्वन्-शब्दोऽप्राणिषु वर्त्तते तदन्तात्तत्पुरुषाट्टच् प्रत्ययो भवति। आकर्षः श्वेव आकर्षश्वः। फलकश्वः। 'उपमितं व्याघ्रादिभिः' ( २.१.५६ ) इति समासः।

उपमानादिति किम् ? न श्वा अश्वा लोष्टः। अप्राणिष्विति किम् ? वानरः श्वेव वानरश्वा ।।

२३७८. उत्तरमृगपूर्वाच्च सक्थ्नः ।। ९८ ।। ( ८०० )

उत्तर, मृग, पूर्व—इत्येतेभ्यः परो यः सक्थिशब्दश्चकारादुपमानं च, तदन्तात्तत्पुरुषाट्टच् प्रत्ययो भवति समासान्तः। उत्तरसक्थम्। मृगसक्थम्। पूर्वसक्थम्। उपमानात्खल्वपि—फलकमिव सक्थि फलकसक्थम् ।।

२३७९. नावो द्विगोः ।। ९९ ।। ( ८०१ )

नौशब्दान्ताद् द्विगोष्टच्प्रत्ययो भवति समासान्तः। द्वे नावौ समाहृते द्विनावम्। त्रिनावम्। द्विनावधनः। पञ्चनावप्रियः। द्वाभ्यां नौभ्यामागतं द्विनावरूप्यम्। द्विनावमयम्।

द्विगोरिति किम् ? राजनौः।

न्यासः

उपमानादप्राणिषु ।। आकर्षश्व इति। अत्र श्वा उपमानम्।

अश्वा लोष्ट इति। अत्राश्वशब्दोऽप्राणिनि लोष्टे वर्त्तते, न तूपमानम्। वानरश्वेति। 'उपमितं व्याघ्रादिभिः' इति समासः। अत्र प्राणिनि वानरश्वेति शब्दो वर्त्तते ।। ९७ ।।

उत्तरमृगपूर्वाच्च सक्थ्नः। उत्तरसक्थमिति। उत्तरं सक्थन इति पूर्वापरादिसूत्रेण समासः। अथ वा—उत्तरं सक्थीति विशेषणसमासः। मृगसक्थमिति षष्ठीसमासः। पूर्वसक्थमिति। उत्तरसक्थमित्यनेन तुल्यमेतत्। फलकसक्थमिति। 'विशेषणम्' इत्यादिना समासः ।। ९८ ।।

नावो द्विगोः ।। द्विनावम्। त्रिनावमिति। 'तद्धितार्थोत्तरपद' इत्यादिना द्विगुः। द्विनावधन इति। द्वे

पदमञ्जरी

उपमानादप्राणिषु ।। अश्वा लोष्ट इति। अत्र 'नञस्तत्पुरुषात्' इति प्रतिषेधेन भाव्यम्, तस्मान्निःश्वा

भावबोधिनी

उपमानवाचक जो श्वन् शब्द अप्राणी अर्थ में वर्तमान है, तदन्त तत्पुरुष से टच् प्रत्यय होता है। उदा०—आकर्षः श्वा इव—आकर्षश्वः। [ खलिहान में प्रयुक्त काष्ठविशेष के समान ] फलकश्वः। [ फलकः श्वा इव ] 'उपमितं व्याघ्रादिभिः सामान्याप्रयोगे' ( पा० सू० २।१।५५ ) से उपमित समास होता है।

उपमानवाचक से—इसका क्या फल है ? न श्वा—अश्वा लोष्टः। [ यहाँ उपमान नहीं है। ] अप्राणी में—इसका क्या फल है ? वानरः श्वा इव—वानरश्वा। [ यहाँ प्राणी है। अतः प्रत्यय नहीं होता है। ] ।। ९७ ।।

उत्तर, मृग और पूर्व—इनसे परे जो सक्थि शब्द, चकार के बल से उपमान [ जो सक्थि शब्द ], तदन्त तत्पुरुष से समासान्त टच् प्रत्यय होता है। उदा०—उत्तरसक्थम्। [ उत्तरं सक्थ्नः—इसमें 'पूर्वापराधरोत्तरमेकदेशिना०' सूत्र से समास करके टच् प्रत्यय, भ संज्ञा, इलोप ] मृगसक्थम्। [ मृगस्य सक्थि – इसमें समास और प्रत्यय होता है। ] पूर्वसक्थम्। [ पूर्वं सक्थि यह समास करके टच् होता है। ] उपमानवाची से भी होता है—फलकम् इव सक्थि—फलकसक्थम्। [ सक्थि = उरु। फलक के समान चौड़ा उरु। ] ।। ९८ ।।

नौ शब्दान्त द्विगु से टच् समासान्त प्रत्यय होता है। उदा०—द्वे नावौ समाहृते—द्विनावम्। [ 'तद्धितार्थोत्तरपदसमाहारे च' सूत्र से समास के बाद टच् प्रत्यय ] त्रिनावम्। द्विनावधनः [ द्वे नावौ धनं यस्य सः—इस बहुव्रीहि में पूर्व के दो पदों का द्विगु और टच् होता है ] पञ्चनावप्रियः। [ पञ्चनावः प्रियाः यस्य सः—यहाँ भी बहुव्रीहि में द्विगु से

अतद्धितलुकीत्येव—पञ्चभिर्नौभिः क्रीतः पञ्चनौः । दशनौः ॥

## २३८०. अर्धाच्च ॥ १०० ॥ ( ८०२ )

अर्द्धशब्दात्परो यो नौशब्दस्तदन्तात्तत्पुरुषाट्टच्प्रत्ययो भवति । अर्द्धं नावः अर्द्धनावम् । 'अर्द्धं नपुंसकम्' ( २.२.२ ) इति समासः । परवल्लिङ्गं न भवति; लोकाश्रयत्वाल्लिङ्गस्य ॥

## २३८१. खार्याः प्राचाम् ॥ १०१ ॥ ( ८०३ )

'द्विगोः', 'अर्द्धाच्च' इति द्वयमप्यनुवर्त्तते । खारीशब्दान्ताद् द्विगोरर्द्धाच्च परो यः खारीशब्दस्तदन्तात्तत्पुरुषाट्टच् प्रत्ययो भवति प्राचामाचार्याणां मतेन । द्वे खार्यौ समाहृते द्विखारम्, द्विखारि । त्रिखारम्, त्रिखारि । अर्द्धं खार्या अर्द्धखारम्, अर्द्धखारी ॥

### न्यासः

नावौ धनं यस्येति बहुव्रीहौ कृते पूर्वयोः पदयोस्तेनैव सूत्रेणोत्तरपदे द्विगुः । **पञ्चनावप्रियमिति** । पूर्वेण तुल्यमेतत् । **द्विनावरूप्यम्, द्विनावमयमिति** । तेनैव सूत्रेण तद्धितार्थे द्विगुः । पूर्ववद्रूप्यमयटौ ।

**राजनौरिति** । षष्ठीसमासः । **पञ्चनौरिति** । आर्हीयस्य ठकः 'अध्यर्धपूर्व' इत्यादिना लुक् ॥ ९९ ॥

**अर्धाच्च** ॥ **अर्धनावमिति** । ननु च 'परवल्लिङ्गं द्वन्द्वतत्पुरुषयोः' इति स्त्रीलिङ्गेनात्र भवितव्यमिति ? अत आह—**परवल्लिङ्गं न भवतीत्यादि** ॥ १०० ॥

**खार्याः प्राचाम्** ॥ **द्विखारीति** । **त्रिखारीति** । पूर्वपदुपसर्जनह्रस्वः । क्वचिदधखारीति पाठः । अत्रैचोरुपसर्जनह्रस्वत्वे कृते 'सर्वतोऽक्तिन्नर्थादित्येके' इति बह्वादिपाठान् ङीष् ॥ १०१ ॥

### पदमञ्जरी

लोष्ट इति प्रत्युदाहर्त्तव्यम् ॥ ९७ ॥ ९८ ॥ ९९ ॥ १०० ॥

**खार्याः प्राचाम्** ॥ **द्विखारीति** । टजभावपक्षे नपुंसकह्रस्वत्वम् ।

अयं योगः शक्योऽवक्तुम् । कथं द्विखारम्, त्रिखारमिति ? खारीशब्देन समानार्थः खारशब्दोऽस्ति, यथा च 'तदस्य परिमाणम्', 'संख्यायाः संज्ञा' इत्यत्र 'अन्येभ्योऽपि दृश्यते खारशताद्यर्थम्' ( कात्या० वा० ३०४४ ) इति वार्तिकम् ॥ १०१ ॥

### भावबोधिनी

टच् प्रत्यय होता है । ] द्वाभ्यां नौभ्याम् आगतम्—इसमें द्विनावरूप्यम् । द्विनावमयम् । [ इन दोनों में समाहार में द्विगु करके टच् किया जाता है । ]

द्विगु से—इसका क्या प्रयोजन है ? राजनौः [ यहाँ राज्ञः नौः—यह षष्ठीतत्पुरुष हैं । ]

तद्धितलुक् में नहीं होता है, इसकी अनुवृत्ति होती है—पंचभिः नौभिः क्रीतः–पञ्चनौः [यहाँ क्रीत अर्थ में आर्हीय प्रत्यय और उसका लुक् होने से टच् नहीं होता है । ] दशनौः । [ दशभिः नौभिः क्रीतः—यहाँ भी पूर्वोक्त रीति से प्रत्यय और लुक् होने से समासान्त प्रत्यय नहीं होता है। पांच नावों से खरीदा गया, दश नावों से खरीदा गया ।] ॥९९॥

अर्ध शब्द से परे जो नौ शब्द तदन्त तत्पुरुष से टच् प्रत्यय नहीं होता है । उदा०—अर्द्धं नावः—अर्धनावम् । 'अर्धं नपुंसकम्' सूत्र से समास होता है । इसमें 'परवल्लिङ्गं द्वन्द्वतत्पुरुषयोः' नियम से स्त्रीलिङ्ग नहीं होता है [ अपितु नपुंसकलिङ्ग होता है ] क्योंकि लिङ्ग तो लोकव्यवहार पर आश्रित है । [ अतः नपुंसकत्व उचित है । ] ॥ १०० ॥

'द्विगोः' 'अर्धाच्च' इन दोनों की अनुवृत्ति होती है । खारीशब्दान्त द्विगु से और अर्ध शब्द से परे जो खारी शब्द तदन्त तत्पुरुष से टच् प्रत्यय प्राचीन आचार्यों के मत से होता है । उदा०—द्वे खार्यौ समाहृते—द्विखारम्, द्विखारि । [ समाहार में द्विगु करने के बाद वैकल्पिक टच्=अ प्रत्यय, इलोप । पक्ष में नपुंसकत्व, ह्रस्व करने पर—द्विखारि रूप बनता है । ] त्रिखारम्, त्रिखारि । [ यहाँ भी टच् और उसके अभाव में दो रूप होते हैं । ] अर्द्धं खार्याः—अर्धखारम्, अर्धखारी । [ यहाँ ह्रस्व नहीं होता है क्योंकि षष्ठीतत्पुरुष है । ] ॥ १०१ ॥

## २३८२. द्वित्रिभ्यामञ्जलेः ॥ १०२ ॥ ( ८०४ )

द्वित्रिभ्यां परो योऽञ्जलिशब्दः तदन्तात्तत्पुरुषाट्टच्प्रत्ययो भवति। द्वावञ्जली समाहृतौ द्व्यञ्जलम्। त्र्यञ्जलम्।

द्विगोरित्येव—द्वयोरञ्जलिः द्व्यञ्जलिः।

अतद्धितलुकीत्येव—द्वाभ्यामञ्जलिभ्यां क्रीतो द्व्यञ्जलिः। त्र्यञ्जलिः। प्राचामित्येव—द्व्यञ्जलिप्रियः॥

## २३८३. अनसन्तान्नपुंसकाच्छन्दसि ॥ १०३ ॥ ( ३२०५ )

अन्नन्ताद्, असन्ताच्च नपुंसकलिङ्गात्तत्पुरुषाट्टच् प्रत्ययो भवति छन्दसि विषये। हस्तिचर्मे जुहोति। 'ऋषभचर्मेऽभिषिञ्चति' ( काठ० सं० ३७.३ )। असन्तात्—देवच्छन्दसानि ( मै० सं० ३.२.९ ) मनुष्यच्छन्दसानि ( तै० सं० ५.४.८.६ )।

अनसन्तादिति किम्? बिल्वदारु जुहोति। नपुंसकादिति किम्? 'सुत्रामाणं पृथिवीं द्यामनेहसम्' ( ऋ० १०.६३.१० )।

**न्यासः**

द्वित्रिभ्यामञ्जलेः॥ द्वाभ्यामञ्जलिभ्यां क्रीतो द्व्यञ्जलिरिति। पूर्ववदार्हीयस्य लुक्। द्व्यञ्जलिप्रिय इति। पूर्ववदुत्तरपदे द्विगुः॥ १०२॥

अनसन्तान्नपुंसकाच्छन्दसि॥ हस्तिचर्म इत्यादयः षष्ठीसमासाः।

सुत्रामाणमिति। शोभनस्त्रामा इति प्रादिसमासः, 'अन्येषामपि दृश्यते' इति पूर्वपदस्य दीर्घः, द्वितीयैकवचनम्, 'सर्वनामस्थाने च' इत्यादिनोपधादीर्घत्वम्, 'अट् कुप्वाङ्' इत्यादिना णत्वम्। अनेहसमिति।

**पदमञ्जरी**

द्वित्रिभ्यामञ्जलेः॥ द्वाभ्यामञ्जलिभ्यां क्रीतो द्व्यञ्जलिरिति। अञ्जलिपरिमितो व्रीह्यादिरञ्जलिः; न पाणिद्वयम्, तस्य मूल्यत्वासम्भवात्। ततश्च परिमाणत्वात्प्राग्वतीयस्य ठकः 'अध्यर्द्धपूर्व' इति लुक्। द्व्यञ्जलिप्रिय इति। व्यवस्थितविभाषात्वादुत्तरपदद्विगोर्न भवतीत्याहुः॥ १०२॥

अनसन्तान्नपुंसकाच्छन्दसि॥ सुत्रामाणमिति। सुष्ठु त्रायते इति 'आतो मनिन्', उपपदसमासः। अनेहसमिति। 'नञ्याहन एह च' ( द० उ० ९.८३ ) इत्याङ्पूर्वाद्धन्तेरसिप्रत्ययः, धातूपसर्गयोश्चेहादेशः, नञ उपपदसमासः, द्वितीयैकवचनम्।

**भावबोधिनी**

द्वि और त्रि शब्द से जो अञ्जलि शब्द तदन्त तत्पुरुष से टच् प्रत्यय होता है। उदा०—द्वौ अञ्जली समाहृतौ—इसमें द्व्यञ्जलम्। त्र्यञ्जलम्। [ त्रयः अञ्जलयः समाहृताः—इसमें 'तद्धितार्थोत्तरपदसमाहारे च' सूत्र से समास के बाद टच् प्रत्यय, भसंज्ञा, इलोप होने पर द्विगु का नपुंसकलिङ्ग होता है। ]

द्विगु से ही होता है।—द्वयोः अञ्जलिः। [ इस षष्ठीतत्पुरुष में नहीं होता है। ]

तद्धितलुक् न होने पर—इसकी अनुवृत्ति है अतः यहाँ नहीं होता है—द्वाभ्याम् अञ्जलिभ्यां क्रीतः—इस अर्थ में [ आर्हीय प्रत्यय और उसका लुक् होता है। अतः टच् नहीं होता है ] द्व्यञ्जलिः। त्र्यञ्जलिः। प्राचीनों के मत में ही होता है [ पाणिनि के मत में नहीं होता है—] द्व्यञ्जलिप्रियः। [ व्यवस्थित विभाषा के कारण उत्तरपद परे रहते यह प्रत्यय नहीं होता है। ] ॥ १०२॥

अन् जिसके अन्त में है और अस् जिसके अन्त में है ऐसे नपुंसक लिङ्ग तत्पुरुष से वेदविषय में टच् प्रत्यय होता है। उदा०—हस्तिचर्मे जुहोति। ऋषभचर्मेऽभिषिच्यते। [ हस्तिनः चर्म—इस षष्ठी तत्पुरुष के बाद टच् प्रत्यय, टिलोप ] असन्त के उदा०—देवच्छन्दसानि। मनुष्यच्छन्दसम्। [ टच् होने से अकारान्त मानकर रूप होता है। ]

❀ अनसन्तान्नपुंसकाच्छन्दसि वावचनम् ❀ ( म० भा० )। 'ब्रह्मसाम' ( तां० ब्रा० ४.३.१ )। 'देवच्छन्द:' ( शां० ब्रा० १.५ )। 'ब्रह्मसामम्' ( तै० सं० १.८.१८.१ )। 'देवच्छन्दसम्' ( तै० सं० ५.४.८.५ )॥

२३८४. ब्रह्मणो जानपदाख्यायाम् ॥ १०४ ॥ ( ८०९ )

ब्रह्मन् शब्दान्तात्तत्पुरुषाट्टच्प्रत्ययो भवति समासेन चेद् ब्रह्मणो जानपदत्वमाख्यायते। जनपदेषु भवो जानपदः। यस्य तत्पुरुषस्य जनपदशब्दः पूर्वपदं तस्मादेतत्प्रत्ययविधानम्। सुराष्ट्रेषु ब्रह्मा सुराष्ट्रब्रह्मः। अवन्तिब्रह्मः[1]। योगविभागात्सप्तमीसमासः।

जानपदाख्यायामिति किम् ? देवब्रह्मा नारदः॥

**न्यासः**

अनेहशब्दात् पुंल्लिङ्गात् षष्ठीबहुवचनम्। वावचनमित्यनुवर्त्तत इति शेषः। वावचनशब्देनेह प्राग्ग्रहणं विवक्षितम्, तेन विकल्प्य उच्यन्ते, प्रत्याय्यते प्रत्ययोऽनेनेति कृत्वा। तदेतदुक्तं भवति—"खार्याः प्राचाम्' इत्यतः प्राग्ग्रहणमनुवर्त्तते" इति।

प्राग्ग्रहणानुवृत्तौ तु यदिष्टं सिद्धयति, तद्दर्शयति—**ब्रह्मसाम इति। देवच्छन्द इति।** उभयत्र षष्ठीसमासः॥१०३॥

**ब्रह्मणो जानपदाख्यायाम्॥ जानपदाख्यायामिति।** भावप्रधानोऽत्रजानपदशब्दः। अत एव वृत्तावाह—**समासेन चेद् ब्रह्मणो जानपदत्वमाख्यायत इति।** भवति हि भावप्रत्ययमन्तरेणापि भावप्रधानो निर्देशः, यथा—'द्वयेकयोर्द्विवचनैकवचने' इति कथं पुनर्ब्रह्मणो जानपदत्वं शक्यं विशेषयितुम्, यावतैकमिह ब्रह्मग्रहणम्, तेन च समासो विशेषितः ? नैतदस्ति; तन्त्रेण द्वौ ब्रह्मशब्दावुच्चारितौ—तत्रैकेन समासो विशेष्यते, अपरेण जानपदत्वम्, यस्य तत्पुरुषस्य जनपदशब्दः पूर्वपदम्। पूर्ववत् समासः॥ १०४॥

**पदमञ्जरी**

अन्त ग्रहणं विस्पष्टार्थम्॥ १०३॥

**ब्राह्मणो जानपदाख्यायाम्॥** अन्तरेणापि भावप्रत्ययं जानपदशब्दो भावप्रधानः, 'द्वयेकयोः' इतिवदित्याह—**समासेन चेद् ब्राह्मणो जानपदत्वमाख्यायते।** यद्यप्येकं ब्रह्मग्रहणम्, तेन च समासो विशेषितः, तथापि प्रत्यासत्तेर्ब्रह्मण एव जानपदत्वं विशेषणं विज्ञायते, तस्मादेतत्प्रत्ययविधानमिति। तत एव हि प्रत्ययविधाने ब्रह्मणो जानपदत्वं शक्यमाख्यातुम्।

**भावबोधिनी**

अन्नन्त और असन्त से—इसका क्या फल है ? बिल्वदारु जुहोति। [ यहाँ टच् नहीं होता है। ] नपुंसक लिङ्ग से—इसका क्या फल है ? सुत्रामाणं पृथिवीं द्यामनेहसम्। [ सुत्रामन्—यह नपुंसक लिङ्ग में नहीं है। ]

❀ अन्नन्त और असन्त नपुंसक से वेदविषय में विकल्प कहना चाहिये। ❀ उदा०—ब्रह्मसाम। देवच्छन्दः। ब्रह्मसामम्। देवच्छन्दसम्। [ टच् होने पर अकारान्त हो जाता है। ]॥ १०३॥

ब्रह्मन् शब्दान्त तत्पुरुष से टच् प्रत्यय होता है यदि समास द्वारा ब्रह्मन् का जानपदत्व कहा जाता है। जनपदों में होने वाला = जानपद है। जिस तत्पुरुष का जनपद शब्द पूर्वपद हो उससे इस प्रत्यय का विधान है। उदा०—सुराष्ट्रेषु ब्रह्मा—सुराष्ट्रब्रह्मः। [ सुराष्ट्र में होने वाला ब्रह्मा ] अवन्तिब्रह्मः। [ अवन्तिषु ब्रह्मा—यह अर्थ है। [ 'सप्तमी शौण्डैः' इसके ] योगविभाग 'सप्तमी' सूत्र द्वारा समास होता है।

जानपद की आख्या में—इसका क्या फल है ? देवब्रह्मा नारदः।

[ इस सूत्र में 'ब्रह्मणः' एक बार ही दिखाई देता है परन्तु तन्त्र द्वारा उसका दो बार उच्चारण समझना चाहिये। इसी आधार पर ब्रह्मन् से समास भी विशेषित होता है और ब्रह्मन् का जानपदत्व भी कहा जाता है।]॥१०४॥

---

१. 'काशीब्रह्मः—इत्यधिकं क्वचित् पुस्तके।

२३८५. कुमहद्भ्यामन्यतरस्याम् ॥ १०५ ॥ ( ८०६ )

कुमहद्भ्यां परो यो ब्रह्मा तदन्तात्तत्पुरुषाट्टच् प्रत्ययो भवत्यन्यतरस्याम्। कुब्रह्मः, कुब्रह्मा। महाब्रह्मः, महाब्रह्मा। ब्राह्मणपर्यायो ब्रह्मन्शब्दः॥

२३८६. द्वन्द्वाच्चुदषहान्तात्समाहारे ॥ १०६ ॥ ( ९०४ )

तत्पुरुषाधिकारो निवृत्तः। द्वन्द्वाच्चवर्गान्ताद्, दकारान्तात्, षकारान्तात्, हकारान्ताच्च टच् प्रत्ययो भवति, स चेद् द्वन्द्वः समाहारे वर्त्तते, नेतरेतरयोगे। वाक्च त्वक्च वाक्त्वचम्। स्रक्च त्वक्च स्रक्त्वचम्। श्रीस्रजम्। इडूर्जम्। वागूर्जम्। समिद्दृषदम्। सम्पद्विपदम्। वाग्विप्रुषम्। छत्त्रोपानहम्। धेनुगोदुहम्।

द्वन्द्वादिति किम्? तत्पुरुषान्मा भूत्—पञ्च वाचः समाहृताः पञ्चवाक्। चुदषहान्तादिति किम्? वाक्समित्। समाहार इति किम्? प्रावृट्शरदौ॥

न्यासः

कुमहद्भ्यामन्यतरस्याम् ॥ १०५ ॥।

द्वन्द्वाच्चुदषहान्तात् समाहारे ॥ वाक् च त्वक् च वाक्त्वचम्। स्रुक् च त्वक् स्रुक्त्वचम्। श्रीश्च स्रक् च श्रीस्रजम्। वाक् च ऊर्क्च वागूर्जम्। समिच्च दृषच्च समिद्दृषदम्। सम्पच्च विपच्च सम्पद्विपदम्। वाक् च त्विट् च वाक्त्विषम्। वाक् च विप्रुट् च वाग्विप्रुषम्। छत्त्रञ्च उपानच्च छत्त्रोपानहम्। धेनुश्च गोधुक् च धेनुगोदुहम्।

पञ्चवागिति। समाहारे द्विगुः। वाक्समिदिति। धकारान्तोऽयम्। धकारस्य 'झलां जशोऽन्ते' इति जशत्वम्–दकारः, 'वावसाने' इति चर्त्वम्–तकारः॥ १०६॥

पदमञ्जरी

देवब्रह्मेति। षष्ठीसमासः, कर्मधारयो वा॥ १०४॥ १०५॥

द्वन्द्वाच्चुदषहान्तात्समाहारे॥ तत्पुरुषान्मा भूदिति। तत्पुरुषादेव मा भूदित्यर्थः। 'द्वन्द्वात्' इत्यनुच्यमाने हि तत्पुरुषाधिकारो न निवर्त्तेत॥ १०६॥

भावबोधिनी

'कु' और 'महत्' से परे जो ब्रह्मन् शब्द, तदन्त तत्पुरुष से टच् होता है विकल्प से। उदा०—कुब्रह्मः, कुब्रह्मा। [ कुत्सितः ब्रह्मा—इसमें प्रादि समास है। टच् करने पर अन् का लोप हो जाता है। ] महाब्रह्मः, महाब्रह्मा। [ महान् चासौ ब्रह्मा—इस कर्मधारय में 'आन्महतः समानाधिकरणजातीययोः' सूत्र से 'त्' का आत्व, टच् = अ प्रत्यय, टिलोप होता है। ] इसमें ब्रह्मन् शब्द ब्राह्मण का पर्याय है॥ १०५॥

यहाँ से तत्पुरुष का अधिकार समाप्त हो जाता है। चवर्गान्त, दकारान्त, षकारान्त और हकारान्त द्वन्द्व समास से टच् प्रत्यय होता है यदि वह द्वन्द्व समाहार अर्थ में वर्तमान है, इतरेतरयोग में नहीं। उदा०—वाक्च त्वक्च—वाक्त्वचम् [ समास के बाद टच्=अ प्रत्यय करने पर अकारान्त नपुंसक का रूप होता है। ] स्रक् च त्वक् च—स्रक्त्वचम्। [ स्रक्=माला और त्वक्=चर्म=त्वचा ] श्रीस्रजम्। [ श्रीश्च स्रक् च ] इडूर्जम्। [ इट् च ऊर्क् च ] वागूर्जम्। [ वाक् च ऊर्क् च ] समिद्दृषदम्। [ समित् च दृषत् च ] सम्पद्विपदम्। [ सम्पत् च विपच्च ] वाग्विप्रुषम्। [ वाक् च विप्रुट् च ] छत्त्रोपानहम्। [ छत्त्रं च उपानत् च ] धेनुगोदुहम्। [ धेनुश्च गोधुक् च ]।

द्वन्द्व से—इसका क्या फल है? तत्पुरुष से न हो—पञ्च वाचः समाहृताः—पञ्चवाक् [ इस द्विगु में न हो ]। चु, द, ष, ह—ये अन्त में हों उसीसे हो—इसका क्या फल है? वाक्समित्। [ वाक् च समित् च। इसमें समिध् शब्द धकारान्त है दकारान्त नहीं। ] समाहार में—इसका क्या फल है? प्रावृट्शरदौ। [ प्रावृट् च शरत् च—इनका इतरेतरयोग द्वन्द्व होता है। अतः प्रत्यय नहीं होता है। ]॥ १०६॥

## २३८७. अव्ययीभावे शरत्प्रभृतिभ्यः ॥ १०७ ॥ ( ६७७ )

'शरद्' इत्येवमादिभ्यः प्रातिपदिकेभ्यष्टच् प्रत्ययो भवत्यव्ययीभावे। शरदः समीपम् उपशरदम्। प्रतिशरदम्। उपविपाशम्। प्रतिविपाशम्।

अव्ययीभाव इति किम्? परमशरत्।

येऽत्र झयन्ताः पठ्यन्ते, तेषां नित्यार्थं ग्रहणम्। स्वर्यते चेदमव्ययीभावग्रहणं प्राग्बहुव्रीहेः।

शरत्। विपाश्। अनस्। मनस्। उपानह्। दिव्। हिमवत्। अनडुह्। दिश्। दृश्। चतुर्। यद्। तद्। ❀ जराया जरश्च ❀ ( ग० सू० १५७ )। सदृश्। ❀ प्रतिपरसमनुभ्योऽक्ष्णः ❀ ( ग० सू० १५८ )। प्रत्यक्षम्। परोक्षम्। समक्षम्। अन्वक्षम्। ❀ पथिन्। ❀ प्रतिपथम्। सम्पथम्। अनुपथम्। शरदादिः ॥

### न्यासः

**अव्ययीभावे शरत्प्रभृतिभ्यः ॥ उपशरदमिति** सामीप्येऽव्ययीभावः। शरद आभिमुख्ये **प्रतिशरदम्**। 'लक्षणेनाभिप्रती आभिमुख्ये' इत्यव्ययाभावः। **उपविपाशम्। प्रतिविपाशमिति**। पूर्ववत्।

अत्र ये झयन्ताः पठ्यन्ते तेषां किमर्थं ग्रहणम्, यावता 'झयः' इति वक्ष्यमाणेन तदन्तात् प्रत्यय सिध्यति? इत्यत आह—**ये त्वत्रेत्यादि**। यद्यत्र ते न गृह्येरंस्ततः 'झयः' इति विकल्पेन टच्प्रसज्येत। तस्मान्नित्यं यथा स्यादिति—एवमर्थं झयन्तानां पृथग्ग्रहणम्।

**जराया जरश्चेति**। जराशब्दाट्टज् भवत्यव्ययीभावे, जरसादेशश्च—जरायाः समीपमुपजरसमिति। **प्रतिपरसमनुभ्योऽक्ष्ण इति**। अक्षिशब्दात् प्रति, पर, सम्, अनु-इत्येतेभ्यः परस्माट् टज् भवति—**प्रत्यक्षम्। परोक्षम्**—'परोक्षे लिट्' इति निपातनादुत्वम्। **समक्षम्। अन्वक्षम्** ॥ १०७ ॥

### पदमञ्जरी

**अव्ययीभावे शरत्प्रभृतिभ्यः ॥ जराया जरस् चेति**। जराशब्दादच् प्रत्ययो भवति, अव्ययीभावे जरसादेशश्च—उपजरसम्। **प्रतिपरसमनुभ्योऽक्ष्ण इति**। प्रादिभ्यः परो योऽक्षिशब्दस्ततष्टज्भवति, तत्र परशब्दस्याव्ययीभावासम्भवात्तत्पुरुषार्थं ग्रहणम्। **प्रत्यक्षमिति**। 'यथार्थे यदव्ययम्' ( काशिका २.१.६ ) इति वीप्सायामव्ययीभावः, परक्ष्मणः परोक्षम्, 'परोक्षे लिट्' इति निर्देशात्पञ्चमीसमासः उपसर्जनस्य च परनिपातः, अक्ष्यकारस्य चोत्वम्। अक्षियोग्यम्=समक्षम्, यथार्थे योग्यतायामव्ययीभावः। **अन्वक्षमिति**। पश्चादर्थेऽव्ययीभावः ॥ १०७ ॥ १०८ ॥

### भावबोधिनी

शरत् आदि प्रातिपदिकों से अव्ययीभाव समास में टच् प्रत्यय होता है। उदा०—शरदः समीपम्—उपशरदम्। [ समीप अर्थ में अव्ययीभाव करने पर प्रत्यय होता है। ] प्रतिशरदम्। [ शरदः अभिमुखम्—इसमें "लक्षणेनाभिप्रती आभिमुख्ये" सूत्र द्वारा अव्ययीभाव आभिमुख्य अर्थ में है। ] उपविपाशम्। प्रतिविपाशम्। [ विपाशः समीपम्। विपाशः अभिमुखम्। यहाँ भी समीप और अभिमुख अर्थों में समास के बाद टच् होता है। ]

अव्ययीभाव में—इसका क्या फल है? परमशरत्। [ परमा चासौ शरत्—इस कर्मधारय में नहीं होता है। ]

जो शब्द यहाँ झयन्त ( झय् प्रत्याहार का वर्ण जिनके अन्त में है ) पठित हैं उनका ग्रहण नित्य प्रत्यय करने के लिये है [ क्योंकि वैकल्पिक प्रत्यय तो वक्ष्यमाण 'झयः' ( ५।४।१११ ) से सिद्ध ही है। ] यहअव्ययीभाव-ग्रहण बहुव्रीहि ( ५।४।११२ ) से पहले तक अनुवृत्त होता है।

[ शरदादिगण में पठित शब्द— ] शरत्। विपाश्। अनस्। मनस्। उपानह्। दिव्। हिमवत्। अनडुह्। दिश्। दृश्। चतुर्। यद्। तद्। ❀ जरा का जरस् भी होता है। ❀ सदृश। ❀ प्रति, पर, सम् अनु—से परे अक्षि से भी प्रत्यय होता है। ❀ प्रत्यक्षम्। परोक्षम्। समक्षम्। अन्वक्षम्। ❀ पथिन् भी इनसे परे हो तो प्रत्यय होता है। ❀ प्रतिपथम्। सम्पथम्। अनुपथम्। [ परपथम् ]। ये शरदादि हैं ॥ १०७ ॥

२३८८. अनश्च ॥ १०८ ॥ ( ६७८ )

अन्नन्तादव्ययीभावाट्टच् प्रत्ययो भवति समासान्तः । उपराजम् । प्रतिराजम् । अध्यात्मम् । प्रत्यात्मम् ॥

२३८९. नपुंसकादन्यतरस्याम् ॥ १०९ ॥ ( ६८० )

'अनः' इत्येव नपुंसकग्रहणमुत्तरपदविशेषणम् । अन्नन्तं यन्नपुंसकं तदन्तादव्ययीभावादन्यतरस्यां टच् प्रत्ययो भवति समासान्तः । पूर्वेण नित्ये प्राप्ते विकल्प्यते । प्रतिचर्मम्, प्रतिचर्म । उपचर्मम्, उपचर्म ॥

२३९०. नदीपौर्णमास्याग्रहायणीभ्य. ॥ ११० ॥ ( ६८१ )

नदी, पौर्णमासी, आग्रहायणी—इत्येवमन्तादव्ययीभावादन्यतरस्यां टच् प्रत्ययो भवति । नद्याः समीपम् उपनदम्, उपनदि । उपपौर्णमासम्, उपपौर्णमासि । उपाग्रहायणम्, उपाग्रहायणि ॥

न्यासः

अनश्च ॥ उपराजम्, प्रतिराजमिति । उपशरदं प्रतिशरदमितिवदव्ययीभावः । अध्यात्ममिति । आत्मन्यधीति विभक्त्यर्थे । प्रत्यात्ममिति पूर्ववदाभिमुख्ये ॥ १०८ ॥

नपुंसकादन्यतरस्याम् ॥ १०९ ॥

नदीपौर्णमास्याग्रहायणीभ्यः ॥ नदीग्रहणेन स्वरूपं गृह्यते, न संज्ञा । यदि संज्ञा गृह्येत, पौर्णमास्याग्रहायणीग्रहणं न कुर्यात् । ननु च नियमार्थमेतत् स्यात्—ईकारान्तस्यापि नद्योः पौर्णमास्याग्रहायण्योरेव भवतीति ? नैतदस्ति; यद्येतत् प्रयोजनं स्यात्, 'पौर्णमास्याग्रहायणी' इत्येवं ब्रूयात् । तस्मात् स्वरूपग्रहणमिति । उपनदीति । 'गोस्त्रियोरुपसर्जनस्य' इति ह्रस्वः ॥ ११० ॥

पदमञ्जरी

नपुंसकादन्यतरस्याम् ॥ नपुंसकग्रहणमुत्तरपदविशेषणमिति । नाव्ययीभावविशेषम्; अव्यभिचारात् ॥१०९॥

नदीपौर्णमास्याग्रहायणीभ्यः ॥ 'नदी' इति स्वरूपग्रहणम्, न संज्ञायाः; पौर्णमास्याग्रहायण्योः पृथग्ग्रहणात् ॥ ११० ॥

भावबोधिनी

अन् जिसके अन्त में है उस अव्ययीभाव से भी समासान्त टच् प्रत्यय होता है । उदा०—उपराजम् । [ राज्ञः समीपम् ] प्रतिराजम् । [ राज्ञः अभिमुखम् । टच् करने पर अन् का लोप हो जाता है । अव्ययीभाव नपुंसक हो जाता है । ] अध्यात्मम् । प्रत्यात्मम् । [ आत्मनि अधि । आत्मनः अभिमुखम् । यहाँ विभक्त्यर्थ में और आभिमुख्य अर्थ में समास करने पर टच् प्रत्यय होता है । ] ॥ १०८ ॥

'अनः' इसकी अनुवृत्ति होती है । नपुंसकग्रहण उत्तर पद का विशेषण है । अन्नन्त जो नपुंसक तदन्त अव्ययीभाव से विकल्प से समासान्त टच् प्रत्यय होता है । पूर्व सूत्र से नित्य प्राप्त रहते विकल्प से किया जा रहा है । उदा०—प्रतिचर्मम् प्रतिचर्म । उपचर्मम्, उपचर्म [ यहाँ चर्मणः अभिमुखम्, चर्मणः समीपम्—इनमें अव्ययीभाव समास किया जाता है । टच् होने पर टि=अन् का लोप होता है ]॥ १०९ ॥

नदी, पौर्णमासी, आग्रहायणी—इनमें से कोई भी जिसके अन्त में है ऐसे अव्ययीभाव से विकल्प से टच् प्रत्यय होता है । उदा०—नद्याः समीपम्—इस अर्थ में—उपनदम् उपनदि । [ समास के बाद टच् करने पर 'ई' का लोप, नपुंसक लिङ्ग एकवचन है । पक्ष में 'ह्रस्वो नपुंसके प्रातिपदिकस्य' से ह्रस्व होने पर 'उपनदि' यह रूप भी होता है । ] उपपौर्णमासम्, उपपौर्णमासि । [ पूर्ववत् टच् होने पर ईलोप । पक्ष में ह्रस्व । ] उपाग्रहायणम्, उपाग्रहायणि । [ आग्रहायण्याः समीपम्—इस अर्थ में समास, टच् , ईलोप । पक्ष में—ह्रस्व ] ॥ ११० ॥

## २३९१. झयः ॥ १११ ॥ ( ६८२ )

'झयः' इति प्रत्याहारग्रहणम्। झयन्तादव्ययीभावादन्यतरस्यां टच् प्रत्ययो भवति। उपसमिधम्, उपसमित्। उपदृषदम्, उपदृषत् ॥

## २३९२. गिरेश्च सेनकस्य ॥ ११२ ॥ ( ६८३ )

गिरिशब्दान्तादव्ययीभावाट्टच् प्रत्ययो भवति सेनकस्याचार्यस्य मतेन। अन्तर्गिरम्, अन्तर्गिरि। उपगिरम्, उपगिरि।

सेनकग्रहणं पूजार्थम्, विकल्पोऽनुवर्तत एव ॥

### न्यासः

**झयः ॥ १११ ॥**

**गिरेश्च सेनकस्य ॥ अन्तर्गिरमिति।** गिरेरन्तरिति विभक्त्यर्थेऽव्ययीभावः। अन्तः शब्दो हि सप्तम्यर्थवृत्तित्वाद् विभक्त्यर्थे वर्त्तते। विकल्पार्थमेव सेनकग्रहणं कस्मान्न भवति? इत्याह-**विकल्पोऽनुवर्त्तत एवेति।** विकल्पार्थत्वात्। विकल्प्यते वानेन सः। अन्यतरस्यांग्रहणं विकल्प इत्युक्तम्, तदिह 'नपुंसकादन्यतरस्याम्' इत्यतोऽनुवर्त्तते। तस्मात् तेनैव विकल्पस्य सिद्धत्वात् पूजार्थमेव सेनकग्रहणमुक्तम्, न विकल्पार्थम्। ननु च 'विभाषयोर्द्वयोर्मध्ये नित्या विधयो भवन्ति' इति पूर्वस्य विधेर्नित्यतां सम्पादयितुं विकल्पार्थमेव सेनकग्रहणं स्यात्? नैतदस्ति; यदि हि पूर्वो विधिर्नित्यः स्यात्, झयन्तानां शरत्प्रभृतिषु पाठोऽनर्थकः स्यात्; 'झयः' इत्यनेनैव सिद्धत्वात्। तस्मान्न विकल्पार्थं सेनकग्रहणम्, पूजार्थमेव ॥ ११२ ॥

### पदमञ्जरी

**झयः ॥ झय इति प्रत्याहारग्रहणमिति।** झकारयकारयोस्तु ग्रहणं न भवति; तदन्तस्याव्ययीभावस्यासम्भवात्। योगविभागश्चिन्त्यप्रयोजनः ॥ १११ ॥

**गिरेश्च सेनकस्य ॥ अन्तर्गिरमिति।** विभक्त्यर्थेऽव्ययीभावः। **विकल्पोऽनुवर्तत एवेति।** अन्यथा केषाञ्चिज्झयन्तानां शरत्प्रभृतिषु पाठोऽनर्थकः स्यात्; 'झयः' इत्यनेनैव सिद्धत्वात्। एतेनैतन्न चोदनीयम्— 'द्वयोर्विभाषयोर्मध्ये नित्या विधयः' इति पूर्वस्य विधेर्नित्यत्वार्थमिदं सेनकग्रहणं स्यादिति ॥ ११२ ॥

### भावबोधिनी

'झयः' यह प्रत्याहार का ग्रहण है। झय् प्रत्याहार का कोई वर्ण जिसके अन्त में है ऐसे अव्ययीभाव से विकल्प से टच् प्रत्यय होता है। उदा०—उपसमिधम्, उपसमित्। उपदृषदम्, उपदृषत्। [ समिधः समीपम्। दृषदः समीपम्— इन अर्थों में समास, वैकल्पिक टच् होता है। ] ॥ १११ ॥

गिरि-शब्दान्त अव्ययीभाव से टच् प्रत्यय सेनक आचार्य के मत में होता है। उदा०—गिरेः अन्तः—अन्तर्गिरम्, अन्तर्गिरि। [ यहाँ विभक्त्यर्थ में अव्ययीभाव के बाद वैकल्पिक टच् होने से दो रूप बनते हैं। ] उपगिरम्, उपगिरि। गिरेः समीपम्—यह समीप अर्थ में अव्ययीभाव है। ]

सेनक का ग्रहण केवल पूजार्थ है [ उनके प्रति सम्मान प्रकट करने के लिये है ] क्योंकि विकल्प की अनुवृत्ति हो होती है। [ अतः विकल्पसिद्धि को सेनक, ग्रहण का फल नहीं माना जा सकता। ] ॥ ११२ ॥

## २३९३. बहुव्रीहौ सक्थ्यक्ष्णोः स्वाङ्गात्षच् ॥ ११३ ॥ ( ८५२ )

स्वाङ्गवाची यः सक्थिशब्दोऽक्षिशब्दश्च तदन्ताद् बहुव्रीहेः षच् प्रत्ययो भवति समासान्तः। अयमर्थोऽभिप्रेतः। सूत्रे तु दुःश्लिष्टविभक्तीनि पदानि। दीर्घं सक्थि यस्य दीर्घसक्थः। कल्याणाक्षः। लोहिताक्षः। विशालाक्षः।

बहुव्रीहाविति किम् ? परमसक्थिः। परमाक्षिः। सक्थ्यक्ष्णोरिति किम् ? दीर्घजानुः। सुबाहुः। स्वाङ्गादिति किम् ? दीर्घसक्थि शकटम्। स्थूलाक्षिरिक्षुः।

**न्यासः**

बहुव्रीहौ सक्थ्यक्ष्णोः स्वाङ्गात् षच्॥ 'अद्रवं मूर्तिमत्' इत्यादिना पारिभाषिकं यत् स्वाङ्गं तदिह गृह्यते। दुःश्लिष्टविभक्तीनीति। दुःखेन कष्टेन श्लिष्टाः सम्बद्धा विभक्तयो येषु तानि दुःश्लिष्टविभक्तीनि। तथा च—प्रत्ययसम्बन्धेन षष्ठ्या भवितव्यम्, यथा 'तत्पुरुषस्याङ्गुलेः इति सक्थ्यक्षिग्रहणेन चेह तदन्तया बहुव्रीहेर्विशेषयितुमिष्टत्वात्। बहुव्रीहौ यद् विभक्तिवचनं ततोऽपि तेनैव भवितुं युक्तम्। इह तु बहुव्रीहौ सप्तम्येकवचनम्। सक्थ्यक्षिशब्दाभ्यां तु षष्ठीद्विवचनम्, सप्तमीद्विवचनं वा स्वाङ्गग्रहणं सक्थ्यक्ष्णोरिह समानाधिकरणं विशेषणम्, ततश्च सक्थ्यक्षिशब्दाभ्यां या विभक्तिस्तद्विभक्तिकं समानाधिकरणविशेषणमुपपद्यते। एवंविधविभक्तिभिः पदैः कश्चिद् दुःखेन कृच्छ्रेण युक्तो यामाश्रित्य विभक्तिमेवार्थं प्रतिपद्यते। तस्मात् तानि दुःश्लिष्टविभक्तीनि। किमर्थं पुनस्तानि पदानि कृतानि ? वैचित्र्यार्थम्।

**पदमञ्जरी**

बहुव्रीहौ सक्थ्यक्ष्णोः स्वाङ्गात् षच्॥ स्वाङ्गमद्रवादिलक्षणं पारिभाषिकं गृह्यते। दुःश्लिष्टविभक्तीनीति। दुर्=निन्दायाम्। निदिन्तं यथा तथा श्लिष्टाः सम्बद्धाः विभक्तयो येषु तानि तथोक्तानि, तथा हि—बहुव्रीहिशब्दात्पञ्चम्या भवितव्यम्, समासान्तसम्बन्धे षष्ठ्या वा, यथा—'तत्पुरुषस्याङ्गुलेः' इति; इह तु सप्तम्येकवचनं श्रुतम्। 'सक्थ्यक्ष्णोः' इति षष्ठीद्विवचनम्, सप्तमीद्विवचनं वा। न चैवम्भूतेनानेन बहुव्रीहिः शक्यो विशेषयितुम्; भिन्नविभक्तिवचनत्वात्। स्वाङ्गादिति पञ्चमेकवचनम्, तच्च न सक्थ्यक्ष्णोः समानाधिकरणं विशेषणमवकल्पते, तच्चाभिप्रेतम्। तस्माद्विभक्तिव्यत्ययमाश्रित्य विभक्तयः सम्बन्धयितव्या इति 'दुःश्लिष्टविभक्तीनि' इत्युक्तम्।

**भावबोधिनी**

स्वाङ्गवाचक जो सक्थि शब्द और अक्षि शब्द, तदन्त जो बहुव्रीहि उससे समासान्त 'षच्' प्रत्यय होता है। यही अर्थ अभिप्रेत है। परन्तु सूत्र में दुःश्लिष्ट विभक्ति वाले पद हैं। [ 'बहुव्रीहौ' ऐसा सप्तम्यन्त न होकर पञ्चम्यन्त या समान्य सम्बन्ध में षष्ठी होनी चाहिये थी। 'सक्थ्यक्ष्णोः' यह षष्ठी द्विवचन या सप्तमी द्विवचन है। इस प्रकार भिन्न विभक्ति और वचन वालों का सम्बन्ध करना सम्भव नहीं है। अतः विभक्तिव्यत्यय मान कर अभिप्रेत अर्थ करना आवश्यक है। ] उदा०—दीर्घं सक्थि यस्य सः दीर्घसक्थः। [ दीर्घसक्थि + षच् = अ, इलोप ] [ सक्थि = उरू विशाल जिसके हैं वह दीर्घसक्थः। ] कल्याणाक्षः। [ कल्याणे अक्षिणी यस्य सः—कल्याणाक्षि + षच् ] लोहिताक्षः। [ लोहिते अक्षिणी यस्य सः ] विशालाक्षः। [ विशाले अक्षिणी यस्य सः ]।

बहुव्रीहौ—इसके ग्रहण का क्या फल है ? परमसक्थि। परमाक्षि। [ परमं च तत् सक्थि। परमं च तदक्षि—इस कर्मधारय में प्रत्यय नहीं होता है। ]

सक्थि और अक्षि से—इसका क्या फल है ? दीर्घजानुः। सुबाहुः। [ दीर्घे जानुनी यस्य स.। शोभनौ बाहू यस्य सः। यहाँ प्रत्यय नहीं होता है। ]

स्वाङ्गवाचक से—इसका क्या है ? दीर्घसक्थि शकटम्। स्थूलाक्षिः इक्षुः। [ यहाँ अङ्गवाचक सक्थि और अक्षि नहीं है। अतः प्रत्यय नहीं होता है। ]

**टचि प्रकृते षज्ग्रहणं—स्वरार्थम्—चक्रसक्थी स्त्री, दीर्घसक्थी स्त्री। 'सक्थं चाक्रान्तात्' ( ६.२.१९८ ) इति विभाषयोत्तरपदस्यान्तोदात्तता विधीयते। तत्र यस्मिन्पक्षे नास्त्युदात्तत्वं तत्र ङीपि सत्युदात्तनिवृत्तिस्वर स्याभावादनुदात्तः श्रूयेत। ङीषि तु सर्वत्रोदात्तः सिद्धो भवति।**

**बहुव्रीहिग्रहणमा पादपरिसमाप्तेरनुवर्तते॥**

**न्यासः**

**दीर्घसक्थि शकटम्, स्थूलाक्षिरिक्षुरिति।** अत्र सक्थ्यक्षिशब्दो स्वाङ्गं न भवतः। शकटस्य कश्चिदवयवस्तथेक्षोश्च तथाभिधीयते। न तु तत्र 'अद्रवं मूर्त्तिमत्' इत्यादिकं स्वाङ्गलक्षणमस्ति।

ननु च टचापि प्रकृतेन सर्वमेतत् सिध्यति, तत् किमर्थं षजिति प्रत्ययान्तरमुपात्तम्? इत्याह—**टचि प्रकृत इत्यादि। दीर्घसक्थी स्त्री**—टचि ङीबनुदात्तः स्यात्, षचि तु सति 'षिद्गौरादिभ्यश्च' इति ङीषुदात्तः सिद्धो भवति। ननु च ङीप्यनुदात्त उदात्तनिवृत्तिस्वरेणोदात्त एव भवति। अतः स्वरार्थमपि नैव प्रत्ययान्तरमुपादेयम्? इत्याह—**सक्थञ्चाक्रान्तादिति।** 'विभाषोत्पुच्छ' इत्यतो विभाषेत्यनुवर्त्तमाने 'सक्थञ्चक्रान्तात्' इति विकल्पेनोत्तरपदस्यान्तोदात्तत्वं विधीयते। यस्मिन् पक्ष उदात्तं भवति, तत्र ङीपि परतः 'यस्येति च' इत्यकारस्योदात्तस्य लोपे कृते 'अनुदात्तस्य च यत्रोदात्तलोपः' इति ङीप्युदात्तत्वेन भवितव्यम्, अतो नास्ति ङीपि विरोधः। यस्मिन् पक्ष उदात्तं न सम्भवति तस्मिन् ङीपि सत्युदात्तनिवृत्तिस्वरो नास्ति, उदात्तश्चाश्रीयते। ङीषि तु सति सर्वत्रोदात्तः सिद्धो भवति; ङीष्प्रत्ययस्वरेणान्तोदात्तत्वात्॥ ११३॥

**पदमञ्जरी**

**स्थूलाक्षिरिक्षुरिति।** 'अक्ष्णोऽदर्शनात्' इत्यचात्र भवितव्यम्। यदि तु नेष्यते, समासान्तविधिरनित्य इति वक्तव्यम्; तत एव तर्हि षजपि न भविष्यति। तस्मात्स्थूलाक्षा, सूक्ष्माक्षा वेणुयष्टिरिति अजेव टापि प्रत्युदाहर्त्तव्य इत्याहुः। **दीर्घसक्थीति।** दीर्घं सक्थ्यस्याः सा दीर्घसक्थी, अत्र षचि सति ङीषुदात्तो भवति, टचि तु सति ङीबनुदात्तः स्यात्, ननु टचश्चित्करणमन्तोदात्तार्थम्, ततश्च ङीबप्युदात्तनिवृत्तिस्वरेणोदात्त एव भविष्यति? तत्राह—**सक्थं चाक्रान्तादित्यादि। विभाषयेति।** 'विभाषोत्पुच्छ' इत्यतोऽनुवृत्तेः षचश्चित्करणमक्ष्यर्थम्। सक्थ्यपि यदाक्रान्तात्परं तदा नित्यमन्तोदात्तं भवति—चक्रसक्थः, वक्रसक्थ इति गौरसक्थादौ तु नार्थश्चित्करणेन॥११३॥

**भावबोधिनी**

टच् का प्रकरण होने पर षच् यह प्रत्यय करना स्वर के लिये है—चक्रसक्थी स्त्री। दीर्घसक्थी स्त्री। 'सक्थं चाक्रान्तात्' ( पा० सू० ६।२।१९८ ) से विकल्प से उत्तर पद की उदात्तता का विधान किया जाता है। उसमें जिस पक्ष में उदात्तत्व नहीं होता है उस पक्ष में ङीप् होने पर उदात्तनिवृत्तिस्वर न होने से अनुदात्त सुनाई देने लगेगा। ङीष् करने पर सर्वत्र उदात्तत्व सिद्ध होता है।

बहुव्रीहि-ग्रहण इस पाद की परिसमाप्ति तक अनुवृत्त होता है।

**विमर्श**—यहाँ टच् का प्रकरण है फिर षच् प्रत्यय करने का क्या फल है? इसका उत्तर है उदात्त करना। जब टच् किया जाता है तो टित् मानकर "टिड्ढाणञ्" सूत्र से ङीप् होता है और वह अनुदात्त होता है। षच् षित् है अतः 'षिद्गौरादिभ्यश्च' सूत्र से ङीष् होता है वह प्रत्यय स्वर से अन्तोदात्त होता है। यदि यह कहा जाय कि टच् का चित् करना अन्तोदात्तत्व के लिये है, ङीप् कर देने पर भी उदात्तनिवृत्ति स्वर ( "अनुदात्तस्य च यत्रोदात्तलोपः' सूत्र से ) उदात्त ही होगा? इस पूर्वपक्ष का समाधान यह है कि 'सक्थं चाक्रान्तात्' सूत्र से विकल्प से उत्तर पद का उदात्तत्व किया जाता है जिस पक्ष में उदात्त नहीं होता है उसमें टित् मान कर किये गये ङीप् के परे रहते 'यस्येति च' से ( दीर्घसक्थ के ) अकार का लोप कर देने पर 'अनुदात्तस्य च यत्रोदात्तलोपः' सूत्र से ङीप् में उदात्तत्व होता है। परन्तु जब 'सक्थं चाक्रान्तात्' सूत्र से उत्तरपद उदात्त नहीं होता है वहाँ ङीप् परे होने पर भी उदात्त निवृत्तिस्वर नहीं हो पाता है, उदात्त रहता है। यह फलभेद है। ङीष् करने पर तो दोनों पक्षों में उदात्त ही रहता है। इसीलिये षच् प्रत्यय षित् किया गया है।॥ ११३॥

## २३९४. अङ्गुलेर्दारुणि ॥ ११४ ॥ ( ८९३ )

अङ्गुलिशब्दान्ताद्बहुव्रीहेः षच्प्रत्ययो भवति समासान्तो दारुणि समासार्थे। द्व्यङ्गुलं दारु। त्र्यङ्गुलं दारु। पञ्चाङ्गुलम्। अङ्गुलिसदृशावयवं धान्यादीनां विक्षेपणकाष्ठमुच्यते।

यस्य तु द्वे अङ्गुली प्रमाणं दारुणस्तत्र 'तद्धितार्थ०' ( २.१.५१ ) इति समासे कृते 'तत्पुरुषस्याङ्गुलेः' ( ५.४.८६ ) इत्यचा भवितव्यम्।

दारुणीति किम्? पञ्चाङ्गुलिर्हस्तः॥

## २३९५. द्वित्रिभ्यां ष मूर्द्धनः ॥ ११५ ॥ ( ८९४ )

द्वित्रिभ्यां परो यो मूर्द्धन्-शब्दस्तदन्ताद्बहुव्रीहेः षः प्रत्ययो भवति समासान्तः। द्विमूर्द्धः। त्रिमूर्द्धः।

### न्यासः

अङ्गुलेर्दारुणि ॥ द्वे अङ्गुली यस्य तद्। दारुणि समासार्थे मुख्याभिरङ्गुलिभिः सम्बन्धस्तत्र नोपपद्यते। तस्मात् सामर्थ्याद् द्व्यङ्गुलिसदृशेषु दार्ववयवेष्वङ्गुलिशब्दो वर्त्तमानः समास आश्रीयत इति मत्वाऽऽह—**अङ्गुलिसदृशावयवमित्यादि**।

ननु च द्वे अङ्गुली प्रमाणमस्य दारुण इत्यादौ मुख्याभिरङ्गुलिभिः सम्बन्धः, तत्र मुख्याङ्गुलिभिः सम्बन्ध इति मुख्ये सम्भवति, अतो गौणस्य ग्रहणमयुक्तम्? इत्याह—**यस्य त्वित्यादि**। बहुव्रीहिग्रहणानुवृत्तेरिह बहुव्रीहेः प्रत्ययो विधीयते। द्वे अङ्गुली प्रमाणमस्येत्येकार्थविवक्षायां तद्धितार्थे तत्पुरुषः कर्त्तव्यः। तस्मिंस्तु कृते 'तत्पुरुषस्याङ्गुलेः संख्याव्ययादेः' इत्यचाः भवितव्यमेव। यश्च गौणोऽङ्गुलिशब्दः स एव सामर्थ्यादेव योगस्य विषय इत्युक्तं भवति ॥ ११४ ॥

**द्वित्रिभ्यां ष मूर्ध्नः**॥ अथ किमर्थं षः प्रत्ययान्तरं विधीयते, न प्रकृतः षजेव विधीयते? विकल्पेनान्तो-

### पदमञ्जरी

**अङ्गुलेर्दारुणि ॥ अङ्गुलिसदृशावयवमित्यादि**। दारुणि समासार्थे मुख्याभिरङ्गुलीभिः सम्बन्धो नोपपद्यत इति भावः।

ननु च द्वे अङ्गुली प्रमाणमस्य दारुण इत्यत्र सम्भवति? तत्राह—**यस्य त्वित्यादि**। इह च बहुव्रीहेरयं प्रत्ययो विधीयते, त्वदुक्ते चोदाहरणे तद्धितार्थे तत्पुरुषः कर्त्तव्यः, तत्र च 'तत्पुरुषस्याङ्गुलेः' इत्यचा भवितव्यम्। तस्माद् बहुव्रीहौ दारुणि वाच्ये गौण एवाङ्गुलिशब्द इति सुष्ठूक्तमित्यर्थः ॥ ११४ ॥

**द्वित्रिभ्यां ष मूर्ध्नः**॥ अथ किमर्थं षः प्रत्ययान्तरं क्रियते, न प्रकृतः षजनुवर्त्तिष्यते? द्विमूर्द्धः,

### भावबोधिनी

अङ्गुलिशब्दान्त बहुव्रीहि से समासान्त षच् प्रत्यय होता है दारु=काष्ठ यदि समासार्थ हो। उदा०—द्व्यङ्गुलं दारु। त्र्यङ्गुलं दारु। पञ्चाङ्गुलं दारु। [ द्वे अङ्गुली यस्य तत्—इसी प्रकार सभी में बहुव्रीहि करके षच् समासान्त प्रत्यय करना चाहिये। ] धान्य आदि बिखेरने के लिये अङ्गुलियों के सदृश अवयवों वाले काष्ठविशेष को यहाँ कहा जाता है। [ दो अङ्गुलियों वाला, तीन अङ्गुलियों वाला काष्ठ—ये अर्थ है। ]

परन्तु जिस दारु=काष्ठ की दो अंगुलियाँ प्रमाण होती हैं वहाँ तो 'तद्धितार्थोत्तरपदसमाहारे च' सूत्र से समास करने पर 'तत्पुरुषस्याङ्गुलेः' सूत्र से अच् प्रत्यय होता है। [ इसलिये जहाँ गौण अंगुलि शब्द है वहीं प्रस्तुत सूत्र की प्रवृत्ति होती है। ]

दारु अर्थ में—इसका क्या फल है? पञ्चागुलिर्हस्तः। [ यहाँ पाँच अंगुलियों वाला हाथ यह अर्थ है। अतः प्रत्यय नहीं होता है। ] ॥ ११४ ॥

द्वि और त्रि से परे जो मूर्धन् शब्द, तदन्त बहुव्रीहि से समासान्त 'ष' प्रत्यय होता है। उदा०—द्विमूर्धः।

द्वित्रिभ्यामिति किम् ? उच्चैर्मूर्द्धा ॥

२३९६. अप्पूरणीप्रमाण्योः ॥ ११६ ॥ ( ८३२ )

पूरणप्रत्ययान्ताः स्त्रीलिङ्गाः शब्दाः पूरणीग्रहणेन गृह्यन्ते । 'प्रमाणी' इति स्वरूपग्रहणम् । पूरण्यन्ता-

न्यासः

दात्तत्वं यथा स्यात् । 'विभाषोत्पुच्छ' इत्यतो विभाषेत्यनुवर्त्तमाने 'द्वित्रिभ्यां पाद्न्मूर्धसु बहुव्रीहौ' इति नकारान्तस्य मूर्धन्शब्दस्य निर्देशाद् द्वित्रिभ्यामुत्तरो यत्र नकारान्तो मूर्धन्शब्दस्तत्र बहुव्रीहेरन्तोदात्तत्वं पाक्षिकं विधीयते; अन्यथाऽकारान्तमूर्धन्शब्द उत्तरपदोदात्तत्वं विधीयते, कृतसमासान्तमेव निर्दिशेत् । तत्र यदि षच्प्रत्ययो विधीयते, ततः पाक्षिकमन्तोदात्तत्वं बाधित्वा चित्करणसामर्थ्यान्नित्यमन्तोदात्तत्वं स्यात् । विभाषान्तोदात्तवचनस्य तु यत्र समासान्तो नास्ति सोऽवकाशः । अस्मिस्तु प्रत्ययान्तरसमासान्ते कृते विकल्पेनान्तोदात्तत्वं सिध्यति । ननु च नकारान्तनिर्देशान् नकारान्त एव हि मूर्धन्शब्दः, उत्तरपदे विभाषान्तोदात्तेन भवितव्यम्, तत् कथं समासान्ताद् भवेत् ? नैष दोषः; वक्ष्यति—'यत्रापि समासान्तः क्रियते तत्रापि बहुव्रीहिकार्यत्वात् तदेकदेशत्वाच्च समासान्तोदात्तत्वं भवत्येव' इति । अथ किमर्थं बहुव्रीहौ द्वित्रिभ्यामुत्तरो मूर्धन्शब्दो नकारान्तः सम्भवति, यावता नित्यं समासान्तेन भवितव्यम्, न हि सूत्रे विभाषाग्रहणमस्ति ? नैष दोषः; स एव हि नकारान्तनिर्देशो ज्ञापयति — विकल्पेन समासान्तो न भवतीति ॥ ११५ ॥

अप् पूरणीप्रमाण्योः ॥ पूरणप्रत्ययान्त इति । 'तस्य पूरणे डट्' इत्येवमादिना प्रकरणेन ये पूरणार्थे विहितास्ते तत्साहचर्यात् पूरणशब्देनोच्यन्ते । पूरणप्रत्ययोऽन्ते येषां ते पूरणप्रत्ययान्ताः ।

पदमञ्जरी

त्रिमूर्द्ध इत्यत्र 'द्वित्रिभ्यां पाद्न्मूर्द्धसु' इति पाक्षिकमन्तोदात्तत्वं यथा स्यात् । षचि तु सति चित्त्वान्नित्यमन्तोदात्तत्वं स्यात् । 'द्वित्रिभ्यां पाद्न्मूर्द्धसु बहुव्रीहौ' इत्यस्य तु समासान्तविधेरनित्यत्वात्तदभावे द्विमूर्द्धा, 'त्रिमूर्द्धानं सप्तरश्मिं गृणीषे' ( ऋ० १.१४६.१ ) इति, सोऽवकाश स्यात् । षे तु सति यदापि समासान्तः क्रियते, तदापि पक्षेऽन्तोदात्तत्वम्, पक्षे पूर्वपदप्रकृतिस्वरेणाद्युदात्तत्वमिति स्वरद्वयसिद्धिः । अनित्यत्वं च षविधानादेव विज्ञायते । नित्ये हि सति प्रकृते षच्यपि विहिते द्वित्रिभ्यामपि स्वरः प्राप्तविभाषारूपेण चित्स्वरं बाधिष्यते; विषयान्तराभावात् । अनित्यत्वे तु समासान्ताभावपक्षे सावकाशम् 'द्वित्रिभ्याम्' इति स्वरं चित्स्वरो बाधेतेति प्रत्ययान्तरकरणमर्थवद्भवति । एवं च कृत्वा मूर्धस्विति नकारान्तनिर्देश उपपन्नो भवति; अन्यथा 'सक्थं चाक्रान्तात्' इतिवदकारान्तमेव निर्दिशेत् । यदि नकारान्तो निर्दिश्यते, कथं समासान्ते कृते भवति ? नैष दोष,; वक्ष्यति हि तत्र—'यदापि समासान्तः क्रियते तदा बहुव्रीहेः कार्यित्वात्तदेकदेशत्वाच्च समासान्तस्यान्तोदात्तत्वं भवत्येव' इति ॥ ११५ ॥

अप्पूरणीप्रमाण्योः ॥ पूरणप्रत्ययान्त इति । 'तस्य पूरणे डट्' इत्येवमादयः पूरणार्थे ये प्रत्यया विहितास्तदन्ता इत्यर्थः । स्त्रीलिङ्गा इति । 'पूरणी' इति ङीपा निर्देशात् । पूरणीग्रहणेन गृह्यन्ते इति । पूरणार्थसाहचर्यात् ।

भावबोधिनी

त्रिमूर्धः । [ द्वौ मूर्धानौ यस्य सः । त्रयः मूर्धानः यस्य सः—इनमें बहुव्रीहि करने के बाद ष=अ प्रत्यय टिलोप दो मूर्धाओं = खोपड़ियों वाला, तीन खोपड़ियों वाला—ये अर्थ हैं । ]

द्वि और त्रि से परे—इसका क्या फल है ? उच्चैर्मूर्धा । [ यहाँ बहुव्रीहि में भी द्वि, त्रि नहीं है अतः प्रत्यय नहीं होता है । ] ॥ ११५ ।

पूरणार्थक प्रत्यय जिनके अन्त में हैं वे स्त्रीलिङ्ग शब्द पूरणी-ग्रहण से गृहीत होते हैं । प्रमाणी—यह शब्दस्वरूप गृहीत होता है । पूरणी जिसके अन्त में है और प्रमाणी जिसके अन्त में है ऐसे बहुव्रीहि से 'अप्' यह समासान्त प्रत्यय

त्प्रमाण्यन्ताच्च बहुव्रीहेरप् प्रत्ययो भवति समासान्तः। कल्याणी पञ्चमी आसां रात्रीणां ताः कल्याणीपञ्चमा रात्रयः। कल्याणीदशमा रात्रयः। स्त्री प्रमाणी एषां स्त्रीप्रमाणाः कुटुम्बिनः। भार्याप्रधाना इत्यर्थः।

❀ अपि प्रधानपूरणीग्रहणं कर्त्तव्यम् ❀ ( म० भा० ५.४.११६ वा० १ )। यत्रान्यपदार्थे पूरण्यनुप्रविशति न केवलं वर्त्तिपदार्थ एव, तत्र पूरण्याः प्राधान्यम्। पुंवद्भावप्रतिषेधेऽपि प्रधानपूरण्येव गृह्यते। इह न भवति—कल्याणी पञ्चमी अस्मिन्पक्षे कल्याणपञ्चमीकः पक्ष इति ॥

❀ नेतुर्नक्षत्रे उपसंख्यानम् ❀ ( म० भा० वा० २ )। मृगो नेता आसां रात्रीणां मृगनेत्रा रात्रयः। पुष्यनेत्राः। नक्षत्र इति किम्? देवदत्तनेतृकाः ॥

न्यासः

**अपि प्रधानपूरणीग्रहणमिति**। अपि प्रत्यये विधातव्ये प्रधाना या पूरणी तस्या ग्रहणं कर्त्तव्यम्—तत एव प्रयोगो यथा स्यात्, अन्यतो मा भूत्। क्व पुनरस्याः प्राधान्यम्? इत्यत आह—**यत्रेत्यादि**। यत्राभिधेयत्वेनान्यपदार्थेन पूरण्यनुप्रविशति न केवलं वर्त्तिपदार्थस्यैव समासावयवभूतस्य पदार्थः, तत्र पूरण्याः प्राधान्यम्, यथा—कल्याणीपञ्चमा रात्रय इति। अत्र हि न केवलमवयवेन विग्रहः क्रियते, रात्रय एव प्रत्ययेनाख्यायन्ते, सहपञ्चमीकाः। सह पञ्चम्या समुदितोऽन्यपदार्थः, न तु ताभिरारब्धमर्थान्तिरम्। यथा—कल्याणपञ्चमीकः पक्ष इति। न भिन्नावयवः समासार्थः, किं तर्हि? तदर्थारब्धः समुदायः पक्षाख्यः। पूरणी तु समासावयवभूता नाभिधीयत इति, अन्यपदार्थेनानुप्रवेशादप्राधान्यमिह तस्याः। **पुंवद्भावप्रतिषेधेऽपीत्यादि**। न केवलमिहापि, अपि तु 'स्त्रियाः पुंवद्भाषितपुंस्कादनूङ्' इत्यादिना सूत्रेण पुंवद्भावप्रतिषेधेऽपीत्यादि। न केवलमिहाप्यपि तु स्त्रियामिति प्रधानपूरण्येव गृह्यते। **इहत्वित्यादि**। अप्प्रत्ययः पुंवद्भावप्रतिषेधः कल्याणपञ्चमीकः पक्ष इत्यत्र न भवति 'शेषाद्विभाषा' इति कप्।

**नेतुरित्यादि**। उपसंख्यानशब्दस्य प्रतिपादनमर्थः। नक्षत्रे यो नेतृशब्दो वर्त्तते तदन्ताद् बहुव्रीहेरपः

पदमञ्जरी

**अपि प्रधानपूरणीग्रहणमिति**। अपि विधीयमाने प्रधानं या पूरणी सा गृह्यत इति वक्तव्यमित्यर्थः। क्व पुनः पूरण्याः प्राधान्यम्? इत्यत आह—**यत्रेति। न केवलं वर्त्तिपदार्थ एवेति**। समासावयवभूतं पदं वर्त्तिपदम्, तस्यार्थो वर्त्तिपदार्थः। प्रथमान्तं चैतत्, न सप्तम्यन्तम्। पूरणीत्येतदनुषज्यते, न पुनरनुप्रविशतीति। तत्रोदाहरणे उद्भूतावयवभेदस्य समुदायस्य कृतैकशेषेण रात्रिशब्देनाभिधानाद्रात्रिषु पञ्चम्या अन्तर्भावः। **कल्याणपञ्चमीकः पक्ष इति**। 'नद्यृतश्च' इति कप्। अत्र वर्त्तिपदार्थ एव पूरणी, न त्वन्यपदार्थः; तिरोहितावयवभेदस्य पक्षस्यान्यपदार्थत्वात्। यथा—वृक्षशब्दस्यावयव्यभिधेयः, न तु शाखादयोऽवयवाः; अनुमीयमानस्याशब्दार्थत्वादित्यप्राधान्यं पूरण्याः।

**नेतुर्नक्षत्र इति**। नक्षत्रे यो नेतृशब्दस्तदन्ताद् बहुव्रीहेरित्यर्थः। **छन्दसि चेति**। अनक्षत्रार्थमिदम्।

भावबोधिनी

होता है। उदा०—कल्याणपञ्चमी आसां रात्रीणाम्—इस विग्रह में—कल्याणीकारिणी है पाँचवीं रात जिनमें ऐसी रातें। यहाँ पूरण प्रत्ययान्त स्त्रीलिङ्ग पञ्चमी अन्त में है अतः अप् = अ प्रत्यय कल्याणीपञ्चमी + अ, भसंज्ञा, ईलोप ] कल्याणीदशमाः रात्रयः। [ दशवीं रात जिनमें कल्याणकारिणी है ऐसी रातें ] स्त्री प्रमाणी एषां ते स्त्रीप्रमाणाः कुटुम्बिनः। [ जिस परिवार में स्त्री प्रमाण मानी जाती है। ] भार्याप्रधान परिवार यह अथ है।

❀ अप् प्रत्यय के विधान में प्रधान जो पूरणी उसीका ग्रहण करना चाहिए। ❀ जहाँ अन्यपदार्थ में पूरणी का अनुप्रवेश होता है केवल वर्त्ती पदार्थ नहीं हैं, वहाँ पूरणी का प्राधान्य होता है। पुंवद्भाव के प्रतिषेध में भी प्रधानपूरणी का ही ग्रहण होता है। इसलिए यहाँ नहीं होता है— कल्याणी पञ्चमी अस्मिन् पक्षे सः कल्याणपञ्चमीकः पक्षः। [ यहाँ वर्त्ती पदार्थ ही पूरणी है अतः प्रत्यय नहीं होता है। ]

❀ नक्षत्र अर्थ में नेतृ से प्रत्यय कहना चाहिए ❀ उदा०—मृगो नेता आसां रात्रीणां ताः—मृगनेत्राः रात्रयः।

❀ छन्दसि च नेतुरुपसंख्यानम् ❀ ( म० भा० वा० ३ )। 'बृहस्पतिनेत्रा देवाः' (तै० सं० १.८.२०.१)। सोमनेत्राः ( मै० सं० २.६.३ )।

❀ मासाद् भृतिप्रत्ययपूर्वपदाट्ठज्विधिः ❀ ( म० भा० वा० ४ )। पञ्चको मासोऽस्य पञ्चकमासिकः कर्मकरः। दशकमासिकः। 'सोऽस्यांशवस्नभृतयः' (५.१.५६) इति 'संख्याया अतिशदन्तायाः कन्' (५.१.५२)॥

## २३९७. अन्तर्बहिर्भ्यां च लोम्नः ॥ ११७ ॥ ( ८५५ )

अन्तर् बहिस्—इत्येताभ्यां परो यो लोमन्शब्दः तदन्ताद्बहुव्रीहेरप्प्रत्ययो भवति। अन्तर्गतानि लोमान्यस्यान्तर्लोमः प्रावारः। बहिर्लोमः पटः॥

### न्यासः

प्रतिपादनं कर्त्तव्यमित्यर्थः। प्रतिपादनं तूत्तरसूत्रे चकारस्यानुक्तसमुच्चयार्थतामाश्रित्य कर्तव्यम्। देवदत्तनेतृकाः। 'नद्यृतश्च' इति कप्॥

छन्दसीत्यादि। मासादित्यादि। भृत्यर्थे यो विहितः प्रत्ययः स भृतिसाहचर्य्याद् भृतिरित्युच्यते। भृतिः प्रत्ययो यस्य तद्। भृतिप्रत्ययं पूर्वपदं यस्य बहुव्रीहेः सः भृतिपूर्वपदः, तस्मान् मासशब्दाट् ठचो विधिः। चित्करणं बहुव्रीहिस्वरबाधनार्थम्। पञ्चास्य मासस्य भृतयः 'सोऽस्यांशवस्नभृतयः' इति 'संख्याया अतिशदन्तायाः कन्' पञ्चकः, पञ्चको मासोऽस्य पञ्चकमासिकः।

अपः पित्करणं यत्र बहुव्रीहावुत्तरपदान्तोदात्तत्वमारभ्यते तत्र तद्बाधनार्थम्—शोभना पञ्चमी आसां रात्रीणां सुपञ्चमाः, अविद्यमाना पञ्चमी आसां रात्रीणामपञ्चमा इति। अत्र ह्यसति पित्करणे 'नञ्सुभ्याम्' इत्युत्तरपदान्तोदात्तत्वं स्यात्॥ ११६॥ अन्तर्बहिर्भ्यां च लोम्नः॥ ११७॥

### पदमञ्जरी

पञ्चकमासिक इति। पञ्चभृतिरस्य मासस्य पञ्चको मासः, सोऽस्यांशवस्नभृतयः' इति संख्याया कन्, पञ्चको मासोऽस्येति बहुव्रीहो कृते टच्। अपः पित्करणं यत्र बहुव्रीहावन्तोदात्तत्वमारम्यते तदबाधनार्थम्—अपञ्चमाः, सुपञ्चमाः, 'नञ्सुभ्याम्' इत्यन्तोदात्तत्वं न भवति॥ ११६॥ ११७॥

### भावबोधिनी

[ मृगनेतृ + अप्, यण् बहुवचन का रूप है। ] पुष्यनेत्राः रात्रयः। [ पुष्यः नेता आसां रात्रीणां ताः—यहाँ भी समास के बाद प्रत्यय होता है। ]

नक्षत्र अर्थ में—इसका क्या फल है? देवदत्तनेतृकाः। [ देवदत्तः नेता एषाम्—इसमें बहुव्रीहि होने पर भी नक्षत्र न रहने से प्रत्यय नहीं होता है। ]

❀ और वेद में नेतृ से प्रत्यय कहना चाहिए। ❀ उदा०—बृहस्पतिनेत्राः देवाः। सोमनेत्राः देवाः। [ बृहस्पतिः नेता एषाम्, सोमः नेता एषाम्—इनमें समास के बाद अप् प्रत्यय होने से यण् होता है। ]

❀ भृति = वेतनार्थकप्रत्यय जिससे किया गया है ऐसा पद जिसके पूर्व में है उस मास से ठच् प्रत्यय कहना चाहिऐ। ❀ उदा०—पंचकः मासः अस्य सः—पंचकमासिकः कर्मकरः। [ पाँच रूपये भृति = वेतन जिसके महीने भर के हैं उस नौकर को—पंचकमासिकः कहा जाता है। 'पंच अस्य मासस्य भृतयः—इस अर्थ में कन् प्रत्यय करने पर 'पंचक' बना है। ऐसा पूर्वपद है अतः पंचमास + ठच् = ठ = इक—पंचमासिकः। ] दशकमासिकः। इनमें "सोऽस्यांशवस्नभृतयः' के अन्तर्गत 'संख्याया अतिशदन्तायाः कन्" सूत्र से कन् होता है। [ पंचक, दशक, का मास के साथ समास करने पर प्रत्यय होता है। ]॥ ११६॥

अन्तर् और बहिस् से परे जो लोमन् शब्द तदन्त बहुव्रीहि से अप् प्रत्यय होता है। उदा०—अन्तर्गतानि लोमानि अस्य सः—अन्तर्लोमः प्रावारः। बहिर्गतानि लोमानि अस्य सः—बहिर्लोमः पटः। [ इनमें समास, विभक्तिलोप के

## २३९८. अज्नासिकायाः संज्ञायां नसं चास्थूलात् ॥ ११८ ॥ ( ८५६ )

**नासिकान्ताद्बहुव्रीहेरच्प्रत्ययो भवति नासिकाशब्दश्च नसमादेशमापद्यते। 'अस्थूलात्' इति नासिका-विशेषणम्—न चेत्स्थूलशब्दात्परा नासिका भवतीति। 'संज्ञायाम्' इति समुदायोपाधिः। द्रुरिव नासिकाऽस्य द्रुणसः[1]। वाध्रीणसः। 'पूर्वपदात्संज्ञायामगः' ( ८.४.३ ) इति णत्वम्। गोनसः।**

**संज्ञायामिति किम्? तुङ्गनासिकः। अस्थूलादिति किम्? स्थूलनासिको वराहः।**

**❀ खुरखराभ्यां नस् वक्तव्यः ❀ ( म० भा० )। खुरणाः। खरणाः।**

### न्यासः

**अज्नासिकायाः संज्ञायां नसं चास्थूलात्॥ संज्ञायामिति समुदायोपाधिरिति।** एतेन यदि प्रकृतिप्रत्यय-समुदायः कस्यचित् संज्ञा भवत्येवं प्रत्ययो भवति, नान्यथेति दर्शयति। **द्रुणस इति।** 'पूर्वपदात् संज्ञायामगः' इति णत्वम्। वध्र्यां भवा च स्त्री वाध्री, सा नासिका यस्य स **वाध्रीणस** इति। 'वृद्धिनिमित्तस्य च तद्धितस्या-रक्तविकारे' इति पुंवद्भावप्रतिषेधः। गौरिव नासिकास्य **गोनसः**। अचश्चित्करणं बहुव्रीहिस्वरबाधनार्थम्।

**खुरणाः, खरणा इति।** 'अत्वसन्तस्य चाधातोः' इति दीर्घः।

### पदमञ्जरी

**अज्नासिकायाः संज्ञायां नसं चास्थूलात्॥ नसमिति।** द्वितीयानिर्देशो वैचित्र्यार्थः। **द्रुणस इति।** द्रुरिव नासिकास्य, 'पूर्वपदात्संज्ञायामगः' इति णत्वम्। वध्र्यां भवा वाध्री, सा नासिकास्य **वाध्रीणसः,** 'वृद्धिनिमित्तस्य च तद्धितस्य' इति पुंवद्भावप्रतिषेधः। गौरिव नासिकाऽस्य **गोनसः।**

**खुरखराभ्यां नस् वक्तव्य इति।** केवलादेशवचनं प्रत्ययनिवृत्त्यर्थम्। **खुरणाः, खरणा इति।** 'अत्वसन्तस्य च' इति दीर्घः।

### भावबोधिनी

बाद—अन्तर्लोमन् + अप्, टि का लोप। जिस दुपट्टे के रोम बाहर नहीं निकले है अन्दर ही जमे हैं, वह अन्तर्लोमः प्रावारः। जिस वस्त्र के रोम बाहर निकल आए हैं वह—बहिर्लोमः पटः। ] ॥ ११७ ॥

नासिकाशब्दान्त बहुव्रीहि से अच् प्रत्यय होता है और नासिका शब्द नस् आदेश को प्राप्त करता है। 'अस्थूलात्' यह नासिका का विशेषण है—यदि स्थूल शब्द से परे नासिका शब्द न हो तो। संज्ञायाम्' यह पूरे समुदाय की उपाधि = विशेषण है अर्थात् निष्पन्न शब्दसमूह से संज्ञा की प्रतीति होनी चाहिए। उदा०—द्रुः इव नासिका अस्य सः—द्रुणसः। [ बहुव्रीहि समास, विभक्तिलोप, अच् प्रत्यय और नासिका का नस् आदेश करने पर द्रु नस् + अ, णत्व—द्रुणसः। द्रु = वृक्ष के समान ऊँची नाक वाला ]। वाध्रीणसः [ वध्र्यां भवा स्त्री, सा नासिका अस्य—इस अर्थ में प्रत्यय, नस् आदेश, णत्व। वध्री = चर्ममय पात्रविशेष, वह जिसकी नाक हो ऐसा व्यक्ति। ] ''पूर्वपदात् संज्ञायामगः' (पा. सू. ८.४.३) से णत्व होता है। गोनसः। [ गौः इव नासिका अस्य सः–इसमें समास, प्रत्यय नस् आदेश होता है। ]

संज्ञा में—इसका क्या फल है? तुङ्गनासिकः। [ तुङ्गा = उच्चा नासिका अस्य—यह किसी विशेष संज्ञा में नहीं हैं अतः प्रत्यय और आदेश नहीं होते हैं। ]

स्थूल से पर न हो—इसका क्या फल है? स्थूलनासिकः वराहः। [ स्थूला नासिका यस्य सः—यह विग्रह है। स्थूल से परे होने के कारण प्रत्यय और आदेश नहीं होता है। ]

---

१. 'खरणसः' इत्यधिकं पुस्तकान्तरे।

पक्षेऽच्प्रत्ययोऽपीष्यते । खुरणसः । खरणसः ॥
शितिनाः, अहिनाः, अर्चनाः— इति निगम इष्यते ॥

२३९९. उपसर्गाच्च ॥ ११९ ॥ ( ८५८ )

उपसर्गात्परो यो नासिकाशब्दस्तदन्ताद्बहुव्रीहेरच् प्रत्ययो भवति नासिकाशब्दश्च नसमापद्यते। असंज्ञार्थं वचनम् । उन्नता नासिकाऽस्य उन्नसः प्रणसः । 'उपसर्गाद् बहुलम्' ( ८.४.२८ ) इति णत्वम् ।

❀ वेर्ग्रो वक्तव्यः ❀ ( म० भा० ) । विगता नासिकाऽस्य विग्रः ॥

न्यासः

शितिर्नासिकास्य **शितिनाः** । अहिरिव नासिकास्याहिनाः । अर्चेव नासिकास्या **अर्चनाः** । 'ङ्यापोः संज्ञाच्छन्दसोर्बहुलम्' इति ह्रस्वः ॥ ११८ ॥

**उपसर्गाच्च** ॥ उपसर्गग्रहणं प्राद्युपलक्षणार्थम्; नासिकां प्रति क्रियायोगाभावात् ।

**वेर्ग्रो वक्तव्य इति** । विशब्दात् परस्य नासिकाया ग्रशब्द आदेशो भवतीति वक्तव्यम् । **विग्रः** । प्रत्ययोऽजेव ॥ ११९ ॥

पदमञ्जरी

शितिः कृष्णा नासिकास्य **शितिनाः**, अहेरिव नासिकाऽस्य **अहिनाः** । अर्चा=प्रतिमा, तस्या इव नासिकास्य **अर्चनाः**, 'ङ्यापोः संज्ञाछन्दसोः' इति ह्रस्वत्वम् ॥ ११८ ॥

**उपसर्गाच्च** ॥ उपसर्गग्रहणं प्राद्युपलक्षणम्; नासिकां प्रति क्रियायोगाभावात् ।

**वेर्ग्रो वक्तव्य इति** । विशब्दात्परस्य ग्रशब्द आदेशो भवति; प्रत्ययस्त्वजेव[1] ॥ ११९ ॥

भावबोधिनी

❀ खुर और खर से परे नासिका का नस् आदेश होता है। [ प्रत्यय नहीं होता है । ] ❀ उदा०—खुरणाः । खरणाः । [ खुरम् इव नासिका यस्य सः, खर इव नासिका यस्य सः—इनमें समास के बाद 'नस्' आदेश होता है और णत्व करने पर खुरणस्, खरणस् बनाकर 'अत्वसन्तस्य चाधातोः' सूत्र से उपधा का दीर्घ होने पर प्रथमैकवचन में ये रूप हैं । ]

❀ पक्ष में अच् प्रत्यय भी इष्ट है । ❀ उदा०—खुरणसः, खरणसः । [ नासिका का नस् आदेश और अच् प्रत्यय होने पर अकारान्त हो जाता है । ]

❀ शितिनाः, अहिनाः, अर्चनाः— ये शब्द निगम = वेद' में इष्ट हैं । ❀ [ शितिः = कृष्णा नासिका अस्य सः, अहिः इव नासिका अस्य सः । अर्चा = प्रतिमा इव नासिका अस्य सः—इनमें नासिका का नस् होता है । अर्चानस् यहाँ 'ङ्यापोः संज्ञाच्छन्दसोर्बहुलम्' सूत्र से ह्रस्व होकर अर्चनस् बना है । पूर्ववत् दीर्घादि कार्य होते हैं । ]

उपसर्ग से परे जो नासिका शब्द तदन्त बहुव्रीहि से अच् प्रत्यय होता है और नासिका शब्द नस् आदेश प्राप्त करता है । संज्ञा से भिन्न स्थल के लिये यह वचन = सूत्र है । उदा०—उन्नता नासिका अस्य सः—प्रणसः । [ इनमें नस् आदेश, प्रत्यय करने पर ] ''उपसर्गाद् बहुलम्'' सूत्र से णत्व होता है ।

❀ वि उपसर्ग से परे नासिका का 'ग्र' आदेश कहना चाहिये । ❀ विगता नासिका अस्य सः—विग्रः । [ विनासिका = विग्र । प्रत्यय अच् ही होता है । ] ॥ ११९ ॥

---

१. ''यद्यहं नाथ नायास्यं विनसा हतबान्धवा' इति भट्टिप्रयोगे तु विगतया नासिकयोपलक्षितेति व्याख्येयम्'' इति भट्टोजि दीक्षितः । मैत्रेयस्त्वाह—''केचिन्नासिकापर्याये नसाशब्दमिच्छन्ति, तथा च वराहनक्षत्रपुरुषप्रकाशे नसाशब्दः प्रयुक्तः । भट्टिकाव्येऽपि 'विनसा हतबान्धवा' इति दृश्यते । न चासौ 'उपसर्गाच्च' इति नसादेशे सिध्यति; 'वेर्ग्रो वक्तव्यः' इति ग्रादेशेन बाधितत्वात्'' इति ( धातु प्रदीपः ) ।

**२४००. सुप्रातसुश्वसुदिवशारिकुक्षचतुरश्रैणीपदाजपदप्रोष्ठपदाः ॥ १२० ॥ ( ८६० )**

सुप्रातादयो बहुव्रीहिसमासा अच्प्रत्ययान्ता निपात्यन्ते। अन्यदपि च टिलोपादिकं निपातनादेव सिद्धम्। शोभनं प्रातरस्य 'सुप्रातः' ( शौ० १९.८.३ )। शोभनं श्वोऽस्य 'सुश्वः'। शोभनं दिवाऽस्य 'सुदिवः' ( ऋ० १०.३.५ )। शारेरिव कुक्षिरस्य 'शारिकुक्षः'। चतस्रोऽश्रयोऽस्य 'चतुरश्रः'। एण्या इव पादावस्य 'एणीपदः'। अजस्येव पादावस्य 'अजपदः'। प्रोष्ठः=गौः, तस्येव पादावस्य 'प्रोष्ठपदः' (तै० सं० ४.४.१०.७ ) ॥

**२४०१. नञ्दुःसुभ्यो हलिसक्थ्योरन्यतरस्याम् ॥ १२१ ॥ ( ८६१ )**

नञ् दुस्, सु—इत्येतेभ्यः परौ यौ हलिसक्थिशब्दौ तदन्ताद्बहुव्रीहेरन्यतरस्यामच् प्रत्ययो भवति

**न्यासः**

**सुप्रातसुश्वसुदिवशारिकुक्षचतुरश्रैणीपदाजपदप्रोष्ठपदाः ॥ टिलोपादिकमिति।** आदिशब्देन सुशब्दश्च कर्मविशेषणं गृह्यते। **शोभनं प्रातरस्येति।** शोभनमित्येतदिह कर्मणो विशेषणम्। शोभनं प्रातःकाले कर्मास्येत्यर्थः। एवमुत्तरत्रापि शोभनमित्येतत् कर्मणो विशेषणं वेदितव्यम् ॥ १२० ॥

**नञ्दुःसुभ्यो हलिसक्थ्योरन्यतरस्याम् ॥** अकारान्तोऽपि हलशब्दोऽस्ति; तत्र यदा तेन समासः तदा हल

**पदमञ्जरी**

**सुप्रातसुश्वसुदिवशारिकुक्षचतुरश्रैणीपदाजपदप्रोष्ठपदाः ॥ टिलोपादिकमिति। सुप्रातः,** सुश्व इत्यत्र टिलोपः। 'अव्ययानां भमात्रे टिलोपः' ( वा० ८४२ ) इत्येतत्तु नाश्रितम्। आदिपदेन एणीपदाजपदयोः पद्भावः। **शोभनं प्रातरस्येति।** प्रातःशब्दस्याधिकरणप्रधानत्वात्सामानाधिकरण्याभावात्, प्रातस्तनं कर्म प्रातःशब्देन लक्ष्यते, देवदत्तादिश्चान्यपदार्थ इत्याहुः। कथं च 'वरदः करोतु सुप्रातमह्नामयं नायकः' इति? न ह्ययं बहुव्रीहिः, शोभनं प्रातस्तवार्कः करोत्विति ह्यत्रार्थः? उच्यते; शोभनं प्रातस्तनं कर्म यस्य सन्ध्यादेस्तत्ते करोत्विति क्लेशेनास्य निर्वाहः ॥ १२० ॥

**नञ्दुःसुभ्यो हलिसक्थ्योरन्यतरस्याम् ॥** हलिग्रहणमनर्थकम्? कथमहलः, सुहल इति? अकारान्तो

**भावबोधिनी**

सुप्रात आदि ( सुश्व, सुदिव, शारिकुक्ष, चतुरश्र, एणीपद, अजपद, प्रोष्ठपद ) बहुव्रीहि समास वाले शब्द अच् प्रत्ययान्त निपातित होते हैं। और भी जो टिलोपादि कार्य हैं वह भी निपातन से ही सिद्ध हैं। उदा०—शोभनं प्रातः अस्य—इसमें [ बहुव्रीहि समास के बाद अच् प्रत्यय और टि का लोप होने पर ] सुप्रातः। ( जिसका प्रातःकाल अच्छा है। ) सुश्वः [ जिसका कल अच्छा है— ] शोभनं श्वा अस्य सः [ यहाँ भी अच् प्रत्यय, टिलोप। ] सुदिवः। शोभनं दिवा अस्य सः। [ यहाँ भी अच् प्रत्यय टिलोप ]। शारेः इव कुक्षिः अस्य सः—इस अर्थ में शारिकुक्षः। [ मैना के समान कुक्षि वाला ]। चतस्रः अश्रयः यस्य सः—इसमें चतुरश्रः। [ चार अश्रि=कोने हैं जिसके वह—चतुर्—अश्रि+अच्=अ, इलोप—चतुरस्र=चार कोनों वाला ]। एण्या इव पादौ अस्य सः—इसमें एणीपदः। [ एणीपाद+अच् टिलोप, पाद् का पद् आदेश। हिरणी के समान पैरों वाला। ] अजस्य इव पादौ अस्य सः—इसमें अजपदः। [ अजपाद+अच्, टिलोप, पाद् का पद् आदेश। बकरे के समान पैरों वाला। ] प्रोष्ठ=गाय, प्रोष्ठस्य इव पादौ अस्य सः—प्रोष्ठपदः। [ प्रोष्ठपाद+अच्, टिलोप, पाद् का पद् आदेश। गाय के समाम पैरों वाला। ] ॥ १२० ॥

नञ्, दुस् और सु—इनसे परे जो हलि और सक्थि शब्द, तदन्त बहुव्रीहि से समासान्त अच् प्रत्यय विकल्प से होता है। उदा०—अविद्यमानो हलिः अस्य—इस विग्रह में—अहलः, अहलिः। [ जब प्रत्यय होता है तब भसंज्ञा, हो जाने पर अकारान्त रूप रहता है। ] दुर्हलः, दुर्हलिः। [ दुष्टः हलिः अस्य—यह विग्रह है। ] सुहलः, सुहलिः।

**समासान्तः । अविद्यमाना हलिरस्य अहलः, अहलिः । दुर्हलः, दुर्हलिः । सुहलः, सुहलिः । अविद्यमानं सक्थ्यस्य असक्थः, असक्थिः । दुःसक्थः दुःसक्थिः । सुसक्थः, सुसक्थिः ।**

**'हलिशक्त्योः' इति केचित्पठन्ति । अविद्यमाना शक्तिरस्य अशक्तः, अशक्तिः । विरूपा शक्तिरस्य दुःशक्तः, दुःशक्तिः । शोभना शक्तिरस्य सुशक्तः । सुशक्तिः ॥**

**२४०२. नित्यमसिच् प्रजामेधयोः ॥ १२२ ॥ ( ८६२ )**

**'नञ्दुस्सुभ्यः' इत्येव । नञ्, दुस्, सु—इत्येतेभ्यः परौ यौ प्रजामेधाशब्दौ तदन्ताद् बहुव्रीहेर्नित्यमसिच्**

**न्यासः**

इति भविष्यति, यदा त्विकारान्तेन तदा हलिरिति, तदनर्थकं हलग्रहणम् ? नानर्थकम्; भिन्नार्थत्वात् । तेन यो महद्धलं हलिः, तस्मिन् विषये विवक्षिते, अहल इति न सिध्यति, अहल इति यदाकारान्तेन समासः क्रियते, पूर्ववत् प्रकृतिभावेनाद्युदात्तत्वं चेष्यते, 'शेषाद्विभाषा' इति कप् प्रसज्येत । तस्माद् युक्तं हलिग्रहणम् ॥ १२१ ॥

**नित्यमसिच् प्रजामेधयोः ॥ एवं तर्हि नित्यग्रहणेनान्यत्रापि सूच्यत इति । ग्रन्थाधिक्यादर्थाधिक्यं**

**पदमञ्जरी**

हलशब्दोऽस्ति ? नन्वर्थभेदोऽस्ति—महद्धलं हलिरित्युच्यते, हलमात्रं तु हलम् ? नायमर्थभेदः किञ्चित्करः, क्रियमाणेऽपि हलिग्रहणे हलशब्देनापि समासो न दण्डवारितः, ततश्च प्रकरणादिवशेन विशेषोऽवगन्तव्यः; सति चैवमकारान्तेनापि समासे प्रकरणादिनैव महत्वमवगंस्यते ? इह तर्हि—दुर्हल इत्यकारान्तेनापि समासे पूर्वपदप्रकृतिस्वरः प्राप्नोति, समासान्ते तु विहिते चित्स्वरो भवति । अहलः, सुहल इत्यत्र 'नञ्सुभ्याम्' इत्यन्तोदात्तविधानान्नास्ति विशेषः । 'शेषाद्विभाषा' इति च हलिशब्दात्कप् प्रत्ययः प्रसज्येत; तस्माद्धलिग्रहणम् । केचित्तु हलिशक्त्योरिति पठन्ति । अस्थिपर्यायः शक्तिशब्दः ॥ १२१ ॥

**नित्यमसिच् प्रजामेधयोः** ॥ असेवायं न विहितः, सकारस्येत्संज्ञा मा भूदिति ।

**भावबोधिनी**

[ शोमनः हलिः अस्य—यह विग्रह है । ] अविद्यमानं सक्थि अस्य—इस अर्थ में—असक्थः, असक्थिः । [ दुष्टं सक्थि अस्य—इस अर्थ में ] दुःसक्थः, दुःसक्थिः । [ अच् होने पर भसंज्ञा, इलोप होता है । ] सुसक्थः, सुसक्थिः । [ शोमनं सक्थि अस्य—इस विग्रह में सुसक्थः, सुसक्थिः । ]

कुछ लोग, 'हलिशक्त्योः' ऐसा पाठ करते हैं । [ उनके अनुसार ] अविद्यमाना शक्तिः अस्य—इस विग्रह में अशक्तः, अशक्तिः । विरूपा शक्तिः अस्य—इस विग्रह में—दुःशक्तः, दुःशक्तिः । शोमना शक्तिः अस्य सः—सुशक्तः, सुशक्तिः ।

**विमर्श**—हल-यह अकारान्त शब्द मी है इसके साथ समास करने पर प्रत्यय के बिना भी अकारान्त संभव है अतः इस सूत्र में 'हलि' का ग्रहण करके समासान्त अच् प्रत्यय द्वारा अकारान्त बनाने की क्या आवश्यकता ? इसका समाधान यह है कि हल और हलि में अर्थभेद है, महद् हलम्—हलि कहा जाता है । अतः बड़ा हल जिसके पास नहीं है उसे भी 'अहल्' कहा जाय इसके लिये यहाँ ग्रहण है । इसके अतिरिक्त अच् प्रत्यय करने पर चित् मान कर स्वर भी होता है ।

पदमञ्जरीकार शक्ति को अस्थि का पर्याय मानते हैं । अतः जिसके पास शक्ति=अस्थि नहीं है वह—अशक्तः है ॥ १२१ ॥

'नञ्, दुस् और सु से परे' इनकी अनुवृत्ति होती है । नञ्, दुस् और सु—इनसे परे जो प्रजा और मेधा शब्द, वे जिसके अन्त में हैं ऐसे बहुव्रीहि से नित्य असिच् समासान्त प्रत्यय होता है । उदा०—अविद्यमाना प्रजा अस्य—इस

**प्रत्ययो भवति समासान्तः। अविद्यमाना प्रजाऽस्य अप्रजाः। दुष्प्रजाः। सुप्रजाः। अविद्यमाना मेधाऽस्य अमेधाः। दुर्मेधाः। सुमेधाः।**

**नित्यग्रहणं किम्; यावता पूर्वसूत्रेऽन्यतरस्यांग्रहणं नैव स्वर्यते? एवं तर्हि नित्यग्रहणेनान्यत्रापि भवतीति सूच्यते।**

**श्रोत्रियस्येव ते राजन्मन्दकस्याल्पमेधसः।**
**अनुवाकहता बुद्धिर्नैषा तत्त्वार्थदर्शिनी॥**

## २४०३. बहुप्रजाश्छन्दसि॥ १२३॥ ( ३६०५ )

**'बहुप्रजाः' इति छन्दसि निपात्यते। 'बहुप्रजा निर्ऋतिमाविवेश' ( ऋ० १.१६४.३२ )।**
**छन्दसीति किम्? बहुप्रजो ब्राह्मणः॥**

## २४०४. धर्मादनिच् केवलात्॥ १२४॥ ( ८६३ )

**केवलाद् यो धर्मशब्दस्तदन्ताद्बहुव्रीहेरनिच्प्रत्ययो भवति समासान्तः। कल्याणो धर्मोऽस्य कल्याणधर्मा। प्रियधर्मा।**

**न्यासः**

भवतीति कृत्वा। असिचश्चित्करणम् दुष्प्रजाः, दुर्मेधा इत्यन्तोदात्तत्वं यथा स्यात्। अप्रजाः, सुप्रजा इत्यादौ तु नार्थश्चित्करणेन; 'नञ्सुभ्याम्' इत्यनेनैवोत्तरपदान्तोदात्तत्वस्य सिद्धत्वात्॥ १२२॥

**बहुप्रजाश्छन्दसि॥ १२३॥**

**धर्मादनिच् केवलात्॥ असमस्त इति।** असमासः क्रियत इत्यर्थः। **परमस्वधर्म इति।** स्वश्चासौ

**पदमञ्जरी**

**एवं तर्हीत्यादि।** भाष्ये एतन्नाश्रितम्। चित्करणम्—दुःप्रजाः, दुर्मेधा इत्यत्रान्तोदात्तार्थम्। अन्यत्र 'नञ्सुभ्याम्' इत्येव सिद्धम्॥ १२२॥ १२३॥

**धर्मादनिच् केवलात्॥ परमः स्वो धर्मोऽस्य परमस्वधर्म इति।** 'सर्वनामसंख्ययोरुपसंख्यानम्'

**भावबोधिनी**

विग्रह में—अप्रजाः। [ अविद्यमाना—इस अर्थ में नञ् के साथ प्रजा का समास करने पर अप्रजा+असिच्=अस्, अलोप, अप्रज्+अस्, 'अत्वसन्तस्य चाधातोः' सूत्र से दीर्घ करने पर—'अप्रजाः' यह बनता है। ] दुष्प्रजाः। [ दुष्टा प्रजा अस्य सः। ] सुप्रजाः। [ शोभना प्रजा अस्य सः। ] अविद्यमाना मेधा अस्य सः—इसमें अमेधाः। [ अमेधा+असिच्=अस्, पूर्ववत् दीर्घादि करने पर रूप बनता है। ] दुर्मेधाः। सुमेधाः। [ दुष्टा मेधा यस्य सः, शोभना मेधा यस्य सः—ये विग्रह हैं। ]

'नित्य' इसका ग्रहण किस लिये है क्योंकि पूर्ववर्ती सूत्र में 'अन्यतरस्याम्' का ग्रहण है, उसका स्वरितत्व नहीं है [ अतः अनुवृत्ति नहीं होती है ]? यदि ऐसी बात है तो 'नित्य' के ग्रहण से यह प्रत्यय अन्यत्र भी होता है—ऐसा सूचित होता है। उदा०—

हे राजन्! मन्द अल्प मेधा वाले श्रोत्रिय के समान तुम्हारी बुद्धि अनुवाक से हत है अतः तत्त्व अर्थ देखने में समर्थ नहीं है। [ यहाँ 'अल्पा मेधा यस्य सः'—यहाँ भी असिच् प्रत्यय होता है। ]॥ १२२॥

'वेद में' 'बहुप्रजाः' यह निपातित होता है। उदा०—''बहुप्रजाः निर्ऋतिमाविवेश।'' [ बह्वी प्रजा अस्य सः—इसमें असिच् होकर रूप बना है। ]

वेद में होता है—इसका क्या फल है? 'बहुप्रजो ब्राह्मणः।' [ यहाँ असिच् न होकर ह्रस्व हुआ है। ]॥१२३॥

केवल जो धर्म शब्द, वह जिसके अन्त में है ऐसे बहुव्रीहि से अनिच् यह समासान्त प्रत्यय होता है। उदा०—

केवलादिति किम्? परमः स्वो धर्मोऽस्य परमस्वधर्मः। यद्येवम्, त्रिपदे बहुव्रीहौ प्राप्नोति—परमः स्वो धर्मोऽस्येति? एवं तर्हि केवलादिति पूर्वपदं निर्दिश्यते—केवलात्पदाद्यो धर्मशब्दः, न पदसमुदायात्। तदन्ताद्बहुव्रीहेः प्रत्ययः॥

## २४०९. जम्भा सुहरिततृणसोमेभ्यः॥ १२५॥ ( ८६४ )

बहुव्रीहौ समासे स्वादिभ्यः परं 'जम्भा' इति कृतसमासान्तमुत्तरपदं निपात्यते। जम्भशब्दोऽभ्यवहार्य-वाची, दन्तविशेषवाची च। शोभनो जम्भोऽस्य सुजम्भा देवदत्तः। शोभनाभ्यवहार्यः, शोभनदन्तो वा।

### न्यासः

धर्मश्चेति स्वधर्मः, परमश्चासौ स्वधर्मश्चेति परमस्वधर्मः। यद्येवमित्यादि। यदि केवलग्रहणेन धर्मो विशेष्यते परमस्वधर्मश्चेति न, परमस्वधर्मेति स्यात्। केवलात् पूर्वपदादिति। धर्मस्य असहायात् पूर्वपदादित्यर्थः। न पदसमुदायादिति। परमो धर्म इति प्रकृतेन सम्बन्धः। अत्र व्याख्याने त्रिपदे बहुव्रीहौ त भवति प्रसङ्गः; पदसमुदायाद्धि परमो धर्मशब्दो न केवलात् पूर्वपदात्। अनिचश्चित्करणं पूर्वपदप्रकृतिस्वरं बाधित्वाऽन्तोदात्तत्वमेव यथा स्यात्॥ १२४॥

जम्भा सुहरिततृणसोमेभ्यः॥ जम्भवचनेन तृणमिव जम्भोऽस्य, सोम इव जम्भोऽस्येति विग्रहीतव्यमिति। ननु तृणं जम्भोऽस्य, सोमो जम्भोऽस्येत्येवं विग्रहीतव्यम्, न हि तृणं जम्भः, न च सोमः। अभ्यवहार्यवचने

### पदमञ्जरी

( कात्या० वा० १४१९ ) इति स्वशब्दस्य पूर्वनिपातो न भवति; प्राप्तस्य चाबाधा व्याख्येयेति, आहिताग्न्यादेराकृतिगणत्वाद्वा॥ १२४॥

जम्भा सुहरिततृणसोमेभ्यः॥ दन्तवचनो वेति। 'इममम्भसुतं पिब' इति दर्शनात्॥ १२५॥

### भावबोधिनी

कल्याणः धर्मः अस्य सः—इस अर्थ में कल्याणधर्मा। प्रियधर्मा। [ कल्याणधर्म + अनिच् = अन् मकार के अकार का लोप—कल्याणधर्मन् + सु, 'सर्वनामस्थाने चासम्बुद्धौ'' ( पा० सू० ६।४।८ ) से उपधादीर्घादि करने पर रूप बनता है। ]

केवल = एक पूर्वपद से ही परे हो—इसका क्या फल है? परमः स्वः धर्मः अस्य सः—'परमस्वधर्मः।' [ यहाँ अनिच् नहीं होता है। ] यदि ऐसा है तब तो त्रिपद बहुव्रीहि में भी प्राप्त होता है—परमः स्वः धर्मः अस्य? यदि ऐसा है तो केवल' से पूर्वपद का निर्देश माना जायगा—केवल = पूर्वपद से परे जो धर्म शब्द, पदसमुदाय से परे जो धर्म शब्द नहीं है उसी से बहुव्रीहि से प्रत्यय होता है।

विमर्श—काशिकाकार एक पूर्वपद रहने पर ही अनिच् मानते हैं परन्तु सिद्धान्तकौमुदीकार कुछ भिन्न मानते हैं। उनके अनुसार यदि कर्मधारय पहले कर लिया जाय तो उक्त उदाहरण में भी अनिच् होता ही है—

''केवलात् किम्? परमः स्वो धर्मो यस्येति त्रिपदे बहुव्रीहौ मा भूत्। स्वशब्दो हीह न केवलं पूर्वपदम्, किन्तु मध्यमत्वादापेक्षिकम्। 'सन्दिग्धसाध्यधर्मा' इत्यादौ तु कर्मधारयपूर्वपदो बहुव्रीहिः। एवञ्च 'परमस्वधर्मा' इत्यपि साध्वेव, निवृत्तिधर्मा अनुच्छित्तिधर्मा इत्यादिवत्। पूर्वपदं तु बहुव्रीहिणा आक्षिप्यते। ''( सि० कौ० ) इसलिए दोनों के मत में अलग-२ रूप होते है॥ १२४॥

बहुव्रीहि समास में सु आदि ( हरित, तृण, सोम )—से परे 'जम्भा' यह कृतसमासान्त ( = जम्भा से अनिच् यह समासान्त प्रत्यय करके ) निपातित किया जाता है। जम्भा शब्द अभ्यवहार्य = भक्ष्य का वाचक और दन्तविशेष का वाचक है। उदा०—शोभनो जम्भा अस्य सः—इसमें सुजम्भा देवदत्तः। अच्छे दाँतों वाला देवदत्त ] सुन्दर भक्ष्यवाला देवदत्तः—ये दोनों अर्थ हैं। इसी प्रकार—हरितजम्भा। [ हरे दाँतों वाला ] तृणजम्भा। [ तृण भोज्य वाला ]

एवं हरितजम्भा। तृणजम्भा। सोमजम्भा। दन्तवचने—तृणमिव जम्भोऽस्य, सोम इव जम्भोऽस्येति विग्रहीतव्यम्।

सुहरिततृणसोमेभ्य इति किम्? पतितजम्भः ॥

## २४०६. दक्षिणेर्मा लुब्धयोगे ॥ १२६ ॥ ( ८६५ )

'दक्षिणेर्मा' इति कृतसमासान्तो निपात्यते बहुव्रीहौ समासे लुब्धयोगे। लुब्धः=व्याधः। दक्षिणमीर्ममस्य दक्षिणेर्मा मृगः। ईर्मम्=व्रणमुच्यते। दक्षिणमङ्गं व्रणितमस्य व्याधेनेत्यर्थः।

लुब्धयोग इति किम्? दक्षिणेर्मं शकटम् ॥

## २४०७. इच् कर्मव्यतिहारे ॥ १२७ ॥ ( ८६६ )

कर्मव्यतिहारे यो बहुव्रीहिस्तस्मादिच् प्रत्ययो भवति। 'तत्र तेनेदमिति सरूपे' ( २.२.२७ ) इत्ययं

### न्यासः

तु—तृणं जम्भोऽस्य, सोमो जम्भोऽस्येत्येवमेव विग्रहः कार्यः; तृणसोमयोरभ्यवहार्यत्वात् ॥ १२५ ॥

दक्षिणेर्मा लुब्धयोगे ॥ १२६ ॥

इच् कर्मव्यतीहारे ॥ 'तत्र तेनेदमिति सरूपे' इत्यय बहुव्रीहिर्गृह्यत इति। अस्यैव कर्मव्यतिहारे वृत्तेः। केशाकेशि। 'अन्येषामपि दृश्यते' इति दीर्घः। तिष्ठद्गुप्रभृतिष्विच्प्रत्ययस्य पाठादव्ययीभावसंज्ञा, अव्ययीभावश्च समासोऽव्ययसंज्ञो भवतीति। तेन सुब्लुग्भवतीति भावः।

### पदमञ्जरी

दक्षिणेर्मा लुब्धयोगे ॥ लुब्धो व्याध इति। कवयस्तु हिंसामात्रे प्रयुञ्जते—'बाली हेमाब्जमाली गुणनिधिरिषुणा निर्मितो दक्षिणेर्मा' (?) इति यथा। व्रणितमिति। व्रणशब्दादितच्। 'व्रण गात्रविचूर्णने' ( धा० पा० १९३७ ) इत्यस्माद्वा चौरादिकणिजन्तात्क्तः ॥ १२६ ॥

इच् कर्मव्यतिहारे ॥ अयं बहुव्रीहिर्गृह्यत इति। अस्यैव कर्मव्यतिहारे वृत्तेः। उदाहरणेषु 'अन्येषामपि दृश्यते' इति पूर्वपदस्य दीर्घत्वम्। तिष्ठद्गुप्रभृतिष्वयमिच् पठ्यते इति। तेनाव्ययीभावसंज्ञकत्वादव्ययत्वे सति सुब्लुग्भवतीति भावः। यद्येवम्, अव्ययीभावसंज्ञया बहुव्रीहिसंज्ञाया बाधनात्समासस्वरेणैवान्तोदात्तत्वं सिद्धिमिति

### भावबोधिनी

सोमजम्भा। [ सोम भोज्य वाला। ] दन्त अर्थ में—तृण के समान जम्भ=दाँत हैं जिसके। सोम=चन्द्रमा के समान चमकीले दाँत हैं जिसके—ऐसे विग्रह करने चाहिए!

सु, हरित, तृण और सोम से परे—इसका क्या फल है? पतितजम्भः। [ इसमें नहीं होता है। समास के वाद ह्रस्व होता है ] ॥ १२५ ॥

'दक्षिणेर्मा' यह शब्द बहुव्रीहि समास में कृतसमासान्त प्रत्यय निपातित होता है लुब्ध के योग में। लुब्ध=व्याध=शिकारी। उदा०—दक्षिणम्, ईर्मम् अस्य सः—दक्षिणेर्मा मृगः। ईर्म=घाव को कहते हैं। व्याध ने इसका दाहिना अंग घायल कर दिया—यह अर्थ है। [ दक्षिणम् ईर्मम् अस्य—इसमें समास के बाद अनिच् प्रत्यय होता है। ]

लुब्ध=शिकारी के योग में—इसका क्या फल है? दक्षिणेर्मम् शकटम्। [ यहाँ नहीं होता है। ] ॥ १२६ ॥

कर्मव्यतिहार अर्थ में जो बहुव्रीहि उससे इच् प्रत्यय होता है। यहाँ "तत्र तेनेदमिति सरूपे" (पा. सू. २।२।२७) से होने वाला बहुव्रीहि लिया जाता है। उदा०—केशेषु केशेषु गृहीत्वा इदं युद्धं प्रवृत्तम्—इस अर्थ में केशाकेशि। कचाकचि [ कचेषु कचेषु गृहीत्वा इदं युद्धं प्रवृत्तम्-विग्रह में बहुव्रीहि समास, विभक्तिलोप करने के बाद "अन्येषामपि दृश्यते"। ( पा. सू. ६।३।१३५ ) से अकार का दीर्घ और प्रस्तुत सूत्र से इच् प्रत्यय करने पर केशाकेश+इ, अलोप।

बहुव्रीहिर्गृह्यते। केशेषु केशेषु गृहीत्वा इदं युद्धं प्रवृत्तं केशाकेशि। कचाकचि। मुसलैश्च मुसलैश्च प्रहृत्य इदं युद्धं प्रवृत्तं मुसलामुसलि। दण्डादण्डि। 'तिष्ठद्गुप्रभृतिषु' ( २.१.१७ ) अयमिच्प्रत्ययः पठ्यते ॥

२४०८. द्विदण्ड्यादिभ्यश्च ॥ १२८ ॥ ( ८६७ )

**द्विदण्ड्यादयः शब्दा इच्प्रत्ययान्ताः साधवो भवन्ति। 'द्विदण्ड्यादिभ्यः' इति तादर्थ्ये एषा चतुर्थी, न पञ्चमी। द्विदण्ड्याद्यर्थमिच् प्रत्ययो भवति। तथा भवति यथा द्विदण्ड्यादयः सिध्यन्तीत्यर्थः। समुदाय-निपातनाच्चार्थविशेषेऽवरुध्यन्ते। द्विदण्डि प्रहरति। द्विमुसलि प्रहरति। इह न भवति—द्विदण्डा शालेति।**

**बहुव्रीह्यधिकारेऽपि तत्पुरुषात् क्वचिद्विधानमिच्छन्ति। निकुच्य कर्णौ धावति। प्रोह्य पादौ हस्तिनं वाहयति प्रोह्यपादि हस्तिनं वाहयति। मयूरव्यंसकादित्वात्समासः।**

**न्यासः**

इचश्चित्करणं विशेषणार्थम्। यदि ह्यत्र चकारो न क्रियते, तदा तिष्ठद्गुप्रभृतिष्वपीकारमात्रं पठ्येत, तदेकारमात्रस्यापि ग्रहणं स्यात् ॥ १२७ ॥

**द्विदण्ड्यादिभ्यश्च ॥ द्विदण्ड्यादिभ्य इति तादर्थ्य एषा चतुर्थीत्यादि।** द्विदण्ड्यादयो हि प्रातिपदिकेष्विच्-प्रत्ययान्ता एव पठ्यन्त इति तेभ्यः पुनरिज्विधातुं न शक्यते, विधीयमानोऽपि निष्प्रयोजनं स्यात्, तस्मान्नेयं पञ्चमी, किं तर्हि? तादर्थ्ये चतुर्थी। द्विदण्ड्याद्यर्थमिच् प्रत्ययो भवतीत्यनेन तादर्थ्यं दर्शयति। अस्यैवार्थं विस्पष्टी-कर्तुमाह—**तत्तथा भवतीत्यादि**। एवं ब्रुवाणेन 'द्विदण्ड्यादिभ्यः प्रत्ययो भवति, न द्विदण्डादिभ्यः' इत्युक्तम्। एवं ते सिध्यन्ति; नान्यथा। अथ किमर्थं समुदायानां निपातनशुद्धा एव प्रकृतीः प्रातिपदिकेषु पठित्वा ततः प्रत्ययो विधीयते? इत्यत आह—**समुदायनिपातनाच्चेत्यादि**। प्रातिपदिकेषु प्रकृतीः पठित्वा ताभ्यः प्रत्ययमात्रं

**पदमञ्जरी**

नार्थश्चित्करणेन? विशेषणार्थं तु। असति हि तस्मिंस्तिष्ठद्गुप्रभृतिष्विकारमात्रं पठ्येत, ततश्च 'अच इः' ( द० उ० १.६७ ) इत्यस्यापि ग्रहणं स्यात् ॥ १२७ ॥

**द्विदण्ड्यादिभ्यश्च** ॥ यदि 'द्विदण्ड्यादयः साधवो भवन्ति'—इत्ययमर्थोऽभिप्रेतः 'द्विदण्ड्यादिभ्यः' इति सूत्रपदस्य कथं निर्वाहः? अतः आह—**द्विदण्ड्यादिभ्य इति। तादर्थ्य एषा चतुर्थीत्यादि। समुदायनिपातनाच्चेति।** समुदाया यत्र प्रसिद्धास्तत्रैव तेषामवरोधः=अवस्थापनं यथा स्यादित्येवमर्थं समुदायनिपातनमित्यर्थः। **द्विदण्डि प्रहरतीति।** द्वौ दण्डावस्मिन्प्रहरणे इति विग्रहः। **इह न भवतीति।** किं न भवति? द्विदण्डीत्येतच्छब्दरूपं साधु न भवतीत्यर्थः।

**भावबोधिनी**

"तिष्ठद्गुप्रभृतीनि च" सूत्र से अव्ययीभाव संज्ञा और अव्यय मानकर सुप् प्रत्यय का लुक् होने से एक ही रूप रहता है। ] मुसलैश्च मुसलैश्च प्रहृत्य इदं युद्धं प्रवृत्तम्—इसमें मुसलामुसलि। दण्डादण्डि। [ दण्डैश्च दण्डैश्च प्रहृत्य इदं युद्धं प्रवृत्तम्—यहाँ भी पूर्ववत् समासादि के बाद इच् प्रत्यय होता है। ] यह इच् प्रत्यय तिष्ठद्गुप्रभृति में पढ़ा जाता है। [ अतः अव्ययीभाव और अव्यय होने से विभक्ति का लुक् होता है। ] ॥ १२७ ॥

द्विदण्डि—आदि शब्द इच्प्रत्ययान्त साधु होते हैं। 'द्विदण्ड्यादिभ्यः' यहाँ तादर्थ्य में चतुर्थी है, पञ्चमी नहीं है। द्विदण्डि आदि के लिए इच् प्रत्यय होता है। उस प्रकार होता है जिस प्रकार द्विदण्डि आदि सिद्ध होते हैं। समुदाय का निपातन होने से अर्थविशेष में अवरोध=परिसीमन होता है। उदा०—द्विदण्डि प्रहरति। [ द्वौ दण्डौ अस्मिन् प्रहरणे—यह विग्रह है। समास के बाद इच् प्रत्यय होता है। ] द्विमुसलि प्रहरति। [ द्वौ मुसलौ अस्मिन् प्रहरणे।

द्विदण्डि । द्विमुसलि । उभाञ्जलि । उभयाञ्जलि । उभाकर्णि । उभयाकर्णि । उभादन्ति । उभयादन्ति । उभाहस्ति । उभयाहस्ति । उभापाणि । उभयापाणि । उभाबाहु । उभयाबाहु । एकपदि । प्रोह्यपदि । आढ्यपदि । सपदि । निकुच्यकर्णि । संहतपुच्छि । उभाबाहु उभयाबाह्विति निपातनादिच्प्रत्ययलोपः । प्रत्ययलक्षणेनाव्ययीभावसंज्ञा । द्विदण्ड्यादिः ॥

## २४०९. प्रसम्भ्यां जानुनोर्ज्ञुः ॥ १२९ ॥ ( ८६८ )

प्र, सम्—इत्येताभ्यामुत्तरस्य जानुशब्दस्य ज्ञुरादेशो भवति समासान्तो बहुव्रीहौ । प्रकृष्टे जानुनी अस्य प्रज्ञुः । संज्ञुः ॥

**न्यासः**

विधीयते, ततो नियमः स्यात्—समुदायनिपातनाद् यत्रार्थे विशेषे ते प्रसिद्धास्तत्रैव विशेष्यन्ते । तत्रैव भवन्तीत्यर्थः । द्विदण्डि प्रहरतीति । द्वौ दण्डौ यस्मिन् प्रहरणे । इह न भवतीति । द्विदण्डीत्येतच्छब्दरूपमत्रार्थे साधुर्न भवतीत्यर्थः । बहुव्रीह्यधिकारेऽपीत्यादि । अत्रापि समुदायनिपातनमित्ययमेव हेतुः । असति हि समुदायनिपातने बहुव्रीह्यधिकारात् तत्पुरुषान्न क्वचित् प्रत्ययविधानं स्यात् । समुदायनिपातनात् तु क्वचित् तत्पुरुषादपि भवति । यदा प्रत्ययस्य लोपो भवत्यव्ययीभावसंज्ञा, तदा न प्राप्नोतीत्यत आह—प्रत्ययलक्षणेनेत्यादि ॥ १२८ ॥

प्रसंभ्यां जानुनोर्ज्ञुः ॥ जानुशब्दस्यादेशो भवतीति । कथं पुनर्ज्ञायते—आदेशोऽयम्, न प्रत्यय इति ?

**पदमञ्जरी**

बहुव्रीह्यधिकारेऽपीति । अत्रापि 'समुदायनिपातनाच्च' इत्ययमेव हेतुः । ननु प्रातिपदिकेष्विच्प्रत्ययान्तपाठादेव सिद्धं द्विदण्ड्यादीनां साधुत्वम्, तत्किमनेन ? तन्न; न हि पाठमात्रेणेजन्तत्वं शक्यमवगन्तुम्; ततश्चाव्ययीभावसंज्ञा न स्यात् । अनार्षश्च पाठः शङ्क्येत; क्वचिदप्यनुपयोगात् ॥ १२८ ॥

प्रसम्भ्यां जानुनोर्ज्ञुः ॥ [1]ज्ञुरित्ययमादेश इति । प्रत्ययस्त्वयं न भवति; षष्ठीद्विवचनेन निर्देशात् । इह हि जानुशब्दस्यैकत्वेऽपि अर्थगतं द्वित्वम्, उपपदनिबन्धनं वा द्वित्वमाश्रित्य जानुनोरिति निर्देश एतदर्थः

**भावबोधिनी**

दो डंडे लेकर मारता है । दो मूसल लेकर मारता है । ] यहाँ नहीं होता है—द्विदण्डा शाला । [ इस बहुव्रीहि में द्विदण्डि—यह शब्द रूप शुद्ध नहीं होता है । ]

बहुव्रीहि के अधिकार में भी तत्पुरुष से इस प्रत्यय का विधान कहीं-कहीं चाहते हैं । उदा०—निकुच्य कर्णौ धावति—इस अर्थ में 'निकुच्यकर्णि' धावति । [ निकुच्यकर्ण + इच् ] प्रोह्य पादौ हस्तिनं वाहयति । इन उदाहरणों में 'मयूरव्यंसकादयश्च' सूत्र से समास होता है ।

इस गण के उदा०—द्विदण्डि । द्विमुसलि । उभाञ्जलि । उभयाञ्जलि । उभाकर्णि । उभयाकर्णि । उभादन्ति । उभयादन्ति । उभाहस्ति । उभयाहस्ति । उभापाणि । उभयापाणि । उभाबाहु । उभयाबाहु । एकपदि । प्रोह्यपदि । आढ्यपदि । सपदि । निकुच्यकर्णि । संहतपुच्छि । उभाबाहु और उभयाबाहु—इनमें इच् प्रत्यय का लोप निपातन से होता है । प्रत्यय लोप होने पर भी प्रत्ययलक्षण मान कर अव्ययीभाव संज्ञा होती है । ये द्विदण्ड्यादि हैं ॥ १२८ ॥

प्र और सम्—इनसे परे 'जानु' का 'ज्ञु' आदेश बहुव्रीहि में समासान्त होता है । उदा०—प्रकृष्टे जानुनी यस्य

---

१. 'ज्ञुरादेशः' इति काशिकापाठः ।

## २४१०. ऊर्ध्वाद्विभाषा ॥ १३० ॥ ( ८६९ )

**ऊर्ध्वशब्दादुत्तरस्य जानुशब्दस्य विभाषा 'ज्ञुः' इत्ययमादेशो भवति। ऊर्ध्वे जानुनी अस्य ऊर्ध्वजानुः। ऊर्ध्वज्ञुः ॥**

## २४११. ऊधसोऽनङ् ॥ १३१ ॥ ( ४८३ )

**ऊधःशब्दान्तस्य बहुव्रीहेरनङादेशो भवति समासान्तः। कुण्डमिव ऊधोऽस्याः सा कुण्डोघ्नी। घटोघ्नी।**

**❀ ऊधसोऽनङि स्त्रीग्रहणं कर्तव्यम् ❀ ( म० भा० ५.४.१३१ वा० १ )। इह मा भूत्—महोधाः पर्जन्यः। घटोधो धेनुकम् ॥**

**न्यासः**

यदि प्रत्ययः स्यात्, 'जानुनः' इत्येकवचनेनैव निर्देशं कुर्यात्; षष्ठीद्विवचनेनैव निर्देशः कृतः। तस्मादादेशोऽयं न प्रत्यय इति विज्ञायते। षष्ठीद्विवचनेन निर्देशोऽसन्देहार्थः कृतः—स्थानषष्ठीत्वमसन्दिग्धं यथा विज्ञायेतेति। जानुन इत्युच्यमाने सन्देहः स्यात्—किमियं षष्ठी, उत पञ्चमीति ॥ १२९ ॥

**ऊर्ध्वाद्विभाषा** ॥ १३० ॥

**ऊधसोऽनङ्** ॥ **अनङादेशोऽयं भवतीति**। कथं पुनर्विज्ञायते—आदेशोऽयं न प्रत्यय इति ? यद्येष प्रत्ययः स्यात् ङित्करणमनर्थकं स्यात्। आदेशे ह्यस्मिन्नन्त्यादेशार्थं ङित्त्वमर्थवद् भवति। तस्माद् ङित्त्वादेवायमादेशो भवतीति विज्ञायते। **कुण्डोघ्नीति**। अनङि कृते 'अतो गुणे' पररूपत्वम्, 'बहुव्रीहेरूधसो ङीष्' इति ङीष्, 'अल्लोपोऽनः'।

**स्त्रीग्रहणं कर्त्तव्यमिति**। स्त्री गृह्यते येनाभिधेयनित्यत्वेन ततः स्त्रीग्रहणं कर्त्तव्यम्। एतदुक्तं भवति—तथा व्याख्यानं कर्त्तव्यं यथा स्त्रियामभिधेयायामनङ् भवतीति। तत्रेदं व्याख्यानम्—'ऊर्ध्वाद् विभाषा' इत्ययो विभाषाग्रहणमनुवर्त्तते, सा च व्यवस्थितविभाषा, तेन स्त्रियामेव भवति, नान्यत्रेति।

अनङोऽकारादित्वमुत्तरार्थम्। इह विनापि तेन सिध्यत्येव ॥ १३१ ॥

**पदमञ्जरी**

क्रियते—स्थानषष्ठीत्वमसन्दिग्धं कथं विज्ञायेतेति। छन्दसि तु स्वतन्त्रोऽपि ज्ञुशब्दो दृश्यते—'उपज्ञुबाधो नभसा' ( ऋ० ६.१.६ ), 'सदेम वत्सज्ञुं पशुकामस्य' ( ? ) इति ॥ १२९ ॥ १३० ॥

**ऊधसोऽनङ्** ॥ ङित्करणादन्त्यादेशत्वम्, अकारादित्वं च निश्चित्याऽऽह—**अनङादेशो भवतीति**। **कुण्डोघ्नीति**। 'बहुव्रीहेरूधसो ङीष्', 'अल्लोपोऽनः'।

**भावबोधिनी**

सः—इसमें प्रज्ञुः। संगते जानुनी यस्य सः—इसमें 'संज्ञुः' ये रूप होते हैं। [ जानु का ज्ञु आदेश होता है। ] ॥ १२९ ॥

ऊर्ध्व शब्द के उत्तरवर्त्ती जानु शब्द का 'ज्ञु' यह आदेश होता है विकल्प से। उदा०—ऊर्ध्वे जानुनी अस्य सः—इस अर्थ में—ऊर्ध्वज्ञुः, ऊर्ध्वजानुः। [ जब ज्ञु यह आदेश नहीं होता है तब 'जानु' ही रहता है। ] ॥ १३० ॥

ऊधस् शब्दान्त बहुव्रीहि का अनङ् यह समासान्त आदेश होता है। उदा०—कुण्डम् इव ऊधोऽस्याः सा—इसमें कुण्डोघ्नी। [ कुण्ड के समान थनों वाली गाय या भैंस ] घटोघ्नी। [ घट इव ऊधः यस्याः सा—यह विग्रह है। ङीष् होने पर रूप बना हैं। ]

❀ ऊधस् का अनङ् आदेश करने में स्त्रीलिङ्ग का ग्रहण करना चाहिए। ❀ इसमें न हो—महोधाः पर्जन्यः। घटोधो धेनुकम् ॥ १३१ ॥

**२४१२. धनुषश्च ॥ १३२ ॥ ( ८७० )**

**धनुःशब्दान्तस्य बहुव्रीहेरनङादेशो भवति । शार्ङ्गं धनुरस्य शार्ङ्गधन्वा । गाण्डीवधन्वा । पुष्पधन्वा । अधिज्यधन्वा ॥**

**२४१३. वा संज्ञायाम् ॥ १३३ ॥ ( ८७१ )**

**धनुःशब्दान्ताद्बहुव्रीहेरनङादेशो वा भवति संज्ञायां विषये । पूर्वेण नित्यः प्राप्तो विकल्प्यते । शतधनुः, शतधन्वा । दृढधनुः, दृढधन्वा ॥**

**२४१४. जायाया निङ् ॥ १३४ ॥ ( ८७२ )**

**जायाशब्दान्तस्य बहुव्रीहेर्निङादशो भवति । युवतिर्जाया यस्य युवजानिः । वृद्धजानिः ॥**

**२४१५. गन्धस्येदुत्पूतिसुसुरभिभ्यः ॥ १३५ ॥ ( ८७४ )**

**उत्, पूति, सु, सुरभि—इत्येतेभ्यः परस्य गन्धशब्दस्य इकारादेशो भवति समासान्तो बहुव्रीहौ**

**न्यासः**

**धनुषश्च ॥ शार्ङ्गधन्वेति ।** अनङि कृते यणादेशः, 'सर्वनामस्थाने च' इति दीर्घः ॥ १३२ ॥

**वा संज्ञायम् ॥ १३३ ॥ जायाया निङ् ॥ निङादेशो भवतीति ।** आदेशत्वमस्य पूर्ववद् ङित्तदेव विज्ञायते । **युवजानिरिति ।** 'लोपो व्योर्वलि' इति यलोपः । 'स्त्रियाः पुंवत्' इति पुंवद्भावः ॥ १३४ ॥

**गन्धस्येदुत्पूतिसुसुरभिभ्यः ॥ इकार आदेशो भवतीति ।** कथं पुनर्ज्ञायते—आदेशोऽयं न प्रत्यय इति ?

**पदमञ्जरी**

अनङ्विधानमुत्तरार्थम्, इह तु नकारादेशेनापि सिद्धम् ॥ १३१ ॥ १३२–१३४ ॥

**गन्धस्येदुत्पूतिसुसुरभिभ्यः ॥ इकारादेशो भवतीति ।** षष्ठीनिर्देशादादेशत्वावसायः । प्रकरणभेदाय

**भावबोधिनी**

धनुःशब्दान्त बहुव्रीहि का अनङ् आदेश होता है । उदा०—शार्ङ्गं धनुः अस्य—इस में शार्ङ्गधन्वा । [ शार्ङ्गधनुष् में अनङ् यह आदेश ङित् होने से केवल 'ष्' के स्थान पर होता है—शार्ङ्गधनु + अन्, यण्, विभक्ति-प्रयुक्त कार्य करने पर रूप बनता है । यह विष्णु की संज्ञा है । ] गाण्डीवधन्वा । [ गाण्डीवं धनुः अस्य सः—इसमें अन्त्य ष् का अनङ् होता है । यह शिव या अर्जुन की संज्ञा है । ] पुष्पधन्वा । [ पुष्पं धनुः अस्य सः—यह कामदेव की संज्ञा है । ] अधिज्यधन्वा । [ अधिज्यं धनुः अस्य सः । जिसने धनुष् की प्रत्यंचा चढ़ा ली है वह पुरुष । ] ॥ १३२ ॥

संज्ञाविषय में धनुःशब्दान्त बहुव्रीहि का अनङ् आदेश विकल्प से होता है । पूर्वसूत्र से नित्य प्राप्त है उसका विकल्प किया जा रहा है । उदा०—शतधन्वा, शतधनुः [ शतं धनुः यस्य सः—यह किसी राजा की संज्ञा है । ] दृढधन्वा, दृढधनुः । [ दृढं धनुः यस्य सः । यह भी किसो क्षत्रियविशेष की संज्ञा है । ]

**विमर्श**—काशिकाकार ने प्रस्तुत सूत्र के जो उदाहरण दिये हैं, वे संज्ञा के रूप में कम प्रसिद्ध हैं । पूर्ववर्ती सूत्र में जो उदाहरण दिये है वे संज्ञा के रूप में अधिक प्रसिद्ध हैं ॥ १३३ ॥

जाया-शब्दान्त बहुव्रीहि का निङ् आदेश होता है । युवतिः जाया यस्य सः—इस विग्रह में युवजानिः । [ युवतिजाया—इसमें 'ङिच्च' सूत्र से 'आ' का 'निङ्' अन्तादेश पुंवद्भाव करके 'युवन् जाय् नि'में 'लोपो व्योर्वलि' सूत्र से य का लोप "नलोपः प्राति०" सूत्र से युवन् के न् का लोप होने पर रूप बनता है—युवजानिः । जिसकी जाया युवती है ऐसा पुरुष । ] वृद्धजानिः । [ 'आ' का निङ्, य् लोप । जिसको जाया बूढ़ी है ऐसा पुरुष ] ॥ १३४ ॥

उत्, पूति, सु, सुरभि इन शब्दों से परे गन्ध शब्द का इकारादेश बहुव्रीहि में समासान्त होता है । तकार उच्चारण के लिए है । उदा०—उद्गतः गन्धः अस्य सः—इस विग्रह में—उद्गन्धिः । [ उद्गन्ध का इकारान्तादेश ।

**समासे । तकार उच्चारणार्थः । उद्गतो गन्धोऽस्य उद्गन्धिः । पूतिगन्धिः । सुगन्धिः । सुरभिगन्धिः ।**

**एतेभ्य इति किम् ? तीव्रगन्धो वातः ।**

**❀गन्धस्येत्त्वे तदेकान्तग्रहणम्❀ ( म० भा० ५.४.१३५ वा० १ ) । तेन शोभनो गन्धोऽस्य सुगन्ध आपणिकः ॥**

**न्यासः**

'गन्धस्य' इति षष्ठ्या निर्देशात् । यदि हि प्रत्ययः स्यात्, असन्दिग्धार्थम् 'गन्धात्' इति पञ्चम्या निर्देशं कुर्यात्, षष्ठ्या तु निर्देशः । तस्मादादेशोऽयमिति विज्ञायते ।

**गन्धस्येत्त्व इत्यादि** । गन्धो द्विविधः । गुणो गन्धः, सोऽन्यपदार्थस्यैकातो न भवति । यस्तु शोभनो गन्धोऽस्येति सुगन्ध आपणिक इति तत्र द्रव्यगन्धो गन्धशब्देनोच्यते, तच्चापणिकस्यैकदेशो भवति । तत्र गुणगन्धे यथा स्याद्, द्रव्यगन्धे मा भूदित्येवमर्थं गन्धस्येत्त्वे विधेये तदेकान्तग्रहणं कर्त्तव्यम् । तदित्यनेन बहुव्रीह्यर्थः सामर्थ्यान्निर्दिश्यते । तस्यैकान्त एकदेशो वा धर्मोऽवयवस्तदेकान्तः संगृह्यते । येन तदेकान्तग्रहणं कर्त्तव्यम् । एतदुक्तं भवति—तादृशं व्याख्यानं कर्त्तव्यं येनेत्त्वविधाविह गन्धोऽन्यपदार्थस्यैकदेशात् तत आश्रयितव्य इति । तत्रेदं व्याख्यानम्—'वा संज्ञायाम्' इत्यतो वाग्रहणमनुवर्त्तते, सा च व्यवस्थितविभाषा । तेन यत्र गन्धोऽन्यपदार्थस्यैकदेशभूतस्तत्रैवेत्त्वं भवति, नान्यत्रेति । अथ वा—अस्त्ययं गन्धशब्दो द्रव्यवचनः—गन्धान् विक्रीणीत इति । अस्ति **गुणवचनो** यथा—गन्धवती पृथिवी । तत्र गुणवचनस्येदं ग्रहणम्, न द्रव्यवचनस्य । तस्माद् द्रव्यवचनो बहुवचनान्त एव द्रव्ये वर्त्तते—गन्धान् विक्रीणीते, गन्धाः पण्यमस्येति । इह गन्धस्येत्येकवचनेनैव निर्देशः । तस्मादवसीयते—गुणवचनस्येदं ग्रहणमिति । गुणवचनस्य तु ग्रहणे तत्र गुणो गन्धोऽन्यपदार्थस्यैकदेशो भवति, तेन तदेकान्तभूतस्यैव गन्धस्येत्त्वं भवति ॥ १३५ ॥

**पदमञ्जरी**

चादेशत्वं व्यवस्थाप्यते, न त्वस्मिन्प्रत्ययेऽपि कश्चिद्दोषः ।

**गन्धशब्दोऽयमस्ति द्रव्यवचनः**—वहति जलमियम्, पिनष्टि गन्धानियमिति ( मुद्रा० १.४ ), अस्ति च गुणवचनः—चन्दनस्य गन्ध इति, तत्र गुणवाचिनो ग्रहणार्थमाह—**गन्धस्येत्त्व इति** । रूपादिसमुदायः = द्रव्यम्, तस्य गन्धलक्षणो गुण एकान्त एकदेशो भवति, रूपादिव्यतिरिक्तमवयवि द्रव्यमिति तु पक्षे एकान्त इवैकान्तः; तत्स्थस्योपलम्भात् ।

**सुगन्ध आपणिक इति** । आपणे नियुक्त आपणिकः; प्राग्वहतीयष्ठक् । 'भवार्थे वा अध्यात्मादित्वाट्ठक्' ( वा० ४५६ ) । अथ वायौ कथं सुगन्धिः, दुर्गन्धिरिति, न ह्ययं गन्धो वायोर्गुणः ? भूमा त्तस्य गुणः, तेन तावदविभागापन्नो लक्ष्यते, एतावदेव च तदेकान्तत्वं विवक्षितम्, न तद्गुणत्वम् । एवं च कृत्वा कुङ्कुमाद्यनुलेपनमपि यदा देवदत्तादेरविभागपन्नं भवति तदेत्त्वं भवत्येव—सुगन्धिर्देवदत्त इति, सर्वथा द्रव्यवचननिवृत्तिः ॥ १३५ ॥

**भावबोधिनी**

उत्कट गन्धवाला । ] पूतिगन्धिः । [ पूतिः गन्धः यस्य सः । खराब गन्ध वाला, दुर्गन्धवाला । ] सुगन्धिः । [ शोभनो गन्धः यस्य सः । ] सुरभिगन्धिः । [ सुरभिः गन्धः यस्य सः । सुन्दर गन्ध वाला ]

उक्त चारशब्दों से परे का ही इकार अन्तादेश होता है—इसका क्या प्रयोजन है ? तीव्रगन्धः वातः । [ तीव्रः गन्धः यस्य सः । यहाँ इकारान्तादेश नहीं होता है । ]

❀ गन्ध का इत्व करने में उसके एकान्त का ग्रहण करना चाहिए अर्थात् विशेष्यभूत द्रव्य का एकान्त = एकदेश, एक अवयव होने पर ही यह आदेश कहना चाहिए । ❀ इस लिए-शोभनो गन्धः अस्य सः—इसमें 'सुगन्धः आपणिकः' यहाँ इकारान्तादेश नहीं होता है ।

[ जहाँ गन्ध गुणवाचक के रूप में होता है वहीं यह आदेश होता है । सुगन्धिः वायुः—आदि में अविभागापन्न मान कर इत्व करना चाहिए । ] ॥ १३५ ॥

२४१६. अल्पाख्यायाम् ॥ १३६ ॥ ( ८७५ )

अल्पाख्यायां यो गन्धशब्दस्तस्येकारादेशो भवति समासान्तो बहुव्रीहौ समासे। सूपोऽल्पोऽस्मिन् सूपगन्धि भोजनम्। अल्पमस्मिन् भोजने घृतम्–घृतगन्धि। क्षीरगन्धि। अल्पपर्यायो गन्धशब्दः॥

२४१७. उपमानाच्च ॥ १३७ ॥ ( ८७६ )

उपमानात्परो यो गन्धशब्दस्तस्येकारादेशो भवति समासान्तो बहुव्रीहौ समासे। पद्मस्येव गन्धोऽस्य पद्मगन्धिः। उत्पलगन्धिः। करीषगन्धिः॥

२४१८. पादस्य लोपोऽहस्त्यादिभ्यः ॥ १३८ ॥ ( ८७७ )

'उपमानात्' इत्येव। उपमानाद्धस्त्यादिवर्जितात्परस्य पादशब्दस्य लोपो भवति समासान्तो बहुव्रीहौ समासे। स्थानिद्वारेण लोपस्य समासान्तता विज्ञायते। व्याघ्रस्येव पादावस्य व्याघ्रपात्। सिंहपात्।

न्यासः

अल्पाख्यायाम् ॥ १३६ ॥ उपमानाच्च ॥ १३७ ॥

पादस्य लोपोऽहस्त्यादिभ्यः ॥ लोपो भवति समासान्त इति। किं पुनः स्यात् समासान्तो न स्यात्? 'आदेः परस्य' इत्यादेरेव स्यात्। समासान्तत्वे सत्यन्तशब्दोऽयं नियतदेशमेवावयवमाचष्ट इत्यन्तस्यैव भवति।

पदमञ्जरी

अल्पाख्यायाम् ॥ सूपोऽल्पोऽस्मिन्सूपगन्धीति। अर्थप्रदर्शनमेतत्, विग्रहस्तु सूपस्य गन्धो लेशोऽस्मिन्निति; अन्यथा विशेषणत्वाद् गन्धशब्दस्य पूर्वनिपातः स्यात्। यद्वा—अस्मादेव निपातनाद् गन्धशब्दस्य परनिपातः ॥ १३६ ॥ १३७ ॥

पादस्य लोपोऽहस्त्यादिभ्यः ॥ लोपो भवति समासान्त इति। यदि त्वयं समासान्तो न स्याद्, 'आदेः

भावबोधिनी

अल्प आख्या में जो गन्ध शब्द है उसका समासान्त इकारादेश बहुव्रीहि समास में होता है। उदा०—सूपः अल्पः अस्मिन् भोजने तत्—इस अर्थ में सूपगन्धि भोजनम् [ जिसमें थोड़ी सी दाल है ऐसा भोजन ] अल्पं घृतम् अस्मिन् भोजने तत्—इस अर्थ में घृतगन्धि भोजनम्। [ जिसमें थोड़ा सा घी है ऐसा भोजन। ] क्षीरगन्धि। [ अल्पं क्षीरम् अस्मिन् तत् भोजनम्। ] यहाँ गन्ध शब्द अल्प का पर्याय है। [ जहाँ कोई वस्तु इतनी कम है कि उसे गन्ध के समान ही समझा जाय वहाँ ऐसे प्रयोग किये जाते हैं। ] ॥ १३६ ॥

उपमान से परे जो गन्ध शब्द उसका समासान्त इकारादेश बहुव्रीहि में होता है। उदा०—पद्मस्य इव गन्धः अस्य सः—इस में पद्मगन्धिः। उत्पलगन्धिः। [ उत्पलस्य इव गन्धः अस्य सः। ] करीषगन्धिः। [ करीषस्य इव गन्धः अस्य सः। ] ॥ १३७ ॥

'उपमानात्' इसकी अनुवृत्ति होती है। हस्ती आदि से भिन्न उपमानवाचक से परवर्त्ती पाद शब्द का समासान्त-लोप बहुव्रीहि में होता। स्थानी के माध्यम से लोप की समासान्तता समझी जाती है अर्थात् लोप तो अभावरूप है अतः वह जिसके स्थान पर होता है वह समास के अन्त में होना चाहिए। उदा०—व्याघ्रस्य इव पादौ अस्य सः—इसमें व्याघ्रपात्। [ समास के बाद अन्त्य का लोप, चर्त्व ] सिंहपात्। [ सिंहस्य इव पादौ अस्य सः। ]

हस्ति आदि को छोड़कर— इसका क्या फल है? हस्तिपादः। कटोलपादः [ हस्तिनः इव पादौ अस्य सः, कटोलस्य इव पादौ अस्य सः—ये विग्रह हैं। अन्त्य का लोप नहीं होता है। ]

अहस्त्यादिभ्य इति किम् ? हस्तिपादः । कटोलपादः ।

हस्तिन् । कटोल । गण्डोल । गण्डोलक । महिला । दासी । गणिका । कुसूल । हस्त्यादिः ॥

## २४१९. कुम्भपदीषु च ॥ १३९ ॥ ( ८७८ )

कुम्भपदीप्रभृतयः कृतपादलोपाः समुदाया एव पठ्यन्ते, तत्रैवं सूत्रं ज्ञेयम् । पादस्य लोपो भवति कुम्भपद्यादिविषये यथा, कुम्भपद्यादयः सिद्ध्यन्ति । समुदायपाठस्य च प्रयोजनं विषयनियमः—स्त्रियामेव, तत्र ङीष्प्रत्यये एव, नान्यदा । कुम्भपदी । शतपदी ।

### न्यासः

एवञ्च समासान्तो भवति यद्यन्तस्य भवति, नान्यथा । ननु च लोपस्याभावरूपत्वात् समासान्तो नोपपद्यते ? इत्याह—**स्थानिद्वारेणेत्यादि** । स्थानिनोऽकारस्य समासान्तत्वादुपचारेण लोपोऽपि समासान्त उच्यत इति दर्शयति ॥ १३८ ॥

**कुम्भपदीषु च ॥ कुम्भपदीप्रभृतयः कृतपादलोपाः समुदाया एव पठ्यन्त इति** । यद्येवम्, कथमिदं नेतव्यम् ? इत्याह—**तत्रैवमित्यादि** । तत्र तेषु कुम्भपदीप्रभृतिषु कृतपादलोपेषु पठितेष्वेवं व्याख्येयमित्यर्थः । **कुम्भपद्यादिविषय इति विषयग्रहणेन** कुम्भपदीष्विति विषयसप्तम्येवेति दर्शयति । **यथा कुम्भपद्यादयः सिध्यन्तीति** । यत्तदोर्नित्यसम्बन्धात् तथेत्यनुच्यमानमपि प्रतीयते । तदायमर्थः—पादस्य तथा लोपो भवति कुम्भपद्यादिविषये यथा कुम्भपद्यादयः सम्भवन्तीति । किमर्थं पुनः समुदाया एव पठ्यन्ते, न कुम्भपदादीन् शब्दान् प्रातिपदिकेषु पठित्वा तेभ्यः परस्य पादशब्दस्य लोपो विधीयेत ? इत्याह—**समुदायपाठस्य चेत्यादि** । यदि कुम्भादिभ्यः परस्य पादस्य स लोप उच्येत, 'कृतपादलोपाः समुदाया एव न पठ्येरन्' इति नियमो न लभ्येत । ततस्त्रिष्वपि लिङ्गेषु स्युः, स्त्रियामेव चेष्यन्ते । समुदायपाठे सति स्त्रियां ङीप्प्रत्यय एव विषयभूते

### पदमञ्जरी

परस्य' इत्यादेः स्यात्, 'शेषाद्विभाषा' इति कप् च प्रसज्येत; समासान्तापेक्षस्य शेषस्याश्रयणात् । कथं पुनरभावरूपोऽन्तावयवो भवति ? तत्राह—**स्थानिद्वारेणेति** ॥ १३८ ॥

**कुम्भपदीषु च** ॥ बहुवचननिर्देशात्प्रभृत्यर्थोऽवगम्यत इत्याह—**कुम्भपदीप्रभृतय इति । समुदाय एव निपात्यन्त**[1] **इति** । कथं तर्हि सूत्रे भूतविभक्त्या सप्तम्या निर्देशः ? इत्यत आह—**तत्रेति** । विषयग्रहणेन सूत्रे विषयसप्तमीति दर्शयति—**यथा कुम्भपद्यादयः सिद्ध्यन्तीति** । यत्तदोर्नित्यसम्बन्धात्पूर्वत्र तथा लोपो भवतीत्यर्थो ग्राह्यः । किमर्थं पुनः समुदाया एव निपात्यन्ते, न कुम्भादीनेव गणे पठित्वा तेभ्यः परस्य पादशब्दस्य लोपो

### भावबोधिनी

हस्तिन् । कटोल । गण्डोल । गण्डोलक । महिला । दासी । गणिका । कुसूल । ये हस्ति आदि हैं ॥ १३८ ॥

कुम्भपदी आदि शब्द जिनके पाद के अन्त्य का लोप हुआ है, ऐसे समुदाय ही पठित हैं, उनके विषय में यह सूत्र समझना चाहिए । कुम्भपदी आदि के विषय में लोप होता है, समझना चाहिए । जिस प्रकार कुम्भपदी आदि शब्दरूप सिद्ध होते हैं और समुदाय के पाठ का प्रयोजन है—विषयनियम—स्त्रीलिङ्ग में ही, उसमें ङीष् प्रत्यय में ही [ ये शब्दरूप होते हैं ] अन्य किसी में नहीं । उदा०—कुम्भपदी । शतपदी ।

इनमें जो शब्द उपमानपूर्व वाले हैं और संख्यापूर्ववाले हैं उनमें तो लोप सिद्ध ही है, तब नित्य ङीप् करने के लिए यह वचन [ इस सूत्र में ग्रहण ] है । इस कारण ''पादोऽन्यतरस्याम्' इस सूत्र से विकल्प नहीं होता है ।

---

१. 'पठ्यन्ते' इति काशिकापाठः ।

यच्चेहोपमानपूर्वम्, संख्यापूर्वं च पठ्यते, तस्य सिद्धे लोपे नित्यङीबर्थं वचनम्। 'पादोऽन्यतरस्याम्' (४.१.८) इति विकल्पो न भवति।

कुम्भपदी। शतपदी। अष्टापदी। जालपदी। एकपदी। मालापदी। मुनिपदी। गोधापदी। गोपदी। कलशीपदी। घृतपदी। दासीपदी। निष्पदी। आर्द्रपदी। कुणपदी। कृष्णपदी। द्रोणपदी। द्रुपदी। शकृत्पदी। सूपपदी। पञ्चपदी। अर्वपदी। स्तनपदी[1]। कुम्भपद्यादिः॥

२४२०. संख्यासुपूर्वस्य ॥ १४० ॥ (८७९)

संख्यापूर्वस्य सुपूर्वस्य च बहुव्रीहेः पादशब्दान्तस्य लोपो भवति समासान्तः। द्वौ पादावस्य द्विपात्। त्रिपात्। शोभनौ पादावस्य सुपात्॥

२४२१. वयसि दन्तस्य दतृ ॥ १४१ ॥ (८८०)

संख्यापूर्वस्य सुपूर्वस्य च बहुव्रीहेर्यो दन्तशब्दस्तस्य 'दतृ' इत्ययमादेशो भवति समासान्तो वयसि

न्यासः

भवति। नान्यदेति। कुम्भपदीति। 'पादोऽन्यतरस्याम्' इति ङीपि विषयभूते पादस्य लोपः, ततो ङीप्, तस्मिन् 'पादः पत्' पद्भावः।

यच्चेहोपमानपूर्वमिति—कुम्भपदी, जालपदीत्येवमादि। संख्यापूर्वपदञ्चेति—एकपदी शतपदीत्येवमादि। तस्य सिद्ध इति। उपमानपूर्वस्य पूर्वेणैव सिद्धे संख्यापूर्वस्य तूत्तरेण।

अष्टापदीत्यस्मिन् पठ्यते। तत्र निपातनं दीर्घत्वार्थम्। 'अष्टनः संज्ञायाम्' इति वा॥ १३९॥

संख्यासुपूर्वस्य॥ अनुपमानार्थमिदम्॥ १४०॥

वयसि दन्तस्य दतृ॥ द्विदन्निति। ऋकारस्योगित्कार्यार्थत्वाद् 'उगिदचाम्' इति नुम्, हल्ङ्यादि-

पदमञ्जरी

विधीयेत? तत्राह—समुदायपाठस्य चेति। विषयनियममेव दर्शयति—स्त्रियामेवेति। अत्र च स्त्रियामपि ङीप्प्रत्यय एव। 'पादोऽन्यतरस्याम्' इति यदा ङीब्विषयभूतस्तदैवेत्यर्थः।

यच्चेत्यादि। उपमानपूर्वपदम्—कुम्भपदी, जालपदीत्यादि; संख्यापूर्वपदम्—एकपदी, शतपदीति। अष्टापदीति पठ्यते, तत्र निपातनाद्दीर्घत्वम्, 'अष्टनः संज्ञायाम्' इति वाऽऽकारः॥ १३९॥ १४०॥

वयसि दन्तस्य दतृ॥ द्विदन्निति। ऋकारस्योगित्कार्यार्थत्वाद् 'उगिदचाम्' इति नुम्॥ १४१॥ १४२॥

भावबोधिनी

कुम्भपदी। शतपदी। अष्टापदी। [ इसमें निपातन से अथवा संज्ञावाचक मानकर दीर्घ होता है। ] जालपदी। एकपदी। मालापदी। मुनिपदी। गोधापदी। गोपदी। कलशीपदी। घृतपदी। दासीपदी। निष्पदी। आर्द्रपदी। कुणपदी। कृष्णपदी। द्रोणपदी। द्रुपदी। शकृत्पदी। सूपपदी। पञ्चपदी। अर्वपदी। स्तनपदी। ये कुम्भपदी आदि हैं॥ १३९॥

संख्यापूर्वक और सुपूर्वक बहुव्रीहि जिसके अन्त में पादशब्द है उसका समासान्त-लोप होता है। उदा०—द्वौ पादौ अस्य सः—इसमें द्विपात्। त्रिपात् (त्रयः पादाः अस्य सः) शोभनौ पादौ अस्य सः—इसमें सुपात्। [ सभी उदाहरणों में अन्त्य अ का लोप और चर्त्व करने पर रूप बनते हैं। जहाँ उपमान पूर्वपद नहीं है वहाँ इससे लोप होता है। ]॥ १४०॥

संख्यापूर्वक और सुपूर्वक बहुव्रीहि समास का जो दन्त शब्द उसका 'दतृ' यह आदेश समासान्त होता है यदि

१. स्थूलपदी, सूत्रपदी, कलहंसपदी, द्विपदी, विषपदी, सुपदी, सूकरपदी, सूचीपदी—अत्रैते शब्दाः पुस्तकान्तरेऽधिकाः॥

गम्यमाने। ऋकार उगित्कार्यार्थः। द्वौ दन्तावस्य द्विदन्। त्रिदन्। चतुर्दन्। शोभना दन्ता अस्य समस्ता जाताः सुदन् कुमारः।

वयसीति किम्? द्विदन्तः कुञ्जरः। सुदन्तो दाक्षिणात्यः॥

## २४२२. छन्दसि च॥ १४२॥ ( ३५० )

छन्दसि च दन्तशब्दस्य 'दतृ' इत्ययमादेशो भवति समासान्तो बहुव्रीहौ समासे। पत्रदतमालभेत। 'उभयदत आलभते' ( ऋ० १०.९०.१० )॥

## २४२३. स्त्रियां संज्ञायाम्॥ १४३॥ ( ८८१ )

स्त्रियामन्यपदार्थे संज्ञायां विषये दन्तशब्दस्य 'दतृ' इत्ययमादेशो भवति। अयोदती। फालदती। संज्ञायामिति किम्? समदन्ती। स्निग्धदन्ती॥

### न्यासः

संयोगान्तलोपौ। सुदन्तो दाक्षिणात्य इति। शोभनत्वमिह गम्यते, न वयः॥ १४१॥

छन्दसि च॥ अवयोऽर्थम्, असंख्यापूर्वपदार्थञ्च वचनम्। उभयतोदत इति शसन्तमेतत्॥ १४२॥

स्त्रियां संज्ञायाम्॥ अच्छन्दोऽर्थमेतत्। अय इव दन्ता अस्या अयोदती। 'उगितश्च' इति ङीप्।

समदन्तीति। 'नासिकोदर' इत्यादिना ङीष्॥ १४३॥

### पदमञ्जरी

स्त्रियां संज्ञायाम्॥ अच्छन्दोऽर्थमिदम्। अयोदतीति। अय इव दन्ता अस्या अयोदती, उगित्त्वान्ङीप्। समदन्तीति। 'नासिकोदरोष्ठ' इत्यादिना ङीष्॥ १४३॥

### भावबोधिनी

वयः विशेष प्रतीत हो रही हो। ऋकार अनुबन्ध उगित् कार्यों के लिए है। उदा०—द्वौ दन्तौ अस्य सः—इसमें द्विदन्। ( त्रयः दन्ता अस्य सः—इसमें ) त्रिदन्। ( चत्वारो दन्ता अस्य सः—इसमें चतुर्दन् ) शोभना दन्ता अस्य समस्ता जाताः—इसमें सुदन् कुमारः। [ सुदन्त में दन्त का दतृ आदेश सम्पूर्ण के स्थान पर होता है क्योंकि अनेकाल् है—"अनेकाल् शित् सर्वस्य।" उगित् होने के कारण 'उगिदचां सर्वनामस्थाने' ( पा. सू. ७।१।७० ) से नुम् होता है। और सुलोप, संयोगान्त त्लोप करने पर रूप बनता है। जिसके दो दाँत हो चुके हैं ऐसा बच्चा—द्विदन् शिशुः। ]

वयः = अवस्था गम्यमान रहने पर—इसका क्या फल है? द्विदन्तः कुञ्जरः। सुदन्तः दाक्षिणात्यः। [ यहाँ दो दातों वाला हाथी; सुन्दर दांतों वाला दक्षिणी पुरुष—अर्थ हैं, अवस्थाप्रतीति नहीं है। अतः यह आदेश नहीं होता है। ]॥ १४१॥

वेद में बहुव्रीहि समास में दन्त शब्द का 'दतृ' यह आदेश समासान्त हो जाता है। उदा०—'पत्रदतमालभेत। 'उभयदत आलभते।' [ यहाँ अवस्था = वयः से भिन्न अर्थ में भी वेद में दतृ आदेश होता है। ]॥ १४२॥

स्त्री अन्यपदार्थ रहने पर संज्ञा विषय होने पर दन्त शब्द का 'दतृ' यह आदेश होता है। उदा०—अयोदती। फालदती। [ अयः इव दन्ता यस्याः सा। फाल इव दन्ताः यस्याः सा। लोहे के समान मजबूत दाँतो वाली स्त्री। हल के फाल के समान तीखे = पैने दाँतों वाली स्त्री। दन्त का दतृ आदेश करने पर 'उगितश्च' सूत्र से ङीप् होता है। ]

संज्ञा = नाम की प्रतीति में—इसका क्या फल है? समदन्ती। स्निग्धदन्ती। [ इनमें सामान्य प्रतीति होती है। अतः आदेश नहीं होता है। ]॥ १४३॥

२४२४. विभाषा श्यावारोकाभ्याम् ॥ १४४ ॥ ( ८८२ )

श्याव, अरोक—इत्येताभ्यां परस्य दन्तशब्दस्य दतृ इत्ययमादेशो भवति विभाषा समासान्तो बहुव्रीहौ। श्यावदन्, श्यावदन्तः। अरोकदन्, अरोकदन्तः। अरोकः = निर्दीप्तिः।

संज्ञायामित्येव—श्यावदन्तः। अरोकदन्तः॥

२४२५. अग्रान्तशुद्धशुभ्रवृषवराहेभ्यश्च ॥ १४५ ॥ ( ८८३ )

'विभाषा' इत्येव। अग्रान्ताच्छब्दात्, शुद्ध, शुभ्र, वृष, वराह—इत्येतेभ्यश्च परस्य दन्तशब्दस्य विभाषा 'दतृ' इत्ययमादेशो भवति समासान्तो बहुव्रीहौ समासे। कुड्मलाग्रदन्, कुड्मलाग्रदन्तः। शुद्धदन्, शुद्धदन्तः। शुभ्रदन्, शुभ्रदन्तः। वृषदन्, वृषदन्तः। वराहदन्, वराहदन्तः।

अनुक्तसमुच्चयार्थश्चकारः। अहिदन्, अहिदन्तः। मूषिकदन्, मूषिकदन्तः। गर्दभदन्, गर्दभदन्तः। शिखरदन्, शिखरदन्तः॥

न्यासः

विभाषा श्यावारोकाभ्याम्॥ 'स्त्रियाम्' इति निवृत्तम्। रोकः = रोचनम्, दीप्तिः। 'रुच दीप्तौ', भावे घञ्, 'चजोः कुघिण्ण्यतोः' इति कुत्वम्। अविद्यमानो रोकोऽस्येत्यरोकशब्दस्य व्युत्पत्तिं हृदि कृत्वा तस्यार्थं दर्शयितुमाह—अरोको निर्दीप्तिरिति॥ १४४॥ अग्रान्तशुद्धशुभ्रवृषवराहेभ्यश्च॥ १४५॥

पदमञ्जरी

विभाषा श्यावारोकाभ्याम्॥ अरोको निर्दीप्तिरिति। 'रुच दीप्तौ', रोचनम् = रोकः, स न विद्यते यस्येति कृत्वा॥ १४४॥

अग्रान्तशुद्धशुभ्रवृषवराहेभ्यश्च॥ चकारोऽनुक्तसमुच्चयार्थः।

अहिदन्नित्यादि। भाष्ये एतन्नाश्रितम्॥ १४५॥

भावबोधिनी

श्याव और अरोक—इन शब्दों से परे दन्त का दतृ यह समासान्त आदेश विकल्प से होता है बहुव्रीहि में। उदा०—श्यावदन्, श्यावदन्तः। [ श्यावाः दन्ताः यस्य सः। जिसके दाँत पीछे को हैं। दतृ होने पर नुमागमादि होने से श्यावदन्। पक्ष में दन्त ही रहता है। ] अरोकदन्, अरोकदन्तः। [ रोचनम् = रोकः, अविद्यमानः रोकः—दीप्तिः येषां ते—अरोकाः दन्ताः यस्य सः—इस अर्थ में बना है। ] अरोक = निर्दीप्तिः। [ कान्तिहीन = मलिन दाँतों वाला। ]

संज्ञा में ही होता है—[ अतः अन्यत्र ] श्यावदन्तः। अरोकदन्तः। [ इनमें दतृ आदेश नहीं होता है। ] ॥१४४॥

'विभाषा' ( = विकल्प से) इसकी अनुवृत्ति होती है। अग्रान्त (अग्र जिसके आगे है ऐसे) शब्द से और शुद्ध, शुभ्र, वृष और वराह—इनसे परवर्ती दन्त शब्द का दतृ यह आदेश समासान्त बहुव्रीहि में विकल्प से होता है। उदा०—कुड्मलाग्रदन्, कुड्मलाग्रदन्तः। [ कुड्मलस्य अग्रम् = 'कुड्मलाग्रम्, तदिव दन्ताः यस्य सः—इस में दन्त का दतृ आदेश होता है। कलियों के अग्रभाग के समान सुन्दर और कोमल दाँत जिसके हैं। ] शुद्धदन्, शुद्धदन्तः। [ शुद्ध दाँतों वाला ] शुभ्रदन्, शुभ्रदन्तः। [ उज्ज्वल दाँतों वाला। ] वृषदन्, वृषदन्तः। [ बैल के समान दाँतों वाला। ] वराहदन्, वराहदन्तः। शूकर के समान दाँतों वाला। ]

सूत्र में चकार का प्रयोग अनुक्तों का समुच्चय करने के लिए है। [ अतः अन्य शब्दों से परवर्त्ती भी दन्त का दतृ आदेश होता है— ] अहिदन्, अहिदन्तः। [ साँप के समान दाँतों वाला ]। मूषिकदन्, मूषिकदन्तः। [ चूहे के समान दाँतों वाला ] गर्दभदन् गर्दभदन्तः। [ गधे के समान दाँतों वाला ] शिखरदन्, शिखरदन्तः। [ शिखर के समान ऊँचे उठे हुए दाँतों वाला। यहाँ जो भी उपमान हैं उनके दाँतों को ही उपमान समझना चाहिए। अहि = सर्प के दाँतों के समान दाँतों वाला—इसी प्रकार सर्वत्र अर्थ करना चाहिए। ] ॥ १४५ ॥

## २४२६. ककुदस्यावस्थायां लोपः ॥ १४६ ॥ ( ८८४ )

ककुदशब्दान्तस्य बहुव्रीहेर्लोपो भवति समासान्तोऽवस्थायां गम्यमानायाम्। कालादिकृता वस्तुधर्मा वयःप्रभृतयः=अवस्था इत्युच्यते। असञ्जातं ककुदमस्य असञ्जातककुत्। बाल इत्यर्थः। पूर्णककुत्। मध्यमवया इत्यर्थः। उन्नतककुत्। वृद्धवया इत्यर्थः। स्थूलककुत्। बलवानित्यर्थः। यष्टिककुत्। नातिस्थूलो नातिकृश इत्यर्थः।

अवस्थायामिति किम्? श्वेतककुदः॥

## २४२७. त्रिककुत्पर्वते ॥ १४७ ॥ ( ८८५ )

त्रिककुदि बहुव्रीहौ ककुदशब्दस्य लोपः समासान्तो निपात्यते पर्वतेऽभिधेये। त्रीणि ककुदान्यस्य त्रिककुत्पर्वतः। ककुदाकारं पर्वतस्य शृङ्गम्=ककुदमित्युच्यते। न च सर्वस्त्रिशिखरः पर्वतस्त्रिककुत्। किं तर्हि? संज्ञैषा पर्वतविशेषस्य।

### न्यासः

**ककुदस्यावस्थायां लोपः॥ कालादिकृतेति।** आदिशब्देनाहारादयो गृह्यन्ते ॥ १४६ ॥

**त्रिककुत् पर्वते॥** अनवस्थार्थमिदम्। पर्वतेऽन्यपदार्थे मुख्यं ककुदं न सम्भवति, उच्यते चेदम्—त्रिककुत् पर्वत इति। तत्र सामर्थ्यात्ककुदाकारे पर्वतशिखरे सादृश्यात् ककुदशब्दो वर्त्तते, तस्येदं ग्रहणं विज्ञायते। अत एवाह—**ककुदाकारमित्यादि।** यद्येवम्, इदं तर्हि यस्य कस्यचित् पर्वतस्य त्रीणि ककुदाकाराणि शृङ्गाणि तस्य सर्वस्य त्रिककुदभिधानं प्राप्नोति? अत आह—**न चेत्यादि।** 'उच्यते' इति प्रकृतेन सम्बन्धः। **संज्ञैषेत्यादि।** एतेन यस्यैषा संज्ञा त्रिककुच्छब्देनोच्यत इति तद् दर्शयति। एतच्च निपातनात् 'स्त्रियां संज्ञायाम्' इत्यतः संज्ञाग्रहणानुवृत्तेर्लभ्यते। ननु चाभिधेयनियमोऽपि तत एव लभ्यत इति पर्वतग्रहणं न कर्त्तव्यम्? नैतदस्ति;

### पदमञ्जरी

**ककुदस्यावस्थायां लोपः। कालादिकृता इति।** आदिशब्देनाहारपरिणामादेर्ग्रहणम् ॥ १४६ ॥

**त्रिककुत् पर्वते॥** पर्वतेऽन्यपदार्थे मुख्यस्य ककुदस्यासम्भवादाह—**ककुदाकारं शृङ्गमित्यादि।** न

### भावबोधिनी

ककुदशब्दान्त बहुव्रीहि का समासान्तलोप होता है यदि अवस्था=वय की प्रतीति हो रही हो। काल आदि के द्वारा किए गए वस्तु के कर्म वय=उम्र आदि को 'अवस्था' ऐसा कहा जाता है [ ऐसी अवस्था की प्रतीति गम्यमान रहने पर लोप होता है। ] उदा०—असञ्जातं ककुदम् अस्य सः—इस विग्रह में—असञ्जातककुत्। [ समास के बाद अन्त्य अ का लोप, चर्त्व। जिसका तालु नहीं उत्पन्न हो सका है, अर्थात् अभी छोटा ही बछड़ा है। ] बालक है—यह अर्थ है। पूर्णककुत्—[ जिसका ककुद पूरा हो गया है ]—मध्य-अवस्था वाला—यह अर्थ है। उन्नतककुत्। [ ऊँचे ताल वाला ] वृद्ध अवस्था वाला—यह अर्थ है। स्थूलककुत्। बलवान्—यह अर्थ है। यष्टिककुत्। न बहुत मोटा और न बहुत पतला—यह अर्थ है

अवस्था में—इसका क्या फल है? श्वेतककुदः। [ श्वेत तालु वाला—इसमें किसी अवस्था-विशेष की प्रतीति नहीं होती है। अतः लोप नहीं होता हैं। ] ॥ १४६ ॥

त्रिककुत्—बहुव्रीहि में ककुद शब्द का समासान्त लोप निपातित होता यदि पर्वत अर्थ की प्रतीति हो रही हो तो। उदा०—त्रीणि ककुदानि अस्य सः—इस अर्थ में त्रिककुत् पर्वतः। ककुद=तालु के समान ( उठा हुआ ) पर्वत शृङ्ग ( =शिखर ) ककुद—ऐसा कहा जाता है। परन्तु तीन शिखरों वाले सभी पर्वत त्रिककुत् नहीं है। तो क्या? यह एक विशेष पर्वत की संज्ञा ( नाम ) है।

पर्वत इति किम् ? त्रिककुदोऽन्यः ॥

२४२८. उद्विभ्यां काकुदस्य ॥ १४८ ॥ ( ८८६ )

उत्, वि—इत्येताभ्यां परस्य काकुदशब्दस्य लोपो भवति बहुव्रीहौ समासे। उद्गतं काकुदमस्य उत्काकुत्। विकाकुत्। तालु = काकुदमुच्यते ॥

२४२९. पूर्णाद्विभाषा ॥ १४९ ॥ ( ८८७ )

पूर्णात्परस्य काकुदशब्दस्य विभाषा लोपो भवति बहुव्रीहौ समासे। पूर्णं काकुदमस्य पूर्णकाकुत्, पूर्णकाकुदः ॥

२४३०. सुहृद्दुर्हृदौ मित्रामित्रयोः ॥ १५० ॥ ( ८८८ )

सुहृत्, दुर्हृत्—इति निपात्यते यथासंख्यं मित्रामित्रयोरभिधेययोः। सुशब्दात्परस्य हृदयशब्दस्य हृद्भावो निपात्यते बहुव्रीहौ, तथा दुःशब्दात्परस्य। शोभनं हृदयमस्य सुहृत् मित्रम्। दुष्टं हृदयमस्य दुर्हृदमित्रम्।

मित्रामित्रयोरिति किम् ? सुहृदयः कारुणिकः। दुर्हृदयश्चोरः ॥

न्यासः

शैलीयमाचार्यस्य यत् प्रसिद्धेष्वपि नित्यतरेष्वभिधेयनिमित्तमाचष्टे, यथा—'पुष्यसिद्धयौ नक्षत्रे' इति, किं पुनर्यत्र प्रसिद्धिर्नास्ति ! सा तु लौकिकी ॥ १४७ ॥

उद्विभ्यां काकुदस्य ॥ उत्काकुत्, विकाकुदिति। अन्त्यस्य लोपे कृते 'वावसाने' इति चर्त्वम्। ननु च 'आदेः परस्य' इत्यादिलोपेन भवितव्यम्, तत् कथमन्त्यस्य भवति ? अन्त्यवचनो ह्यवयववचनोऽपि, स नियतदेशावयवमाचष्ट इत्युक्तम्। तत्र यद्यादेः स्यात्, समासान्तता नोपपद्यते ॥ १४८ ॥

पूर्णाद्विभाषा ॥ १४९ ॥ सुहृद्दुर्हृदौ मित्रामित्रयोः ॥ १५० ॥ उरःप्रभृतिभ्यः कप् ॥ 'शेषाद्विभाषा' इति कपि सिद्धे नित्यर्थं वचनम्। प्रियसर्पिष्क इति। 'इणः षः' इति विसर्जनीयस्य षकारः। अवमुक्ते उपानहौयेन

पदमञ्जरी

चेत्यादि। उच्यत इत्यस्यानुषङ्गः। संज्ञैषेत्यादि। एतच्च निपातनाल्लभ्यते। एवं च पर्वतग्रहणं विस्पष्टार्थम् ॥ १४७ ॥ १४८–१५० ॥

भावबोधिनी

पर्वत अर्थ में—इसका क्या फल है ? पर्वत से भिन्न—त्रिककुदः है ॥ १४७ ॥

बहुव्रीहि समास में उत् और वि—इनसे परे काकुद शब्द का लोप होता है। उदा०—उद्गतं काकुदम् अस्य—इस विग्रह में—उत्काकुत्। [ विगतं काकुदम् अस्य—इसमें ] विकाकुत्। तालु = काकुद कहा जाता है। [ पूर्व सूत्र में ककुद और इस में काकुद दोनों को तालु का वाचक माना है। अन्त्य का लोप होने से चर्त्व होता है। ] ॥ १४८ ॥

बहुव्रीहि समास में पूर्ण शब्द से परवर्ती काकुद का लोप विकल्प से होता है। उदा०—पूर्णं काकुदम् अस्य सः— इस में—पूर्णकाकुत् पूर्णकाकुदः। [ विकल्प से अन्त्य अ का लोप है। ] ॥ १४९ ॥

मित्र और अमित्र अर्थ वाच्य रहने पर क्रमशः 'सुहृत्' और 'दुर्हृत्' ये निपातित होते हैं। 'सु' शब्द से परवर्ती और 'दुर्' शब्द से परवर्ती 'हृदय' का 'हृत्' आदेश बहुव्रीहि में निपातित होता है। उदा०—शोभनं हृदयम् अस्य—इस विग्रह में—सुहृत् = मित्र। दुष्टं हृदयम् अस्य— इस विग्रह में दुर्हृत् = अमित्र = शत्रु। [ हृदय का हृत् कर देने पर सुहृत्, दुर्हृत् बनते हैं। ]

मित्र और अमित्र अर्थों में—इसका क्या फल है ? सुहृदयः कारुणिकः, दुर्हृदयः चौरः। [ यहाँ मित्र और अमित्र अर्थों की प्रतीति नहीं है। अतः 'हृत्' आदेश नहीं होता है। ] ॥ १५० ॥

२४३१. उरःप्रभृतिभ्यः कप् ॥ १५१ ॥ ( ८८९ )

उरःप्रभृत्यन्ताद्बहुव्रीहेः कप् प्रत्ययो भवति। व्यूढमुरोऽस्य व्यूढोरस्कः। प्रियसर्पिष्कः। अवमुक्तोपानत्कः।

पुमान्, अनडवान्, पयः, नौः, लक्ष्मीरिति विभक्त्यन्ताः पठ्यन्ते, न प्रातिपदिकानि। तत्रेदं प्रयोजनम्—एकवचनान्तानामेव ग्रहणमिह विज्ञायेत, द्विवचनबहुवचनान्तानां मा भूदिति। तत्र 'शेषाद्विभाषा' (५.४.१५४) इति विकल्प एव भवतीति। द्विपुमान्, द्विपुंस्कः। बहुपुमान्, बहुपुंस्कः।

उरस्। सर्पिस्। उपनाह्। पुमान्। अनड्वान्। नौः। पयः। लक्ष्मीः। दधि। मधु। शालिः। ❀ अर्थान्नञः ❀। अनर्थकः। उरःप्रभृति॥

न्यासः

स अवमुक्तोपानत्क इति। 'नहो धः' इति विहितस्य धकारस्य 'झलां जशोऽन्ते' इति जश्त्वम्—दकारः, तस्य 'खरि च' इति चर्त्वम्—तकारः।

किं पुनरेतद्विभक्त्यन्तानां पाठे प्रयोजनम्? इत्याह—तत्रेत्यादि। तत्रेत्यनेन विभक्त्यन्तानां पाठः प्रत्यवमृश्यते।

अर्थान्नञ इति। नञ्परो योऽर्थशब्दस्तदन्ताद्बहुव्रीहेः कब्भवति। नास्त्यर्थोऽस्येति अनर्थकः॥ १५१॥

पदमञ्जरी

उरःप्रभृतिभ्यः कप्॥ व्यूढोरस्कः, प्रियसर्पिष्क इति। 'सोऽपदादौ', 'इणः षः', उपपूर्वान्नह्यतेः सम्पदादित्वात्कर्मणि क्विप्, उपनद्धा उपानत् 'नहिवृति' इति दीर्घः, अवमुक्ते उपानहौ येन सोऽवमुक्तोपानत्कः। 'नहो धः', जश्त्वचर्त्वे।

विकल्प एव भवतीति। लक्ष्मीशब्दात् 'नद्यृतश्च' इति नित्यः कब् न भवति; एकवचनान्तपाठस्य नियमार्थत्वात्। अर्थान्नञ इति। नञः परो योऽर्थशब्दस्तदन्ताद्बहुव्रीहेर्नित्यं कब्भवति। नास्यार्थोऽस्ति अनर्थकः॥१५१॥

भावबोधिनी

उरः आदि शब्द जिसके अन्त में हैं ऐसे बहुव्रीहि से कप् प्रत्यय होता है। उदा०=व्यूढम् उरः अस्य सः—इस विग्रह से [ बहुव्रीहि करने के बाद कप् होने से ] व्यूढोरस्कः। [ प्रियं सर्पिः यस्य सः—इसमें ] प्रियसर्पिष्कः। [ अवमुक्ते उपानहौ येन सः—इसमें ] अवमुक्तोपानत्कः। [ परिपुष्ट उरस्थल वाला। घी पसन्द करने वाला। जूते उतार देने वाला ]।

पुमान्, अनड्वान्, पयः, नौः, लक्ष्मीः—इतने शब्द विभक्त्यन्त ही पठित है, प्रातिपदिक नहीं। इस प्रकार के पाठ में प्रयोजन यह है—इसमें एकवचनान्तों का ही ग्रहण समझा जाय, द्विवचनान्त और बहुवचनान्त का नहीं। अतः उन [ द्विवचनान्त, बहुवचनान्त ] में 'शेषाद् विभाषा' ( पा० सू० ५।४।१५४ ) से वैकल्पिक कप् ही होता है। उदा०—द्विपुमान्, द्विपुंस्कः। बहुपुमान्, बहुपुंस्कः। [ विकल्प से कप् होने से दो रूप बनते हैं। ]

[ इस गण में पठित शब्द—] उरस्। सर्पिस्। उपानह्। पुमान्। अनड्वान्। नौः। पयः। लक्ष्मीः। दधि। मधु। शालिः। ❀ नञ् से परे अर्थ से ❀ उदा०* अनर्थकः। [ इस गण सूत्र के कारण—नास्ति अर्थः अस्य सः—इसमें नित्य कप् ही होता है—अनर्थकः। कप्रहित प्रयोग शुद्ध नहीं है। अत एव अनर्थ और अनर्थक में अर्थभेद है। ] ये उरः आदि हैं॥ १५१॥

२४३२. इनः स्त्रियाम् ॥ १५२ ॥ ( ८९० )

इन्नन्ताद्बहुव्रीहेः कप् प्रत्ययो भवति स्त्रियां विषये । बहवो दण्डिनोऽस्यां शालायां बहुदण्डिका शाला । बहुच्छत्त्रिका । बहुस्वामिका नगरी । बहुवाग्मिका सभा ।

स्त्रियामिति किम् ? बहुदण्डी राजा । बहुदण्डिकः । 'शेषाद्विभाषा' इत्येतद्भवति ॥

२४३३. नद्यृतश्च ॥ १५३ ॥ ( ८३३ )

नद्यन्ताद्बहुव्रीहेर्ऋकारान्ताच्च कप् प्रत्ययो भवति । बह्व्यः कुमार्योऽस्मिन्देशे बहुकुमारिको देशः । बहुब्रह्मबन्धूकः । ऋतः खल्वपि—बहुकर्तृकः ।

तकारः मुखसुखोच्चारणार्थः ॥

**न्यासः**

इनः स्त्रियाम् ॥ इदमपि पूर्ववत् कपि सिद्धे नित्यार्थमेव । बहुदण्डिकेति । 'नलोपः प्रातिपदिकान्तस्य' इति नलोपः ॥ १५२ ॥

नद्यृतश्च ॥ १५३ ॥

**पदमञ्जरी**

इनः स्त्रियाम् ॥ 'अनिनस्मन्ग्रहणान्यर्थवता चानर्थकेन च तदन्तविधिं प्रयोजयन्ति' ॥ १५२ ॥

नद्यृतश्च ॥ नद्यन्ताद्बहुव्रीहेरिति । अत्रान्तशब्द उत्तरपदे वर्त्तते, नद्युत्तरपदाद्बहुव्रीहेरित्यर्थः । यद्वा—बहुव्रीह्यर्थमुत्तरपदं बहुव्रीहिः, तस्मान्नद्यन्तादित्यर्थः । किं सिद्धं भवति ? बहुग्रामणीर्नगरी, बहुखलपूर्नगरीत्यत्र कब् निवर्त्तितो भवति ॥ १५३ ॥

**भावबोधिनी**

इन्प्रत्ययान्त बहुव्रीहि से स्त्रीविषय में कप् प्रत्यय होता है । उदा०—बहवः दण्डिनः अस्यां शालायाम्—इस विग्रह में—बहुदण्डिका शाला । [ समास विभक्तिलोप के बाद बहुदण्डिन् से कप् और टाप् आदि करने पर बहुदण्डिका बनता है । इसी प्रकार—बहवः छत्रिणः अस्यां शालायां सा— इसमें ] बहुछत्रिका । बहुस्वामिका नगरी । [ बहवः स्वामिनः अस्या अस्यां वा—यह विग्रह है । ] बहुवाग्मिका सभा । [ बहवः वाग्मिनः अस्यां सभायां सा —यह विग्रह । [

स्त्रीविषय में—इसका क्या फल है ? बहुदण्डी राजा । बहवः दण्डिनः अस्य सः—इस विग्रह में राजा विशेष्य होकर विषय है और पुरुष है । अतः यह कप् नहीं होता है । ] बहुदण्डिकः—यहाँ 'शेषाद् विभाषा' इस सूत्र से विकल्प से कप् होता है । अतः दो रूप बनते हैं । ] ॥ १५२ ॥

नदीसंज्ञकवर्ण जिसके अन्त में है उससे और ऋकार जिसके अन्त में है उससे कप् होता है । उदा०—बह्व्यः कुमार्यः अस्मिन् देशे सः—बहुकुमारिकः देशः । [ कुमारी यह नदीसंज्ञक अन्त में है अतः कप् होता है और ह्रस्व करने पर रूप बनता है । ] बहुब्रह्मबन्धूकः । [ बह्व्यः ब्रह्मबन्ध्वः सन्ति अस्मिन् सः । ] ऋकारान्त से भी—बहुकर्तृकः । [ बहवः कर्तारः अस्य सः—इस विग्रह में समास के बाद प्रत्यय होता है । ]

ऋतः—इस में तकार मुखसुखोच्चारणार्थ है । [तत्काल के ग्रहणार्थ नहीं है । अतः सभी से होता है । ] ॥१५३॥

## २४३४. शेषाद्विभाषा ॥ १५४ ॥ ( ८९१ )

**यस्माद्बहुव्रीहेः समासान्तो न विहितः स शेषः, तस्माद्विभाषा कप्प्रत्ययो भवति। बह्व्यः खट्वा अस्मिन् बहुखट्वकः, बहुमालकः, बहुवीणकः। बहुखट्वाकः, बहुमालाकः, बहुवीणाकः। बहुखट्वः, बहुमालः, बहुवीणः।**

**कथमनृक्कं साम, बह्वृक्कं सूक्तमिति, यावता विहितोऽत्र सामान्येन समासान्तः 'ऋक्पूः' ( ५.४.७४ )**

**न्यासः**

**शेषाद् विभाषा** ॥ शेषः कबपेक्षो वा स्याद्-यस्माद् बहुव्रीहेः कब्न विहितः स शेष इति ? समासान्तापेक्षो वा—यस्माद् बहुव्रीहेः समासान्तो न विहितः स शेष इति ? तत्र यदि कबपेक्षः शेषः स्याद्—अनृचः, व्याघ्रपात् सुगन्धिरित्यत्रापि स्यात्। न ह्यतः केनचित् कब्विहित इति कबपेक्षे शेषे दोषं दृष्ट्वा समासान्तापेक्षया शेष इति दर्शयन्नाह—**यस्माद् बहुव्रीहेः समासान्तो न भवति स शेष इति**। कथं ज्ञायते—समासान्तापेक्षः शेष इति ? शेषग्रहणात्। तत्र यदि कबपेक्षः शेषः स्यात्, शेषग्रहणमनर्थकं स्यात्। आरम्भसामर्थ्यादेव हि शेषविषय एव विकल्पो भविष्यति; अन्यथा यदि यतोऽपि पूर्वैर्विधिवाक्यैः कब्विहितस्ततोऽप्यनेन विभाषा विधीयते, विधिवाक्यानामानर्थक्यमापद्येत। तस्माच्छेषग्रहणात् समासान्तापेक्षः शेषो विज्ञायते। **बहुखट्वक इति**। 'आपोऽन्यतरस्याम्' इति ह्रस्वः। **बहुखट्व** इत्यत्रापि 'गोस्त्रियोरुपसर्जनस्य' इति।

**कथमित्यदि**। यदि समासान्तापेक्षः शेषः; अनृक्कं साम, बह्वृक्कं सूक्तमित्यत्र कब्न सिध्यतीत्यभिप्रायः। **विशेषे स इष्यत इति**। स ह्यकारः समासान्तो विशेषे माणवे चरणाख्यायां चेष्यत इति तत्राकारो विहितः।

**पदमञ्जरी**

**शेषाद्विभाषा** ॥ **यस्माद्बहुव्रीहेरिति**। कर्मणि ल्यब्लोपे एषा पञ्चमी, बहुव्रीहिमाश्रित्येत्यर्थः, तेन यत्राप्यादेशः समासान्तः—व्याघ्रपात्, सुगन्धिः, कुण्डोध्नीति; असावपि शेषो न भवति। प्रत्ययप्रायत्वाद्वा समासान्तस्य 'यस्मात्' इत्युक्तम्।

इह शेषः कबपेक्षो वा स्याद्, अनन्तरो यो बहुव्रीह्यधिकारस्तदपेक्षो वा, समासान्तमात्रापेक्षो वा—इति त्रयः पक्षाः सम्भवन्ति। तत्राद्ये पक्षे—व्याघ्रपात्, सुगन्धिः, द्विदशाः, अनृचः, विधुर इत्यादौ नित्यकब्विषयवर्जं सर्वत्र प्रसज्येत। शेषग्रहणं चानर्थकम्, न हि नित्यकब्विषये विकल्पप्रसङ्गः; नित्यकविधेरानर्थक्यप्रसङ्गात्। द्वितीयेऽपि द्विदशा इत्यादौ स्यादेव प्रसङ्ग इति मन्यमानस्तृतीयं पक्षमाश्रयति—**समासान्तो न विहित इति**। बहुखट्वक इत्यादौ 'आपोऽन्यतरस्याम्' इति ह्रस्वः, बहुखट्व इत्यादौ 'गोस्त्रियोरुपसर्जनस्य' इति।

**कथमित्यादि**। यदि समासान्तापेक्षः शेष इति प्रश्नः। **विशेषे स इष्यत इति**। ततश्च विषयान्तरे सूक्ते सामनि च बहुव्रीहेः समासान्तापेक्षं शेषत्वमस्त्येवेति भावः। किमर्थं पुनः शेषग्रहणम्, यावता यत्र समासान्ता

**भावबोधिनी**

जिस बहुव्रीहि से समासान्त प्रत्यय का विधान नहीं किया गया है वह शेष है, उससे विकल्प से कप् प्रत्यय होता है। उदा०—बह्व्यः खट्वाः अस्मिन् सः—इसमें बहुखट्वकः। [ बह्व्यः मालाः अस्मिन् सः—इसमें ] बहुमालकः। [ बह्व्यः वीणाः अस्मिन् सः—इसमें ] बहुवीणकः। [ इनमें विकल्प से कप् होने पर "आपोऽन्यतरस्याम्" ( पा. सू. ७।४।१५ ) से विकल्प से ह्रस्व होने पर उक्तरूप बने हैं। जब ह्रस्व नहीं होता है तब ] बहुखट्वाकः बहुमालाकः, बहुवीणाकः। [ जब इस सूत्र से कप् ही नहीं होता है तब "गोस्त्रियोरुपसर्जनस्य" ( पा. सू. १।२।४८ ) से ह्रस्व होने पर ] बहुखट्वः, बहुमालः, बहुवीणः। [ कप् और ह्रस्व दोनों के वैकल्पिक होने से तीन रूप बनते हैं। ]

इति ? नैतदस्ति; विशेषे स इष्यते—'अनृचो माणवको ज्ञेयो बह्वृचश्चरणाख्याम्' इति ।

**शेषादिति किम् ? प्रियपथः । प्रियधुरः ॥**

## २४३५. न संज्ञायाम् ॥ १५५ ॥ ( ८९३ )

**संज्ञायां विषये बहुव्रीहौ समासे कप् प्रत्ययो न भवति । पूर्वेण प्राप्तः प्रतिषिद्धयते । विश्वे देवा अस्य विश्वदेवः । विश्वयशाः ॥**

## २४३६. ईयसश्च ॥ १५६ ॥ ( ८९४ )

**ईयसन्ताद्बहुव्रीहेः कप् प्रत्ययो न भवति । सर्वा प्राप्तिः प्रतिषिध्यते । बहवः श्रेयांसोऽस्य**

**न्यासः**

न चापि तत्रैव विशेषे कब् विहितः, किं तर्हि ? विषयान्तरे – सामनि, सूक्ते च । तत्र बहुव्रीहेः समासान्तापेक्षः शेषः । तेन च प्रियपथः, प्रियधुर इति 'ऋक्पूरब्धूः' इत्यादिनाऽकारः समासान्तः । अथ किमर्थं शेषग्रहणम्, यावता याभ्यः प्रकृतिभ्यः समासान्ता विहिताः, ताभ्यस्त एव बाधका भविष्यन्ति ? नैतदस्ति; निरवकाशा हि विधयो बाधका भविष्यन्ति, सावकाशाश्च समासान्ताः । कोऽवकाशः ? प्रतिपदोपात्तप्रकृतयः, याभ्यः समासान्ता अर्थविशेषे समासविशेषं प्रति प्रतिपदमुपादाय विहिताः सोऽवकाशः; विशेषप्रकृतिभ्यः प्रसङ्गे सत्युभयप्राप्तौ परत्वात् कप्रत्ययः स्यात् । तस्माच्छेषग्रहणं कर्त्तव्यम् ॥ १५४ ॥

**न संज्ञायाम् ॥ १५५ ॥ ईयसश्च ॥ सर्वा प्राप्तिः प्रतिषिध्यत इति ।** ननु 'अनन्तरस्य विधिर्वा भवति

**पदमञ्जरी**

विहितास्तत्र त एव बाधका भविष्यन्ति, अनवकाशा विधयो बाधका भवन्ति, सावकाशाश्च ते, कोऽवकाशः ? विभाषा कप्, यदा न कप् सोऽवकाशः - कपोऽप्यन्याः प्रकृतयः; विशेषप्रकृतिभ्य उभयप्रसङ्गे परत्वात्कप् स्यात् । तस्माच्छेषग्रहणम् ॥ १५४ ॥ १५५ ॥

**ईयसश्च ॥ सर्वा प्राप्तिः प्रतिषिद्धयत इति ।** न तु 'अनन्तरस्य विधिर्वा भवति प्रतिषेधो वा' इति

**भावबोधिनी**

[ यदि समासान्त विहित प्रत्यय को मानकर शेष है तो ] अनृक्कं साम, बह्वृक्कं सूक्तम्—इनमें [ कप् ] कैसे होता है क्योंकि इनमें तो "ऋक्पूरब्धूःपथामानक्षे" इस सूत्र से सामान्यतया प्रत्यय का विधान है ? ऐसी बात नहीं है, क्योंकि उस सूत्र से विशेष अर्थ में प्रत्यय इष्ट है "अनृचः—यह माणवक अर्थ में और बह्वृचः—यह चरणाख्या में समझना चाहिए।" [ इस कारण साम और सूत्र अर्थों में बहुव्रीहि का समासान्तापेक्ष शेषत्व रहता ही है, प्रत्यय में बाधा नहीं है । ]

शेष से—इसका क्या फल है ? प्रियपथः । प्रियधुरः । [ इनमें "ऋक्पूरब्धूपथामानक्षे" सूत्र से अ प्रत्यय हो चुका है, शेष नहीं है अतः कप् नहीं होता है । ] ॥ १५४ ॥

संज्ञा ( नाम ) विषय रहने पर बहुव्रीहि समास में कप् प्रत्यय नहीं होता है । पूर्वसूत्र से प्राप्त होने वाले का प्रतिषेध किया जा रहा है । उदा०—विश्वे देवाः अस्य सः—इस विग्रह में—विश्वदेवः । बहुयशाः । [ बहु यशः यस्य सः—यह विग्रह है । ये दोनों शब्द संज्ञाविशेष में हैं । अतः प्रत्यय नहीं होता है । बहुयशस् में "अत्वसन्तस्य" सूत्र से दीर्घादि होने पर रूप बना है । ] ॥ १५५ ॥

ईयस्प्रत्ययान्त बहुव्रीहि से कप् नहीं होता है । सभी प्राप्तियों का प्रतिषेध होता है । उदा०—बहवः श्रेयांसः अस्य सः—इसमें बहुश्रेयान् यही रहता है ] "शेषाद् विभाषा" इसका प्रतिषेध है । बह्व्यः श्रेयस्यः अस्य सः—इसमें

बहुश्रेयान् । 'शेषाद्विभाषा' ( ५.४.१५४ ) इत्यस्य प्रतिषेधः । बह्व्यः श्रेयस्यः अस्य बहुश्रेयसी । 'नद्यृतश्च' ( ५.४.१५३ ) इत्यस्य प्रतिषेधः । ह्रस्वत्वमपि न भवति; 'ईयसो बहुव्रीहौ पुंवत्' इति वचनात् ॥

२४३७. वन्दिते भ्रातुः ॥ १५७ ॥ ( ८९९ )

वन्दितेऽर्थे यो भ्रातृशब्दो वर्तते तदन्ताद्बहुव्रीहेः कप् प्रत्ययो न भवति । वन्दितः = स्तुतः, पूजित इत्युच्यते । शोभनो भ्राताऽस्य सुभ्राता ।

वन्दित इति किम् ? मूर्खभ्रातृकः । दुष्टभ्रातृकः ॥

**न्यासः**

प्रतिषेधो वा' इति शेषलक्षणस्यैव कपः प्रतिषेधः प्राप्नोति ? नैष दोषः; कबत्रानुवर्तते, न शेषादिति । तेनायं कब्मात्रस्य प्रतिषेधो भविष्यति । बहवः श्रेयांस इति । 'द्विवचनविभज्योपपदे' इत्यादिनेयसुन्, 'प्रशस्यस्य श्रः' इति श्रः । ह्रस्वत्वमपि न भवतीति । 'गोस्त्रियोरुपर्जनस्य' इति ह्रस्वत्वं प्राप्नोति, तदपि न भवति । कस्मान्न भवति ? इत्याह—ईयसो बहुव्रीहेरित्यादिना । नात्र पुंवद्वचनेन स्त्रीप्रत्ययस्य निवृत्तिरभिप्रेता, किं तर्हि ? ह्रस्वत्वप्रकरणात् तदभावः । एतदुक्तं भवति—यथा पुंवद्भावे सतीकारस्य ह्रस्वो न भवति, एवमीयसः परस्य स्त्रीप्रत्ययस्यापि न भवति ॥ १५६ ॥

वन्दिते भ्रातुः ॥ 'नद्यृतश्च' इति प्राप्तस्य कपोऽयं प्रतिषेधः । 'वदि अभिवादनस्तुत्योः' इति यद्यपि वदिरभिवादने वर्त्तते, तथापीह स्तुतावेव वर्त्तमान आश्रीयते, अत एवाह—वन्दितः स्तुत इति ॥ १५७ ॥

**पदमञ्जरी**

शेषलक्षणस्यैव कपः प्रतिषेध इति सर्वशब्दस्यार्थः । एतच्च शेषादित्येतस्य निवृत्तत्वात्कब्मात्रस्यानुवृत्तेर्लभ्यते । बहुश्रेयसीति । लिङ्गविशिष्टग्रहणादत्र प्रतिषेधः । यथात्र सोर्हल्ङ्यादिलोपः, तथा तत्रैव वक्ष्यामः । ह्रस्वत्वमपि न भवतीति । 'गोस्त्रियोरुपसर्जनस्य' इति प्राप्तम् । कस्मात् ? इत्याह—ईयसो बहुव्रीहावित्यादि । पुंवद्वचनेनात्र न स्त्रीप्रत्ययस्य निवृत्तिर्विवक्षिता, किं तर्हि ? ह्रस्वप्रकरणात्तदभावः । तथा च 'गोस्त्रियोः' इत्यत्र वृत्तौ–'ईयसो बहुव्रीहौ प्रतिषेधो वक्तव्यः' ( वा० १८ ) इत्येवोक्तम् ॥ १५६ ॥

वन्दिते भ्रातुः ॥ वन्दितः स्तुत इति । यद्यपि 'वदि अभिवादनस्तुत्योः' इत्यभिवादनेऽपि वदिः पठ्यते, तथापि व्याख्यानात्स्तुत्यर्थस्यैव ग्रहणमिति दर्शयति । तेन वन्दितभ्रातृक इत्यत्र कब्भवत्येव ॥ १५७ ॥ १५८ ॥

**भावबोधिनी**

"नद्यृतश्च" सूत्र से [ नदीसंज्ञकवर्णान्त मानकर ] प्राप्त प्रत्यय का प्रतिषेध है । [ 'गोस्त्रियोरुपसर्जनस्य" इससे प्राप्त ] ह्रस्व भी नहीं होता है क्योंकि "इयसो बहुव्रीहौ पुंवत्" ऐसा वचन है । [ यहाँ पुंवत् इससे स्त्रीप्रत्यय की निवृत्ति इष्ट नहीं है अपि तु ह्रस्वत्व का अभाव ही इष्ट है । ] ॥ १५६ ॥

वन्दित अर्थ में विद्यमान जो भ्रातृ शब्द है वह जिसके अन्त में है ऐसे बहुव्रीहि से कप् प्रत्यय नहीं होता है । वन्दित = स्तुत, पूजित—को कहा जाता है । उदा०—शोभनः भ्राता अस्य सः— इस विग्रह में—सुभ्राता । [ 'नद्यृतश्च' से प्राप्त कप् का प्रतिषेध होता है । ]

वन्दित अर्थ में—इसका क्या फल है ? मूर्खभ्रातृकः । दुष्टभ्रातृकः । [ मूर्खः भ्राता अस्य सः, दुष्टः भ्राता अस्य सः—इनमें निन्दा की प्रतीति है क्योंकि किसी का भाई यदि दुष्ट या दुराचारी है तो उसकी भी निन्दा होती है । ] ॥ १५७ ॥

२४३८. ऋतश्छन्दसि ॥ १५८ ॥ ( ३५०८ )

ऋवर्णान्ताद् बहुव्रीहेश्छन्दसि विषये कप् प्रत्ययो न भवति। हता माताऽस्य 'हतमाता' ( अथर्व० २.३२.४ )। हतपिता। 'हतस्वसा' ( अथर्व० २.६७.३ )। सुहोता ( ऋ० ७.६७.३ )॥

२४३९. नाडीतन्त्र्योः स्वाङ्गे ॥ १५९ ॥ ( ८९६ )

स्वाङ्गे यौ नाडी-तन्त्रीशब्दौ तदन्ताद्बहुव्रीहेः कप् प्रत्ययो न भवति। बह्व्यो नाड्योऽस्य बहुनाडिः कायः। बहुतन्त्रीर्ग्रीवा। धमनीवचनस्तन्त्रीशब्दः।

स्वाङ्गे इति किम्? बहुनाडीकः स्तम्भः। बहुतन्त्रीका वीणा॥

न्यासः

ऋतश्छन्दसि॥ अयमपि पूर्ववत् प्राप्तस्य कपः प्रतिषेधः॥ १५८॥

नाडीतन्त्र्योः स्वाङ्गे॥ अयमपि 'नद्यृतश्च' इति प्राप्तस्य कपः प्रतिषेधः। स्वाङ्गमिह पारिभाषिकं गृह्यते। बहुनाडिरिति। पूर्ववदुपसर्जनह्रस्वत्वम्। बहुतन्त्रीरिति। अत्र ह्रस्वत्वं न भवति; 'कृतः स्त्रियाः प्रतिषेधो वक्तव्यः' इति वचनात्। तथा चोक्तम् ( १।२।४८ )—'स्त्रीग्रहणं स्वरयिष्यति' इति॥ १५९॥

पदमञ्जरी

नाडीतन्त्र्योः स्वाङ्गे॥ नाडीशब्दो जातिलक्षणङीषन्तः। तन्त्रीशब्दः 'अवितृस्तृतन्त्रिभ्य ईः' ( द० उ० १. ८२ ) इतीकारान्तः। बहुनाडिरिति। उपसर्जनह्रस्वम्। बहुतन्त्रीरित्यत्र तु 'कृत्स्त्रियाः प्रतिषेधः' इति वचनान्न भवति॥ १५९॥

न्यासः

ऋवर्णान्त बहुव्रीहि से वेदविषय में कप् प्रत्यय नहीं होता है। उदा०—हता माता अस्य—इस विग्रह में—हतमाता। [ जिसकी माता मारी गई है। ] हतपिता। [ हतः पिता अस्य सः। जिसका पिता मारा जा चुका है। ] हतस्वसा। [ हता स्वसा अस्य सः। जिसकी बहन मारी जा चुकी है। ] सुहोता। [ शोभनः होता अस्य सः—यह विग्रह है। सभी में ऋकारान्त मानकर कप् प्राप्त है उसका प्रतिषेध किया जाता है। ]॥ १५८॥

स्वाङ्ग ( अपना अंग ) अर्थ में जो नाडी और तन्त्री शब्द है, वे जिसके अन्त में हैं ऐसे बहुव्रीहि से कप् प्रत्यय नहीं होता है। उदा०—बह्व्य नाड्यः अस्य सः—इस विग्रह में—बहुनाडिः कायः। [ "गोस्त्रियोरुपसर्जनस्य" सूत्र से ह्रस्व होता है। ] बहुतन्त्रीः ग्रीवा। [ बह्व्यः तन्त्र्यः अस्याः सा—इस अर्थ में कप् का प्रतिषेध होता है। "कृतः स्त्रियाः प्रतिषेधो वक्तव्यः" इस वचन के कारण इसका ह्रस्व नहीं होता है क्योंकि यह ईकार—प्रत्ययान्त है। ] धमनी अर्थ का वाचक तन्त्री शब्द है।

[ पारिभाषिक ] स्वाङ्ग अर्थ में—इसका क्या फल है? बहुनाडीकः स्तम्भः। बहुतन्त्रीका वीणा। [ यहाँ पारिभाषिक स्वाङ्गत्व न होने से निषेध न होकर कप् होता है पारिभाषिक स्वाङ्गत्व का लक्षण यह है—

अद्रवं मूर्तिमत् स्वाङ्गं प्राणिस्थमविकारजम्।
अतत्स्थं तत्र दृष्टं चेत्तेन चेतथायुतम्॥

इसकी विशेषव्याख्या "स्वाङ्गाच्चोपसर्जनात् ४।१।५४ की काशिकाव्याख्या पृ० ३५९ में देखें। ]॥ १५९॥

२४४०. निष्प्रवाणिश्च ॥ १६० ॥ ( ८९७ )

'निष्प्रवाणिः' इति नदीलक्षणस्य कपः प्रतिषेधो निपात्यते। प्रोयतेऽस्यामिति प्रवाणी। प्रवयन्ति तयेति वा प्रवाणी। करणसाधनोऽयं ल्युट्। तन्तुवायशलाका भण्यते। निर्गता प्रवाणी अस्य निष्प्रवाणिः पटः। निष्प्रवाणिः कम्बलः = अपनीतशलाकः समाप्तवानः प्रत्यग्रो नवक उच्यते ॥

॥ इति श्रीवामनविरचितायां काशिकावृत्तौ पञ्चमाध्यायस्य चतुर्थः पादः ॥ ४ ॥

——:०:——

न्यासः

निष्प्रवाणिश्च ॥ १६० ॥

॥ इति बोधिसत्त्वदेशीयाचार्यश्रीजिनेन्द्रबुद्धिपादविरचितायां काशिकाविवरणपञ्चिकायां पञ्चमस्याध्यायस्य चतुर्थः पादः ॥

——:०:——

पदमञ्जरी

निष्प्रवाणिश्च ॥ प्रोयतेऽस्यामिति प्रवाणीति। वेञोऽधिकरणे ल्युट्, 'कृत्यचः' इति णत्वम् ॥ १६० ॥

॥ इति श्रीहरदत्तमिश्रविरचितायां पदमञ्जर्यां पञ्चमस्याध्यायस्य चतुर्थ पादः ॥ ४ ॥

❀ समाप्तोऽयं पञ्चमोऽध्यायः ❀

——:०:——

भावबोधिनी

'निष्प्रवाणिः' यहाँ नदीलक्षण कप् का प्रतिषेध निपातित होता है। उदा०—प्रोयतेऽस्याम्—इस विग्रह में—प्रवाणी। अथवा प्रवयन्ति तया—इस विग्रह में प्रवाणी बनता है। यहाँ करण अर्थ में ल्युट् प्रत्यय हुआ है। तन्तुवाय = जुलाहे की शलाका [ जिससे कपड़ा बुना जाता है उस ] को प्रवाणी कहा जाता है। निर्गता प्रवाणी अस्य सः—निष्प्रवाणिः पटः। [ जिसकी शलाका निकाली जा चुकी है ऐसा कपड़ा। ] निष्प्रवाणिः कम्बलः = जिसकी शलाका निकाली जा चुकी है, जिसका बुनना समाप्त हो चुका है, प्रत्यग्र = नवीन, तुरन्त बुना गया कम्बल कहा जाता है।

॥ इस प्रकार वामन-विरचित काशिकावृत्ति में पञ्चम अध्याय का चतुर्थपाद समाप्त हुआ ॥

॥ इस प्रकार जयशङ्करलाल त्रिपाठी-विरचित-भावबोधिनी-हिन्दी-व्याख्या में
काशिकावृत्ति का पञ्चम अध्याय समाप्त हुआ ॥

कृपया विश्वनाथस्य त्रिपाठी जयशङ्करः।
काशिका-पञ्चमाध्याय-हिन्दी-व्याख्यामपूरयत् ॥

॥ ॐ शान्तिः ३ ॥

——:०:——

# पाणिनीय-सूत्र-सूची

——०——

# शुद्धाशुद्धिपत्रम्

| पृ० | पंक्तिः | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| ४ | २ टि० | मसूरोगोधूमो | मसूरो गोधूमो |
| १९ | ४ | इत्यस्मिन्नथ | इत्यस्मिन्नर्थे |
| ३४ | ११ | द्वयसच्दघ्न० | द्वयसज्दघ्न० |
| ७२ | २१ | प्रसक्तं | प्रसक्ते |
| ७६ | १ | शोतोष्णाभ्यां | शीतोष्णाभ्यां |
| ११३ | ३ | ऊषसुषिमुष्कमघो | ऊषसुषिमुष्कमधो |
| १२५ | ५ | नवायं | नैवायं |
| १२७ | ( हि० ) ६ | वह रूप | [ वह रूप |
| १२८ | ( हि० ) १७ | शेष तो | [ शेष तो |
| १३७ | ( हि० ) ७ | सम्बन्घ | सम्बन्ध |
| १४३ | ( हि० ) १ | गणेशं | श्रीगणेशं |
| १६२ | ६ | ऊर्ध्वं स्योपभावो | ऊर्ध्वस्योपभावो |
| १६३ | १९ | पूर्व पदेनेति । | पूर्वपदेनेति । |
| १६३ | ( हि० ) ८ | अर्घ ··· दिक् | अर्ध ··· दिक् |
| १६७ | ५ | उत्तरादगतः | उत्तरादागतः |
| १७५ | ७ | शतत्रसहायमिति | शतमसहायमिति |
| १७५ | ( टि० ) १ | ० निरित्यर्थः | ० निरित्यर्थः |
| १८० | ७ | देवदत्तस्यदेव० | देवदत्तस्य देव० |
| १८० | ( हि० ) ५ | अपवाद है । इनमें | अपवाद है । ❀ इनमें |
| १८० | ( हि० ) ६ | है । [ द्व्यर्थ | है । ❀ [ द्व्यर्थ |
| १८१ | २१ | द्वर्थत्वम् | द्वयर्थत्वम् |
| १८१ | ( टि० ) १ | पदमंजर्या | न्यासे |
| २०० | १० | सम्भवतं | सम्भवत |
| २०६ | ( हि० ) १ | उवणन्ति | उवर्णान्ति |
| २०६ | ( हि० ) १५ | 'ङ्गुलिदत्त | 'अङ्गुलिदत्त' |
| २२५ | ७ | कौष्टकि० | क्रौष्टकि० |
| २३४ | ११ | भिन्नकमिति । | [1]भिन्नकमिति । |
| २३४ | ( टि० ) | ( छूट है ) | 'भिन्नकः' इति काशिका । |
| २४० | ( टि० ) | ( छूट है ) | द्रव्यस्याव्यपदेशस्य य उपादीयते गुणः । भेदको व्यपदेशाय तत्प्रकर्षोऽभिधीयते ।। २ ।। सर्वस्यैव प्रधानस्य न विना भेदहेतुना । —इति वा पाठः वाक्यपदीये । |

| पृ० | पंक्तिः | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| २४१ | ( टि० ) | १ सर्वस्थैव प्रधानस्य इति वाक्यदीपे पाठः । | टि० नहीं रहेगी । |
| २५३ | १७ | मत्वोत्वे ॥ २५ ॥ | मत्वोत्वे ॥२५॥ अतिथेर्ञ्यः ॥२६॥ |
| २५३ | २० | भवति । अतिथेर्ञ्यः ॥ २६ ॥ | भवति । |
| २६३ | ( टि० ) | विशेष० | विशेषा० |
| २६४ | २३ | कथं तहि | कथं तर्हि |
| २६४ | २४ | शस्द्विर्वचनयोः | शस्द्विर्वचनयोः |
| २६८ | ७ | चारित्रतो व्यथते । | चारित्रतो न व्यथते । |
| २६८ | ९ | चारित्रेण क्षिप्तः न | चारित्रेण क्षिप्तः |
| २७० | ७–८ | सम्पद्यतेः कर्ता सम्प कर्ता वर्तमानात् सम्पद्यकरि । | सम्पद्यतेः कर्ता सम्पद्य कर्ता । सम्पद्यकर्तरि वर्तमानात् । |
| २७२ | १७ | देवगृहे | देवगृहे |
| २७५ | ९० | ०वृत्तेः अभिविधे. कात्स्न्यैस्य चावश्यं विशेषण | वृत्तेः । अभिविधेः कात्स्न्र्यस्य चावश्यं विशेषेण |
| २७५ | १२ | वर्षाषु | वर्षासु |
| २७५ | १५ | कास्न्र्यं | कात्स्न्र्यं |
| २७६ | ८ | अथाय | अथायं |
| २७६ | ११ | विस्पष्टीभर्तुमाह | विस्पष्टीकर्तुमाह |
| २७८ | १० | कास्न्र्ये | कात्स्न्र्ये |
| २८१ | ६ | कर्षणंविलेखनं | कर्षणं = विलेखनं |
| २८१ | १६ | गुणाताया | गुणान्ताया |
| २८२ | २५ | सङ्ख्याय | सङ्ख्याया |
| २८९ | १८ | 'क्षेपे' शक्यम् | 'क्षेपे' इति शक्यम् |
| २८९ | १९ | नापतिष्ठत | नोपतिष्ठत |
| २९० | १७ | शटकस्य किंधुः शटकमिति | शकटस्य किंधुः शकटमिति |

—:०:—

